# Introduction

The first volume of the MAHĀBHĀṢYA containing the first four Āhnikas with the Pradīpa of Kaiyaṭa and Pradīpoddyotana of Annambaṭṭa was first published by this Library in 1948, as No. 7 in the. Madras Government Oriental Manuscripts Series, which is quite different from the Madras Government Oriental Series that was newly started in the year 1949. Though it was printed by the Superintendent, Government Press, Madras, the second volume could not be got printed there, due to pressure of work in the press Hence it was printed in a private press with the approval of the Superintendent of the Government Press, Madras.

The present work forms the second volume and the continuation of the first volume, containing Āhnikas 5 to 9 being the commentary of Bhagavān Patanjali on the latter part of the first pāda of the first Adhyāya of Pāṇini's Vyākaraṇa Sūtras. The same arrangement that was followed in the first volume is continued in this volume also, except for the fact that the Pratīkas in the Uddyotana are given in antique types instead of putting a rule under them. This forms No. 13 of the Madras Government Oriental Manuscripts Series. As an exhaustive introduction has already been written by me to the first volume, it is not proposed to attempt at another detailed introduction regarding the author and the subject matter of this volume.

An index to the Sūtras that have been commented upon by Bhagavān Patañjali and an index to the Vārtikas in the 1st and 2nd volumes are added to this volume.

The present edition is based on the following four manuscripts:—

(i) A paper manuscript of this library bearing R. No. 2088, 16″ x 11¾″ in size consisting of 58 pages having 56 lines in a page. It is in Telugu character. It contains Āhnikas 3 to 6 complete and a small portion in the 7th. The condition of the manuscript is good. It is designated as क.

(ii) A paper manuscript described under R. No. 6482 consisting of 104 folios with 20 lines in a page. It is in Devanagari character and its condition also is good. It is a restored copy of a palm-leaf manuscript bearing R. No. 1515-b. of this Library. It is designated as ख. It begins with the 5th Āhnika and extends upto the end of 6th Āhnika breaking off in the Sūtra इग्यणः संप्रसारणम् ।

(iii) A palm-leaf manuscript of this library, 15½″ x 1¾″ in size, containing 138 folios with 7 lines a page. This manuscript is in a slightly injured condition. It begins from the 4th Āhnika and ends with the 8th. It is described under R. 1500. It is in Telugu character and designated as ग.

(iv) A paper manuscript 14″ x 6″ consisting of 261 folios with 12 lines on a page, the other work in the same bundle being Avayava Vicāra Viṣaya from folio 241-b to the end. It is in Telugu character. The number of the manuscript is R. No. 3143-a. It is in an injured condition and contains the portion from the 8th Āhnika of the 1st pāda of the 1st Adhyāya to the end of the 70th Sūtra of the 2nd pāda of the same Adhyāya This is the only manuscript containing the latter portion of the 8th Āhnika and the 9th Āhnika. Consequently this portion of the present work could not be compared with any other manuscript. It is designated as घ.

The press copy was prepared by Messrs. T. H. Viswanatha Sastriar, M. S. Vaidyanatha Sastriar and K. Srinivasacharya while the proofs were corrected by Messrs. T. H. Viswanatha Sastriar and V. R. Kalyanasundaram. My thanks are due to the above Pandits of this Library for their hearty co-operation in getting this book published in this year. I have to thank the Sreevathsa Press also for expediting the printing within a short time.

*Govt. Oriental Mss. Library,*
*Madras.*
8—3—1952.

T. CHANDRASEKHARAN,
*Curator.*

श्रीः

भगवत्पतञ्जलिविरचितं

# महाभाष्यम्

॥ प्रथमाध्याये प्रथमपादे पञ्चममाह्निकम् ॥

## सू.—ईदूदेद्द्विवचनं प्रगृह्यम् ॥ १। १। ११।

**भा :—किमर्थमीदादीनां तपराणां प्रगृह्यसंज्ञोच्यते? "तपरस्तत्कालस्य" इति तत्कालानां सवर्णानां ग्रहणं यथा स्यात्। केषाम्? उदात्तानुदात्तस्वरितानाम्।**

प्र :—**किमर्थमिति**; ईदूतोरनण्त्वात् भिन्नकालनिवृत्त्यर्थं नोपपद्यते तपरत्वम्, उदात्तादीनामभेदकत्वाद्गुणान्तरयुक्तानां सवर्णानां ग्रहणार्थमपि नोपपद्यते। जातिपक्षेऽपि दीर्घोच्चारणात् प्रयत्नाधिक्यात् ह्रस्वानां न भविष्यति, प्लुतानां चेष्यत एवेति इष्टव्याघातं प्रत्युत तपरत्वं करोतीति प्रश्नः। **तपर इति**; व्यक्तिपक्षः, भेदकाश्च गुणा इति भावः। **केषामिति**। प्लुतानामग्रहणप्रसङ्गात् प्रश्नः। **उदात्तेति**; क्वचिदनुनासिकग्रहणमप्यस्ति, तत् गुणप्रसङ्गेनोच्चारितम्। न हि प्रगृह्योऽनुनासिकः संभवति, 'अणोऽप्रगृह्यस्यानुनासिकः' इति निषेधात्।

उ—ननु व्यक्तिपक्षे गुणान्तरयुक्तग्रहणार्थं तपरत्वं स्यात् इति प्रयोजनसत्वात् प्रश्नानुपपत्तिः; अत आह—**ईदूतोरिति**। व्यक्तिपक्षे भिन्नकालनिवृत्त्यर्थं वा तपरत्वं? गुणान्तरयुक्तग्रहणार्थं वा? नाद्य इत्याह—**अनण्त्वादिति**। तत्कालस्यैवेति नियमेन भिन्नकालनिवृत्तिर्वाच्या, स च सिद्धे सति, सिद्धिश्च पूर्वसूत्रविषय एव प्रवृत्तौ सत्याम्, सा च तपरसूत्रेऽण्ग्रहणानुवृत्त्या इत्यनण्त्वादीदूतोः भिन्नकालनिवृत्त्यर्थं तपरत्वं न युक्तमित्यर्थः। नन्वण्ग्रहणं नानुवर्तते; तपरसूत्रं विध्यर्थं सद्गुणान्तरयुक्तग्रहणार्थमिति द्वितीयं कल्पं निरस्यति—**उदात्तादीनामिति**। ननु मास्त्वण्ग्रहणानुवृत्तिः तत्सूत्रे; जातिपक्षे तपरसूत्रं नियमार्थम्। अनण्त्वेऽपि भिन्नकालनिवृत्त्यर्थमेवात्र तपरत्वमित्याशङ्क्य, ह्रस्वनिवृत्त्यर्थं प्लुतनिवृत्त्यर्थं वेति विकल्प्य, नाद्य

इत्याह—**जातीति**; ह्रस्वोच्चारणेनैव दीर्घस्यापि प्राप्तौ दीर्घोच्चारणगौरवात् ह्रस्वनिवृत्तिः तपरत्वं विनापीत्यर्थः। न द्वितीय इत्याह—**प्लुतानामिति**। एवं जातिव्यक्तिपक्षयोः प्रयोजनाभावमुक्त्वा व्यक्तिपक्षे एकारे जातिपक्षे त्रिष्वपि तपरत्वेऽनिष्टमाह—**इतीति**; इतिर्हेतौ। यस्मात् प्लुतानामिष्यते प्रगृह्यसंज्ञा तस्मान्न केवलं प्रयोजनाभावः; किं तु इष्टविघातमपि करोति इति योज्यम्। **भेदकाश्चेति**; 'अनुदात्त' इति उदात्तग्रहणमाकृतिपक्षेऽनुदात्तादिव्यावृत्त्यर्थं स्यादित्यज्ञापकं गुणानामभेदकत्वस्येत्यर्थः। उदात्तादेः स्पष्टत्वात् प्रश्नायोगमाशङ्क्याह—**प्लुतानामिति**। एकश्रुत्या सूत्रपाठात् भाष्ये [1]त्रयोऽनुदात्तादय उक्ताः। क्वचिदनुनासिकान्तपाठः प्रामादिक इत्याह—**क्वचिदिति**। **न हीति**; प्रगृह्यत्वानुनासिकत्वयोः एकत्राभावादत्र तद्ग्रहणमनुपयुक्तमिति भावः।

**भाः—अस्ति प्रयोजनमेतत्। किं तर्हीति।**

**॥ वा ॥ [प्लुतानां तु प्रगृह्यत्वाप्रसङ्गोऽतत्कालत्वात्] ॥**

**भाः—प्लुतानां तु प्रगृह्यसंज्ञा न प्राप्नोति। किं कारणम्? अतत्कालत्वात्। न हि प्लुतास्तत्कालाः। असिद्धः प्लुतः। तस्यासिद्धत्वात्तत्काला एव भवन्ति। सिद्धः प्लुतः स्वरसन्धिषु। [2]कथं ज्ञायते 'सिद्धः प्लुतः स्वरसन्धिषु' इति? यदयं "प्लुतः प्रकृत्या" इति प्लुतस्य प्रकृतिभावं शास्ति। कथं कृत्वा ज्ञापकम्? सतो हि कार्यिणः कार्येण भवितव्यम्। किमेतस्य ज्ञापने प्रयोजनम्? अप्लुतादप्लुत इत्येतत् न वक्तव्यं भवति। किमतो यत्सिद्धः प्लुतः स्वरसन्धिषु, संज्ञाविधावसिद्धः। तस्यासिद्धत्वात् तत्काला एव भवन्ति। संज्ञाविधौ च सिद्धः। कथं? '[3]कार्यकालं संज्ञापरिभाषम्' यत्र कार्यं**

(१) क. अप्युदात्तादयः। (३) क. कार्यकालं हि संज्ञापरिभाषम्।

(२) क. तत् कथं विज्ञायते.

**तत्रोपस्थितं द्रष्टव्यम्; 'प्रगृह्यः प्रकृत्या' इति, उपस्थितमिदं भवति "ईदूदेद्द्विवचनं प्रगृह्यम्" इति।**

प्र:—**प्लुतानां त्विति;** व्यक्तिपक्षाश्रयणादयं दोषः, न तु तपरत्वात्। **असिद्ध इति।** शास्त्रासिद्धत्वाश्रयणात् प्लुतबुद्धावसत्यां प्रगृह्यत्वे विधीयमाने द्विमात्रविषया बुद्धिः प्रवर्तते। तथा हि वक्ष्यति 'असिद्धवचनमुत्सर्गलक्षणभावार्थमादेशलक्षणप्रतिषेधार्थं च' इति। **यदयमिति।** [1]असिद्धत्वे प्लुतः प्रकृत्येत्येवमाश्रयणायोगात् कार्यित्वेनाश्रयणादसिद्धत्वाभावोऽनुमीयते। सामान्येन स्वरसन्धिप्रकरणविषयं सिद्धत्वं ज्ञाप्यते, न तु प्रकृतिभाव एव; यथा रोरुत्वे। [2]एवं सोत्सर्गं सापवादं च प्रकरणमिति प्रकृतिभावेऽपि प्रगृह्यत्वहेतुके सिद्धत्वमुच्यते। **किमेतस्येति;** प्रकृतिभाव एवाश्रयात् सिद्धत्वमस्त्विति प्रश्नः। इतरो लाघवं दर्शयति—**अप्लुतादिति;** सिद्धे हि प्लुते अतोऽतीति तपरत्वादेवोत्वाप्रसङ्गः। **किमत इति;** यथोद्देशे संज्ञापरिभाषे प्रगृह्यसंज्ञा स्वरसन्धिप्रकरणमध्यपतिता न भवतीति प्रश्नः। **कार्यकालमिति;** कार्यार्थित्वाद् गुणानां कार्यस्य च प्रधानत्वात् प्रधानदेशत्वस्य न्याय्यत्वादिति भावः।

उ:—अस्तीति काका सूचितमनुशयं पृच्छति—भाष्ये [3]**किं तर्हीति।** ननु विध्यर्थस्य तपरसूत्रस्य नियमार्थत्वाभावादत्रजातिग्रहणेन प्लुतानामपि संज्ञा स्यादेव; अत आह—**व्यक्तीति;** व्यक्तिपक्षे दीर्घाणामेव संज्ञित्वेन प्लुतानां संज्ञा न स्यादित्यर्थः। **न त्विति;** व्यक्तिपक्षे नियमार्थत्वाभावादित्यर्थः। यद्यप्येकारस्याण्त्वात् 'अणुदित्' इत्यनेन सवर्णग्रहणात् प्लुतस्यापि संज्ञा सिध्यति तथापि परत्वादत्र तपरसूत्रमेव प्रवर्तते न अणुदित्सूत्रमिति भावः। प्लुतेन स्थानिनो निवृत्तेः प्लुतासिद्धावपि स्थान्याश्रयसंज्ञा कथं स्यात्; अत आह—**शास्त्रेति।** ननु शास्त्रासिद्धिः

---

(१) क. असिद्धत्वे हि.

(२) एव इति मुद्रितपुस्तकस्थः पाठः

(३) ख. किं तर्हीति। न ह्येति; प्रगृह्यत्वानुनासिकत्व ........तद्ग्रहणमनुपयुक्तमिति भावः। ननु

शास्त्राप्राप्तिः ; तथा च प्लुताभावाद्यद्यपि स्थानिनः प्रगृह्यसंज्ञा सिध्यति, तथापि [1]प्लुते कृते तस्य सा न स्यात् अतत्कालत्वात् । न च स्थानिवद्भावेन सा अनल्विधाविति निषेधात् ; अत आह—**प्लुतबुद्धाविति** । यद्यपि [2]शास्त्रं प्रवृत्तम्, प्लुतेन स्थान्यपि निवृत्तः, प्लुत एवास्ति, तथाप्यसिद्धवचनेन शास्त्रं न प्रवृत्तमिति बुद्धौ प्लुतबुद्धेरप्यभावात् त्रिमात्र एव द्विमात्रबुद्ध्या प्रगृह्यसंज्ञा, न स्थानिवद्भावेनेत्यर्थः । **ननु** प्राधान्यात् कार्यासिद्धत्वमेव न शास्त्रासिद्धत्वम् ; अत आह—**तथा हीति** । आदेशापनोद्यत्वादुत्सर्गः स्थानी । स लक्षणं निमित्तं यस्य शास्त्रस्य तस्य भावायेत्यर्थः । अधीत्येत्यत्र कार्यासिद्धत्वे दीर्घेण निवृत्तस्य पुनरुत्थानाभावात् तुक् न स्यादित्याशङ्क्य स्थानिवद्भावो वक्तव्यः । तेन सिध्यति इति मतान्तरनिरासपूर्वकं 'स्थानिवद्वचनानर्थक्यं शास्त्रासिद्धत्वात्, इति 'षत्वतुकोरसिद्धः' इत्यत्र वक्ष्यते । तथा चावैरूप्याय सर्वत्र शास्त्रासिद्धत्वमेव युक्तमिति भावः । **एवमाश्रयण**, कार्यित्वेनाश्रयण । व्यतिरेक-मुक्त्वान्वयमाह—**कार्यित्वेनेति** । **स्वरसन्धीति ;** स्वरसंहिताकार्येत्यर्थः । संहितासापेक्षशास्त्रसमुदायः प्रकरणशब्दार्थः । **न प्रकृतिभाव एव ;** प्लुतस्ये-त्यादिः । **यथेति ;** प्रकृतिभावव्यतिरिक्तेऽपि रोरुत्वे यथा प्लुतस्य सिद्धत्वं ज्ञाप्यते तथान्यत्रापीत्यर्थः । ननु प्रकृतिभावो न संहिताकार्यम् ; अत आह—**एवमिति** । प्रकरणापेक्षं ज्ञापकमिति सिद्धे सतीत्यर्थः । प्रगृह्यत्वहेतुक इति विशिष्टपरं, तेन प्रगृह्यत्वेऽपीत्यर्थः । कार्यकालपक्षे प्रगृह्यसंज्ञापि स्वरसंहितान्तःपातिन्येवेति । **प्रकृतिभाव एवेति ;** प्लुतहेतुकेत्यादिः । भाष्ये **किमेतस्येति ;** स्वरसन्धि-प्रकरणे प्लुतसिद्धत्वस्येत्यर्थः । **इतर इति ;** विप्रतिपन्नप्रगृह्यत्वव्यतिरिक्तप्रयोजनं दर्शयतीत्यर्थः । **लाघवम्,** अप्लुतादप्लुत इत्येतद्वचनरूपलाघवम् । अवक्तव्य-त्वमेवाह—**सिद्धे हीति** । तथा च परत्वान्नित्यत्वाच्च पूर्वं प्लुत इति भावः । शङ्कातात्पर्यमाह—**यथोद्देशमिति** । कार्यकालत्वे हेतुमाह—**कार्येति ;** अङ्गानां प्रधानदेशकालत्वादित्यर्थः ।

**भा :—किं पुनः प्लुतस्य प्रगृह्यसंज्ञावचने प्रयोजनम् । प्रगृह्याश्रयः प्रकृतिभावो यथा स्यात् । मा भूदेवम् । प्लुतः**

(१) ख. पुनः प्लुते. (२) क. शास्त्रप्रवृत्तप्लुतेन

**प्रकृत्या इत्येवं भविष्यति। नैवं शक्यम्। उपस्थिते हि दोषः स्यात् "अप्लुतवदुपस्थिते" इति। अत्र पठिष्यति ह्याचार्यः 'वद्वचनं प्लुतकार्यप्रतिषेधार्थम्। प्लुतप्रतिषेधे हि प्रगृह्यप्लुतप्रतिषेधप्रसङ्गोऽन्येन विहितत्वात्' इति। तस्मात् प्लुतस्य प्रगृह्यसंज्ञैषितव्या। प्रगृह्याश्रयः प्रकृतिभावो यथा स्यात्।**

प्र:—**उपस्थिते हीति;** उपस्थितमनार्षं इतिकरणः। अग्नी ३ इतीत्यत्र प्लुताश्रये प्रकृतिभावे प्रतिषिद्धे प्रगृह्याश्रयः प्रकृतिभावः इष्यते। तदाह—**पठिष्यतीति**। यत्र प्रगृह्यसंज्ञा नास्ति, स प्लुताश्रयप्रकृतिभावः प्रतिषेधविषयः 'देवदत्ता ३ इति देवदत्तेति'।

उ:—**अनार्षः,** अवैदिकः। उपस्थिते दोषं विशदयति—**अग्नी३ इति इत्यत्रेति। प्रतिषिद्धे,** अप्लुतवत् इत्यनेन। **इष्यत इति;** तथा च स न स्यादिति दोष इत्यर्थः। इष्टमेवाह—**तदाहेति।** प्लुतकार्यस्य प्लुतः प्रकृत्या इति विहितस्य प्रतिषेधार्थम्।' वतिं विना अप्लुत उपस्थित इति [1]प्लुतस्य निषेधे प्रगृह्यप्लुतस्यापि निषेधप्रसङ्गः। तथा च अग्नी इत्यत्र प्रकृतिभावो न स्यात्। नन्वप्लुतवदित्युक्तेऽपि प्रगृह्यप्लुतस्य प्रगृह्याश्रयप्रकृतिभावोऽपि कस्मान्न निषिध्यते; अत आह—भाष्ये **अन्यनेति।** प्लुतः प्रकृत्या इति विहितस्यैव अप्लुतवदिति निषेधः, न तु प्रगृह्यः प्रकृत्येत्यनेन विहितस्य इति वार्तिकार्थः। ननु प्लुताश्रयप्रकृतिभावप्रतिषेधेऽपि यदि प्रगृह्याश्रयः स्यात्तर्हि प्लुताश्रयप्रतिषेधो व्यर्थः; अत आह—**यत्रेति।** देवदत्ता ३ इति इति स्थिते देवदत्तेति सन्धिरेव भवतीत्यर्थः।

**भा:—यदि पुनर्दीर्घाणामतपराणां प्रगृह्यसंज्ञोच्येत,[2] एवमप्येकारः एव एकः सवर्णान् गृह्णीयात्, ईकारोकारौ न गृह्णीयाताम्। किं कारणम्? अनण्त्वात्। यदि पुनर्ह्रस्वानामतपराणां प्रगृह्य-**

(१) क. प्लुतस्य इति नास्ति. (२) क. उच्यते.

संज्ञोच्येत[1]। नैवं शक्यम्। इहापि प्रसज्येत 'अकुर्वहि अत्र, अकुर्वह्यत्र' इति। तस्माद्दीर्घाणामेव तपराणां प्रगृह्यसंज्ञा वक्तव्या। दीर्घाणां चोच्यमाना प्लुतानां न प्राप्नोति। एवं तर्हि किं न एतेन यत्नेन यत् 'सिद्धः प्लुतः स्वरसन्धिषु' इति। असिद्धः प्लुतः। तस्यासिद्धत्वात् तत्काला एव [2]भवन्तीति। कथं यत्तज्ज्ञापकमुक्तम् "प्लुतप्रगृह्या अचि' इति। प्लुतभावी प्रकृत्येत्येवमेतत् विज्ञायते। कथं यत्तत्प्रयोजनमुक्तम्?: क्रियते तन्न्यास एव "अप्लुतादप्लुते" इति। एवमपि यत्सिद्धे प्रगृह्यकार्यं तत् प्लुतस्य न प्राप्नोति 'अणोऽप्रगृह्यस्यानुनासिकः' इति। एवं तर्हि किं न एतेन यत्नेन 'कार्यकालं संज्ञापरिभाषम्' इति। यथोद्देशमेव संज्ञापरिभाषम्। अत्र चासावसिद्धः। तस्यासिद्धत्वात्तत्काला एव भवन्ति।

प्र:—**यदि पुनरिति।** ननु व्यक्तिपक्षाश्रयणात् प्लुतानां न सिध्यति, न पुनस्तपरत्वात्। अयमत्राशयः—आकृतिपक्ष आश्रयिष्यते; [3]दीर्घोच्चारणप्रयत्नाधिक्यात् ह्रस्वानां न भविष्यति प्लुतानां तु प्रवर्तिष्यते। **एवमपीति।** अयं भावः 'आकृतिपक्षे यथा ह्रस्वानां प्रयत्नाधिक्यान्न भवति, तथा दीर्घोच्चारणसामर्थ्यात् विशिष्टव्यक्तिस्थैवाकृतिः गृह्यत इति प्लुतानां न स्यात्। यथा स्थूलं गामानयेत्युक्ते न कृशस्यानयनं भवति इति। आकृतिपक्षेऽपि विशिष्टैवाकृतिर्दीर्घा व्यक्तिः [4]गृह्यते तथा चानण्त्वादीदूतौ ग्राहकौ न स्याताम्। **यदि पुनरिति;** ह्रस्वसाहचर्यादिकारोऽपि ह्रस्वशब्देनाभिधीयत इति ह्रस्वानामिति बहुवचनम्। तत्र ह्रस्वनिर्देशेऽण्त्वादाकृतिपक्षे वा यत्नाधिक्याभावाद् भिन्नकालानां ग्रहणं सिद्ध्यतीत्यर्थः। **प्लुतभावीति;** प्लुतः भावी यस्य सः प्लुतभावी स्थानी प्रकृतः तस्यैव प्रकृतिभावः। ननु प्लुतस्या-

(१) क. उच्यते.
(२) क. भवन्ति इति नास्ति.
(३) क. दीर्घोच्चारणाच्च प्रय—
(४) क. गृह्यत इति.

सिद्धत्वात् स्थान्यपि प्लुतभावित्वात् प्लुतव्यपदेशं कथं लभते। नैष दोषः। प्लुतो [1]ह्यस्य भावीति बुद्ध्या प्रकल्पनमेतत्। न च तत्र प्लुतस्यासिद्धत्वम्; अन्यथा प्लुतोऽसिद्ध इत्ययमपि व्यवहारो न स्यात्। कार्यकालपक्षमाश्रित्याह—**एवमपीति;** ततश्च अग्नी ३ इत्यत्र 'अप्रगृह्यस्य' इत्यनुनासिकप्रतिषेधे क्रियमाणे प्लुतस्य सिद्धत्वात् प्रगृह्यत्वाभावादनुनासिकः स्यात्। यथोद्देशपक्षाश्रयेण [2]परिहारः। कथं पुनरयं पक्षः, यावता कार्यार्थत्वात्संज्ञापरिभाषस्य कार्यकालतैव न्याय्या। नैष दोषः। यदानुद्दिश्य प्रयोजनविशेषं प्रयोजनमात्रमभिसन्धाय भविष्यति किञ्चिदनेन प्रयोजनमिति संज्ञापरिभाषं [3]प्रतीयते, तदा संभवत्येवायं पक्षो यथाश्रुतग्राहि[4]प्रतिपत्त्रपेक्षः। महावाक्यार्थपर्यालोचनप्रवृत्त[5]प्रतिपत्त्रपेक्षस्तु कार्यकालपक्षः।

उ:—अतपराणामिति विशेषणपरं भाष्यमिति मत्वा चोदयति—**नन्विति।** भाष्ये अतपराणामिति जातिनिर्देश उक्तः। दीर्घाणामिति ह्रस्वनिवृत्तिर्विवक्षिता इत्याह—**अयमिति।** समाधानतात्पर्यमाह—**अयं भाव इति।** दीर्घाणां सामान्योपलक्षणत्वे यत्नाधिक्येऽपि ह्रस्वनिवृत्तिर्न संभवतीति विशेषणत्वं वाच्यम्। तथा च [6]विशिष्टजातीनामेव सामान्यानां संज्ञा ह्रस्वविशिष्टानामिव प्लुतविशिष्टानामपि न स्यादेवेत्यर्थः। एकारस्याण्त्वेन सवर्णग्राहकत्वेऽपि ईदूतोरनण्त्वेनाग्राहकत्वात् तयोः [7]प्लुतयोः संज्ञा न स्यादेवेत्याह—**अनण्त्वादिति। बहुवचनमिति;** सृष्टिः प्राणभृतः इत्यादिवदित्यर्थः। अस्मिन् [8]पक्षे व्यक्तिनिर्देशे वा जातिनिर्देशे वा इष्टसिद्धिरित्याह—**तत्रेति।** कर्मधारयपक्षे दोषानुद्धारादाह—**प्लुत इति।** न च प्लुतस्याश्रयित्वात्[9] सिद्धत्वमेव कुतो नोक्तमिति वाच्यम् तथा सति न्यायेन पूर्वत्रासिद्धशास्त्रस्य बाधः स्यात्। न हि न्यायेन वचनबाधो युक्त इति [10]लक्षणाऽश्रितेत्याह।

(१) क. अस्य।
(२) क. अयं परिहारः।
(३) क. प्रतीयते।
(४) क. प्रतिपत्त
(५) क. प्रतिपत्त
(६) ख. विशिष्टव्यक्तीनाम्।
(७) ख. प्लुतविशिष्टयोः।
(८) ख. कल्पे।
(९) ख. आश्रयात्।
(१०) क, ख. भाष्यकृता इत्यधिकः पाठः।

शास्त्रीयकार्ये एवासिद्धत्वम्। न च प्लुतव्यपदेशः शास्त्रीयं कार्यमित्याह—**नैष इति।** तत्र [1]बुद्धिकल्पने। अनुनासिकनिषेधे प्लुतस्य सिद्धत्वेऽपि प्रगृह्यसंज्ञायां तस्यासिद्धत्वात् चोद्यानुपपत्तिमाशङ्क्याह—**कार्येति।** ननु अप्रगृह्यस्येति पर्युदासे अनुनासिकस्य प्रगृह्यकार्यत्वाभावात् तत्र प्रगृह्यसंज्ञायाः कथमुपस्थानम्; अत आह—**ततश्चेति।** अप्रगृह्यस्येति प्रतिषेधः। तस्य प्रगृह्यसंज्ञाकार्यत्वमस्तीत्यर्थः। यद्यपि पर्युदासे एकवाक्यता, प्रतिषेधे वाक्यभेदः; तथापि एतद्भाष्यसङ्गतये वाक्यभेदोऽङ्गीक्रियत इति भावः। भाष्ये प्रगृह्यकार्यप्रतिषेधरूपं यथोद्देशपक्षमाक्षिपति—**कथमिति।** अभिसन्धानमभिनयति—**भविष्यतीति।** अयं पक्षो मन्दमध्यमौ प्रतीत्याह—**यथेति।** उत्तमाधिकारिणं प्रति पक्षान्तरमित्याह—**महेति।** एवं पक्षद्वयस्यापि सम्भवे क्वचित् कश्चित् पक्षः कार्यानुरोधेनाश्रीयत इति भावः।

**भा :—कथं पुनरिदं विज्ञायते—ईदादयो यद्द्विवचनम्, आहोस्विदीदाद्यन्तं यद् द्विवचनमिति? कश्चात्र विशेषः?**

**॥ वा ॥ ईदादयो द्विवचनं प्रगृह्या इति चेदन्त्यस्य विधिः ॥**

**भा :—ईदादयो द्विवचनं प्रगृह्या इति चेदन्त्यस्य प्रगृह्यसंज्ञा विधेया 'पचेते इति, पचेथे इति'। वचनाद्भविष्यति। अस्ति वचने प्रयोजनम्। किम्? 'खट्वे इति, माले इति'।**

प्र :—**कथं पुनरिति;** [2]ईदादयो यदि संज्ञिनः तद्विशेषणं तु द्विवचनं तदा द्विवचनान्तत्वमीदादीनां न संभवतीति द्विवचनानामेवेदादीनां संज्ञया भाव्यम्। अथ द्विवचनं संज्ञि, तद्विशेषणमीदादयः तदा तदन्तविधिरप्रधानेन प्रधानस्येति ईदाद्यन्तं द्विवचनमिति पक्षः। तत्रोभयोरपि पक्षयोर्दोषदर्शनात् प्रश्नः। **पचेते इति;** एकारोऽत्र द्विवचनं न भवति; अपि तु तस्यान्तः। **वचनादिति;** द्विवचनावयवे

(१) ख. बुद्ध्या कल्पने। (२) क. ईदूदादयो।

द्विवचनशब्दो वर्तिष्यत इत्यर्थः। **अस्तीति;** मुख्ये संभवति गौणस्य ग्रहणमन्याय्यमित्यर्थः। **खट्वे इतीति;** "अन्तादिवच्च" इति आदिवद्भावादेकारो द्विवचनम्।

उः—**ईदादय इति;** प्राथम्यात्, "अदसो मात्" इत्यनेन ऐकरूप्याच्चेत्यर्थः। **तदेति;** अन्तशब्दस्यावयववाचित्वात्, तदन्तस्येत्यस्य बहुव्रीहित्वाच्चेत्यर्थः। यद्यपि "आद्यन्तवदेकस्मिन्" इति इदूदेद्द्विवचनं द्विवचनान्तं सम्भवति तथापि फलतो विशेषाभावात् [1]सामानाधिकरण्येनान्वयो युक्त इति भावः। **अथेति;** आनन्तर्यात् "'येन विधिस्तदन्तस्य" इत्यस्यानुग्रहाच्चेत्यर्थः। अप्रधानेनेत्यनेन तदन्तस्येति बहुव्रीहिरिति दर्शितम्। अवचनार्थे वचनात् कथं स्यात्; अत आह—**द्विवचनावयव इति;** अमुख्यत्वसाम्यात् लाक्षणिकं [2]गौणशब्देनोक्तम्। खट्वे इत्यत्र एकारस्य प्रातिपदिकान्तत्वात् न द्विवचनत्वम्; अत आह—**अन्तादिवदिति।**

**भा :—अस्तु तर्हि ईदाद्यन्तं यत् द्विवचनम् इति।**

**॥ वा ॥ ईदाद्यन्तमिति चेदेकस्य विधिः॥**

**भा :—ईदाद्यन्तं द्विवचनमिति चेदेकस्य प्रगृह्यसंज्ञा विधेया 'खट्वे इति, माले इति'।**

**॥ वा ॥ न वा आद्यन्तवत्वात्॥**

**भा :—न वा एष दोषः। किं कारणम्? आद्यन्तवत्वात्। आद्यवदेकस्मिन् कार्यं भवतीत्येवमेकस्यापि भविष्यति।**

प्रः—**एकस्येति;** असहायस्येत्यर्थः। ईदूतोः केवलयोरेव संभव इति। वचनसामर्थ्यात् तयोरेव सिद्ध्यति; [3]एकारान्तस्य द्विवचनस्य 'पचेते' इत्यादौ संभवात् 'खट्वे' इत्यत्र न सिध्यतीति दोषः। 'येन विधिस्तदन्तस्य' इत्यत्र स्वस्य च रूपस्येति नाश्रितमिति दोषोपन्यासः।

उः—ननु ईदाद्यन्तस्याप्येकत्वात् एकस्येत्यनेन न तद्व्यावृत्तिः; अत आह—**असहायस्येति;** वर्णमात्रस्येत्यर्थः। ननु खट्वे इत्यत्र यथा द्विवचनमसहायम् एवम् 'अग्नी, वायू' इत्यत्र ईदूतावपीति किमिति भाष्ये [4]नोदाहृतौ; अत आह—

(१) ख. सामानाधिकरण्येनैवान्वयः
(२) क गुणश
(३) क. एकारान्तस्य तु
(४) ख. नोदाहृतम्।

**इदूतोरिति।** **केवलयोरिति;** ससहायौ न संभवत इत्यर्थः। **वचनेति;** तदन्तविधिबाधेनेति भावः। **संभवादिति;** तथा च तत्र न तदन्तविधिर्बाधनीय इति भावः। ननु "येन विधिस्तदन्तस्य" इत्यत्र स्वस्य च रूपस्येत्यङ्गीकारात् कथमेकस्य विधिरिति वार्तिकम्; अत आह—**येनेति;** **नाश्रितम्;** वार्तिककृतेत्यर्थः।

**भा:—अथवा एवं वक्ष्यामि 'ईदाद्यन्तं यद् द्विवचनान्तम्' इति।**

**॥ वा ॥ ईदाद्यन्तं द्विवचनान्तमिति चेत् लुकि प्रतिषेधः ॥**

**भा:—ईदाद्यन्तं द्विवचनान्तमिति चेत् लुकि प्रतिषेधो वक्तव्यः। कुमार्योरगारं कुमार्यगारम्। वध्वोरगारं वध्वगारम्। एतद्धि ईदाद्यन्तं श्रूयते; द्विवचनान्तं च भवति प्रत्ययलक्षणेन।**

प्र—**अथवेति;** 'प्रत्ययग्रहणे यस्मात्' इति द्विवचनेन तदन्तविधिः, पश्चाद् द्विवचनान्तमीदादिभिर्विशेष्यत इत्ययं तृतीयः पक्षो भवति 'ईदाद्यन्तं यत् द्विवचनान्तम्' इति। ननु संज्ञाविधौ प्रत्ययग्रहणे तदन्तविध्यभावः "सुप्तिङन्तं पदम्" इत्यत्र अन्तग्रहणेन ज्ञाप्यत इति कथमेतत्पक्षोपपत्तिः। चतुर्थपक्षप्रतिक्षेपाय वक्ष्यत्येवैतत् भाष्यकार इति नैतदपूर्वं चोद्यम्। दोषान्तरेणेमं पक्षं निराकर्तुमाह—**लुकि प्रतिषेध इति।** दोषसद्भावेनैवास्य पक्षस्य निराकरणात् तदन्तविध्यभावो[1]ऽत्र-नोक्तः। **कुमार्यगारमिति;** कथं [2]पुनरस्य द्विवचनान्तस्य समासः, यावता वृत्तौ संख्याविशेषो न गम्यते। नैष दोषः। यथा 'तावकीनः' इत्यादावादेशेन संख्याविशेषो व्यज्यते तथा इहापि सत्यां प्रगृह्यसंज्ञायां प्रकृतिभावेन द्वित्वं व्यज्यतेति दोषोपन्यासः।

उ:—एतत्पक्षमुज्जीवयति—**प्रत्ययग्रहण इति;** 'यस्मात्प्रत्ययविधिः' इत्यत्र 'प्रत्ययग्रहणे यस्मात् स विहितः तदादेस्तदन्तस्य ग्रहणम्' इति परिभाषा

(१) क. अत्र इति नास्ति। (२) पुनरत्र।

साधिता। सा परत्वात् 'येन विधिः' इत्यतः पूर्वं प्रवर्तत इति भावः। **चतुर्थेति;** ईदाद्यन्तं यत् द्विवचनं तदन्तमिति पक्षेत्यर्थः। दोषान्तरेणेत्येतदेव विशदयति—**दोषसद्भावेनेति। आदेशेनेति;** "तवकममकावेकवचने" इत्येकार्थवाचिनोः युष्मदस्मदोर्विहितेनेत्यर्थः। **प्रकृतिभावेन;** अन्यथानुपपद्यमानेन।

**॥ वा ॥ सप्तम्यामर्थग्रहणं ज्ञापकं प्रत्ययलक्षणप्रतिषेधस्य ॥**

**भा :—यदयम् " ईदूतौ च सप्तम्यर्थे " इत्यर्थग्रहणं करोति तज्ज्ञापयत्याचार्यः न प्रगृह्यसंज्ञायां प्रत्ययलक्षणं भवतीति। तर्हि ज्ञापकार्थमर्थग्रहणं कर्तव्यम्। न कर्तव्यम्। ईदादिभिर्द्विवचनं विशेषयिष्यामः। ईदादिविशिष्टेन च द्विवचनेन तदन्तविधिर्भविष्यति 'ईदाद्यन्तं॥ य द्विवचनं तदन्तमीदाद्यन्तम्' इति। एवमप्यशुक्ले वस्त्रे शुक्ले समपद्येतां शुक्लयास्तां वस्त्रे [1]इति। अत्र प्राप्नोति। अत्र हि ईदादि च द्विवचनं, तदन्तं च भवति प्रत्ययलक्षणेन। अत्राप्यकृते शीभावे लुक् भविष्यति। इदमिह संप्रधार्यं लुक्क्रियतां शीभाव इति। किमत्र कर्तव्यम्? परत्वाच्छीभावः। नित्यो लुक्; कृते शीभावे प्राप्नोति, अकृतेऽपि प्राप्नोति। अनित्यो लुक्; अन्यस्याकृते शीभावे प्राप्नोति। अन्यस्य कृते। शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति। शीभावोऽप्यनित्यः; न हि कृते लुकि प्राप्नोति। उभयोरनित्ययोः परत्वाच्छीभावः। शीभावे कृते लुक्। अथापि कथञ्चिन्नित्यो लुक् स्यात् एवमपि दोषः। वक्ष्यत्येतत् 'पदसंज्ञायामन्त[2]ग्रहणमन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधार्थम्' इति। इदं चापि प्रत्ययग्रहणम्। अयश्चापि संज्ञाविधिः। अवश्यं खल्वस्मिन्नपि पक्षे आद्यन्तवद्भाव एषितव्यः। तस्मादस्तु स एव मध्यमः पक्षः॥ ईदूदेत्॥**

(१) क. इतीति नास्ति. (२) क. वचनम्।

प्र:—**सप्तम्यामिति;** ईदूतौ सप्तमीत्येव तदन्तविधौ सति प्रत्ययलक्षणेन 'सोमो गौरी अधिश्रितः'[1] इत्यादौ सिद्धायां प्रगृह्यसंज्ञायामर्थग्रहणं ज्ञापयति 'प्रगृह्यसंज्ञाप्रकरणे प्रत्ययलक्षणं न भवति' इति। **तर्हीति;** आद्यन्तवद्भावानाश्रयणाय [2]अयं तृतीयः पक्षः परिगृहीतः। तत्र च दोषप्रतिविधानार्थमधिकमर्थग्रहणं ज्ञापकार्थं कर्तव्यं भवतीति सुतरां गौरवं भवतीत्यर्थः। **ईदादिभिरिति;** अत्र पक्षे कुमार्यगारमित्यत्राप्रसङ्गः। न ह्यत्र ईदूदेदन्तं द्विवचनम्। किं तर्हि? ओमिति सकारान्तम्। **तदन्तमिति;** द्विवचनान्तम्। **ईदाद्यन्तमिति;** ईदादिभिः साक्षात् समुदायस्य संबन्धाभावात् ईदादिशब्देनेदाद्यन्तमुच्यते। तेन ईदाद्यन्तान्तमित्यर्थः। **शुक्ल्यास्तामिति;** शुक्लशब्दात् द्विवचनम् औ, तस्य "नपुंसकाच्च" इति शीभावः, ततश्च्विप्रत्ययः, शीशब्दस्य 'सुपः' इति लुक्, "अस्य च्वौ" इतीत्वम्, तद्धितान्तत्वात् सुप्, तस्य "अव्ययात्" इति लुक्। अत्र [3]हि शीशब्द ईकारान्तं द्विवचनम्। तदन्तश्च समुदायः प्रत्ययलक्षणेनेति प्रगृह्यसंज्ञा प्राप्नोति। **अत्र हि ईदादि च द्विवचनमिति;** ईदादिशब्देन ईदाद्यन्तमुच्यते। क्वचित्तु पाठः ईदाद्यन्त च श्रूयते इति। तत्रैवं व्याख्येयम्। ईदाद्यन्तं च श्रूयते सूत्रे तदन्तविधिरीदादिभिर्द्विवचनस्य आश्रीयत इत्यर्थः। यस्त्वयं 'अस्य च्वौ' इतीकारः स द्विवचनस्य न कश्चिदिति न तदभिप्रायेण भाष्यं व्याख्येयम्। **अथापि कथञ्चिदिति;** स्थानिविशेषानपेक्षायां[4] कृताकृतप्रसङ्गित्वेन लुक्छास्त्रस्य प्रवर्तनादित्यर्थः। अथवा नित्यत्वेन बाधकत्वं लक्ष्यते। तेन 'अन्तरङ्गानपि' इति न्यायेन शीभावस्य लुक् बाधक इत्यर्थः। **एवमपि दोष इति;** पक्षस्योत्थानमेव नास्तीति तत्पक्षासंभव एव दोषः। **अवश्यमिति;** यदाश्रयणभयादयं पक्षोऽङ्गीकृतः तस्याद्यन्तवद्भावस्यास्मिन्नपि पक्षेऽवश्यमाश्रयणमङ्गीकृतम्। अग्नी इत्यत्र हि ईकार एव द्विवचनम्। न त्वीकारान्तम्। **तस्मादिति;** द्वितीय एव पक्षोऽस्त्वित्यर्थः। 'मणीवादीनां प्रतिषेधो वक्तव्यः' इति भाष्यवार्तिककाराभ्यामपठितत्वादप्रमाणमेतत्। 'मणीवोष्ट्रस्य' इति तु प्रयोगो वाशब्दस्योपमानार्थस्य। 'रोदसीव' इत्यादिस्तु छान्दसः प्रयोगः। छन्दसि तु सर्वे विधयो विकल्प्यन्ते।

---

(१) इत्यादिषु। (२) मु. पु. अयम् इति नास्ति

(३) क. हि इति नास्ति। (४) क. अनपेक्षया।

उ :—ज्ञापकत्वमुपपादयति—**ईदूताविति।** ज्ञापनप्रयोजनं कुमार्योरगारमित्यत्र प्रगृह्यसंज्ञाभाव एव। तत्तर्हीत्यनेन तृतीयकल्पे गौरवं दूषणमुक्तम्; तद्विशदयति—**आद्यन्तवदिति। अयम्;** अथवेति पक्षः। **प्रतिविधानार्थम्,** प्रत्ययलक्षणनिरासार्थम्। अनाश्रयणादाश्रयणं गुरु, अकरणात् करणं गुरु, तस्य ज्ञापकत्वाश्रयणमतिगुर्विति सुतरामित्युक्तम्। श्रुतस्य श्रुतेनान्वयात् तदन्तविधिश्चान्तरङ्ग इति पूर्वमीदादिभिर्द्विवचनस्य तदन्तविधिः, पश्चाद् द्विवचनेन ईदादेरिति पक्षान्तरं भाष्ये उक्तम्; तस्य प्रयोजनमाह—**अत्रेति। साक्षात्;** द्विवचनव्यवधानं विना। **सामुदायस्य,** प्रकृतिप्रत्ययसमुदायस्य। अत्रातिव्याप्तिमुपपादयति—**शुक्लशब्दादिति। तत इति;** "अभूततद्भावे" इत्यादिना। **शीशब्दस्येति;** च्व्यन्तस्य तद्धितान्तत्वेन [1]प्रातिपदिकत्वादित्यर्थः। **तस्येति;** "तद्धितश्चासर्वविभक्तिः" इत्यव्ययसंज्ञायां सत्यामित्यर्थः। **ईकारान्तमिति;** अन्तवद्भावेनेत्यर्थः। अस्मिन् कल्पे द्विवचनं नेदादिविशेषणमिति ईदादिद्विवचनमिति भाष्यायोगमाशङ्क्याह—**ईदादिशब्देनेति।** यच्छ्रूयते सूत्रे द्विवचनं तदीदाद्यन्तमिति भाष्ययोजनामभिप्रेत्य तात्पर्यार्थमाह—**तदन्तविधिरिति।** शुक्ल्यास्तामित्यत्र श्रूयमाणेकारपरत्वेनैव व्याख्यायताम्; अत आह—**यदयमिति।** भाष्ये—**अत्राप्यकृते शीभाव इति;** तथा च च्व्यन्तस्य ईदन्तद्विवचनान्तत्वाभावात् न प्रगृह्यत्वप्रसङ्ग इत्यर्थः। भाष्ये—**शीभावे कृते लुगिति;** तथा च च्व्यन्तातिप्रसङ्गदोषः स्थित इत्यर्थः। अनित्ये लुकि शीभावो नित्यश्चेत् परत्वादिति पूर्वोक्तहेतुरसमर्थितः स्यादिति मत्वा भाष्ये शीभावोऽप्यनित्य इत्युक्तम्। उक्तरीत्या अनित्यत्वात् अथापीति भाष्यमयुक्तम्; अत आह—**स्थानीति।** एवं सति 'शब्दान्तरस्य प्राप्नुवन् विधिरनित्यः' इति क्वापि न प्रवर्तेत; अत आह—**अथवेति।** 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुक् बाधते' इति परिभाषया लुग् बाधक इत्यर्थः। भाष्ये—**एवमपि;** च्व्यन्तेऽतिव्याप्त्यभावेऽपीत्यर्थः। ननु [2]अतिव्याप्त्यादेरभावात् दोष इत्ययुक्तम्; अत आह—**पक्षस्येति।** अवश्यमित्यस्य तात्पर्यमाह—**यदाश्रयणेति।** अग्नी इत्युपलक्षणम्; वायू खट्वे इत्यपि ज्ञेयम्। तृतीयोऽपि मध्यमो भवति; अत आह—

(१) क. प्रातिस्विकत्वात्  (२) ख. अतिव्याप्तेः।

**द्वितीय एवेति।** **अप्रमाणं;** मूलशून्यम्। **एतत्,** 'मणीवादेर्न' इति वृत्तिकारवाक्यम्। उदाहरणानामन्यथासिद्धिमाह—**मणीवेति।**

सू—अदसो मात् ॥ १। १। १२ ॥

**॥ वा ॥ मात्प्रगृह्यसंज्ञायां तस्यासिद्धत्वादयावेकादेशप्रतिषेधः ॥**

भा :—**मात्प्रगृह्यसंज्ञायां तस्य ईत्वस्य ऊत्वस्य चासिद्धत्वादयावेकादेशाः प्राप्नुवन्ति। तेषां प्रतिषेधो वक्तव्यः 'अमी अत्र, अमू अत्र, अमी आसते'। अमू आसाते'। ननु [1]च प्रगृह्यसंज्ञावचनसामर्थ्यादयादयो न भविष्यन्ति।**

**॥ वा ॥ वचनार्थो हि सिद्धे ॥**

भा :—**[2]नेदं वचनाल्लभ्यम्। अस्ति [3]ह्यन्यदेतस्य वचने प्रयोजनम्। किम्? यत्सिद्धे प्रगृह्यसंज्ञाकार्यं तदर्थमेतत् स्यात् 'अणोऽप्रगृह्यस्यानुनासिकः' इति। नैकं प्रयोजनं योगारम्भं प्रयोजयति। यद्येतावत्प्रयोजनं स्यात् तत्रैव ब्रूयात् 'अणोऽप्रगृह्यस्यानुनासिकोऽदसो न' इति।**

प्र :—**मात्प्रगृह्येति;** अस्मिन् सूत्रन्यास इत्यर्थः। **ऊत्वस्य चेति;** चशब्दान्मत्वस्य च। [4]शास्त्रासिद्धत्वाच्च स्थानिलक्षणमेव कार्यं प्राप्नोति, नादेशलक्षणमित्ययादिप्रसङ्गः[5]। अमी आसते [6]इत्यत्रायादेशः प्राप्नोति, अमू आसाते [7]इत्यत्रावादेशः, अमी अत्रेत्यत्र एकादेशः। ननु च द्विपदाश्रयत्वाद्बहिरङ्गा अयादायोऽन्तरङ्गेष्वीत्वादिषु असिद्धा इति पूर्वाभावे कथं "पूर्वत्रासिद्धम्" इति ईत्वादीनामसिद्धत्वं स्यात्। नैष दोषः। 'नाजानन्तर्ये' इति बहिरङ्गपरिभाषानिषेधात्। **ननु चेति।** यथोद्देशपक्षे आश्रयात्सिद्धत्वं भविष्यतीत्यर्थः। कार्यकालपक्षमाश्रित्याह—**वचनार्थो हीति;** वचनस्य प्रयोजनमित्यर्थः। **नैकमिति;** अनेककार्यसिद्ध्यर्थं संज्ञासूत्र

(१) क. च इति नास्ति। (२) क. न चेदम्।
(३) क. अन्यद्। (४) मु. पु. शास्त्रस्यासिद्धत्वाच्च।
(५) क. अयादेशप्रसङ्गः। (६) इत्ययादेशः मु. पु. पाठः।
(७) इत्यवादेशः मु. पु. पाठः।

नैकेन प्रयुज्यत इत्यर्थः। अन्यत्तु सूत्रमेकेनापि प्रयुज्यते 'मुद्रादण्' इत्यादि। **तत्रैवायमिति;** न च तत्रैदूदेद्ग्रहणं कर्तव्यं मादिति वा। यस्मादणोऽनुनासिकोऽवसाने विधीयते, [1]पूर्वेण णकारेणाण्ग्रहणमिति असौ, अमुके, अमुकाभ्यामित्यादावनुनासिकस्याप्रसङ्ग एव। तदेवं कार्यकालेऽपि संज्ञापरिभाषे प्रकरणोत्कर्षेण विधीयमाना प्रगृह्यसंज्ञा सर्वप्रगृह्यकार्यार्था सत्यसिद्धत्वं बाधिष्यत इत्यर्थः।

उ:—ननु प्राथम्याददसः प्रगृह्यसंज्ञायामिति वक्तव्यम्; न तु मादिति; अत आह—**अस्मिन्निति।** मादित्युक्तेरयं दोषः; 'अदसो दादेदौतोः पदान्तयोः' इति सूत्रकरणे नायं दोष इति सूचयितुं मादित्युक्तमिति भावः। भाष्ये:—अय्, आव्, एकादेश इति विग्रहः। एकादेशः "एङः पदान्तात्" इत्यनेन। भाष्ये क्रमेणोदाहरणानि—**अमी आसत इत्यादि।** अदे आसत इत्यत्र अयादेशः। अदौ आसात इत्यत्र आवादेशः। अदे अत्र इत्यत्र एकादेश इति विवेकः। [[2]अनुक्तसमुच्चयार्थः चशब्द इत्याह—**चशब्दादिति।** यद्यपि ईत्वोत्वयोरसिद्धत्वादेव अयादिप्राप्तिः तथापि वार्तिके प्रस्तुतपरामर्शितच्छब्देन मः परामृष्टः; तेन ईत्वोत्वे उपलक्षिते इति तद्व्याख्यानभाष्येऽपि मत्वासिद्धिविवक्षा आवश्यकीति भावः। संज्ञिनिर्वचनस्याप्यसिद्धत्वं संज्ञाभावप्रयोजकमिति तदसिद्धत्वं वर्ण्यमेव।] ननु कार्यासिद्धत्वे स्थानिनो निवृत्तस्य न स्वकार्यप्रवर्तकत्वम्; अत आह—**शास्त्रेति।** [[3]यद्वा ननु प्रगृह्यसंज्ञायामीत्वोत्वयोरसिद्धत्वान्न तयोः संज्ञेत्यसति प्रकृतिभावे तयोर्यणः प्रसङ्गदोषो वाच्यः, नत्वयादिप्रसङ्गदूषणं वाच्यम्; अत आह—**शास्त्रेति।** स्थानिलक्षणमयादिः, आदेशलक्षणो यणादिः प्रगृह्यसंज्ञाविधिर्वा।] उपपादितमेतदधस्तात्। **पूर्वाभावे,** पूर्वप्रसङ्गाभावे। **नाजानन्तर्य इति;** अयादावचोरानन्तर्यस्याश्रयणादित्यर्थः। **आश्रयादिति;** रोरुत्ववदित्यर्थः। असिद्धेऽपि वचनस्य अभिधेयमस्ति; अत आह—**प्रयोजनमिति।** नैकमित्यस्य विषयसङ्कोचमाह—**अनेकेति।** संज्ञा परिभाषाया अप्युपलक्षणम्। सङ्कोचे बीजमाह—**अन्यदिति।** ननु [4]अस्यार्थे ईदूदेदुपजीवनायात्र करणमित्याशङ्क्य तदनुपयोगमाह—**न चेति।** लाघवान्तरमाह—मादिति वेति। अकरणमेवाह—**यस्मादिति।** अण इत्युक्तेरसाविरयत्र औकारस्य,

(१) क. पूर्वेण च णकारेण। (२. ३) क. कोष्ठकान्तर्गतो भागः नोपलभ्यते।
(४) ख. अन्यार्थे।

अवसान इत्युकेरमुके अमुकाभ्याम् इत्यत्र उकारस्याकारस्य चाप्रसङ्गः। अत्र करणस्य प्रयोजनमाह--**तदेवमिति**। **प्रकरणोत्कर्षेण**; अनुनासिकसान्निध्यातिक्रमेण। **सर्वेति**; प्रकृतिभावानुनासिकप्रतिषेधार्थेत्यर्थः।

**॥ वा ॥ विप्रतिषेधाद्वा [[1]प्रगृह्यसंज्ञा] ॥**

**भा :—अथवा प्रगृह्यसंज्ञा क्रियतामयादयो वेति। प्रगृह्यसंज्ञा भविष्यति विप्रतिषेधेनेति[2]। नैष युक्तो विप्रतिषधः। विप्रतिषेधे परमित्युच्यते; पूर्वा च प्रगृह्यसंज्ञा परेऽयादयः। परा प्रगृह्यसंज्ञा करिष्यते। सूत्रविपर्यासः कृतो भवति। एवं तर्हि परैव प्रगृह्यसंज्ञा। कथम्? कार्यकालं संज्ञापरिभाषम्। यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम्। प्रगृह्यः प्रकृत्या इति उपस्थितमिदं भवति 'अदसो मात्' इति। एवमप्ययुक्तो विप्रतिषेधः। कथम्? द्विकार्ययोगो हि विप्रतिषेधः। न चात्र एको द्विकार्ययुक्तः एचामयादयः, ईदूतोः प्रगृह्यसंज्ञा। नावश्यं द्विकार्ययोग एव विप्रतिषेधः। किं तर्हि? असंभवोऽपि। स चास्त्यत्रासंभवः। कोऽसावत्रासंभवः? प्रगृह्यसंज्ञा अभिनिर्वर्तमाना अयादीन् बाधते, अयादयोऽभिनिर्वर्तमानाः प्रगृह्यसंज्ञाया निमित्तं विघ्नन्तीत्येषोऽसंभवः। सत्यसंभवे युक्तो विप्रतिषेधः।**

प्र :—**विप्रतिषेधाद्वेति**; "अयावेकादेशप्रतिषेधो वक्तव्यः" "विप्रतिषेधाद्वा प्रगृह्यसंज्ञा" इति विकल्पार्थो वाशब्दः। 'नैकं प्रयोजनम्' इत्यादिस्तु परिहारो भाष्यकारेणोक्तः, न वार्तिककारेणेति न तदपेक्षो विकल्पः। **नैष युक्त इति**; इष्टासिद्धय इति भावः। **करिष्यत इति**; आश्रयिष्यत इत्यर्थः। इतरस्त्वगृहीताभिप्राय आह—**सूत्रविपर्यास इति**। अभिप्रायं प्रकाशयितुमाह—**एवं तर्हीति**। **द्विकार्ययोगो हीति**; द्वाभ्यां कार्याभ्यां यो युज्यते स विप्रतिषेधविषयत्वाद्विप्रतिषेधः। **असंभवोऽपीति**; असंभव एव विप्रतिषेधः स तु

(१) क. कोष्ठकान्तर्गतः पाठः नास्ति। (२) क. इति, इति नास्ति।

कदाचित् द्विकार्ययोगो भवति, कदाचित् केवलोऽपि। तथा हि सति संभवे द्विकार्ययोगो न विप्रतिषेधः; यथा एकस्य दधातेरडागमद्विर्वचने भवतः 'अदधात्' इति। क्वचि-देकस्य द्विकार्ययोगाभावेऽप्यसंभवोऽस्ति। यथा त्रपूणामित्यत्र नुम्नुटोः प्रकृतिप्रत्ययभक्तयोः परस्परनिमित्तव्याघातात्। **अयादीन् बाधत इति;** प्रकृतिभावविधानात्। **निमित्तमिति**; ईत्वमूत्वं च।

उ:—वार्तिकापेक्षो वाकारः न भाष्यापेक्ष इत्याह—**अयाविति**। यद्यपि प्रतिषेधो वचनसाध्यः विप्रतिषेधस्तु नापूर्ववचनमपेक्षते इत्यतुल्यबलत्वं तथापि कार्यकाल-पक्षाश्रयणेन विप्रतिषेधसमर्थनक्लेशात् तुल्यबलनेति भावः। ननु विरोधस्य वक्ष्यमाण-रीत्या सत्वात् कथमयुक्तः; अत आह—**इष्टेति**। वक्ष्यमाणाभिप्रायेण करिष्यत इत्युक्तम्; नापूर्ववचनाभिप्रायेणेत्याह—**आश्रयिष्यत इति**। योग इति कर्मणि घञन्तः, द्विकार्यशब्देन "कर्तृकरणे कृता बहुलम्" इति समास इत्यभिप्रेत्याह—**द्वाभ्यामिति**। द्वित्वयुक्ते कार्ये द्विकार्ये इत्युत्तरपदलोपी तत्पुरुषः। समाहार-द्विगुस्तु न भवति; पात्रादित्वेन स्त्रीत्वाभावेऽपि द्वाभ्यामिति विग्रहायोगात्। तात्पर्य-कथनमेतत्, न विग्रहवाक्यकथनमित्यङ्गीकारे द्विगुरेवास्तु। असंभवोऽपीति भाष्यस्य केवलासंभवोऽपीत्यर्थं वदन् [1]समुच्चयं दर्शयति—**असंभव एवेति**। नन्वसंभवस्य यथाश्रुतद्विकार्ययोगेनैव समुच्चयोऽस्तु किं द्विकार्ययोगासंभवेन; अत आह—**तथाहीति**। **अदधादिति**; धाञ्, लङ्, जुहोत्यादिभ्यः श्लुः, "श्लौ" इति द्विर्वचनम्, अभ्यासह्रस्वः, अभ्यासे चर्च, अडागमः, "इतश्च" इतीलोपः। **त्रपूणामिति**; नुम् प्रकृतेः, नुट् प्रत्ययस्येत्येकस्य द्विकार्ययोगो नास्ति। नुमा ह्रस्वान्तत्वं नुण्निमित्तं विहन्यते। नुटि अच्परत्वं नुम्निमित्तं विहन्यत इति केवलोऽसंभवः। साक्षाद्बाधक-त्वाभावेऽपि कार्यद्वारा तदस्तीत्याह—**प्रकृतिभावेति**।

**भा:—एवमप्ययुक्तो विप्रतिषेधः। सतोर्हि विप्रतिषेधो भवति। न चात्र ईत्वोत्वे स्तः। नापि मकारः। उभय-मप्यसिद्धम्।**

---

(१) ख. अपिशब्दसूचितं समुच्चयम्।

॥ वा ॥ आश्रयात्सिद्धत्वं यथा रोरुत्वे ॥

भाः—आश्रयात्सिद्धत्वं भविष्यति, तद्यथा रुरुत्वे आश्रयात् सिद्धो भवति। किं पुनः कारणं रुरुत्वे आश्रयात् सिद्धो भवति? न पुनः यत्रैव रुस्सिद्धः तत्रैवोत्वमप्युच्यते? नैवं शक्यम्।

॥ वा ॥ असिद्धे ह्युत्वे आद्गुणाप्रसिद्धिः ॥

भाः—असिद्धे ह्युत्वे आद्गुणस्याप्रसिद्धिः स्यात् 'वृक्षोऽत्र, प्लक्षोऽत्र'। तस्मात् तत्र आश्रयात् सिद्धत्वमेषितव्यम्। यथा तत्राश्रयात् सिद्धत्वं भवति, एवमिहाप्याश्रयात् सिद्धत्वं भविष्यति।

प्र :—**आश्रयात्सिद्धत्वमिति**; प्रगृह्यसंज्ञा[१]याः कार्यित्वेनाश्रयणादसिद्धत्वाभावात् ईत्वादीनां तेषामयादीनां च विप्रतिषेधो निरूप्यते। तथा हि सतोर्हि विप्रतिषेधो भवतीति पूर्वपक्षे ईदादीनामेव विप्रतिषेधः आक्षिप्तः। तत्र अयादीनां 'चयनं, चायकः, लवनं, लावकः, अग्नेऽत्र' इत्यत्रावकाशः। ईदादीनां तु यत्रायादीनामप्रसङ्गः सोऽवकाशः "अमी स्थिताः, अमू स्थितौ, अमीभ्यः' इति। 'अमी अत्र' इत्यादावुभयप्रसङ्गे परत्वादीदादय एव भवन्ति। अत्र व्याख्यानान्तरं क्लिष्टत्वान्नोपन्यस्तम्। **न पुनर्यत्रैवेति**; "रोस्सुपि" इत्यस्यानन्तरम् 'अत उरति' इति वक्तव्यम्। एवं चासिद्धत्वं न बाधितं भवति। [२]अत्र पाठक्रमेऽसिद्धत्वस्य प्राप्त्यभावात् प्लुतस्य चोत्वे सिद्धत्वात् तत्कालत्वाभावात् 'अप्लुतादप्लुते' इति न वक्तव्यं भवति।

उ :—एवमपीति भाष्यस्यायमर्थः। सत्यसंभव इत्यनेन अयादीनां संज्ञायाश्च विप्रतिषेधः समर्थ्यते। न च संज्ञाया अयादीनां च युगपत् प्राप्तिः। असतोर्हीदूतोः अयादीनां प्राप्तिः। सतोश्च तयोः संज्ञायाः। न च युगपत्तयोः सत्वासत्वे संभवतः येन संज्ञाया अयादीनां च विप्रतिषेधः संभवेत्। [३]ब्रवीति चायं संज्ञाया अयादीनां

(१) मु. पु. सञ्ज्ञायां.
(२) क. तत्र।
(३) क. भवति

च [1]विप्रतिषेधम्। नूनमसौ संज्ञानिमित्तेदूतौ संज्ञाशब्देनाभिधाय तयोरयादीनां च विप्रतिषेधमभिप्रैति। तमप्याक्षिपामीत्याह—**एवमपीति**। **सतोरिति**; युगपत् प्राप्तयोरित्यर्थः। ततः किम्; अत आह—**न चेति**। **अत्र**; अयादिषु प्राप्तेषु। **स्तः,** प्राप्नुतः, आत्मानं दर्शयत इति यावत्। **असिद्धम्**; 'पूर्वत्रासिद्धम्' इत्यनेन। परिहरति—**आश्रयादिति** भाष्यं तद्व्याचष्टे—**प्रगृह्येति**। **असिद्धत्वाभावात्,** अयादीन् प्रतीत्यादिः। ननु तेषां सिद्धत्वेऽपि अनेन केषां विप्रतिषेधो निरूप्यते; अत आह—**ईदादीनां तेषामिति**। नन्वयादीनां संज्ञायाश्च विप्रतिषेधस्याक्षिप्तत्वात् कथमीदादीनां तन्निरूपणम्; अत आह—**तथा हीति**। सतोरीत्यनेन युगपत्प्राप्तयोर्विप्रतिषेध इत्युक्त्वा व्यतिरेककथनावसरे ईत्वोत्वे न स्त इति वचनात् ईत्वोत्वयोरेव विप्रतिषेधाक्षेपः प्रतीयत इत्यर्थः। एतदनुसारेण एवमपीति भाष्यं पूर्वमेव व्याख्यातमस्माभिः। कार्यद्वयस्य सावकाशत्वं वदन् इष्टसिद्धिमाह—**तत्रेति**। केचित्तु प्रगृह्यसंज्ञाया अयादीनां च असंभवोपपादनानन्तरं तत्रैवाक्षेपो युक्तो न ईत्वोत्वयोः इति मन्यमानाः एवमपीत्यादिभाष्यमेवं व्याचक्षते—**सतोः,** युगपत्प्राप्तयोः। किमतः; अत आह—**न चेति**। **अत्र,** अयादिप्राप्तिस्थले। प्रगृह्यसंज्ञा प्राप्नोतीत्यध्याहारः। कुतो न प्राप्नोति; अत आह—**ईत्वेति**। ईत्वोत्वे नेत्यर्थः। नकारस्यावृत्त्या पूर्वापराभ्यामन्वयः; यत ईत्वोत्वे न स्तः, नापि मकार इत्यर्थः। असत्त्वे हेतुः—**उभयमपीति**; अयादीन् प्रतीत्यादिः। परिहरति—**आश्रयादिति**। प्रगृह्यसंज्ञायामीदादीनां कार्यित्वेनाश्रयणादसिद्धत्वाभावाद् ईत्वोत्वप्रवर्तनद्वारा संज्ञा पूर्वं प्रवर्तत इति। इदं व्याख्यानमध्याहारदोषान्नोक्तमित्याह—**अत्रेति**। 'ससजुषोरुः' इत्यनन्तरं वचनशङ्कां वारयति—**रोस्सुपीति**। [2]एवं करणे "पूर्वत्रासिद्धम्" इति शास्त्रम् [3]अबाधितं भवतीत्याह—**एवं चेति**। [4]अत्र हेतुः—**अत्रेति**। '**रोस्सुपि**' 'अत उरति' इति पाठ इत्यर्थः। **प्राप्नोति**; अप्राप्तस्य बाधायोगादित्यर्थः। लाघवमप्याह—**प्लुतस्य चेति**।

---

(१) क. विप्रतिषेधः

(२) ख. ननु षष्ठे 'ऋत उत्' इत्यत्र उग्रहणं कर्तव्यम्। अत्र 'रोस्सुपि' इत्यतः रुग्रहणानुवृत्तावपि उग्रहणं कर्तव्यमिति को विशेष इत्याशङ्क्य एवं करणे

(३) ख. न बाधितमित्याह. (४) ख. तत्र.

[॥ वा[१] ॥ वचनसामर्थ्याद्वा ॥]

भा :—अथवा प्रगृह्यसंज्ञावचनसामर्थ्यादयादयो न भविष्यन्ति ।

[॥ वा ॥ योगविभागाद्वा ॥]

भा :—अथवा योगविभागः करिष्यते । "अदसः" अदसः ईदादयः प्रगृह्यसंज्ञा भवन्तीति । ततो "मात्" माच्च परे ईदादयः प्रगृह्यसंज्ञा भवन्तीति । अदस इत्येव । किमर्थो योगविभागः ? एको यत्तत्सिद्धे प्रगृह्यकार्यं तदर्थः । अपरो यदसिद्धे । इहापि तर्हि प्राप्नोति 'अमुया, अमुयोः' इति । किं च स्यात् यद्यत्र प्रगृह्यसंज्ञा स्यात् ? प्रगृह्याश्रयः प्रकृतिभावः प्रसज्येत । नैष दोषः । पदान्तप्रकरणे प्रकृतिभावः । न चैष पदान्तः । [२]एवमपि 'अमुकेऽत्र' अत्रापि प्राप्नोति । द्विवचनमिति वर्तते । यदि द्विवचनमिति वर्तते 'अमी अत्र' अत्र न प्राप्नोति । एवं तर्हि एदन्तमिति निवृत्तम् ।

[॥ वा ॥ मार्थादीदाद्यर्थानां वा ॥]

भा :—अथवाहायम् 'अदसो मात्' इति । न च ईत्वोत्वे स्तः; नापि मकारः' तत एवं विज्ञास्यामः मार्थादीदाद्यर्थानामिति ।

॥ वा ॥ उक्तं वा ॥

भा :—किमुक्तम् ? 'अदस ईत्वोत्वे स्वरे बहिष्पदलक्षणे सिद्धे वक्तव्ये' 'प्रगृह्यसंज्ञायां च' इति ।

प्र :—**अथवेति ;** यथोद्देशपक्षाश्रयेणैतदुच्यते । कार्यकालतायामप्याह—**अथवेति ।** अदस इति संबन्धसामान्ये षष्ठी । अदसः संबन्धिन ईदूदेत इति ।

(१) क. कोष्ठकान्तर्गतम् इतः वार्तिकत्रयं नास्ति ।

(२) क. एवमप्यत्रापि प्राप्नोति 'अमुकेऽत्र' ।

**इहापीति ;** अदस् टा, अदस् ओस्, अत्वम्, टाप्, सवर्णदीर्घत्वम्, "आङि चापः" इति एत्वम्। अदे आ, अदे ओस् इति स्थिते अदस इत्यत्र मादिति विशेषणाभावात् प्रगृह्यसंज्ञायां सत्यामयादेशाप्रसङ्गः। **अमुकेऽत्रेति ;** अदस इत्यनेन प्राप्नोति। **एदन्तमिति ;** ईदूतोरेव स्वरितत्वप्रतिज्ञानादिति भावः। अननुवृत्तिरेव च निवृत्तिः। यद्येवं माद्ग्रहणं न कर्तव्यम्; एद्ग्रहणनिवृत्त्यैव '[1]अमुकेऽत्र' इत्यत्राप्रसङ्गात्। नैतदस्ति। सति माद्ग्रहणे योगविभागो भवति; नान्यथा। एकयोगे [2]परिहारान्तरमप्याह—**अथवेति। मार्थादिति ;** मार्थे एव स्थानी मशब्देनोक्तः, ईदूदेदर्थश्च ईदूदेदिति। न चास्यां कल्पनायामसिद्धत्वं भवति, बुद्धिपरिकल्पनायामसिद्धत्वाभावस्योक्तत्वात्। **उक्तं वेति ;** असिद्धत्वमेवात्र प्रतिषिद्धमित्यर्थः। **स्वरे इति ;** अचीत्यर्थः। **बहिष्पदलक्षणे इति ;** द्वितीयपदव्यवस्थित इत्यर्थः। तेन एकपदव्यवस्थितेऽचि असिद्धे ईत्वोत्वे। तेन 'अमुया, अमुयोः' इत्यत्र अयादेशो भवत्येव। **प्रगृह्यसंज्ञायां चेति ;** प्रगृह्यसंज्ञायामेव सिद्धत्वेन सिद्धे लक्ष्ये प्रपञ्चार्थः पूर्ववाक्योपन्यासः।

उ:—**यथोद्देशेति ;** तत्र न परा प्रगृह्यसंज्ञेति विप्रतिषेधात् ने[3]ष्टसिद्धिरिति सामर्थ्याश्रयणमिति भावः। **कार्येति ;** योगविभागप्रयोजनं भाष्य एव व्यक्तमिति भावः। अदस इति पञ्चमी चेत् मादित्यस्य विशेषणं न स्यात्, अवयवषष्ठीत्वे अमी इत्यादावन्तवद्भावेनावयवत्वप्रतीतिः क्लिष्टा स्यात्; अत आह—**संबन्धसामान्य इति।** भाष्ये **एको यत्सिद्ध इति ;** "अणोऽप्रगृह्यस्य" इति प्रगृह्यप्रतिषेध इत्यर्थः। भाष्ये **अपरः** प्रगृह्यप्रकृतिभावः। अत्र ईदूदेतामभावात् कथं प्रगृह्यसंज्ञा; अत आह—**अदसित्यादि। अत्वं ;** त्यदाद्यत्वम्। **एत्वम् ;** 'आङि' चाप इत्यनेन। मात्परत्वाभावा[4]दप्राप्तिमाशङ्क्याह—**अदस इत्यनेनेति।** ननु अदस ईदादयः प्रगृह्या इत्युक्ते एदन्तनिवृत्तिः कथमुक्ता; अत आह—**ईदूतोरेवेति ;** [5]तत्र बहुत्वमविवक्षितमिति भावः। ननु स्वरितलिङ्गेन कियत्पर्यन्तमनुवृत्तस्य हि निवृत्तिः।

(१) अमुकेत्यत्र (२) क. परिहारान्तरमाह।
(३) ख. नेष्टसिद्धिः, नापि सिद्धे प्रगृह्यकार्ये संज्ञा सप्रयोजनेति सामर्थ्या—
(४) ख. अत्राप्राप्तिम् (५) ख. अत्र

सात्र न संभवति स्वरितत्वाभावात्; अत आह—**अननुवृत्तिरेवेति।** **यद्येवं**; एदित्यस्याननुवृत्तौ। **सतीति;** योगविभागार्थं मादग्रहणमित्यर्थः। अथवेति पक्षे योगविभागानुपयोगादाह—**एकेति।** **स्थानी,** दकारः। **उक्तः,** लक्षणया। ईदूदर्थश्च स्थानी ईदूच्छब्देनोच्यते इत्यर्थः। तेनादसो दात्परयोः [1]एदौतोः प्रगृह्यसंज्ञेत्युक्तं भवति। ननु मार्थादित्यादिव्यपदेशेऽप्याश्रयात् सिद्धत्वमावश्यकमिति नेदं समाधानान्तरं स्यात्; अत आह—**न चेति;** शास्त्रीयकार्येऽसिद्धत्वम्। न च व्यपदेशः शास्त्रीयं कार्यम्। अन्यथा प्लुतोऽसिद्ध इति व्यपदेशोऽपि न स्यादिति पूर्वसूत्रे उक्तमित्यर्थः। **असिद्धत्वमेवेति;** ततश्च आश्रयात् सिद्धत्वं [2]विनापि अयादीनामीत्वोत्वयोश्च विप्रतिषेधोपपत्तिरित्यर्थः। स्वरे बहिष्पदलक्षण इति विशिष्टमेकं प्रयोजनम्; तद्व्याचष्टे—**स्वरे अचीति।** **द्वितीय पद इति;** द्वितीयपदस्थेऽचि यत्कार्यं प्रकृतिभावलक्षणं तत्र सिद्धे वक्तव्य इत्यर्थः। बहिष्पदलक्षण इत्यस्य व्यावर्त्यमाह—**तेनेति।** प्रगृह्येत्यनेन अस्य पौनरुक्त्यं निराह—**प्रगृह्येति।** **सिद्धे लक्ष्ये;** अमू आसाते इत्यादिलक्ष्ये। प्रगृह्यसंज्ञाया सिद्धत्ववचनमीदूतोरयादीन् प्रति सिद्धत्वं विना निष्प्रयोजनमिति सामर्थ्यात् [3]तान्प्रत्यपि तौ सिद्धाविति भावः।

**॥ वा ॥ तत्र सकि दोषः ॥**

**भा :—तत्र सककारे दोषो भवति। अमुकेऽत्र।**

**॥ वा ॥ न वा ग्रहणविशेषणत्वात् ॥**

**भा :—न वा एष दोषः। किं कारणम्? ग्रहणविशेषणत्वात्। न मादग्रहणेन ईदाद्यन्तं विशेष्यते। किं तर्हि? ईदादयो विशेष्यन्ते मात्परे ये ईदादय इति ॥ अदसो मात् ॥**

प्र :—**तत्र सकि दोष इति;** मात्परं यदीदाद्यन्तमिति दोषोपन्यासः। [4]पूर्वत्र हि तदन्तं गृहीतमिति इहापि [5]तदर्थस्यैवानुवृत्तिरिति भावः। स्वरितत्वेन शब्दमात्रमनुमीयत इति उत्तरेऽभिप्रायः। तत्र मादग्रहणेन गृह्यमाणमीदूदेद्विशेष्यते।

(१) क. ईदूतोः (२) ख. विनैव.
(३) क. तान्यपि सिद्धानीति (४) मु. पु. पूर्वसूत्रे
(५) मु. पु. तदन्तस्यैव

तेन 'अमुकेऽत्र' इत्यत्र व्यवधानाद्दोषाभाव [1]एव। योगविभागे दोषप्रसङ्गादेदन्तमिति निवृत्तमित्युक्तम्। एकयोगे तु तन्निवृत्त्या न प्रयोजनमिति 'न वा ग्रहणविशेषणत्वात्' इत्युत्तरमुक्तम्।

उ:—ननु मात्परस्य एतः प्रगृह्यसंज्ञायां कथं सकि दोषः; अत आह—**मात्परमिति।** नन्विहासति विशेष्ये कथमेतावता तदन्तविधिः; अत आह—**पूर्वत्रेति। तदर्थस्येति**; अर्थाधिकारपक्ष इति भावः। **शब्दमात्रमिति**; विशेष्याभावाच्चात्र न तदन्तविधिरिति भावः। शब्दमात्रानुमाने इष्टसिद्धिमाह—**तत्रेति।** नत्वेदित्यस्य निवृत्तत्वात् नातिप्रसङ्ग इत्येव किमिति नोक्तम्; अत आह—**योगेति। तन्निवृत्त्येति**; इह इदमपि समाधानं [2]भवतीत्याशयः।

## सू—शे ॥ १।१।१३ ॥

**भा:—इह कस्मान्न भवति 'काशे, कुशे, वंशे' इति।**

**॥ वा ॥ शेऽर्थवद्ग्रहणात् ॥**

**भा:—अर्थवतः शे शब्दस्य ग्रहणम्। न चैषोऽर्थवान्। एवमपि 'हरिशे, बभ्रुशे' इत्यत्रापि प्राप्नोति। एवं तर्हि 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव' इत्येवं न भविष्यति। अथवा पुनरस्तु 'अर्थवद्ग्रहणे नानर्थकस्य' इति। कथं [3]तर्हि 'हरिशे, बभ्रुशे' इति। एकोऽत्र विभक्त्यर्थेनार्थवान्; अपरस्तद्धितार्थेन। समुदायोऽनर्थकः ॥ शे ॥**

उ:—**इह कस्मादिति**; अत्र हि प्रत्यक्षमेव शे इति रूपम्। युष्मे अस्मे इत्यत्र तु शकारस्यानुबन्धस्य स्मरणादनुमेयमिति प्रश्नः। **शेऽर्थवद्ग्रहणादिति**; 'स्वं शब्दस्य' इत्येवान्तरङ्गत्वादहेयत्वादसाधारणत्वाच्च रूपपरिग्रहे सिद्धे रूपवदर्थस्यापि अङ्गीकरणार्थं रूपग्रहणं कृतम्। अत्र च शे शब्दोऽनर्थकः। सप्तम्येकवचनं त्वर्थवत्।

---

(१) क. एव इति नास्ति. (२) भवतीत्युक्तमित्याशयः.
(३) क. तर्हि इति नास्ति.

तयोः समुदायः अर्थान्तराप्रादुर्भावादनर्थकः। **एवमपीति**; अत्र हि मत्वर्थीयसप्तम्येकवचनयोरर्थवतोः समुदायो अर्थवानेव, अवयवधर्मानुविधानात् समुदायस्येति प्रश्नः। **तत्क्षणेति**; प्रतिपदोक्ते हि झटिति प्रतिपत्तिर्भवति। लाक्षणिके तु लक्षणानुसन्धानद्वारेण बहिरङ्गेति न तस्य ग्रहणम्। **अथवेति**; अर्थवत्समुदायस्यापि कस्यचिदानर्थक्यं यथा [1]दशदाडिमादिवाक्यस्य, पदार्थानां परस्परसमन्वयाभावात्। इहापि हरिशशब्दवाच्यार्थगतसंख्याधिकरणशक्तिप्रतिपादनाय प्रवृत्ता सप्तमी न शप्रत्ययमात्रप्रतिपाद्येनार्थेनान्वेतीति शे शब्दस्यानर्थक्यम्।

उ:—प्रश्नभाष्ये इहैवेत्यवधारणं विवक्षितमित्यभिप्रेत्य तत्र युक्तिमाह—[2]**अत्रेति**। **युष्मे इति**; 'सुपां सुलुक्' इत्यादिना विभक्त्याद्रे शे [3]शे शब्द इत्यर्थः। **अनुमेयं**, शे रूपमित्यनुषङ्गः। भाष्ये **अर्थवत इति**; शे श्चासौ अर्थवांश्च, तस्य ग्रहणम् इति वार्तिके विग्रहोऽनेन सूचितः। विशेषणत्वस्य विवक्षाधीनत्वात् शे इत्यस्य तत्त्वमविरुद्धमिति भावः। ननु "अग्नेर्ढक्" इत्यादौ शब्देनार्थप्रतीतावर्थे कार्यासंभवात् तद्वाचकशब्दमात्रे वैश्वानरादावपि तत्प्रसङ्गनिरासाय स्वं रूपम् इति नियम्यते। अत्रार्थवद्ग्रहणस्य कः प्रसङ्गः; अत आह—**स्वमिति**। सङ्गतिग्रहणं विना प्रतीयमानत्वमन्तरङ्गत्वम्। रूपशब्देन जात्यभिधाने स्वसमवेतत्वं वा। शब्दोच्चारणे सर्वथा प्रतीयमानत्वमहेयत्वम्। शब्दान्तरोच्चारणेऽप्रतीयमानत्वमसाधारणत्वम्। अर्थस्तु [4]सङ्गतिग्रहं विना न प्रतीयते स्वासमवेतश्च। शब्दोच्चरणेऽपि इतिपरत्वे शब्दस्य न प्रतीयते; पर्यायान्तरेण च प्रतीयत इति नैवंविध इत्यर्थः। **रूपवदिति**; स्वं रूपमिति वचनात्, न्यायाच्च यथान्यत्र रूपं गृह्यते तथात्रार्थोऽपि। तथा च युगपदुभयानुग्रहायार्थवत्स्वरूपस्य ग्रहणमित्यर्थः। काशे इत्यत्र शे इत्यस्यानर्थकत्वमाह—**अत्रेति**। **अर्थान्तरेति**; अर्थविशेषाप्रतीतेरित्यर्थः। **अत्र**, बभ्रुश इत्यादौ। लोमादित्वाच्छः। **अवयवेति**; यथा शुक्लतन्त्वारब्धः पटः शुक्लो, न नीलः, नाप्यरूपः, तथार्थवत्समुदायस्यापि नात्यन्तविलक्षणार्थयोगः। नाप्यानर्थक्यमित्यर्थः। न्यायसिद्धमेतदित्याह—**प्रतिपदेति**; सूत्रे साक्षान्निर्दिष्ट इत्यर्थः।

(१) पु. पु. दशदाडिमादिवाक्यस्य- (२) ख. तत्रेति.
(३) क. शे इत्यर्थः। (४) ख. सङ्गतिग्रहणं

**बहिरङ्गा;** विलम्बिता। लक्षणानुसारेण लक्ष्यस्य कल्प्यत्वादित्यर्थः। **वाक्यस्य;** पदसमुदायस्य। **वाच्यार्थः,** प्रकृत्यर्थविशिष्टो मत्वर्थः। [1]तद्गतसंख्याधिकरण-शक्त्योः प्रतिपादनेति विग्रहः। यद्यपि प्रत्यक्षानुमानयोः प्रत्यक्षं बलीय इति काशे इत्यादेरेव ग्रहणं युक्तम्; तथापि शब्दस्यार्थप्रतीत्यङ्गत्वेन प्रधानभूतार्थाश्रया अर्थवद्ग्रहण-परिभाषा प्रबलेति भावः।

## सू—निपात एकाजनाङ् ॥ १।१।१४ ॥

**भा:—निपात इति किमर्थम्? चकारात्र, जहारात्र।**

**एकाजिति किमर्थम्? प्रेदं ब्रह्म, प्रेदं क्षत्रम्। एकाजित्य-प्युच्यमानेऽत्रापि प्राप्नोति। एषोऽपि ह्येकाच्। एकाजिति नायं बहुव्रीहिः। एकोऽज् यस्मिन् सोऽयमेकाज् एकाजिति। किं तर्हि? तत्पुरुषोऽयं समानाधिकरणः एकः अच् [2]एकाच्, एका-जिति। यदि तत्पुरुषोऽयं समानाधिकरणः, नार्थ एकग्रहणेन। इह कस्मान्न भवति 'प्रेदं ब्रह्म, 'प्रेदं क्षत्रम्'। अजेव यो निपात इत्येवं विज्ञायते। किं वक्तव्यमेतत्? न हि। कथमनुच्यमानं गंस्यते? अज्ग्रहणसामर्थ्यात्। यदि [3]ह्यचान्यच्च तत्र स्यात् अज्ग्रह-णमनर्थकं स्यात्। अस्ति ह्यन्यदज्ग्रहणस्य प्रयोजनम्। किम्? अजन्तस्य यथा स्यात्; हलन्तस्य मा भूत्। नैव दोषो न प्रयोजनम्।**

प्र:—**निपात इति किमर्थमिति;** निपातस्यैवैकाचोऽर्थवत्वात्, प्रत्ययस्य केवलस्य प्रयोगाभावादानर्थक्यात् कल्पितरूपत्वात्, कल्पनायाश्च नियमाभावात् प्रश्नः। **चकारात्रेति;** अन्वयव्यतिरेकाभ्यां प्रत्ययस्यापि अर्थवत्वमिति भावः। निपातोऽपि केवलो न प्रयुज्यते द्योतकत्वादिति साम्यमेव निपातप्रत्यययोः। 'अततेर्डः' अः, अ आगच्छ आगच्छेत्यपि प्रत्युदाहरणम्। **एकाजिति किमर्थमिति;** एकग्रहणसामर्थ्याद्बहुव्रीहिं मन्यते, ततश्च प्रेदं ब्रह्मेत्यनिष्टनिवृत्तिर्न कृतेति प्रश्नः। **तत्पुरुषोऽयमिति;** अन्तरङ्गत्वाद्वर्तिपदार्थप्राधान्याच्चेति भावः। **नैव दोष इति;**

(१) ख. तद्गतयोः (२) ख. अयं नास्ति
(३) क. हि यत्राचान्यच्च

ननु 'पुरोऽहिः' इति हलन्तस्य प्रकृतिभावाद्रोरुत्वं न स्यात्। नैष दोषः। प्रगृह्यसंज्ञायां रुत्वस्यासिद्धत्वात्। सकारस्य च कार्यान्तराप्रसङ्गात्। रुत्वे तु रुत्वमाश्रयात् सिद्धम्।

उ :—शङ्कातात्पर्यमाह—**निपातस्येति।** **आनर्थक्यात्**; अर्थवत्वानिश्चयात्। **कल्पितरूपत्वात्,** प्रत्ययस्येत्यनुषङ्गः। **कल्पनाया इति;** केचित् शतिप् इत्येकं प्रत्ययं कल्पयन्ति। अन्ये तु प्रत्ययद्वयम्। तत्र कियतोऽर्थवत्त्वमिति न निश्चय इत्यर्थः। **अन्वयेति;** व्याकरणानुगृहीतेत्यादिः। केवलस्य प्रयोगाभावादानर्थक्यं निपातस्यापि। तथा चात्रार्थवत्परिभाषाङ्गीकारे सूत्रानर्थक्यं स्यादिति तदनाश्रयणात्प्रत्ययस्यानर्थक्येऽपि अतिव्याप्तिरित्याशयेनाह—**निपातोऽपीति।** प्रत्ययकल्पनाया अनियमपक्षे प्रत्युदाहरणान्तरमाह—**अतदेर्ड इति।** 'अन्येष्वपि दृश्यते' इति दृशिग्रहणार्थ इत्यर्थः। **एकग्रहणेति;** निपातेनाचो विशेषणादचा तदन्तविधेरभावात् निपातरूपो योऽजित्येकग्रहणं विनापि कर्मधारयार्थलाभाद् बहुव्रीह्यर्थमेव तदित्यर्थः। बहुव्रीहावनिष्टमाह—**ततश्चेति।** अन्तरङ्गत्वे हेतुमाह—**वर्तीति।** समस्यमानपदं वर्तिपदम्; तदर्थप्राधान्यादित्यर्थः। अजेव यो निपात इति [1]भाष्ये निपातेनाज्विशेष्यत [2]इत्यभिप्रायः। भाष्ये **किं वक्तव्यमिति;** अचो निपातविशेषणत्वस्यापि संभवान्निपातेनाज्विशेषणमिति न सिध्यतीत्यर्थः। **प्रगृह्यसंज्ञायामिति;** प्रगृह्यसंज्ञायाः प्रकृतिभावः प्रयोजनम्; स च सन्धिकार्यनिवृत्त्यर्थः। रुत्वस्य उत्वरूपसन्धिकार्यसंभवेऽप्यनेन प्रगृह्यसंज्ञायां रुत्वस्यासिद्धत्वाद्दोषाभावः। सकारस्य तु सन्धिकार्यान्तराभावात् तन्निवृत्त्यर्थप्रकृतिभावार्थप्रगृह्यसंज्ञायाः प्रयोजनाभाव इत्यर्थः। नन्वेवमुत्वेऽपि रुत्वमसिद्धं स्यात्; अत आह—**रुत्वमिति।** अनेन प्रगृह्यसंज्ञा तु न रुत्वाश्रय इति नाश्रयात्सिद्धत्वमिति भावः।

**भा :—एवमपि कुत एतत् 'द्वयोः परिभाषयोः सावकाशयोः समवस्थितयोः "आद्यन्तवदेकस्मिन्" "येन विधिस्तदन्तस्य" इति च इयमिह परिभाषा भविष्यति "आद्यन्तवदेक-**

(१) ख. भाष्यम् (२) ख. इत्यभिप्रायम्।

**स्मिन्" इति; इयं च न भविष्यति "येन विधिस्तदन्तस्य" इति।**

**आचार्यप्रवृत्तिर्ज्ञापयति–इयमिह परिभाषा भवति "आद्यन्तवदेकस्मिन्" इति, इयं च न भवति "येन विधिस्तदन्तस्य" इति। यदयं "अनाङ्" इति प्रतिषेधं शास्ति। एवं तर्हि सिद्धे सति यदज्ग्रहणे क्रियमाणे एकग्रहणं करोति तज्ज्ञापयत्याचार्यः 'अन्यत्र वर्णग्रहणे जातिग्रहणं भवति' इति। किमेतस्य ज्ञापने प्रयोजनम्? "दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात् सिद्धम्" इति यदुक्तं तदुपपन्नं भवति।**

प्र:—**एवमपीति**; अन्यतरनिवृत्त्या अज्ग्रहणस्यार्थवत्त्वात् अज्मात्रं गृह्यते, तदन्तं निरस्यते, विपर्ययस्तु न भवतीति विशेषाभावात्प्रश्नः। पारार्थ्यसामान्यात् संज्ञातिदेशौ परिभाषाशब्देनोक्तौ। **सावकाशयोरिति**; निरवकाशस्य बाधकत्वादेवमुक्तम्। तत्र तदन्तविधेरवकाशः—"ओरावश्यके" लाव्यम्, [1]पाव्यम्। आद्यन्तवद्भावस्यावकाशः—"मिदचोऽन्त्यात्परः" तानि, यानि इति। अत्र हि साक्षादन्त्यग्रहणमस्तीति तदन्तविध्यभावः। **समवस्थितयोरिति**; इह प्राप्तयोः। **आचार्यप्रवृत्तिरिति**; यदि तर्हि लिङ्गेन तदन्तविधिर्निराक्रियते तदा तन्मूलाद्यन्तवत्परिभाषा कथं प्रवर्तते? नैष दोषः। 'आद्यन्तवत्' इत्यस्योपस्थानाय तदन्तविधिः प्रथमं सन्निधीयते, पश्चात्तु लिङ्गात्तदरित्यज्यते। अथवा लिङ्गादज्ग्रहणं निपातेन विशेष्यत इति विशेष्येण च तदन्तविधेरभावादतिदेशस्यापि मा भूत्प्रवृत्तिः। तत्फलसम्पत्त्या तूक्तम् "परिभाषा भविष्यति" इति। **एवं तर्हीति**; संज्ञाया विधीयमानत्वात्प्राधान्यात् संज्ञिनो गुणत्वात् 'पशुना यजेत' इतिवत् संख्याविवक्षायां सिद्धायामेकग्रहणमन्यत्र जातिसंप्रत्ययार्थम्। अच्समुदायग्रहण[2]शङ्कामात्रनिरासार्थं ह्येकग्रहणं ज्ञापनफलं संपद्यते। किं पुनः स्यात् यद्यत्राच्समुदायस्य ग्रहणं स्यात? उच्यते।

(१) क. पाव्यमिति (२) मु. पु. शङ्काया निरासार्थम्

'इह अइउ [1]अवेहि' इति समुदायस्यैका संज्ञा स्यात्, नावयवानाम्। 'समुदायै-काज्द्विर्वचनवत्' इति अन्त्यस्यैव प्रकृतिभावाचणादेशो न स्यात्। पूर्वयोस्तु स्वरसन्धिः स्यात्। अच्समुदायपरिग्रहानुरोधित्वाच्च[2] निपातसमुदायो गृह्येत, एकनिपातस्याच्समु-दायस्याभावात्।

उ:—**अन्यतरेति**; येन विधिः, आद्यन्तवदित्यनयोरन्यतरेत्यर्थः। यदा निपातेनाज्विशेष्यते तदा तदन्तपरिभाषाया अप्रवृत्तिरेव निवृत्तिः। यदा च निपातो विशेष्यते तदा अजन्तो यो निपात इति मुख्याजन्तसंभवात् आद्यन्तवद् इत्यस्याप्रवृत्तिरेव निवृत्तिः। **अज्मात्रमिति**; निपातेनाज्विशेषणादित्यर्थः। **विपर्ययः**; अचा निपातस्य विशेषणात् मुख्यतदन्तं गृह्यते; अज्मात्रं निरस्यत इत्येवंरूपः। **विशेषा-भावात्**, कारणाभावात्। **संज्ञा**, "येन विधिस्तदन्तस्य" इति। "एच्" इत्यादाविकारस्तदन्तस्य सञ्ज्ञेति भावः। सावकाशत्वमुपपादयति—**तत्रेति**; तयोर्मध्य इत्यर्थः। "ओरावश्यके" इति उवर्णमात्रधातोरभावादित्यर्थः। तत्रापि तदन्तविधिरस्तु; अत आह—**अत्रेति**। **तन्मूला**, येन विधिरिति परिभाषामूला; येन विधिरिति प्रवृत्तावेकस्मिन् मुख्ये तदन्तासंभवे आद्यन्तवदिति प्रवर्तत इति मूलाभावे मूलिन्यपि न प्रवर्तत इत्यर्थः। अचा निपातस्य विशेषणेन आद्यन्तवद् इत्यस्य प्रवृत्तये प्रथमं तदन्तविधिप्रवृत्त्यङ्गीकारे मुख्यतदन्तसंभवेन प्रगृह्यसंज्ञायास्तत्रापि प्रवृत्तेः आद्यन्तवदित्यनेन एकस्यापि संज्ञायां प्रेदमित्यादेरनिवृत्तिरित्यत आह—**अथवेति**। अजात्मक-निपातसमुदायव्यावृत्त्यर्थमेकग्रहणं किं न स्यात्; अत आह—**संज्ञाया इति**। अचीव निपातेऽप्येकत्वं विवक्षितमिति निपातसमुदायस्यापि निवृत्तिर्ज्ञेया। समुदाय-द्विर्वचनन्यायोऽत्र नास्ति। समुदायसंज्ञयावयवानामननुग्रहात् ज्ञापकत्वमुपपादयति—**अच्समुदायेति**। उक्तरीत्या समुमायग्रहणाप्रसंगात् शङ्कानिरासार्थं शङ्कामात्रनिरा-सार्थमित्युक्तम्। एकत्वविवक्षया एकग्रहणेन वा समुदायनिरासस्य प्रयोजनं प्रश्नपूर्वक-माह—**किं पुनरिति**। अइउ अवेहि इति स्थित इत्यर्थः। [3][**अन्त्यस्यैवेति**; यद्यप्यत्रापि न प्रगृह्यत्वं तथापि समुदायस्य प्रगृह्यत्वेऽन्त्यस्य तत्कार्यम्; यथा पचेते

(१) मु. पु. अपेहि (२) क. अनुरोधाच्च
(३) क. अयं कोष्टकान्तर्गतः भागः नोपलभ्यते.

इत्यत्र द्विर्वचनस्य प्रगृह्यत्वेऽपि तत्कार्यमेकारस्य। ननु तत्र प्रगृह्यावयवे प्रगृह्यशब्द-वृत्त्या एकारस्य प्रकृतिभावः, इह तु अवयवे तच्छब्दवृत्तेः पूर्वयोरपि प्रकृतिभाव उचितः। नैतत्। प्रगृह्या अचि इति मुख्यस्याचा पौर्वापर्यमाश्रितम्। तच्च तत्र चात्र चास्यैव, प्रकृतिभावस्तु तदवयवे, तस्यैव स्वरसन्धिप्राप्तेः। ततश्च यस्मिन्नचि प्रगृह्योऽनन्तरः तस्मिन्नेव तदवयवस्यापि प्रकृतिभाव इति कुतः पूर्वयोस्तत्प्राप्तिः। एतच्च तत्रार्चीति वर्तमाने पुनरज्ग्रहणाल्लभ्यत इत्यास्तां विस्तरः।] **स्वरेति ;** प्रगृह्यत्वाभावावित्यर्थः। ननु निपात इति एकत्वस्य विवक्षितत्वात् न समुदायस्य संज्ञाप्रसङ्गः; अत आह— **अच्समुदायेति ;** [1]तुल्यन्यायत्वादजनुसारित्वाच्चेत्यर्थः। अजनुरोधेन निपातसमु-दायग्रहणे हेतुमाह—**एकेति।** भाष्ये **दन्भेरिति ;** दन्भेः सन्। दन्भ् स इति स्थिते सनीवन्तर्धेति इडभावपक्षे सन इक्समीपाद्धलः परत्वाभावेन "हलन्ताच्च" इति कित्वाभावात् अनिदितामिति नलोपो न स्यादिति शङ्क्यते। वक्ष्यते 'दन्भेः परस्य सनः कित्वं सिद्धं हल्ग्रहणस्य जातिवाचकत्वात्'। तथा च जातेरेकत्वादिक्-समीपत्वं, सनस्ततः परत्वं चेति कित्वात् नलोपाभ्यासलोपौ भष्भावश्चेति सिद्धं धिप्सति इति वार्तिकार्थः।

**भा :—अनाङिति किमर्थम् 'आ उदकान्तात् ओदका-न्तात्'। इह कस्मान्न भवति 'आ एवं नु मन्यसे, आ एवं किल तत्' इति। सानुबन्धकस्येदमाकारस्य ग्रहणम्। अननु-बन्धकश्चात्राकारः। क्व पुनरयं सानुबन्धकः? [2]क्व निरनुबन्धकः?**

**ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः।**

**एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्॥**

**निपात एकाजनाङ्॥**

प्र :—**अनाङिति किमर्थमिति ;** ङिदङितोराकारयोः विषयविभाग-प्रदर्शनाय प्रश्नः। **इह कस्मादिति ;** अनुबन्धनिवृत्तौ विशेषापरिज्ञानात् प्रश्नः। अर्थवशाद्विशेषावसाय इत्युत्तरम्। ईषदर्थे 'आ उष्णम् ओष्णम्' इति 'आङीषदर्थे'

(१) तुल्याश्रयत्वात्.    (२) क. क्व पुनरयं

इति चोक्तम्। क्रियायोगे आ इतः एतः। प्रादिषु हि[1] ङित् पठ्यते। "आङ् मर्यादाभिविध्योः" इति समासविधौ ङिन्निर्दिष्टः 'आ उदकान्तात् ओदकान्तात् आ अहिच्छत्रात् आहिच्छत्रात्' इति। विना तेनेति मर्यादा सह तेनेत्यभिविधिः। पूर्वप्रक्रान्तस्य वाक्यार्थस्यान्यथात्वद्योतनाय आकारः प्रयुज्यते आ एवं नु मन्यसे। नैवं पूर्वममंस्थाः संप्रति मन्यसे इति वाक्यारम्भसूचनाय आकार इत्यपरे। तथा स्मृतेः सूचक आकारः प्रयुज्यते, ततः स्मृतोऽर्थो निर्दिश्यते 'आ एवं किल तत्' इति।

उ :—तत्र ङित्वे मानम्—**आङीषदर्थ इति। उक्तम्;** कोशेषु। उपसर्गत्वे मानम्—**प्रादिष्विति;** तेषामुपसर्गसंज्ञत्वादिति भावः। मर्यादाभिविध्योर्ङित्वे मानम्—**आङ्मर्यादेति।** एतयोः क्रमेणोदाहरणे आह—**आ उदकेति;** भाष्योक्तमर्यादोदाहरणमित्यर्थः। तयोर्भेदमाह—**तेनेति।** वाक्य इत्येतद्व्याचष्टे—**पूर्वेति।** स्मरण इत्येतद्व्याचष्टे—**तथा स्मृतेरिति।**

## सू—ओत् ॥ १।१।१५ ॥

**भा :—किमुदाहरणम्? आहो इति, उताहो इति। नैतदस्ति प्रयोजनम्। निपातसमाहारोऽयम् 'आह उ आहो' इति। उत आह उ उताहो इति। तत्र "निपात एकाजनाङ्" इत्येव सिद्धम्। एवं तर्ह्येकनिपाता इमे। अथवा प्रतिषिद्धार्थोऽयमारम्भः। ओ षुयातं मरुतः, ओषुयातं बृहती शाक्वरी च, ओ चित्सखायं सख्यावववृत्याम्।**

प्र :—**निपातसमाहारोऽयमिति;** अनर्थकानामपि निपातानां कमीमिदु इत्यादीनां दर्शनादर्थभेदाभावेऽपि निपातसमाहारत्वमुक्तम्। **एवं तर्हीति;** चादिषु तथा पाठादिति भावः। **ओ षुयातमिति;** आ उ ओ इत्यत्रान्तवद्भावाद्व्यत्ययम् आङिति 'अनाङ्' इति प्रतिषेधः प्राप्नोति। पर्युदासे तु [2]सति न दोषः। तत्र ह्याङ्सदृशस्योकारस्याङा सहैकादेश आदिवद्भावादुकारग्रहणेन गृह्यत इति सिध्यत्येव प्रगृह्यसंज्ञा। तस्याश्च प्रयोजनं क्वचिच्छाखायाम् 'ओ अयातम्' इति पाठे प्रकृतिभावः।

(१) क. हि इति नास्ति (२) क. सति इति नास्ति-

उ :—नन्ववयवार्थादर्थान्तरं प्रतीयते चेत् निपातसमाहारो युक्तः, नान्यथा; अत आह—**अनर्थकानामिति। दर्शनात्;** वेद इत्यादिः; **अर्थभेदेति;** अवयवानां समुदायस्य चेत्यादिः। अवयवा अनर्थकाः निपातसमुदाय एवार्थवानित्याशयः। **चादिष्विति;** निपातसमुदायत्वे पुनः पाठवैयर्थ्यादिति भावः। आङ्सदृशस्य उकारस्येति भेदः। न च उभयत आश्रयणे नान्तादिवदिति वाच्यम्; अन्तवद्भावस्य शास्त्रीयकार्याभावेनानाश्रयणात्। प्रगृह्यसंज्ञारूपकार्यसद्भावादादिवद्भाव[1] इष्यत इति भावः। संज्ञायाः प्रयोजनमाह—**तस्या इति।** एवं च ओ षुयातमित्यत्रातिप्रसङ्गाभावाद् ओ अयातम् इत्यत्र प्रकृतिभावसिद्धेः सूत्रे एकवाक्यतासिद्धेश्च पर्युदास एव युक्त इति प्रदीपकृदाशयः।

**॥ वा ॥ ओतश्च्विप्रतिषेधः ॥**

**भा :—ओदन्तो निपात इत्यत्र च्व्यन्तस्य प्रतिषेधो वक्तव्यः। अनदः अदः अभवत् अदोऽभवत् [2]अतिरः तिरः अभवत् तिरोऽभवत्। न वक्तव्यः। 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य' इत्येवं न भविष्यति। एवमपि अगौः गौः समपद्यत गोऽभवत्; [3]अत्र प्राप्नोति। एवं तर्हि 'गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः' इति। तद्यथा 'गौरनुबन्ध्यः, अजोऽग्नीषोमीय' इति न वाहीकोऽनुबध्यते। कथं तर्हि वाहीके वृद्ध्यात्वे भवतः 'गौस्तिष्ठति, गामानय' इति। अर्थाश्रय एतदेवं भवति। यद्धि शब्दाश्रयं शब्दमात्रे तद्भवति। शब्दाश्रये च वृद्ध्यात्वे॥ ओत्॥**

प्र :—**अदोऽभवदिति;** च्व्यन्तत्वेनात्र निपातत्वम्, 'ऊर्यादिच्वि' इत्यत्र निपाताधिकारात्। प्रतिषिद्धार्थत्वादस्य कथमत्र प्राप्तिरिति चेत् उभयार्थत्वाददोषः। तथा हि ओदन्तस्य निपातस्य प्रगृह्यसंज्ञा विधीयमाना प्रतिबन्धाभावात् अदोऽभव-

---

(१) ख. भाव एव. (२) क. इदमुदाहरणं नास्ति
(३) क. अत्रापि

दित्यत्रापि [1]भवति। ओ सुयातमित्यत्रापि परत्वाद् 'अनाङ्' इति प्रतिषेधं बाधत इति प्रतिषिद्धार्थमपि स्यादिति को विरोधः। ओकारस्य प्रतिपदोक्तस्य ग्रहणमित्युत्तरम्। **एवमपीति ;** ओकारस्यात्र प्रतिपदोक्तत्वमस्ति 'गमेडों' इति साक्षादुच्चारणात्। यस्य हि साक्षादुच्चारणं नास्ति, 'आद्गुणः' इत्यादिसामान्यलक्षणेन यद्रूपं निष्पाद्यते तल्लाक्षणिकमुच्यते। **एवं तर्हीति ;** गुणादागतो गौणः ; यथा गोशब्दस्य जाडयादिगुणनिमित्तोऽर्थो वाहीकः। मुखमिव प्रधानत्वान्मुख्यः। तत्र "स्वंरूपम्" इत्यत्र रूपग्रहणेनार्थपरिग्रहस्य ज्ञापितत्वादर्थवतः कार्येण भवितव्यम्। स चार्थः प्राथम्यान्मुख्य एव गृह्यते। गौणे ह्यर्थे शब्दः प्रवर्तमानो मुख्यार्थारोपेणैव प्रवर्तते। अनियतश्च गौणोऽर्थः। तस्माल्लौकिकोऽयं न्यायः गौणमुख्ययोरिति। गोऽभवदित्यत्र [2]च जाडयादिना धर्मेण गोत्वमारोपितमिति गौणत्वमर्थस्य। गोऽभवदित्यत्र च वृत्तौ प्रकृतेः कर्तृत्वम्, सङ्घीभवन्ति ब्राह्मणा इति बहुवचन[3]दर्शनात्। प्रकृतौ च गोत्वमारोपितं न तु मुख्यमिति प्रगृह्यत्वाभावः। **शब्दाश्रये चेति ;** स्वार्थे वृत्तात् प्रातिपदिकात् विभक्तावुत्पन्नायां कार्येषु कृतेषु शब्दान्तरसन्निधानाद्गौणत्वं प्रतीयते। तस्य च स्वार्थस्य मुख्यव्यपदेशो नास्ति। गौणापेक्षया संबन्धिशब्दत्वान्मुख्यव्यपदेशस्य गौणाभावेऽभावात् शब्दाश्रये च इत्युक्तम् ; न त्वत्रार्थो नापेक्ष्यते। तत्र यथा श्वेतं छागमालभेत इति गुणद्रव्ययोः श्रौतक्रियासंबन्धः, वाक्यीयात्तु न्यायात् पश्चात्परस्परेण ; एवं गां वाहीकमानयेति पूर्वं क्रियाभिसंबन्धापेक्षया विभक्तावुत्पन्नायां वाक्यीयात्तु न्यायात् सामानधिकरण्याद्गौणार्थप्रादुर्भावो भवतीति पदकार्येष्वेवायं न्यायः, न प्रातिपदिककार्येषु इत्युक्तं **शब्दाश्रये चेति।**

उ :—अदोऽभवदित्यत्र निपातत्वाभावान्नातिव्याप्तिः। ओदित्यत्र निपात इत्यनुवर्तनीयम् ; अन्यथा शम्भोऽवेत्यत्रातिप्रसङ्गाद् ; अत आह—**त्वयन्तत्वेनेति।** ओ सुयातमित्यादौ विध्यर्थस्यास्य अदोऽभवदित्यादौ अप्रवृत्तेर्नातिव्याप्तिः इति शङ्कते **प्रतिषिद्धेति ;** प्रतिषिद्धा प्रगृह्यसंज्ञा विधेयत्वेनार्थः प्रयोजनं यस्य ओदित्यस्य तत्वादित्यर्थः। **उभयार्थत्वादिति ;** प्रतिषिद्धार्थत्वाद् अदोऽभवद् इत्यादौ

(१) क. भवतु. (२) क. च इति नास्ति.
(३) निर्देशात्।

विध्यर्थत्वाच्चेत्यर्थः। तदुपपादयति—**तथा हीति। परत्वादिति;** 'ओ श्रुयातम्' इत्यत्र "निपात एकाज्[१]" इति प्राप्तां प्रगृह्यसंज्ञां 'अनाङ्' इति प्रतिषेधो वा बाधते 'ओत्' इति प्रगृह्यसंज्ञां वा इति विवक्षायां परत्वाद् 'ओत्' इत्येतदेव [२]बाधक इत्यर्थः। वस्तुतस्तु मध्येऽपवादन्यायेन 'अनाङ्' इति प्रतिषेधः निपातसूत्रप्राप्तिं बाधते, न 'ओत्' इत्येतत्सूत्रप्राप्तिं परत्वात् तथा चेयमेव फलतो निषेधबाधिकेति परत्वादित्यादेरर्थः। **प्रतिषिद्धार्थमपि,** प्रतिषेधनिवृत्त्यर्थमपि। यद्यपि 'ओत्' इत्यनेन निपातस्य विशेषणादोदन्तस्य प्रगृह्यसंज्ञा तथापीह विशेषणं प्रतिपदोक्तं गृह्यत इत्यभिप्रेत्याह—**ओकारस्येति।** नन्वव्युत्पन्नत्वाद्गोशब्दस्य तदोकारस्य न प्रतिपदोक्तत्वम्; अत आह—**ओकारस्येति।** [३]व्युत्पत्तिपक्षाश्रयणादयं दोष इति भावः। लक्षणेन प्रतिपाद्यत्वरूपलाक्षणिकत्वमस्यापि; अत आह—**यस्य हीति। गुणादागत इति;** "तत आगतः" इत्यण्। वाहीकस्य गौणत्वमुपपादयति—**यथेति।** विहितकर्मभ्यो बहिर्भूतो बाहीकः। "बहिषष्टिलोपश्च" इति ईकक्टिलोपौ। वबयोरभेदाद्वाहीक इत्यप्युच्यते। शब्दस्यापि गुणादारोपितार्थे आगतत्वाद्गौणत्वं ज्ञेयम्। **मुखमिवेति;** "इवे प्रतिकृतौ" इत्यतः इव इत्यनुवृत्तेरिवार्थे "शाखादिभ्यो यः" इति यप्रत्ययः। यथा अङ्गेषु मुखस्य प्राधान्यं तथा शब्दान्तरनिरपेक्षतया प्रतीयमानत्वमर्थस्य प्राधान्यम्। शब्दस्यापि स्वशक्तिविषयतादृशार्थप्रतिपादकत्वेन मुख्यत्वम्। ननु शब्दानुशासनेऽस्मिन् [४]अर्थे गतो विशेषोऽनुपयुक्तः; अत आह—**तत्रेति।** प्राथम्याद्गौणलाक्षणिकार्थापेक्षया पूर्वप्रतीतत्वादित्यर्थः। गौणान्मुख्यस्य प्रथमोपस्थितिमेवाह—[५]**गौणे ह्यर्थ इति। मुख्यार्थारोपेणेति;** यद्यपि सादृश्यविवक्षया सिंहो देवदत्त इति प्रयुज्यते, श्रोतापि सिंहसदृशो देवदत्त इति प्रतिपद्यते, तथापि वाक्यश्रवणसमनन्तरमेव [६]सिंहत्वप्रतीतिः देवदत्ते आहार्यारोपरूपा जायते। [७]तथाप्रतीतावनुपपत्त्यभावेन सादृश्यतात्पर्यग्रहण-

(१) ख. एकाजनाङ्
(२) ख. अयातमित्योदौ बाधते
(३) ख. व्युत्पत्तिपक्षाश्रयेणायं
(४) क. अर्थगतो विशेषः
(५) ख. गौणेऽप्यर्थे.
(६) ख. सिंहप्रतीतिः
(७) ख तदप्रतीतौ

स्यापि असंभवात्। तथा च मुख्यार्थारोपावश्यकत्वे अत एव तात्पर्यग्रहसहकारेण सादृश्यप्रतीत्युपपत्तौ न तत्र लक्षणा कल्प्या। न च वृत्त्यनुपस्थापितस्य शाब्दबोधाविषयत्वम्, शक्यार्थसंबन्धिगुणयोगस्य शक्तिभिन्नस्यापि शाब्दबोधविषयत्वनियामकतया, वृत्तित्वस्य पारिभाषिकतया आरोपितमुख्यार्थात् प्रतीतत्वस्यापि शाब्दबोधविषयत्वनियामकत्वकल्पने विरोधाभावान्नानार्थस्थलेऽनेकेषां वृत्त्युपस्थापितत्वेऽपि शब्दतात्पर्यविषयस्यैव शाब्दबोधविषयत्वस्य वक्तव्यत्वेन अवृत्तिविषयस्यापि तात्पर्यविषयस्य शाब्दधीविषयत्वसंभवाच्च सादृश्यप्रतीत्यर्थमेव मुख्यार्थारोपेण शब्दप्रयोगात्। अत एव वक्तुरप्याहार्यारोपपूर्वक एव सिंहो देवदत्त इत्यादिप्रयोगः। एवं च शक्त्यतिरिक्ता वृत्तिर्नास्ति; आरोपितार्थे शक्तेरेव सत्वात्सादृश्यादेर्वृत्तिं विनैव[1] भानाङ्गीकारात्। तस्मादारोपितार्थवृत्तित्वमेव गौणत्वम्। यद्यपीदं लाक्षणिकसाधारणं 'मञ्चाः क्रोशन्ती'त्यादौ क्रोशनकर्तरि मञ्चत्वारोपात् तथापि गुणाद् यत्रारोपः स गौणः, अभिधेयसंबन्धाद्यत्रारोपः स लाक्षणिक इति भेदो ज्ञेय इति तात्पर्यसङ्ग्रहः। गौणार्थापेक्षयां मुख्यस्य प्रथमप्रतीत्या ग्राह्यत्वमुक्त्वा गौणस्यानियतत्वादपि नियतो मुख्यार्थ एव ग्राह्य इत्याह—**अनियतश्चेति**। सिंहशब्दस्य देवदत्तवृषभादिषु (प्रयोगात्) सादृश्यस्य नानात्वेनानियतत्वमित्यर्थः। गौणमुख्ययोरित्येतन्न वाचनिकमित्याह—**तस्मादिति**। **गोत्वमारोपितम्,** अगवीत्यादिः। ननु प्रकृतिविकृतिभावविषयः च्विप्रत्ययः। तत्र अगौः प्रकृतिः गौश्च विकृतिः। तत्र गोऽभवदित्यत्र विकृतेर्गोरेव कर्तृत्वादगवि न गोत्वारोपोपयोगः; अत आह—**गोऽभवदिति**। **वृत्तौ,** तद्धितवृत्तौ। **प्रकृतेः,** अगोः। **सङ्घीति;** असङ्घाः ब्राह्मणाः सङ्घः संपद्यते इति विग्रहः। अजस्य च गोश्च यागद्रव्यसाधनत्वेन विहितस्य मुख्यस्यैव पशोर्ग्रहणं न वाहीकस्येति तद्यथेति भाष्यार्थः। ननु स्वं रूपम् इति रूपग्रहणेनार्थवद्ग्रहणस्योक्तत्वात् कथमर्थानाश्रयणम्। न च वृद्धयात्वयोः वर्णाश्रयत्वात् नार्थवद्ग्रहणमिति वाच्यम् "गोतो णित्" इति णिच्छब्दोपादानात् "औतोऽम्शसोः" इत्यत्रापि अम्शस्भ्यां प्रतीतप्रातिपदिकस्य ओत इति विशेषणेन ओदन्तप्रातिपदिकस्यैव ग्रहणात्; अत आह—

(१) ख. विनापि.

**स्वार्थेति।** शब्दाश्रये चेत्यनेनार्थानपेक्षा नोक्ता। किं तु विभक्तिविधौ गौणमुख्य-न्यायाप्रवृत्तिः। गौणमुख्यप्रतीतेः पदान्तरसंबन्धानन्तरभावित्वेन पदसंस्कारकालेऽभा-वादिति समुदायार्थः। **मुख्यव्यपदेशः,** मुख्यत्वप्रतीतिः। विभक्त्युत्पत्तिकाल इत्यादिः। **गौणाभावे,** गौणप्रतीत्यभावे। गौस्तिष्ठति, गामानयेत्यत्रापि प्रकरणा-दिना गौणार्थज्ञानस्य पश्चाद्भावित्वाद्विभक्तिकाले गौणमुख्यन्यायाप्रवृत्तिर्ज्ञेया। ननु गां वाहीकमानयेत्यत्र गोशब्दप्रतिपाद्यमान्द्यादिविशिष्टवाहीकस्य कर्मत्वाद् द्वितीयोत्पत्तिकाले गौणत्वप्रतीतेः गामिति द्वितीया न स्यात्; अत आह—**तत्रेति।** अरुणाधिकरण-न्यायेन इहापि कटं करोति भीष्ममित्यादिभाष्यानुरोधेन च कारकाणां क्रियान्वय एव प्रथमः, पश्चात् परस्पराकांक्षया कारकाणामेव विशेषणविशेष्यभावेनान्वयः इति विभक्तिकाले न गौणत्वप्रतीतिरित्यर्थः। **प्रादुर्भावः,** ज्ञानम्। **पदकार्येष्वेवेति;** प्रकृतौ वर्तमानाद्विकृतिवाचकात्सुबन्तात् च्विर्विधीयते। च्व्यन्तस्य च निपातत्वेन प्रगृह्यत्वमिति प्रगृह्यसंज्ञायाः पदकार्यत्वाद् गोऽभवद् इत्यादौ गौणमुख्यन्यायः प्रवर्तत एवेति भावः। **उक्तमिति;** भाष्ये शब्दपदं प्रातिपदिकपरमित्यर्थः।

## सू.—उञ ऊँ॥ १। १। १७॥

**भा:—इह कस्मान्न भवति 'आहो इति, उताहो इति' उञ इत्युच्यते; न चात्रोञं पश्यामः। उञोऽयमन्येन सहैका-देश उञ्ग्रहणेन गृह्यते। आचार्यप्रवृत्तिर्ज्ञापयति नोञ एकादेश उञ्ग्रहणेन गृह्यत इति। यदयम् "ओत्" इत्योदन्तस्य निपातस्य प्रगृह्यसंज्ञां शास्ति। नैतदस्ति ज्ञापकम्। उक्तमेतत् 'प्रतिषिद्धार्थोऽयमारम्भः' इति। दोषः खल्वपि स्यात् यद्युञे-कादेशः उञ्ग्रहणेन न गृह्येत[1]। जानु उ अस्य रुजति, जानू अस्य रुजति, जान्वस्य रुजति, "मय उञो वो वा" इति वत्वं न स्यात्। एवं तर्हि एकनिपाता इमे। अथवा द्वावुकाराविमौ;**

(१) क. गृह्यते.

**एकोऽननुबन्धकः, अपरः सानुबन्धकः। तद्योऽननुबन्धकः तस्यैष एकादेशः।**

प्र:—**इह कस्मादिति;** निपातसमाहारं मत्वा प्रश्नः। **यदयमिति;** एकादेशे[1] हि कृते आदिवद्भावात् संज्ञासिद्धिः।

उ:—भाष्ये **इहेति;** आहो इत्यादौ। ऊँइत्यादेशः कस्मान्न भवतीत्यर्थः। तस्य तात्पर्यमाह—**निपातेति।** ज्ञापकत्वमुपपादयति—**एकादेशे हीति।** आह उ आहो इत्यत्र ओकारस्य उकारग्रहणेन ग्रहणान्निपात एकाजित्येव प्रगृह्यत्वसिद्धेः "ओत्" इति व्यर्थं सत् उञ एकादेशः उञ्ग्रहणेन न गृह्यत इत्येतज्ज्ञापयतीत्यर्थः। सामान्येन ज्ञापकत्वमभिप्रेत्येदमुक्तम्। प्रगृह्यसंज्ञायां ज्ञापकत्वे आहो इत्यादौ ऊँ आदेशः स्यादेवेति मन्तव्यम्। भाष्ये **तस्यैष इति;** आहो, उताहो इत्यादावित्यर्थः।

**॥ वा ॥ उञ इति योगविभागः ॥**

**भा:—उञ इति योगविभागः कर्तव्यः। "उञः" शाकल्यस्याचार्यस्य मतेन प्रगृह्यसंज्ञा भवति। उ इति, विति। ततः "ऊँ" उञ ऊँ इत्ययमादेशो भवति शाकल्यस्याचार्यस्य मतेन, दीर्घोऽनुनासिकः, प्रगृह्यसंज्ञकश्च। ऊँ इति। किमर्थो योगविभागः?**

**॥ वा ॥ ऊँ वा शाकल्यस्य ॥**

**भा:—शाकल्यस्याचार्यस्य मतेन ऊँ विभाषा यथा स्यात्। ऊँ इति, उ इति। अन्येषामाचार्याणां मतेन विति॥ उञ ऊँ॥**

प्र:—**इह** रूपत्रयं साध्यम् 'उ इति, विति, ऊँ इति'। तच्चैकयोगे न सिध्यति। एकयोगे ह्युञ इति श्रुतिरादेशेन श्रुतत्वात् संबध्यते, न प्रगृह्यसंज्ञया।

---

(१) पु. पु. हीति नास्ति

सा तु[1] "निपात एकाजनाङ्" इति नित्यैवास्य भवति। [2]शाकल्यश्रुत्यनुवृत्त्या ऊँ आदेशे विकल्पिते रूपद्वयं स्यात् 'उ इति, ऊ इति'; न तु 'विति' इति। तदर्थमाह—**उञ इति योगविभाग इति।** "उञ" इत्यत्र शाकल्यस्येतौ, प्रगृह्यमिति चानुवर्तते। तत्र प्रगृह्यसंज्ञैव शाकल्यस्य मतेन विधीयते, नान्येषामिति स्मृत्यन्तरानुसन्धानद्वारेण विभाषा संपद्यते। उ इति, विनीति। "ऊँ" इत्यत्र च यदि शाकल्यस्येति नापेक्ष्यते, तदा प्रगृह्यस्योञो नित्यमादेशः स्यात्। ततश्च विति, ऊँ इति एते द्वे एव रूपे स्याताम्। तस्माच्छाकल्यग्रहणानुवृत्त्या आदेशविकल्पे सति त्रीणि रूपाणि सिध्यन्ति। **ऊँ वा शाकल्यस्येति;** शाकल्यश्रुतेरेव फलं वाग्रहणेन प्रतिपादयति। एतदेव व्याचष्टे—**शाकल्यस्य विभाषा यथा स्यादिति।** प्रगृह्यसंज्ञादेशश्च। तत्र यद्यपि पूर्वसूत्रेषु फलरूपतया निर्देशात् प्रदेशेष्विव प्रगृह्यशब्दो द्विवचनाद्यभिधेयः तथापि इह उञ इति षष्ठीनिर्देशात् स्वरूप-पदार्थकः संपद्यते।

उ:—योगविभागस्य प्रयोजनमाह—**इहेति।** आदेशाभावपक्षे प्रगृह्य-संज्ञाविकल्पसिद्धये योगविभाग इत्यर्थः। **नित्य इवेति;** आदेशाभावपक्ष इत्यादिः। **तदर्थम्;** वितीतिसिद्ध्यर्थम्। योगविभागे रूपत्रयसिद्धिप्रकारमाह—**उञ इत्य-त्रेति। प्रगृह्यस्य उञ इति;** प्रगृह्यमित्यनुवर्तमानमादेशेन न संबध्यते विधानसामर्थ्यादेव प्रकृतिभावसिद्धेः संज्ञाप्रयोजनाभावात्। अतः षष्ठ्यन्तत्वेन विपरिणतं स्थानिना संबध्यत इत्यर्थः। यद्यपि ऊँ इत्यत्र प्रगृह्यमिति नानुवर्तते प्रयोजनाभावात्। प्रगृह्याप्रगृह्यसाधारण्येन आदेशेऽप्यप्रगृह्यस्थानिके विधानसामर्थ्यादेव प्रकृतिभावसम्भवात्। तथापि उञ इत्यत्र संज्ञाविधानात् संज्ञ्युपस्थितेरुपलक्षणाभिप्रायेण वा प्रगृह्यस्येति विशेषणमिति ज्ञेयम्। वाकारस्याधिकस्य प्रक्षेपशङ्कां वारयति—**शाकल्यश्रुते-रेवेति।** यथा स्यादित्यत्र कर्तृविशेषमाह—**प्रगृह्येति;** उञ इत्यादिः। नन्वनुवर्तमानमपि प्रगृह्यपदं संज्ञिपरं स्यात् षष्ठ्यन्तेन उञ इत्यनेन सामानाधिकरण्याभावेन संज्ञात्वासंभवाद्; अत आह—**तत्रेति। फलरूपतया,** संज्ञिविशेषप्रतीति-फलकतया। **प्रदेशेषु;** विधिषु। **षष्ठीति;** स्थान्यादेशसंबन्धासम्भवात् संज्ञा-

(१) क. तु इति नास्ति. (२) क. शाकल्यश्रुत्यनुवृत्त्या च आदेशे.

संज्ञित्वसंबन्धे षष्ठीत्वस्यैव योगविभागफलसिद्धये निश्चितत्वादत्रापि संज्ञापरत्वमेवेति भावः ।

सू.—ईदूतौ च सप्तम्यर्थे १। १। १८ ॥

॥ वा ॥ ईदूतौ सप्तमीत्येव ॥

भा :—ईदूतौ सप्तमीत्येव सिद्धम् । नार्थोऽर्थग्रहणेन ।

॥ वा ॥ लुप्तेऽर्थग्रहणाद्भवेत् ॥

भा :—लुप्तायां सप्तम्यां प्रगृह्यसंज्ञा न प्राप्नोति । क ? 'सोमो गौरी अधिश्रितः (ऋ ९-१२-३ ।)' इष्यते चात्रापि स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीत्येवमर्थमर्थग्रहणम् । नात्र सप्तमी लुप्यते । किं तर्हि ? पूर्वसवर्णोऽत्र भवति ।

॥ व ॥ पूर्वस्य चेत्सवर्णोऽसावाडाम्भावः प्रसज्यते ॥

भा :—यदि पूर्वसवर्णः, आडाम्भावश्च प्राप्नोति । एवं तर्हि आहायमीदूतौ सप्तमीति ; न चास्ति सप्तमी ईदूतौ, तत्र वचनाद्भविष्यति ।

॥ वा ॥ वचनाद्यत्र दीर्घत्वम् ॥

भा :—नेदं वचनाल्लभ्यम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् । किम् ? यत्र सप्तम्या दीर्घत्वमुच्यते । दृतिं न शुष्कं सरसी शयानम् (ऋ ७-१०३-२) इति । सति प्रयोजने इह न प्राप्नोति 'सोमो गौरी अधिश्रितः' (ऋ ९-१२-३) इति ।

॥ वा ॥ तत्रापि सरसी यदि ॥

भा :—तत्रापि सिद्धम् । कथम् ? यदि सरसीशब्दस्य प्रवृत्तिरस्ति । अस्ति च लोके सरसीशब्दस्य प्रवृत्तिः । कथम् ? दक्षिणापथे हि महान्ति सरांसि सरस्य इत्युच्यन्ते ।

प्र :—**ईदूतौ सप्तमीत्येवेति ;** सप्तमीसहचरितं यदीदूदन्तं सप्तम्या वा परतः तत् प्रगृह्यसंज्ञं भवतीत्येवं प्रत्ययलक्षणेन लुप्तायामपि सप्तम्यां सोमो गौरी अधिश्रित इत्यादौ भविष्यति प्रगृह्यसंज्ञेति प्रश्नः। **लुप्त इति ;** संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधादसत्यर्थग्रहणे सप्तम्या एव संज्ञिनीत्वादसत्याश्च कार्याभावात् प्रत्ययनिमित्तं यत्रान्यस्य कार्यं विधीयते तत्रैव प्रत्ययलक्षणसद्भावाद् गौरीत्यत्राप्रसङ्गादर्थग्रहणं कृतम्। अर्थग्रहणे सति अर्थनिमित्ता सञ्ज्ञेयं भवति न प्रत्ययश्रवणनिमित्तेति लोपेऽपि सिध्यति। **पूर्वसवर्ण इति ;** सति च पूर्वसवर्णे एकादेशे च आदिवद्भावाद्भवति ईकारः सप्तमीतिसिद्धा संज्ञा। **आडाम्भाव इति ;** एकादेशं बाधित्वा आडामौ स्याताम्। **वचनादिति ;** सर्वत्रैव सप्तमी लुप्यत इति वचनसामर्थ्यात् सप्तमीशब्देन सप्तमीसहचरितस्य ग्रहणान्मुख्यकल्पनासम्भवे गौणी कल्पना गृह्यत इत्याश्रयणात् सिध्यतीति भावः। मुख्यकल्पना सम्भवत्येवेत्याह—**यत्रेति।** सरसीत्यत्र सरश्शब्दात्परस्य ङिशब्दस्य 'इयाडियाजीकाराणामुपसंख्यानम्' इति ईकारे कृते भवतीकारः सप्तमीति तत्रैव स्यात्, न तु गौरीत्यत्रेति भावः। **सरसी यदीति ;** यदीति सम्भावनायाम्। तस्मात् स्थितमेतत् 'वचनात्सर्वत्र लुप्तायामपि सप्तम्यां भविष्यति' इति नार्थोऽर्थग्रहणेन।

उ :—ईकारोकारात्मकसप्तम्या अभावात् तयोः सप्तमीसामानाधिकरण्यासम्भवात् सामर्थ्यलभ्यमर्थमाह—**सप्तमीति। सप्तम्यां वेति ;** सप्तमीति लुप्तसप्तमीकमिति व्याख्यास्यत इति भावः। परतो यदीदूदन्तमित्यनुषङ्गः। संज्ञाकाले साहचर्यपरत्वसम्पादनाय प्रत्ययलक्षणेनेत्युक्तम्। ननु सप्तमीति प्रत्ययग्रहणात्तदन्तविधौ लुप्तायामपि सप्तम्यां प्रत्ययलक्षणेन सप्तम्यन्ततया सप्तम्यन्तं यदीदूदन्तं तत् प्रगृह्यमिति स्यादेव संज्ञाग्रहणं विनापि ; अत आह—**संज्ञाविधाविति। प्रतिषेधात् ;** तदन्तविध्यभावस्य सुप्तिङन्तमित्यत्र ज्ञापितत्वात्। अस्तु सप्तम्या एव संज्ञित्वम् ; अत आह—**असत्याश्चेति।** कार्यार्था संज्ञा कार्याभावेऽनुपयुक्तेत्यर्थः। अनुपयुक्तापि संज्ञा लुप्तस्य प्रत्ययलक्षणेन वाच्या ; तच्चात्र न सम्भवतीत्याह—**प्रत्ययनिमित्तमिति।** सर्वथापि गौरी इत्यत्र संज्ञा न सिध्यतीत्याह—**गौरी इत्यत्र**

**चेति।** **लोपेऽपीति;** गौरी इत्यत्रापि सप्तम्यर्थसत्वादित्यर्थः। भाष्ये **पूर्वसवर्ण इति;** 'सुपां सुलुगि'त्यादिना अत्र पूर्वसवर्णदीर्घः क्रियते न लुक्। अत्रार्थग्रहणं विनापि संज्ञा सिध्यतीत्याह—**पूर्वेति।** **ईकारेति;** ईकाररूप-सप्तम्या एव संज्ञेत्यर्थः। यद्यपि गौरी इत्यत्र लुकि पूर्वसवर्णदीर्घे वा [१]न विशेषः तथापि प्रगृह्यत्वसिद्धये पूर्वसवर्णदीर्घत्वाश्रयणम्। मामकी तनूरित्युकारान्ते तु रूपे विशेषः। **बाधित्वेति;** परत्वात 'वार्णादाङ्गं बलीय' इति वचनाच्चेत्यर्थः। वचनाद-न्यशब्दार्थस्य कथं संज्ञा; अत आह—**सर्वत्रेति।** यत्र मुख्यसम्भवस्तत्रैव गौणमुख्यन्यायः, न मुख्यासम्भवस्थलेऽपीत्याह—**मुख्येति।** तत्र सप्तम्या ईकारः सुपामित्यादिना न सम्भवति; अत आह—**इयाडिति।** अर्थग्रहणनिराकरण-प्रवृत्तस्य संशयार्थो यदिशब्दो न युक्तः; अत आह—**सम्भावनायामिति।** इयता ग्रन्थेनोक्तमुपसंहरति—**तस्मादिति।**

**॥ वा ॥ ज्ञापकं स्यात्तदन्तत्वे ॥**

**भा:—एवं तर्हि ज्ञापयत्याचार्यः 'न प्रगृह्यसंज्ञायां प्रत्यय-लक्षणं भवति' इति। किमेतस्य ज्ञापने प्रयोजनम्? कुमार्योर-गारं कुमार्यगारम्, वध्वोरगारं वध्वगारम्। प्रत्ययलक्षणेन प्रगृह्यसंज्ञा न भवति।**

**॥ वा ॥ मा वा पूर्वपदस्य भूत् ॥**

**भा:—अथवा पूर्वपदस्य मा भूदित्येवमर्थमर्थग्रहणम्। 'वाप्यामश्वो वाप्यश्वः, नद्यामातिः नद्यातिः। अथ क्रियमाणेऽ-प्यर्थग्रहणे कस्मादेवात्र न भवति? जहत्स्वार्था वृत्तिरिति। अथाजहत्स्वार्थायां वृत्तौ दोष एव। अजहत्स्वार्थायां च न दोषः। समुदायार्थोऽभिधीयते।**

**ईदूतौ सप्तमीत्येव लुप्तेऽर्थग्रहणाद्भवेत्।**
**पूर्वस्य चेत्सवर्णोऽसावाडाम्भावः प्रसज्यते॥**

---

(१) ख. विशेषो नास्ति

**वचनाद्यत्र दीर्घत्वं तत्रापि सरसी यदि ।**
**ज्ञापकं स्यात्तदन्तत्वे मा वा पूर्वपदस्य भूत् ॥**

**ईदूतौ च सप्तम्यर्थे ॥**

प्र :—**ज्ञापकमिति ;** ईदूदेदित्यत्र तृतीयचतुर्थपक्षयोरित्यर्थः । इह प्रगृह्य-संज्ञाप्रकरणे यदि प्रत्ययलक्षणं स्यात् तदा ईदूतौ च सप्तमीत्येव सप्तमीसहचरितं सप्तम्या वा परतो यदीदूदन्तं तत्प्रगृह्यसंज्ञमिति प्रत्ययलक्षणेन लुप्तायामपि सप्तम्यां संज्ञा भविष्यतीति किमर्थग्रहणेन ? तत्क्रियमाणं प्रत्ययलक्षणाभावं सूचयति । संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधेरभावात्। तदन्तपक्षः तत्र नैव स्थित इति ज्ञापनफलाभावादाह—**मा वेति । वाप्यश्वो नद्यातिरिति ;** संज्ञायाम् इति समासे कृते सप्तमी-सहचरितमीकारान्तं पूर्वपदमिति स्यात् प्रगृह्यसंज्ञेति तदर्थमर्थग्रहणम् । **अथेति ;** अस्त्येवात्र सप्तम्यर्थ इति प्रश्नः । **जहत्स्वार्थेति ;** समासस्यैवार्थवत्वात् पूर्वोत्तर-पदयोः वर्णवदानर्थक्यात् सप्तम्यर्थोऽत्र नास्तीत्यर्थः । **समुदायार्थ इति ;** वृत्तौ हि पूर्वपदं स्वार्थमप्यभिधत्ते प्रधानार्थमपीति स्वार्थसंसृष्टस्य प्रधानार्थस्याभिधानात् पांसूदकवत्स्वार्थस्य विवेकानवगमात् समुदायार्थो वृत्तौ [1]संसृष्टरूपेणैवाभिधीयते । सप्तम्यर्थ-ग्रहणेन [2]यावानर्थो वाक्ये सप्तम्यन्तेनाभिधीयते केवलोऽसंसृष्ट उद्भूतः तस्यैवेह[3] ग्रहणमिति समासे न भवति प्रगृह्यसंज्ञा ।

उ :—**ज्ञापकमिति** वार्तिकं प्रगृह्यसंज्ञार्थम् । प्रत्ययान्तत्वे आश्रीयमाणे प्रत्ययलक्षणाभावस्य अर्थग्रहणं ज्ञापकमित्यर्थः । एतस्य तात्पर्यार्थमाह—**ईदूदेदिति । तृतीयेति ;** इदूदेदन्तं द्विवचनान्तमिति तृतीयः । ईदूदेदन्तं यद् द्विवचनं तदन्तमिति चतुर्थः । तयोः पक्षयोः कुमार्यगारमित्यत्र प्रगृह्यसंज्ञाभावो ज्ञापनप्रयोजनमित्यर्थः । ज्ञापकत्वमुपपादयति—**इहेति ।** पूर्वापरितोषात्पक्षान्तरमित्याह—**संज्ञाविधाविति । अर्थग्रहणाभावे** वाप्यश्वादावतिव्याप्तिमुपपादयति—**वाप्यश्व इति । सप्तमी-सहचरितमिति ;** प्रत्ययलक्षणेनेत्यर्थः । स्वार्थं जहति पदानि यस्यां वृत्तौ सा

(१) क. संसृष्ट रूप एव (२) क. यावानेवार्थो
(३) क. इह इति नास्ति

जहत्स्वार्थेत्यभिप्रेत्याह—**समासस्यैवेति**। ननु पूर्वपदं समुदायार्थस्य प्रधानार्थस्याभिधायकं कथम्, तथापि स्वार्थत्यागादतिव्याप्तिनिरासो वा कथम्; अत आह—**वृत्तौ हीति**। प्रधानार्थमपीत्यनेन समुदायार्थशब्दः समासार्थपरतया व्याख्यातः॥ **स्वार्थस्य;** पूर्वपदार्थस्य। द्वितीयशङ्कां निराह—**सप्तम्यर्थग्रहणेनेति**। यावानित्येतदेवाह—**केवल इति**। [१]केवलपदस्यैव व्याख्यानम्—**असंसृष्ट इति**। वाक्येऽपि पदान्तरार्थसंसृष्टत्वमस्ति; अत आह—**उद्भूत इति**। एतेन समासान्तर्गतसप्तम्यर्थाद्वैलक्षण्यमुक्तम्। **तस्यैवेति**; अर्थग्रहणसामर्थ्यादित्यर्थः। भाष्ये व्याख्यातवार्तिकं सुखग्रहणार्थं पठति—**ईदूताविति**।

सू.—दाधा घ्वदाप्॥ १। १। १९॥

**॥ वा ॥ घुसंज्ञायां प्रकृतिग्रहणं शिदर्थम्॥**

**भा:—घुसंज्ञायां प्रकृतिग्रहणं कर्तव्यम्। दाधाप्रकृतयो घुसंज्ञा भवन्तीति वक्तव्यम्। किं प्रयोजनम्? आत्वभूतानामियं संज्ञा क्रियते। सा आत्वभूतानामेव स्यात्। अनात्वभूतानां न स्यात्। ननु च भूयिष्ठानि घुसंज्ञाकार्याण्यार्धधातुके। तत्र चैते आत्वभूता दृश्यन्ते। "शिदर्थम्" शिदर्थं प्रकृतिग्रहणं कर्तव्यम्। शित्यात्वं प्रतिषिध्यते तदर्थम्। 'प्रणिदयते, प्रणिद्यति, प्रणिधयति' इति। भारद्वाजीयाः पठन्ति—**

**॥ वा ॥ घुसंज्ञायां प्रकृतिग्रहणं शिद्विकृतार्थम्॥**

**भा:—घुसंज्ञायां प्रकृतिग्रहणं क्रियते। किं प्रयोजनम्? शिदर्थं विकृतार्थं च। शित्युदाहृतम्। विकृतार्थं खल्वपि 'प्रणिदाता, प्रणिधाता'। किं पुनः कारणं न सिध्यति? लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव इति प्रतिपदं ये आत्वभूताः तेषामेव स्यात्। लक्षणेन ये आत्वभूताः तेषां न स्यात्।**

---

(१) ख. केवल इत्यस्यैव

प्र :—दाधाशब्दयोर्घुसंज्ञा विधीयमाना रूपान्तरयुक्तानां दोदेङ्धेटां न प्राप्नोतीत्याह—**घुसंज्ञायामिति। किं प्रयोजनमिति**; दोदेङ्धेटामेजन्तानामनुकरणानि व्यवस्थाप्य आत्वे कृते ददातिदधातियच्छत्यनुकरणानां चैकशेषे कृते द्वन्द्वनिर्देशात् सिद्धा दोदेङ्धेटामपि घुसंज्ञा, कृतात्वानां चैषां स्थानिवद्भावेन सिद्धेति प्रश्नः। **आत्वभूतानामिति**; भवतेः प्राप्त्यर्थात् 'आधृषाद्वा' इति विभाषितणिचः कर्तरि कर्मणि वा क्तप्रत्ययः। [1]तेन आत्वं भूता, आत्वेन वा भूता आकारान्ता इत्यर्थः। न तु लक्षणेन कृतात्वा इति विज्ञेयम्। अस्याप्ययमभिप्रायः। एजन्तानुकरणत्वे प्रमाणाभावात् प्रक्रियागौरवाच्च प्रयोग एव ये आकारान्ताः प्रयुज्यन्ते तदनुकरणानामयमेकशेषनिर्देशः। सामान्यानुकरणं वा दा इति धा इति पृथक् पदं निर्दिष्टमिति। **प्रणिदयत इति**; घुसंज्ञायां सत्यां 'नेर्गद' इति णत्वं भवति। [2]**लक्षणेनेति**; लाक्षणिके हि लक्षणानुसन्धानद्वारेण प्रतिपत्तिर्बहिरङ्गा, प्रतिपदोक्ते त्वन्तरङ्गा। [3]प्रणिदातेति, द्यतेर्देङो वा रूपम्; प्रणिधातेति धेटः।

उ :—वार्तिकमवतारयति—**दाधेति। इत्याह**; इत्यत आह। **आत्वे कृत इति**; यद्यप्यनुकरणानामुपदेशाभावादुपदेश एजन्तत्वं नास्ति तथापि प्रकृतिवदनुकरणमित्यतिदेशादात्वमित्याशयः। दो अवखण्डने, देङ् लवने, धेट् पाने, डुदाञ् दाने, दाण् दाने, डुधाञ् धारणपोषणयोः अत्र दाचतुष्टयस्य धाद्वयस्य चैकशेषं कृत्वा द्वन्द्वनिर्देश इत्याह—**एकशेष इति**। नन्वेजन्तानुकरणेन संज्ञाविधाने कृतात्वानां न स्यात्; अत आह—**कृतात्वानामिति**। 'सर्वे सर्वपदादेशा' इति न्यायेन एजन्तानामाकारान्ता आदेशा इति भावः। नन्वात्वं भूतं जातं कृतं येषामिति विग्रहे दाञ्दाण्धाञां न स्यात्; अत आह—**भवतेरिति। आत्वमिति**; कर्तरि क्ते 'साधनं कृता' इति समासः। कर्मणि क्ते "कर्तृकरणे कृता" इत्यनेनेत्यर्थः। बहुव्रीहिर्न भवतीत्याह—**न त्विति**। नन्वेजन्तानुकरणेन प्रकृतीनामपि संज्ञोक्ता;

(१) मु. पु. तत्र (२) मु. पु. लक्षणेति

(३) मु. पु. प्रणि इत्यस्मात् धेटः इत्यन्तो भागः णत्वं भवति इत्यस्मादनन्तरं लक्षणेनेत्यस्मात् पूर्वं दृश्यते।

अत आह—**अस्यापीति**। ननु सामान्यानुकरणपक्षे समाहारद्वन्द्वे 'दाधम्' इति स्यात्। इतरेतरयोगद्वन्द्वे तु 'दाधौ' इति स्यात्; अत आह—**दा इति धा इतीति**। एकशेषपक्षे इतरेतरयोगद्वन्द्वः। दाधा इति बहुवचनमिति ज्ञेयम्। **बहिरङ्गा;** विलम्बिता। **अन्तरङ्गा;** शीघ्रभाविनी। ननु दाण्दाञोः प्रणिदाता, धाञः प्रणिधातेति सिध्यत्येव; अत आह—**द्यतेरिति**। दो अवखण्डने इत्यस्य तिपि श्यनि "ओतः श्यनि" इत्योकारलोपे कृते निर्देशः। यद्यपि लक्षणप्रतिपदेत्यस्य एतदनन्तरं व्याख्या उचिता तथापि वैचित्र्यात् क्रमव्यत्यय इति ज्ञेयम्।

**भा:—अथ क्रियमाणेऽपि प्रकृतिग्रहणे कथमिदं विज्ञायते 'दाधाः प्रकृतयः' इति, आहोस्वित् 'दाधां प्रकृतय' इति? किं चातः? यदि विज्ञायते दाधाः प्रकृतय इति, स एव दोषः आत्वभूतानामेव स्यात्, अनात्वभूतानां न स्यात्। अथ विज्ञायते दाधां प्रकृतय इति, अनात्वभूतानामेव स्यात्, आत्वभूतानां न स्यात्। एवं तर्हि नैवं विज्ञायते दाधाः प्रकृतय इति; नापि दाधां प्रकृतय इति। कथं तर्हि? दाधा घुसंज्ञा भवन्ति प्रकृतयश्चैषामिति। तत्तर्हि प्रकृतिग्रहणं कर्तव्यम्। न कर्तव्यम्। इदं प्रकृतमर्थग्रहणमनुवर्तते। क्व प्रकृतम्? ईदूतौ च सप्तम्यर्थे इति। ततो वक्ष्यामि 'दाधा घ्वदाप्' 'अर्थः' इति। नैवं शक्यम्। ददातिना समानार्थान् रातिरासतिदासतिमंहतिप्रीणातिप्रभृतीनाहुः। तेषामपि घुसंज्ञा प्राप्नोति। तस्मान्नैवं शक्यम्। न चेदेवं प्रकृतिग्रहणं कर्तव्यमेव। न कर्तव्यम्। शिदर्थेन तावन्नार्थः प्रकृतिग्रहणेन। अवश्यं तत्र मार्थं प्रकृतिग्रहणं कर्तव्यम् 'प्रणिमयते, प्रण्यमयत' इत्येवमर्थम्। तत्पुरस्तादपकक्ष्यते घुप्रकृतौ माप्रकृतौ चेति।**

प्र:—**कथमिति;** दाधप्रकृतय इति षष्ठीसमासः, कर्मधारयो वा, उभयथाप्यव्याप्तिरिति प्रश्नः। **दाधाः प्रकृतय इति;** दीयत इत्यादौ ईत्वादेः।

**आत्वभूतानामिति** ; दाण्दाञ्धाञाम्। **प्रकृतयश्चैषामिति** ; प्रत्यासत्त्या एषामिति लभ्यते। **अर्थ इतीति** ; एतद् द्वितीयं वाक्यम्। सन्निधानाच्च दाधामर्थे यो वर्तते स घुसंज्ञ इति प्रकृतीनामपि सिध्यति। **तत्पुरस्तादिति** ; नेर्गद इति सूत्रे घुमाशब्दयोर्मध्ये प्रकृतिग्रहणं कर्तव्यम्। [1]तदुभाभ्यामभिसंबन्त्स्यते।

उ :—**उभयथेति** ; षष्ठीसमासे आकारान्तानां न स्यात्। कर्मधारयेऽपि[2] एजन्तानां न स्यादित्यर्थः। ननु कर्मधारयपक्षे प्रकृतय इत्यनन्वितम् ; अत आह— **दीयत इति**। घुमास्था इति ईत्वम्। ईत्वादेरित्यादिना देयादित्यादावेत्वग्रहः। उपदेश एवाकारान्ता आत्वभूताः, तद्भिन्ना अनात्वभूताः इति मत्वाह—**दाणिति**। ननु प्रकृतिशब्देन प्रकृतिमात्रग्रहणमेव युक्तम्, न त्वेषामिति विशेषलाभः ; अत आह— **प्रत्यासत्त्येति**। प्रकृतिशब्दस्य संबन्धिशब्दत्वादुपस्थितसंबन्धित्यागेनानुपस्थित-संबन्धिकल्पने मानाभावादित्यर्थः। नन्वर्थ इत्यनुवृत्तावर्थवतां दाधां संज्ञा स्यात्। तेन प्रनिदारयति, प्रनिधारयति इत्यादावनर्थकयोः दाधाशब्दयोः घुसंज्ञा मा भूत्। तत्प्रकृतीनां कथं संज्ञा स्यात्, नैवमित्यग्रिमभाष्यानुत्थानं च ; अत आह—**एतदिति**। अर्थवत्परिभाषयैवानर्थकनिवृत्तौ पुनरर्थग्रहणं वाक्यभेदेन प्रकृतीनां संज्ञाविधानार्थमित्यर्थः। भाष्ये **अवश्यं तत्रेति** ; 'नेर्गद' इति सूत्र इत्यर्थः। पुरस्तादपकर्षानुकूलतया प्रकृतिग्रहणस्थलमाह—**घुमाशब्दयोरिति**। **उभाभ्यामिति** ; घुप्रकृतिमा-शब्दानां द्वन्द्वे कृते संबन्ध्याकांक्षायां सान्निध्यविशेषादुभाभ्यां संबन्ध इत्यर्थः। भाष्ये **प्रणिमयत इति** ; मेङ् प्रणिदाने इत्यस्य रूपम्।

**भा :—यदि प्रकृतिग्रहणं क्रियते 'प्रनिमिनोति, प्रनिमीनाति' अत्रापि प्राप्नोति। अथाक्रियमाणेऽपि प्रकृतिग्रहणे इह कस्मान्न भवति प्रनिमाता, प्रनिमातुम्, प्रनिमातव्यम्' इति। आकारान्तस्य ङितो ग्रहणं [3]विज्ञायते। यथैव तर्हि अक्रियमाणे प्रकृतिग्रहणे आकारान्तस्य ङितो ग्रहणं विज्ञायते एवं क्रियमाणेऽपि प्रकृतिग्रहणे आकारान्तस्य ङितो ग्रहणं विज्ञास्यते। विकृतार्थेन चापि नार्थः। [4]दोष एवैतस्याः परि-**

(१) क. तदुभाभ्यामपि संभन्त्स्यते. (२) ख. अपि इति नास्ति.
(३) क. विज्ञास्यते (४) क. दोषा एव

भाषायाः 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव' इति 'गामादाग्रहणेष्वविशेषः' इति ।

॥ वा ॥ समानशब्दप्रतिषेधः ॥

भा :—समानशब्दानां प्रतिषेधो वक्तव्यः । 'प्रनिदारयति' प्रनिधारयति ; दाधा घुसंज्ञा भवन्तीति घुसंज्ञा प्राप्नोति ।

॥ वा ॥ समानशब्दाप्रतिषेधः अर्थवद्ग्रहणात् ॥

भा :—समानशब्दानामप्रतिषेधः । अनर्थकः प्रतिषेधः अप्रतिषेधः । घुसंज्ञा कस्मान्न भवति? अर्थवद्ग्रहणात् । अर्थवतोर्दाधोर्ग्रहणात । न चैतावर्थवन्तौ ।

॥ वा ॥ अनुपसर्गाद्वा ॥

भ :—अथवा यत्क्रियायुक्ताः प्रादयः तं प्रति गत्युपसर्गसंज्ञा भवन्ति । न चैतौ दाधौ प्रति क्रियायोगः ।

प्र :—**प्रनिमिनोतीति** ; "मीनातिमिनोतिदीङां ल्यपि च" इत्यात्वविधानाद्भवति माप्रकृतित्वमनयोः । **गामादाग्रहणेष्विति** ; अस्य चार्थस्य दैपः पित्वम् अदाबिति [1]पित्प्रतिषेधे सामान्यग्रहणार्थं लिङ्गम् । अन्यथास्य लाक्षणिकत्वादत्र ग्रहणं न भविष्यतीति किं प्रतिषेधार्थेन पित्वेन । सामान्यापेक्षया च निरनुबन्धकग्रहण इति लक्षणप्रतिपदोक्तयोरिति च परिभाषाद्वयानुपस्थानमिह ज्ञापयतीति धेटोऽपि सिध्यति । "दो दद् घोः" इत्यत्र वा[2] द इत्येतद् धेटो निवृत्त्यर्थं सद् धेटो[3] घुसंज्ञां ज्ञापयति । न हि दधातिनिवृत्त्यर्थं द इत्येतत् ; तस्य "दधातेर्हिः" इति ह्यादेशविधानाद् दद्भावाप्रसङ्गात् । **समानशब्दानामिति** ; समानश्रुतीनामित्यर्थः । **प्रनिदारयति प्रनिधारयतीति** ; दृङ्धृङोर्णिचि वृद्धौ आकारे कृते दाधाशब्दौ सम्पद्येने

(१) क. प्रतिषेधे (२) क. वा इति नास्ति
(३) क. धेटोऽपि

तौ चार्थवन्तौ पश्चात्तु रपरत्वं क्रियमाणमागमभूतत्वादन्यत्वं न करोतीति प्राप्तिः। **अर्थवद्ग्रहणादिति**; 'अर्थवद्ग्रहणे नानर्थकस्य' इत्यस्य[1] 'स्वं रूपम्' इत्यनेन ज्ञापितत्वात् "उरण् रपरः" इति चाण् विधीयमान एव रपरो भवतीति वृद्धि: क्रियमाणा रपरा भवतीति दाधारोरेवार्थवत्त्वं न तु तदवयवयोरिति नास्ति घुसंज्ञा। **अनुपसर्गाद्वेति**; अभ्युपगम्य घुसंज्ञां दोषं परिहरति। घुसंज्ञापेक्षया यस्योपसर्गत्वं तस्मात् परस्य नेर्घौ परतो णत्वं विधीयते। अत्र दाधापेक्षया नास्ति प्रशब्दस्योपसर्गत्वम्, किं तु [2]दाधारोरपेक्षयेत्यदोषः।

उ:—भाष्ये प्रतिपदोक्तस्यैवेति परिभाषाया इत्यन्वयः। कुत्रैते दोषा इत्यपेक्षायां गामादाग्रहणेष्विति पूर्वत्रापि संबध्यते। तत्र प्रतिपदोक्तग्रहणमेव स्यात्, तच्चानिष्टम्; [3]अतस्तत्राविशेष एवाङ्गीक्रियते इति भाष्यान्वयः। नेदं वाचनिकम्, किं तु ज्ञापकात्सिद्धमित्याह—**अस्य चेति**। प्रतिषेधे सामान्यग्रहणार्थं यत्पित्त्वं तद् गामादिष्वविशेष इत्यस्य लिङ्गमित्यन्वयः। **अन्यथा**; अत्र तत्परिभाषाप्रवृत्तौ। **अस्य**; दैपो दारूपस्य। **अत्र**; घुसंज्ञासूत्रे। ननु धेटो ग्रहणं न स्यात् पित्त्वस्य दामात्रे ज्ञापकत्वात्; अत आह—**सामान्येति**; घुसंज्ञासंज्ञिमात्रापेक्षयेत्यर्थः। ननु लक्षणप्रतिपदोक्तयोरित्यस्याप्रवृत्तौ 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति परिभाषया धातोरेव दाग्रहणेन ग्रहणं स्यादित्यदाप् इति प्रतिषेधो व्यर्थः स्यात्; अत आह—**निरनुबन्धकेति**। दैपः पित्त्वमदाबिति प्रतिषेधश्च परिभाषाद्वयस्यापि अप्रवृत्तिं ज्ञापयत इत्यर्थः। सामान्यज्ञापकत्वादेव गामादाग्रहणेष्वपि परिभाषाद्वयस्या-प्रवृत्तिः। पित्त्वस्य सामान्यज्ञापकत्वाभावेऽपि ज्ञापकान्तरेण धेटो घुसंज्ञामाह—**दो दद्‌दिति**। इत्यत्र द इत्येतद् घुसंज्ञां ज्ञापयतीत्यन्वयः। वार्तिके शब्दपदं श्रुतिपरम्। तेन श्रुतिसाम्यं विवक्षितं नार्थसाम्यमित्याह—**समानश्रुतीनामिति**। **दृङ्धृङोरिति**; दृङ् आदरे, धृङ् स्थैर्ये, [अवस्थाने] **तुदादी**। ननु अर्थवद्ग्रहणपरिभाषया अत्र घुसंज्ञा न भविष्यति; अत आह—**तौ चेति**।

---

(१) क. इत्यस्यार्थस्य (२) क. दाधाशब्दापेक्षयेत्यदोषः
(३) क. यतः

तदुपपादयति—**पश्चादिति** ; प्रणिधापयतीत्यत्रैवेति भावः। परिभाषायाः समूलत्वमाह—**अर्थवदिति**। **ज्ञापितत्वात्** ; रूपग्रहणेनेत्यादिः। पश्चादिति यदुक्तं तत्राह—**उरणिति** ; प्रसङ्गवाचिनः स्थानशब्दस्यानुवृत्त्या प्रसज्यमान एवाण् रपरो भवति ; न तु निष्पन्नस्याणः पश्चाद्रपरत्वमित्यर्थः। **तदवयवयोः** ; दाधाशब्दयोः **अभ्युपगम्येति** ; न तु पूर्वापरितोषेणेत्यर्थः। अदाबिति प्रतिषेधेन दैपः पित्वेन च लक्षणप्रतिपदोक्तनिरनुबन्धकपरिभाषाद्वयस्येव अर्थवद्ग्रहणपरिभाषाया अप्यप्रवृत्तिज्ञापनसंभवादिति केचित्। तच्चिन्त्यम्। तज्ज्ञापने सामर्थ्याभावात्। परिहारं विशदयति—**घुसंज्ञेति**। **दाधापेक्षयेति** ; तावन्मात्रस्य क्रियावाचित्वाभावादित्यर्थः।

**भा :—यद्येवम्, इहापि तर्हि न प्राप्नोति ‘प्रणिदापयति, प्रणिधापयति’ इति। अत्रापि नैतौ दाधावर्थवन्तौ नाप्येतौ दाधौ प्रति क्रियायोगः।**

**॥ वा ॥ न वाऽर्थवतो ह्यागमस्तद्गुणीभूतः तद्ग्रहणेन गृह्यते यथान्यत्र ॥**

**भा :—न वा एष दोषः। किं कारणम्? अर्थवत आगमस्तद्गुणीभूतः अर्थवद्ग्रहणेन गृह्यते। यथान्यत्र। तद्यथा अन्यत्राप्यर्थवत आगमः अर्थवद्ग्रहणेन गृह्यते। क्वान्यत्र? ‘लविता, चिकीर्षिता’ इति। युक्तं पुनर्यन्नित्येषु नाम शब्देषु आगमशासनं स्यात्? न। नित्येषु नाम शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यम् अनपायोपजनविकारिभिः। आगमश्च नामापूर्वः शब्दोपजनः। अथ युक्तं यन्नित्येषु शब्देष्वादेशाः स्युः। बाढं युक्तम्। शब्दान्तरैरिह भवितव्यम्। तत्र शब्दान्तरे शब्दान्तरस्य प्रतिपत्तिर्युक्ता। आदेशास्तर्हीमे भविष्यन्ति अनागमकानां सागमकाः। तत् कथम्?**

**सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः।**
**एकदेशविकारे हि नित्यत्वं नोपपद्यते ॥**

प्रः—**इहापि तर्हीति**; अत्रापि पुकि कृते पकारान्तोऽर्थवान्। न केवलो दाशब्दः। पुगन्तमेव च प्रत्युपसर्गत्वम्, न दाशब्दं प्रतीति प्रश्नः। **न वार्थवत इति**; [1]लब्धात्मकस्य भावस्य निमित्तवशादुपचयापचयौ व्यपदेशहानिं न कुरुतः; यथा देवदत्तस्याङ्गाधिक्याङ्गच्छेदौ। इहाप्यन्तरङ्गत्वात् कृतायां दाधोः घुसंज्ञायां पश्चादुत्पन्नः पुगागमो घुव्यपदेशं न निवर्तयति नाप्यर्थवत्त्वमित्यदोषः। अनर्थकस्या-प्यागमो व्यपदेशहानिं न करोति। यथा सत्यपि रेफे अकाराकारयोर्गुणवृद्धिव्यपदेशाहानिः। इह त्वर्थवतो ग्रहणादर्थवत इत्युक्तम्। यदा च प्रकृत्यर्थः प्रेण विशेष्यते तदायं परिहारः, ण्यर्थविशेषणत्वे तु प्रस्य दाधौ प्रत्यनुपसर्गत्वाण्णत्वं न भवत्येव। **तद्गुणी-भूत इति**; प्रयोगसंपादन उपकारक इत्यर्थः। **युक्तं पुनरिति**; ततश्च नित्येष्वागमविरोधात् तद्द्वारेणादेशविधानाद्दाप्शब्द एवार्थवान् न दाशब्द इति तदवस्थो दोष इति भावः। **अथ युक्तमिति**। तत्रापि स्थानिनमुपनीयादेशः क्रियत इत्यनित्यत्वप्रसङ्गः। यश्चोभयोर्दोषः न तमेकश्चोद्यः। **बाढमिति**; प्रसङ्गवाची स्थानशब्दो न निवृत्तिवाची; ततश्च सन्त एव प्रयोगे नित्याः शब्दाः बुद्ध्युन्मज्जन-निमज्जनद्वारेण प्रतिपाद्यन्ते। आगमस्तु अवस्थितस्यापूर्वः क्रियमाणो नित्यत्वं विरुणद्धि। **आदेशास्तर्हीमे इति**; इड् भवतीत्येतद्द्वारेण तव्यस्येतव्यादेशः क्रियते। **सर्व इति**; आगमा अपीत्यर्थः। **सर्वपदादेशा इति**; पदशब्देन न सुप्तिङन्तं गृह्यते; अपि तु कार्यं प्रतिपद्यमानं प्रतीयमानं प्रकृतिप्रत्ययादि तत् सर्वं पदम्। **एकदेश-विकारे हीति**; यद्यपि सर्वविकारेऽप्यनित्यत्वं यथा पिठरस्थस्य पयसा पाकादिषु तथापि विकारभावप्रतिपादनपरमेतत्। बुद्धिविपरिणाममात्रे स्थान्यादेशागमागमिभाव-द्वारेण क्रियत इत्यर्थः। यद्येवं दाशब्दस्य दाप्शब्द आदेशः क्रियत इति दाशब्द-स्यानर्थक्यप्रसङ्गः। नैष दोषः। नित्यत्वासमर्थनाय आदेशपक्ष आश्रितः। प्रक्रियायां तु कल्पितायामागमागमिभाव एव। अन्यथा आगमादेशयोः भेदेन व्यवहारो न स्यात्।

उः—**अत्रापीति**; परत्वान्नित्यत्वाच्च घुसंज्ञातः पूर्वं पुगिति भावः। आगमस्य व्यपदेशाविघातत्वमुपपादयति—**लब्धात्मकस्येति**। **भावस्य,** वस्तुनः।

---

(१) क. लब्धव्यपदेशात्मकस्य

अङ्गच्छेदग्रहणं किञ्चिद्वर्णलोपेऽपि व्यपदेशहानिर्नास्तीत्यत्र दृष्टान्तार्थम्। घुसंज्ञायाः पुगपेक्षया प्राथम्यमाह—**अन्तरङ्गत्वादिति ;** दामात्राश्रयत्वात् संज्ञान्तरङ्गा। प्रकृतिप्रत्ययाश्रयत्वागमो बहिरङ्गः। वार्तिके अर्थवत इति प्रकृताभिप्रायेणोक्तम् ; न तु न्यायेन तस्योपयोग इत्याह—**अनर्थकस्यापीति। इह त्विति ;** अस्मिन् सूत्र इत्यर्थः। प्रणिदापयतीति पाक्षिकं णत्वम्। प्रनिदापयतीत्यपि भवतीत्याह—**यदेति। प्रकृत्यर्थः;** दाधार्थः। **ण्यर्थः,** [१]प्रयोजकरूपेत्यादिः। अर्थवत्परामर्शिना तच्छब्देन अर्थवतः प्रयोगो लक्ष्यते शब्दस्वरूपे उपकारत्वलक्षणगुणत्वासंभवात् इत्यभिप्रेत्याह—**प्रयोगेति।** भाष्ये **लवितेति ;** "सार्वधातुकार्धधातुकयोः" इति गुणे आतो लोपे च इट्सहितमार्धधातुकं गृह्यत इत्यर्थः। युक्तमित्यस्य प्रकृतोपयोगमाह—**ततश्चेति। दोषः;** प्रणिदापयतीत्यत्र णत्वाभावदोषः। भाष्ये कूटस्थत्वं कदाचिदवयवविचालेऽपि स्यादतो अविचालिभिरित्युक्तम्। तस्य विवरणम्—**अनपायेति।** द्वन्द्वान्मत्वर्थीय इनिः पश्चान्नञ्समासः। ननु आदेशपक्षस्यापि दुष्टत्वेन स्वमते दोषो नोद्धृतः ; अत आह—**यश्चेति।** उभयवादिसमाधेयं तदित्यर्थः। **प्रसङ्गवाचीति ;** "षष्ठीस्थानेयोगा" इत्यत्र स्थानशब्द इत्यर्थः। **बुद्धीति ;** स्थानिबुद्धिर्न कर्तव्या ; किन्तु आदेशबुद्धिरित्येवंरूपेणेत्यर्थः। नित्यत्वमनपायोपजनविकारित्वरूपम्। नित्यत्वसिद्धये आगमानामप्यादेशत्वमङ्गीक्रियते। तथा च समाधानसाम्यमिति भाष्यार्थः। तदुपपादयति—**इह भवतीति।** पदशब्दस्य सुप्तिङन्तपरत्वे तव्यस्य इतव्य आदेश इत्ययुक्तम् ; अत आह—**पदशब्देनेति।** सर्वपदेत्यत्रावयवकार्त्स्न्ये सर्वशब्दार्थः। पद्यमानमिति 'घञर्थे कविधानम्' इति कः। **बुद्धीति ;** एतच्च स्थानिवत्सूत्रे भाष्य एव वक्ष्यति। आदेशपक्षे प्रणिदापयतीत्यत्र णत्वाभावं शङ्कते—**यदीति।** यद्यपि दा इत्यस्य पूर्वं घुसंज्ञायां पश्चाद्दात्रादेशे स्थानिवद्भावेन तस्यापि घुसंज्ञा स्यादेव तथापि कार्यकालपक्षे संज्ञाया [२]अनन्तरभावित्वाद्दोषोपन्यासः। **नैष दोष इति ;** वस्तुतो नित्यानामपि प्रक्रियाकालेऽनित्यत्वारोपेण सोच्यत इत्यर्थः। एतच्छास्त्रकृतोऽपि संमतमित्याह—**अन्यथेति।**

**॥ वा ॥ दीङः प्रतिषेधः स्थाघ्वोरित्वे ॥**

---

(१) ख. प्रयोजकव्यापाररूपेत्यादिः। (२) ख. आदेशानन्तर—

**भा :—दीङः प्रतीषेधः स्थाघ्वोरित्वे वक्तव्यः 'उपादास्थास्य स्वरः शिक्षकस्य' इति। [1]आत्वे कृते "स्थाघ्वोरिच" इतीत्वं प्राप्नोति। कुतः पुनरयं दोषो जायते, किं प्रकृतिग्रहणात्? आहोस्वित् रूपग्रहणात्? रूपग्रहणादित्याह। इह खलु प्रकृतिग्रहणाद् दोषो जायते 'उपदिदीषते' "सनिमीमाघुरभलभ" इति। नैष दोषः। दाप्रकृतिरित्युच्यते। न चेयं दाप्रकृतिः। आकारान्तानामेजन्ताः प्रकृतयः। एजन्तानामपि ईकारान्ताः। न च प्रकृतिप्रकृतिः प्रकृतिग्रहणेन गृह्यते। स तर्हि प्रतिषेधो वक्तव्यः। न वक्तव्यः। घुसंज्ञा कस्मान्न भवति? 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इत्येवं न भविष्यति।**

प्र :—**दीङ इति**; उपादी स् त इति स्थिते "मीनातिमिनोति" इत्यात्वे कृते दारूपत्वादर्थवत्वाच्च घुसंज्ञाप्रसङ्गः। **इह खल्विति**; एचो विषये आत्वविधानाद् दीशब्द एव दाप्रकृतिरिति दोषः। **न चेयमिति**; [2]एचः स्थाने आत्वविधानादित्यर्थः। **सन्निपातेति**; अकित्वसन्निपातेन आत्वं क्रियते। यदि चात्र घुसंज्ञा स्यात् "स्थाघ्वोरिच" इति कित्वं स्यादित्यकित्वस्य [3]विघातः स्यादिति घुसंज्ञां प्रति नैव आकारः आत्मानं दर्शयतीति घुसंज्ञा न प्रवर्तते। अत्र केचिदाहुः—दीङः तृजादावात्वे घुसंज्ञा भवत्येवेति प्रणिदातेति णत्वं भवति; अत एव वार्तिककारेण "स्थाघ्वोरित्वे" इति [4]विषयविशेषो निर्दिष्टः। अन्ये त्वाहुः—निर्देश एव एजन्तानामनुकरणानामात्वे कृते दाण्दाञ्धाञ्धाञ्श्चैकशेषे द्वन्द्वे च दाधा इति निर्देशाद् दीङो नास्ति प्राप्तिः। न हि तदनुकरणस्यात्वमस्ति अगुणविषयत्वात्।

उ :—दीङ् क्षय इत्यस्य लुङि मीनातीत्यात्वे उपादास्तेति रूपमिति वदन् घुसंज्ञाप्राप्तिमाह—**उपादीस् त इति**। दीङो दारूपाश्रया घुसंज्ञां सन्निपातपरिभाषया न भविष्यति। प्रकृतिग्रहणप्रत्याख्यानाच्च न तन्निबन्धनेति गूढाभिसन्धिः

---

(१) मु. पु. "मीनातिमिनोति" इत्यात्वे (२) मु. पु. एच एव
(३) मु. पु. व्याघातः (४) मु पु. विशेषः

पृच्छति—भाष्ये—**कुतः पुनरिति।** आशयमविद्वान् परिहरति—भाष्ये—**रूपग्रहणादिति। एचो विषय इति;** दातेत्यत्र दी तृच् इति स्थिते गुणमकृत्वा ईकारस्यैवात्वं क्रियत इति ईकारान्तस्य दाप्रकृतित्वमित्यर्थः। **एचः स्थान इति;** परत्वात् पूर्वं गुणेन भाव्यम्, आदेच इति स्थानिपरस्य एच इत्यनुवृत्तस्य प्रकृतिभूतेकारादिलक्षकत्वे मानाभावाच्चेत्यर्थः। भाष्ये **न च प्रकृतिप्रकृतिरिति;** प्रकृतिशब्देन सन्निधानाद् दाप्रकृतिर्गृह्यत इत्युक्तम्, तत्र साक्षात्प्रकृतिग्रहणमेव युक्तमिति भावः। **अकित्वेति;** अन्यथा एचोऽसंभवादित्यर्थः। **कित्वमिति;** अन्यथा सन्नियोगशिष्टत्वेन[१] इत्वमपि नेति कार्याभावाद् घुसंज्ञायामपि दोषाभाव इति भावः। **अगुणविषयत्वादिति;** तदानीं गुणनिमित्तप्रत्ययसन्निधानाभावादिति भावः। अत्र पूर्वपरिहार एव प्रामाणिको नोत्तर इत्याहुः। अत्र न हि तदनुकरणस्यात्वमस्ति इत्यस्य किं समाधानमिति चिन्त्यम्।

**॥ वा ॥ दाप्प्रतिषेधे न दैप्यनेजन्तत्वात् ॥**

**भा :—दाप्प्रतिषेधे दैपि प्रतिषेधो न प्राप्नोति 'अवदातं मुखम्'। ननु चात्वे कृते[२] भविष्यति। तद्धयात्वं न प्राप्नोति। किं कारणम्? अनेजन्तत्वात्।**

**॥ वा ॥ सिद्धमनुबन्धस्यानेकान्तत्वात् ॥**

**भा :—सिद्धमेतत्। कथम्? अनुबन्धस्यानेकान्तत्वात्। अनेकान्ता [३]अनुबन्धाः।**

**॥ वा ॥ पित्प्रतिषेधाद्वा ॥**

**भा :—अथवा 'दाधाघ्वपिद्' इति वक्ष्यामि। तच्चावश्यं वक्तव्यम्। अदाविति ह्युच्यमाने इहापि प्रसज्येत 'प्रणिदापयति' इति। शक्यं तावदनेन 'अदाप्' इति ब्रुवता बान्तस्य**

(१) ख. सन्नियोगशिष्टत्वात् (२) क. कृते इति नास्ति
(३) क. ह्यनुबन्धाः

**प्रतिषेधो विज्ञातुम्। सूत्रं तर्हि भिद्यते। यथान्यासमेवास्तु। ननु चोक्तं 'दाप्प्रतिषेधे न दैपि' इति। परिहृतमेतत् 'सिद्धमनुबन्धस्यानेकान्तत्वात्' इति। अथ एकान्तेषु दोष एव। [1]एकान्तेष्वपि न दोषः। आत्वे कृते भविष्यति। ननु चोक्तम् 'तद्व्यात्वं न प्राप्नोति। किं कारणम्? अनेजन्तत्वात्' इति। पकारलोपे कृते भविष्यति। न ह्ययं तदा दाब् भवति। भूतपूर्वगत्या भविष्यति। एतच्चात्र युक्तम् यत् सर्वेष्वेव सानुबन्धकग्रहणेषु भूतपूर्वगतिर्विज्ञायते। अनैमित्तिको ह्यनुबन्धलोपः तावत्येव भवति। अथवाचार्यप्रवृत्तिर्ज्ञापयति 'नानुबन्धकृतमनेजन्तत्वम्' इति। यदयम् "उदीचां माङो व्यतीहारे" इति मेङः सानुबन्धकस्य आत्वभूतस्य ग्रहणं करोति। अथवा दाबेवायं न दैबस्ति। कथम् 'अवदायति' इति? श्यन्विकरणो भविष्यति॥ दाधाध्व॥**

प्र:—**दाप्प्रतिषेध इति;** दाप् लवने इत्यस्यैव निषेधः स्यादित्यर्थः। **अवदातमिति;** तत्वमत्र प्राप्नोति। **शक्यं तावदिति;** दाप्दैपौ च धातुषु बान्तौ पठितव्यौ। **तावत्येवेति;** इत्संज्ञायां सत्यामेव। प्रयोगे दाशब्द एवायम्, पित्कार्यं तु लभत इत्यर्थः। **अथवेति;** अनुबन्धानामेकान्तत्वपक्षे उपदेश [2]एव एजन्तानामात्वमुच्यमानं दैपो न प्राप्नोतीति ज्ञापकोपन्यासः। **माङ इति;** मेङो ग्रहणं, न माङः। मेङो व्यतिहारेण नित्ययोगात्। माङस्तु विवक्षावशाद् व्यतिमिमीत इति कादाचित्कत्वाद्व्यतिहारयोगस्य। प्रणिदानं व्यतिहार इत्येकोऽर्थः। उदीचां मेङ इति तु न कृतम्। एवं हि 'नानुबन्धकृतमनेजन्तत्वम्' इति न ज्ञापितं स्यात्। **अथवेति;** दिवादिषु दाप् शोधन इति पठिष्यत इत्यर्थः।

उ:—प्रतिषेधसामर्थ्यादात्वोत्तरकालं स्मृतानुबन्धस्य प्रतिषेधो भविष्यति; अत आह—**दाप् लवन इति। तत्वमिति;** "अच उपसर्गात्तः" इत्यनेन।

---

(१) क. एकान्तेषु च (२) क. एव इति नास्ति

अपिदित्यनुच्यमानेऽपि प्रणिदापयति इत्यस्य प्रतिषेधो न भविष्यतीत्याह—भाष्ये **शक्यमिति। अदाबिति;** बकारान्तस्यैव "वावसाने" इति चर्त्वेन पकारान्तत्वेन पाठ इति भावः। नन्वेवं दाप् लवन इत्यस्य प्रतिषेधेऽपि दैपो न प्राप्नोति; अत आह—**बान्ताविति। धातुष्विति;** एकस्तावत् पठ्यत एव। अपरोऽपि बान्तश्चर्त्वभूतो निर्दिष्ट इति भावः। भाष्ये [१]**शक्यं तावदेवं वक्तुं, सूत्रं च भिद्यत इति;** 'पित्प्रतिषेधाद्वा' इति वार्तिकं निरस्तम्। इत्संज्ञानिमित्तकत्वादनैमित्तिक इत्ययुक्तम्; अत आह—**इत्संज्ञायामिति।** सा चोच्चारणसमय एव प्रवर्तत इति भावः। तावत्येवेत्यस्य तात्पर्यमाह—**प्रयोग इति।** नन्वनैमित्तिकानुबन्धलोपेनेष्टसिद्धौ ज्ञापकोपन्यासो व्यर्थः; अत आह—**अनुबन्धानामिति।** ननु माङ एवायं निर्देशो, न मेङः; अत आह—**न माङ इति। व्यतिहारेण नित्ययोगादिति;** अन्तरङ्गत्वाद् व्यतिहारे यो माङिति संबन्धः। न तु बहिरङ्गत्वाद्व्यतिहारे यथा माङिति भावः। **व्यतिमिमीत इति;** माङ् माने शब्दे च ह्वादिः। शपः श्लुः, द्वित्वम्, "भृञामित्" इत्यभ्यासस्येत्वम्, घुमास्थेति ईत्वम्, कर्मव्यतिहारद्योतनाय व्यतिप्रयोगः। ननु मेङ् प्रणिदाने इति पाठात् मेङोऽपि कादाचित्क एव व्यतिहारयोगः; अत आह—**प्रणिदान इति।** असन्देहाय मेङ इत्येव कस्मान्नोक्तम्; अत आह—**उदीचामिति।** श्यन्विकरणत्वं न व्यत्ययेन मन्तव्यमित्याह—**दिवादिष्विति।**

सू.—आद्यन्तवदेकस्मिन् ॥ १। १। २० ॥

**भा :—किमर्थमिदमुच्यते ?**

**॥ वा ॥ सत्यन्यस्मिन्नाद्यन्तवद्भावादेकस्मिन्नाद्यन्तवद्वचनम् ॥**

**भा :—सत्यन्यस्मिन् यस्मात्पूर्वं नास्ति परमस्ति स आदिरित्युच्यते। सत्यन्यस्मिन् यस्मात्परं नास्ति पूर्वमस्ति सोऽन्त इत्युच्यते। सत्यन्यस्मिन्नाद्यन्तवद्भावादेतस्मात्कारणाद् एकस्मिन्नाद्यन्तापदिष्टानि कार्याणि न सिध्यन्ति। इष्यन्ते च**

---

(१) अयं भाष्यपाठः अन्नंभट्टसंमतः। मुद्रितपुस्तके तु 'शक्यं तावदनेनादाबिति ब्रुवता बान्तस्य प्रतिषेधो विज्ञातुम्। सूत्रं तर्हि भिद्यत' इति पाठो दृश्यते।

**स्युरिति। तान्यन्तरेण यत्नं न सिध्यन्ति इत्येकस्मिन्नाद्यन्तवद्वचनम्। एवमर्थमिदमुच्यते।**

प्र:—एकशब्दोऽसहायवाची, न सङ्ख्यावाची। बहुष्वपि व्यवस्थितस्य एकत्वसङ्ख्या अस्तीति किमेकस्मिन्नित्यनेन कृत स्यात्। एकस्मिन्नित्युपमेये सप्तमीनिर्देशाद् आद्यन्तवदित्युपमानात् सप्तम्यन्ताद्वतिर्विज्ञायते, यथा मथुरावत् पाटलिपुत्रे प्राकार इति। द्वयोर्ह्युपमानोपमेययोः आधाराधेयसंबन्धप्रतिपादनाय वाक्यं प्रयुज्यते। यदि च तयोर्भिन्नविभक्तिकत्वं स्यादुपमानोपमेयभाव एव न गम्येत। सर्वातिदेशानां कार्यातिदेशस्य प्रधान्यात्तस्यैवेह आश्रयणम्। **किमर्थमिति;** व्यपदेशिवद्भावेनैव-सिद्धत्वान्न कर्तव्यमित्यर्थः। इतरः मुख्ये संभवति गौणे न स्यादित्याह—**सत्यन्यस्मिन्निति।** आद्यन्तौ विद्येते यस्मिन् शास्त्रे तदाद्यन्तवत् तस्य भावात् प्रवर्तनादित्यर्थः। क्वचिदाद्यन्तभावादिति पाठः।

उ:—ननु सर्वेषां प्रत्येकमेकत्वाद् एकत्वं न व्यावर्तकम्; अत आह—**एकशब्द इति।** सङ्ख्यावाचित्वे बाधकमाह—**बहुष्विति।** सभासन्नयने भव इत्यत्र मध्यवर्त्याकारस्य वृद्धिसंज्ञकस्यास्त्यैकत्वसङ्ख्येत्यादिवद्भावात् "वृद्धिर्यस्याचाम्" इति प्राप्ता वृद्धसंज्ञा न निवारितेति एकस्मिन्नित्यनेन किं कृतं स्यादिति भावः। यद्यपि षष्ठ्यन्ताद्वतावपि न बाधकम्, तथापि उपमानोपमेययोरेकविभक्त्यन्तत्व एव तद्भावप्रतीतेः सप्तम्यन्तादेवात्र वतिरित्याह—**एकस्मिन्निति।** वतिः "तत्र तस्यैव" इत्यनेन। **सर्वातिदेशानामिति;** रूपनिमित्ततादात्म्यशास्त्रव्यपदेशकार्यातिदेशानां मध्ये इत्यर्थः। **व्यपदेशिवद्भावेनेति;** बहुकार्यसङ्ग्रहाय तस्य वक्ष्यमाणत्वादित्यर्थः। **मुख्ये;** व्यपदेशिनि। **गौणे;** व्यपदेशिसदृशे। नन्वाद्यन्तवद्भावादित्यत्र न तावद्वतिः; सत्यन्यस्मिन्मुख्याद्यन्तत्वात्। नापि मतुप्, आद्यन्तशब्दयुक्तशास्त्रसद्भावस्य परपूर्वसत्वानपेक्षत्वेन सत्यन्यस्मिन्नित्यस्याऽयोगात्; अत आह—**आद्यन्ताविति;** आद्यन्तशब्दावित्यर्थः। **क्वचिदिति;** तत्र न व्याख्यानापेक्षेत्यर्थः।

भा :—अस्ति प्रयोजनमेतत्। किं तर्हीति ?

॥ वा ॥ तत्र व्यपदेशिवद्वचनम् ॥

भा :—तत्र व्यपदेशिवद्भावो वक्तव्यः। व्यपदेशिवदेकस्मिन् कार्यं भवतीति वक्तव्यम्। किं प्रयोजनम् ?

॥ वा ॥ एकाचो द्वे प्रथमार्थम् ॥

भा :—वक्ष्यति 'एकाचो द्वे प्रथमस्य इति बहुव्रीहिनिर्देशः' इति। तस्मिन् क्रियमाणे इहैव स्यात् 'पपाच, पपाठ'; 'इयाय, आर' इत्यत्र न स्यात्। व्यपदेशिवदेकस्मिन् कार्यं भवति इत्यत्रापि सिद्धं भवति।

॥ वा ॥ षत्वे चादेशसंप्रत्ययार्थम् ॥

भा :—वक्ष्यति 'आदेशप्रत्यययोरित्यवयवषष्ठ्येषा' इति। एतस्मिन् क्रियमाणे इहैव स्यात् 'करिष्यति, [1]हरिष्यति; इह न स्यात् 'इन्द्रो मा वक्षत्, स देवान् यक्षत्' इति। 'व्यपदेशिवदेकस्मिन् कार्यं भवति' इति अत्रापि सिद्धं भवति।

प्र :—**तत्र व्यपदेशिवद्वचनमिति ;** सर्वकार्यसिद्ध्यर्थं व्यापकं कर्तव्यमित्यर्थः। तत्र निमित्तसद्भावाद् मुख्यो व्यपदेशो यस्यास्ति स व्यपदेशी, यस्तु व्यपदेशहेत्वभावादविद्यमानव्यपदेशः स तेन तुल्यं वर्तते कार्यं प्रतीति व्यपदेशिवद्भवतीत्युच्यते। **वक्षदिति ;** वच्, लेट्, तिप्, 'इतश्च लोपः' इतीकारलोपः, 'लेटोऽडाटौ' इत्यडागमः, सिप्, कुत्वम्। अत्र सकारमात्रं प्रत्ययः ; न तु प्रत्ययस्यावयवः सकार इति षत्वं न स्यात्।

उ :—आद्यन्तवदिति त्यक्त्वा व्यपदेशिवदेकस्मिन् इति वार्तिककृतोक्तम्, तस्य प्रयोजनमाह—**सर्वकार्येति**। आद्यन्तोपदिष्टानाद्यन्तोपदिष्टकार्यसिद्ध्यर्थमित्यर्थः।

---

(१) क. पठिष्यति' इति.

व्यपदेशिशब्दार्थमाह—**तत्रेति । तेन तुल्यमिति ;** एकस्मिन्नित्यनपेक्ष्य वक्ष्यमाणरीत्या लोकसिद्धव्यपदेशिवदित्यस्मिन् "तेन तुल्यम्" इत्यनेन तृतीयान्ताद्वतिरुक्तः । वस्तुतः सूत्र इवात्रापि सप्तम्यन्ताद्वतिरिति ज्ञेयम् । भाष्ये **तस्मिन् क्रियमाणे;** तस्मिन्नाश्रीयमाणे । तत्र प्रथमस्येत्येतद् वाक्यभेदेन यत्र प्रथमश्चाप्रथमश्च एकाच् तत्र प्रथमस्यैवेति प्रतिपादनाय "लिटि धातोः" इत्यादौ संबध्यत इत्यभिप्रेत्य भाष्ये **इहैव स्यादित्युक्तम् ।** भाष्ये—**इयायेति ;** इण्, लिट्, णल्, वृद्ध्यायादेशौ ततो "द्विर्वचनेऽचि" इति रूपातिदेशाद् इकारमात्रस्य द्वित्वम्, "अभ्यासस्यासवर्णे" इतीयङ् । तत्र बहुव्रीह्यर्थाभावाद् द्वित्वं न स्यादित्यर्थः । भाष्ये **आरेति ;** ऋ गतौ प्रापणे च, लिट्, तिप्णलौ, वृद्धिः, रपत्वम् , "द्विर्वचनेऽचि" इति रूपातिदेशाद् ऋकारस्य द्वित्वम् , उरत् , रपरत्वम् , हलादिश्शेषः, "अत आदेः" इति दीर्घः, सवर्णदीर्घः । (भाष्ये वक्षदिति ;) वचेर्लेट्, तस्य तिबादेशः, सिप् "सिब्बहुलं लेटि" इत्यनेन । धातोः परः सिप्प्रत्ययः । इपावितौ । चस्य "चोः कुः" इति कुत्वम् । "इण्कोः" इति सस्य षः । कषयोगे क्षः । एवं यजतेर्लेटि यक्षदिति रूपम् ।

**भा :—स तर्हि व्यपदेशिवद्भावो वक्तव्यः । न वक्तव्यः ।**

**॥ वा ॥ अवचनात् लोकविज्ञानात् सिद्धम् ॥**

**भा :—अन्तरेणैव वचनं लोकविज्ञानात् सिद्धमेतत्[1] । तद्यथा लोके शालासमुदायो ग्राम इत्युच्यते । भवति चैतदेकस्मिन्नपि 'एकशालो ग्रामः' इति । विषम उपन्यासः । ग्रामशब्दोऽयं बह्वर्थः । अस्त्येव शालासमुदाये वर्तते । तद्यथा ग्रामो दग्ध इति । अस्ति वाटपरिक्षेपे वर्तते । तद्यथा ग्रामं प्रविष्ट इति । [2]अस्ति मनुष्येषु वर्तते । तद्यथा ग्रामो गतः, ग्राम आगत इति । अस्ति सारण्यके ससीमके सस्थण्डिलके वर्तते । तद्यथा ग्रामो लब्ध इति । तद्यः सारण्यके ससीमके सस्थण्डिलके वर्तते तमभिसमीक्ष्यैतत् प्रयुज्यते 'एकशालो ग्राम' इति । यथा तर्हि**

(१) क. एतदिति नास्ति. (२) मु. पु. अस्ति च.

**'वर्णसमुदायः पदम्' 'पदसमुदाय ऋक्' 'ऋक्समुदायः सूक्तम्' इत्युच्यते। भवति चैतदेकस्मिन्नपि 'एकवर्णं पदम्' 'एकपदा ऋक्' 'एकर्चं सूक्तम्' इति। अत्राप्यर्थेन युक्तो व्यपदेशः; पदं नामार्थः, ऋङ् नामार्थः, सूक्तं नामार्थ इति। यथा तर्हि बहुषु पुत्रेषु एतदुपपन्नं भवति 'अयं मे ज्येष्ठोऽयं मे मध्यमोऽयं मे कनीयान्' इति। भवति चैतदेकस्मिन्नपि 'अयमेव मे ज्येष्ठोऽयमेव मे मध्यमोऽयमेव मे कनीयान्' इति। तथा असूतायामसोष्यमाणायां च भवति 'प्रथमगर्भेण हता' इति। तथा अनेत्यानाजिगमिषुराह 'इदं मे प्रथममागमनम्' इति।**

प्र:—**अवचनादिति;** अवचनं वचनरहितं यल्लोकविज्ञानं तस्माल्लोकव्यवहारादित्यर्थः। इह तावदियायेति इण्धातुः प्रयोगभेदाद्बहुरूपः—एति, इतः, यन्ति, अयनम्, आयकः, अगात्, गमयतीति। तस्यायमेकोऽजवयव इव लक्ष्यते। अथवा अर्थवतो धातोरयं वर्णरूप एकोऽजित्यर्थस्य त्यागोपादानाभ्यां भवति व्यपदेश एकाजिति। एवं शिलापुत्रकस्य शरीरमित्यनेकक्रियाविषयस्यावस्थातुरिदमेकावस्थायुक्तं शरीरमित्यस्ति व्यपदेशः। एवं सिप्प्रत्यय इट्सहितोऽपि दृष्टः जोषिषदित्यादौ, वक्षदित्यादौ केवलोऽपीति तस्यायं सकार इति व्यपदिश्यते। लोकनिरूढश्चायं व्यवहार इति लोकवच्छास्त्रेऽपि व्यवहाराद् गौणमुख्यन्यायोऽत्र नावतरति। **पदसमुदाय इति;** पादपर्यायः पदशब्दः। तथा नैकपदा ऋगिति पाद एव विवक्षितः, न तु ऋचः कस्याश्चिदपि[१] एकमेव पदं भवति। **अत्राप्यर्थेनेति;** पदादीनां योऽर्थः सोऽन्यपदार्थ इत्यर्थः। अभेदोपचाराच्चार्थ एव पदादिभिरभिधीयते। **अयमेव मे ज्येष्ठ इति;** प्रथमरूपतयाध्यवसायात्। मध्यमकार्यकरणाच्च मध्यम इति व्यपदिश्यते। अन्यो न जनितेति बुद्ध्या कनीयानिति व्यपदिश्यते। **असूतायामिति;** बहुकृत्वोऽपि प्रसूता प्रथमपुत्रेण काचिद्धन्यते। तथा या प्रसोष्यते सापि काचित् पूर्वोत्पन्नेन पुत्रेण हन्यत इत्युभयोरुपादानम्। नापि प्रसूता, नापि प्रसोष्यते, कुक्षिस्थेनैव गर्भेण हता प्रथमगर्भेण हतेत्युच्यते। अपत्यपर्यायो गर्भशब्दः। तत्र तस्या एव योग्यताध्यवसायेन

(१) क. अपिर्नास्ति

भाविगर्भविवक्षया प्रथमगर्भेण हतेत्युच्यते। स्त्र्यन्तरेषु बहुपुत्रत्वे सत्याद्यगर्भस्य प्रथमव्यपदेशदर्शनात् तथाविधस्य प्रथमगर्भव्यवहारः। **अनेत्येति ;** बहुकृत्वो ह्यागतः पूर्वमागमनं स्मृत्वा प्रथमव्यपदेशं तत्र मुख्यं करोत्येव। आजिगमिषुश्च भावीन्यागमनानि बुद्धया व्यवस्थाप्य कुर्यादेव प्रथमव्यवहारम्। यस्तु सकृदेव आगतः सोऽपि करोति प्रथमव्यवहारमिति प्रतिपादनार्थम् 'अनेत्यानाजिगमिषुः' इत्युपात्तम्। तत्र अन्यसंबन्धिषु बहुष्वप्यागमनेषु आद्यस्य प्रथमव्यवहारदर्शनात् तथाविधत्वात् स्यादेकस्मिन्नप्यागमने प्रथमव्यवहारः।

उ :—अवचनादिति बहुव्रीहिरित्याह—**वचनरहितमिति।** तदपि विज्ञानविशेषणमित्याह—**यल्लोकेति।** विज्ञानशब्दः करणव्युत्पन्न इत्याह—**लोकव्यवहारादिति।** मुख्यैकाज्व्यपदेशिना सादृश्यमाह—**इहेति। अगादिति ;** "इणो गा लुङि" "णौ गमिरबोधने"। **एकोऽच् ;** असहायोऽच्। नन्वेकाचोऽवयविनो द्विर्वचनमिति यस्यायमवयवः तस्य बहुरूपस्य द्विर्वचनेन भवितव्यम्। तच्च लिट्परस्य। न चोदाहृते लिट्परत्वमस्ति ; अत आह—**अथवेति।** शब्दार्थसमुदायरूपधातौ[1] शब्दं पृथक्कृत्य [2]समुदायेन संबन्धे षष्ठ्या, एकः अज् यस्य शब्दार्थसमुदायस्येति व्यपदेशः संभवतीत्यर्थः। अर्थस्य समुदायिन्यचि त्यागः, समुदाये उपादानमिति विवेकः। एकाजिति व्यपदेशः षष्ठ्यर्थगर्भबहुव्रीहिनिर्देश इत्यर्थः। काल्पनिकभेदेन षष्ठीसद्भावे दृष्टान्तमाह—**एवमिति। अनेकेति ;** दर्शनस्पर्शनादीत्यर्थः। **एकेति ;** एकक्रियायुक्तमित्यर्थः। सत्येऽपि व्यपदेशिवद्भावं दर्शयति—**एवमिति। जोषिषदिति ;** जुषी प्रीतिसेवनयोः, लेट्, पूर्ववत् प्रक्रिया। "आर्धधातुकस्य" इतीट्। यक्षदित्यादौ "एकाचः" इति नेट्। लोकविज्ञानात् सिद्धं चेत् गौणमुख्यन्यायोऽवतरेत् ; अत आह—**लोकेति। शास्त्रेऽपीति ;** स्वरितलिङ्गासञ्ज्ञिगौणमुख्यान्ययो नावतरतीति वक्ष्यत इत्यभिसन्धिः। वर्णसमुदायः पदमिति लक्षितस्य पदप्रत्यासत्त्या ग्रहणशङ्कां वारयितुं पदशब्देन पादो विवक्ष्यत इत्याह—**पादेति। पर्यायः ;** परः। [[3]पदस्यापि ऋगवयवत्वादित्थं व्याख्यानं

---

(१) ख. धातोः. (२) ख. समुदायसमुदायिसंबन्धे.

(३) क. कोष्ठकान्तर्गतो भागः नोपलभ्यते।

किमर्थम् ; अत आह—**तथा चेति।** तत्र पादाविवक्षायां को दोषः ; तत्राह—**न त्विति।** अर्थमादाय वर्तिपदार्थान्यपदार्थभेदव्यपदेश इत्युक्तं भाष्ये। तत्र किमर्थस्यान्यपदार्थत्वम् उत वर्तिपदार्थत्वमित्यपेक्षायामाह—**पादादीनामिति।]** अर्थस्यान्यपदार्थत्वे [1]पदादिसामानाधिकरण्यं न स्यात् ; अत आह—**अभेदेति। प्रथमरूपतयेति ;** तस्मात्पूर्वस्यान्यस्याभावात् तथाध्यवसानमित्यर्थः। **मध्यमेति ;** अनेकेषु सत्सु ज्येष्ठेन किञ्चित्कर्म क्रियते, मध्यमेन किञ्चित्। तदनेनैव क्रियत इत्यर्थः। प्रथमपुत्रेण [2]तापनादिना हन्यते। **तथा या चेति ;** सम्प्रति गर्भिणी-त्यर्थः। शरीरावयवरूपगर्भस्य प्राथम्यासम्भवादत आह—**अपत्यपर्याय इति।** तस्य प्रथमव्यवहारे हेतुमाह—**तस्या एवेति। योग्यतेति ;** जीविष्यति चेत् भविष्यति गर्भ इत्यध्यवसानेनेत्यर्थः। मरणानन्तरं तादृशाध्यवसानं न सम्भवति जीवनेऽपि गर्भान्तराभावसम्भवात् ; अत आह—**स्त्र्यन्तरेषु चेति। तथा-विधस्य ;** अविद्यमानपूर्वगर्भस्य। **तथाविधत्वात् ;** अविद्यमानपूर्वागमनत्वात्।

**भा :—आद्यन्तवद्भावश्च शक्योऽवक्तुम्। कथम् ?**

**॥ वा ॥ अपूर्वानुत्तरलक्षणत्वादाद्यन्तयोः सिद्धमेकस्मिन् ॥**

**भा :—अपूर्वलक्षण आदिः, अनुत्तरलक्षणोऽन्तः। एतच्चै-कस्मिन्नपि भवति। अपूर्वानुत्तरलक्षणत्वादेतस्मात् कारणाद् एकस्मिन्नप्याद्यन्तापदिष्टानि कार्याणि भविष्यन्तीति नार्थ आद्य-न्तवद्भावेन। गोनर्दीयस्त्वाह—सत्यमेतत् सति त्वन्यस्मिन् इति।**

प्र :—इदानीं योगं प्रत्याख्यातुमाह—**अपूर्वेति।** यद्यपि बहुष्ववस्थिते-ष्वाद्यन्तशब्दौ प्रयुज्येते तथाप्यपूर्वानुत्तरत्वमात्रमेतयोः प्रवृत्तिनिमित्तम्। तच्चैकस्मिन्न-प्यस्तीति नार्थः सूत्रेण। भाष्यकारस्त्वाह—**सति त्वन्यस्मिन्निति।** न ह्यनपेक्षितप्रतियोगिनोराद्यन्तयोः प्रवृत्तिरित्यर्थः। तस्मादेकस्मिन्मुख्य आद्यन्तव्यपदेशो

(१) ख. पदं नामार्थः इति भाष्ये पदादिसामानाधिकरण्यं
(२) ख. तादानादिना (ताडनादिना)

नास्तीति कर्तव्योऽयं योगः। यद्यपि लौकिकेन व्यपदेशिवद्भावेनाद्यन्तव्यपदेश एकस्मिन्नपि सिध्यति; तथापि गौणत्वात्कार्येण न भवितव्यमिति यस्य भ्रान्तिः स्यात्तं प्रति योगोऽयमारब्धः।

उ :—**मात्रम्**; [1]एव, न तु पूर्वपरसद्भावोऽपि गौरवादिति भावः। गोनर्दीयो भाष्यकार इत्याह—**भाष्यकारस्त्विति**। भाष्ये सत्यन्यस्मिन् इत्येतदेव सत्यमित्यन्वयः। **अनपेक्षितप्रतियोगिनोः**; अनपेक्षितपूर्वपरयोः। **तथापीति**; गौणमुख्यन्यायानवतारनिमित्तस्वरितलिङ्गसङ्गस्य दुर्ज्ञानत्वादित्यर्थः। भ्रान्तिरित्यनेनाकरणमपि सूचितम्।

**भा :—कानि पुनरस्य योगस्य प्रयोजनानि?**

**॥ वा ॥ आदित्त्वे प्रयोजनं प्रत्ययञ्नित्दाद्युदात्तत्वे ॥**

**भा :—प्रत्ययस्यादिरुदात्तो भवतीति इहैव स्यात् 'कर्तव्यम्, तैत्तिरीयः'। 'औपगवः, कापटवः' इत्यत्र न स्यात्। "ञ्नित्यादिर्नित्यम्" इतीहैव स्यात् 'अहिचुम्बकायनिः' आग्निवेश्यः'। 'गार्ग्यः, कृतिः' इत्यत्र न स्यात्।**

[2]**॥ वा ॥ वलादेरार्धधातुकस्येट् ॥**

**भा :—वलादेरार्धधातुकस्येट् प्रयोजनम्। "आर्धधातुकस्येड् वलादेः" इतीहैव स्यात् 'करिष्यति, हरिष्यति'। 'जोषिषत्, मन्दिषत्' इत्यत्र न स्यात्।**

**॥ वा ॥ यस्मिन्विधिस्तदादित्वे ॥**

**भा :—यस्मिन्विधिस्तदादित्वे प्रयोजनम्। वक्ष्यति 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति। तस्मिन् क्रियमाणे "अचि**

---

(१) क. एतदेव।

(२) क. इतः परं मुद्रितपुस्तके उपलभ्यमानं वार्तिकाष्टकं नास्ति। तद्विवरणभाष्यमेव दृश्यते।

इनुधातुभ्रुवां य्वोरियङुवङौ" इतीहैव स्यात् 'श्रियः, भ्रुवः'। 'श्रियौ, भ्रुवौ' इत्यत्र न स्यात्।

॥ वा ॥ अजाद्याट्त्वे ॥

भा :—आजाद्याट्त्वे प्रयोजनम्। "आडजादीनाम्" इहैव स्यात् 'ऐक्षिष्ट, ऐहिष्ट'; 'ऐष्ट, अध्यैष्ट' इत्यत्र न स्यात्।

प्र :—**प्रत्ययञ्निदाद्युदात्तत्व इति;** प्रत्ययस्याद्युदात्तत्वं ञ्निति चाद्युदात्तत्वमित्यर्थः। कथं पुनर्भिन्नविभक्त्योर्द्वन्द्वः। उच्यते। प्रत्ययस्य यदाद्युदात्तत्वं तस्य प्रत्ययोऽपि विषय इति प्रत्ययेऽपि तदुच्यते। यद्वा ञ्निति यदाद्युदात्तत्वं तद् ञ्नितोऽपि सम्बन्धि भवतीति नास्ति भिन्नविभक्तित्वम्। "ॠदोरप्" इत्याद्युदात्तत्वनिवृत्त्यर्थात् पित्वाल्लिङ्गादेकाचोऽपि प्रत्ययस्याद्युदात्तत्वं भविष्यतीति चेदकारविषयमेव लिङ्गं स्यादिति इकारोकारयोः प्रत्ययोराद्युदात्तं न स्यात्। विशेषणार्थं वा पित्करणं स्यात् थाथादिसूत्रे इत्यज्ञापकं स्यात्। **गार्ग्य इति;** अत्र परत्वात् यस्येति लोपे कृते आदित्वाभावात् प्रकृतेराद्युदात्तत्वं न प्राप्नोति, स्वरविधौ स्थानिवद्भावप्रतिषेधाच्च नास्ति द्व्यच्त्वम्। स्वरविधौ व्यञ्जनस्याविद्यमानत्वात् नास्ति हलपेक्षमप्यादित्वम्। **कृतिरिति;** क्तिनो नित्वं तादौ च निति कृत्यतौ इत्येवमर्थं स्यात्। सौवर्यः सप्तम्यस्तदन्तसप्तम्यः इत्येतदनाश्रित्य एतदुक्तम्। **जोषिषदिति;** लिङर्थे लेट्। "इट ईटि" इति च ज्ञापकं सिज्विषयमेव स्यादिति सिप [1]नेट् स्यात्। **यस्मिन्विधिरिति;** स्वस्य च रूपस्येति नानुवर्तत इति प्रयोजनत्वेनोपन्यासः। **अजाद्याट्वे इति;** सूत्रपाठापेक्षया प्रयोजनोपन्यासः। वार्तिककारस्तु 'अजादीनामटा सिद्धम्' इत्याह।

उ :—प्रत्ययेत्यादि द्वन्द्वः। तत्र ञ्निनोऽप्याद्युदात्तत्वशङ्कां वारयति—**ञ्निति चेति। कथमिति;** यद्यपि प्रत्ययश्च ञ्निच्चेत्येकविभक्त्योरेव द्वन्द्वः; तथाप्येकरूपेण एकान्वयिनोरेव द्वन्द्वः। अत्रार्थभेदेनोदात्तत्वान्वय इति भावः; भिन्नविभक्त्योः भिन्नविभक्त्यर्थान्वयिनोः सप्तम्यन्तयोः षष्ठ्यन्तयोर्वा आद्युदात्तत्वेनान्वयो,

---

(१) मु. पु. क. इण् न स्यादिति

न तु विभक्तिभेद इति परिहरति—**उच्यत इति**। तत्र प्रत्ययेऽपि सप्तम्यन्तत्वं तावदाह—**प्रत्ययस्येति**। **विषयः;** आधारः। विभक्त्यैक्येऽपि आधारत्व-परत्वरूपार्थभेदान्न द्वन्द्वो युक्तः; अत आह—**यद्वेति**। सम्बन्धसामान्यषष्ठीत्युभय-विशेषसङ्ग्रहः, नापि विभक्त्यर्थभेद इति भावः। **भिन्नविभक्तित्वम्;** भिन्न-विभक्त्यर्थत्वम्। स्वरस्यान्यथासिद्धिं शङ्कते—**ऋदोरबिति**। **अकारेति;** तथा च 'औपगव' इत्यादौ उदात्तत्वसिद्धिरिति भावः। **इकारेति**: "उपसर्गे घोः कि" "सनाशंसभिक्ष उः"। ननु सामान्येन ज्ञापकत्वादिकारादेरपि स्यात् अतो ज्ञापकत्वमेव नास्तीत्याह—**विशेषणार्थं वेति**। भाष्ये **अहिचुम्बकायनिः**; प्राचामवृद्धात् फिन्। **आग्निवेश्यः,** "गर्गादिभ्यो यञ्"। गर्गशब्द-स्यानेकाच्त्वेनादित्वसंभवादनुदाहरणत्वं[1] परिहरति—**अत्रेति**। [2]**स्वरेति;** न पदान्तेतिसूत्रेण। नन्वजपेक्षया आदित्वाभावेऽपि व्यञ्जनापेक्षया तत् स्यात्; अत आह—**स्वरविधाविति**। नन्वनेकाचः फिन् नास्ति। प्रत्ययान्तानां गुरुमतां [3]वाप्रत्ययान्तानामकारप्रत्ययविधानात्, चिरिजिर्यादिभ्योऽनभिधानात्, जागर्तेः भिदादित्वे-नाङ्विधानात्, क्तिनो नित्करणसामर्थ्याद् एकाच आदित्वाभावेऽपि आद्युदात्तत्वं स्यादित्याशङ्क्यान्यथासिद्धिमाह—**क्तिन इति**। तादाविति तुवर्जिते निति कृत्यनन्तरो गतिः प्रकृतिस्वरः स्यात् [4]प्रकृतिरित्यादौ। ननु सौवर्य इति वचनात् नित्कृदन्तस्याद्यु-दात्तत्वविधानात् कृतिरित्यादावपि मुख्यादेरेव स्वरः सिध्यति; अत आह—**सौवर्य इति**। स्वरशब्दस्तद्विधिपरः स्वरविधिषु भवा इत्यर्थेऽणि द्वारादित्वादैच्। ननु "नेटि" "इट ईटि" इति ज्ञापकात् सिपोऽपि इड् भविष्यति; अत आह—**नेडिति**। अत एव भाष्यकृता सिबुदाहृतः। सामान्यज्ञापकत्वे तु नेदं प्रयोजन-मिति भावः। **स्वस्य चेति;** "येन विधिस्तदन्तस्य" इत्यत्र स्वं रूपमित्यतः स्वमित्यनुवर्तनात् स्वस्य चेत्यङ्गीक्रियते। तत्रैव यस्मिन्निति वार्तिकम्। तत्रापि स्वस्येत्यनुवर्तने स्वादेः स्वस्य च कार्यं स्यादेवेति एतन्न प्रयोजनमित्यर्थः। ननु वार्तिक-कृता "आडजादीनाम्" इत्यस्य प्रत्याख्यातत्वान्नेदं प्रयोजनम्; अत आह—**सूत्रेति**।

---

(१) ख. अनुदात्तत्वं (२) क. नास्तीति
(३) ख. चा (४) ख. प्रकर्तु प्रकृतिरित्यादौ

भा :—अथ अन्तवत्त्वे कानि प्रयोजनानि ?

॥ वा ॥ अन्तवद्द्विवचनान्तप्रगृह्यत्वे ॥

भा :—अन्तवद्द्विवचनान्तप्रगृह्यत्वे प्रयोजनम्। "ईदूदेद्द्विवचनं प्रगृह्यम्" इहैव स्यात् 'पचेते इति, पचेथे इति;' 'खट्वे इति, माले इति' इत्यत्र न स्यात्।

॥ वा ॥ मिदचोऽन्त्यात्परः ॥

भा :—मिदचोऽन्त्यात्परः प्रयोजनम्। "नपुंसकस्य झलचः" इहैव स्यात् 'कुण्डानि, वनानि'। 'तानि, यानि' इत्यत्र न स्यात्।

॥ वा ॥ अचोऽन्त्यादि टि ॥

भा :—अचोऽन्त्यादि टि प्रयोजनम्। "टित आत्मनेपदानां टेरे" इहैव स्यात् 'कुर्वाते, कुर्वाथे'; 'कुरुते, कुर्वे' इत्यत्र न स्यात्।

॥ वा ॥ अलोऽन्त्यस्य ॥

भा :—अलोऽन्त्यस्य प्रयोजनम्। "अतो दीर्घो यञि" "सुपि च" इहैव स्यात् 'पटाभ्याम्, घटाभ्याम्'। 'आभ्याम्' इत्यत्र न स्यात्।

॥ वा ॥ येन विधिस्तदन्तत्वे ॥

भा :—येन विधिस्तदन्तत्वे प्रयोजनम्। "अचो यत्" इहैव स्यात् 'चेयम्, जेयम्'; 'एयम्, अध्येयम्' इत्यत्र न स्यात्। आद्यन्तवदेकस्मिन् कार्यं भवति इति अत्रापि सिद्धं भवति ॥ आद्यन्त ॥

प्र :—**अन्तवदिति**; 'येन विधिस्तदन्तत्वे' इत्यनेनैव गतार्थे प्रपञ्चार्थोऽयमुपन्यासः। **कुरुत इति**; अर्थवता व्यपदेशिवद्भावात्तशब्दाकारस्यानर्थकत्वाद् इह प्रयोजनत्वेनोपन्यासः। **आभ्यामिति**; अत्र द्वे अन्तवत्वे उपयुज्येते। अका-

रान्तस्याङ्गस्य अलोऽन्त्यस्य दीर्घत्वं भवतीति पृथक् प्रयोजनत्वेनोपन्यासः। **एयमिति ;** ईङो रूपम्। इणस्तु इत्यमिति भवति।

उ :—ननु "येन विधिस्तदन्तस्य" इति वक्ष्यमाणेनैव खट्वे इत्यादि सिद्ध्यति येन विधिरित्यनेनैवात्र तदन्तविध्यङ्गीकारात्। तथा च द्विवचनप्रगृह्यत्व इति पृथक् न वक्तव्यम्; अत आह—**येनेति। अयम्**; द्विवचनप्रगृह्यत्व इत्ययम्। **अर्थवत इति**; तत्रार्थस्य त्यागोपादानाभ्यां भेदः सुकर इत्यर्थः। नन्वाभ्यामित्यत्र "येन विधिस्तदन्तस्य" इत्येव सिद्धे पृथगुपन्यासो व्यर्थः; अत आह—**अत्र द्वे इति ;** अलोऽन्त्यत्वार्थमुपन्यास इत्यर्थः। अत एव भाष्ये अलोऽन्त्यस्य प्रयोजनमित्युक्तम्। **ईङिति ;** ईङ् गताविति दिवादिः। **इत्यमिति ;** एतिस्तुशासित्यनेन क्यब्विधानादित्यर्थः।

## सू.—तरप्तमपौ घः ॥ १। १। २२ ॥

प्र :—आतिशायनिकप्रत्ययप्रकरण एव 'तादी घः, पितौ घः' इति वा कर्तव्ये[1] प्रकरणोत्कर्षेण संज्ञाकरणं स्वार्थेऽपि तरबस्तीति सूचनार्थम्। तेन अल्पाच्तरमिति[2] सिद्धं भवतीत्याहुः।

उ :—**तादीति ;** तथा च लाघवमिति भावः। **प्रकरणेति ;** आतिशायनिकप्रकरणत्यागेनेत्यर्थः। **स्वार्थेऽपीति ;** अत्र संज्ञाकरणम् अनातिशायनिकस्यापि यथा स्यादित्येवमर्थम्। स चार्थविशेषानिर्देशाद् अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति इति स्वार्थिकः। अत्र "द्विवचनविभज्योपपदे तरबीयसुनौ" इति योगापेक्षं ज्ञापकमिति स्वार्थेऽपि ईयसुनस्ति। तथा च 'महीयांसं, महान्तं, गरीयांसं, गुरुम्' इत्यादि सङ्गच्छत इत्याहुः। स्वार्थिकस्य सद्भावे ज्ञापनमात्रं तरसंज्ञाप्रयोजनम्, न त्वन्यत्। केचित्तु उच्चैस्तरामित्यत्र आम् सिद्धिः प्रयोजनमित्याहुः। तच्चिन्त्यम्। तत्र आतिशायनिकस्यैव तरपः "किमेत्तिङव्यय" इत्याम्सम्भवात्।

---

(१) क. वक्तव्ये. (२) क. इत्यादि.

॥ वा ॥ घसंज्ञायां नदीतरे प्रतिषेधः ॥

भा :—घसंज्ञायां नदीतरे प्रतिषेधो वक्तव्यः। नद्यास्तरो नदीतरः।

॥ वा ॥ घसंज्ञायां नदीतरेऽप्रतिषेधः ॥

भा :—घसंज्ञायां नदीतरेऽप्रतिषेधः। अनर्थकः प्रतिषेधः अप्रतिषेधः। घसंज्ञा कस्मान्न भवति।

॥ वा ॥ तरब्ग्रहणं ह्यौपदेशिकम् ॥

भा :—औपदेशिकस्य तरपो ग्रहणम्। न चैष उपदेशे तरप्शब्दः। किं वक्तव्यमेतत्? न हि। कथमनुच्यमानं गंस्यते। इह हि व्याकरणे सर्वेष्वेव सानुबन्धकग्रहणेषु[1] रूपमाश्रीयते 'यत्रास्यैतद्रूपम्' इति। रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगम्। तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोगः उपास्यते। कोऽसौ? उपदेशो नाम। न चैष उपदेशे तरप्शब्दः। अथवा अस्त्वस्य घसंज्ञा' को दोषः? घादिषु नद्या ह्रस्वो भवतीति ह्रस्वत्वं प्रसज्येत। समानाधिकरणेषु घादिष्वित्येवं स्यात्। [2]यदा तर्हि सैव नदी, स एव तरः, तदा प्राप्नोति। स्त्रीलिङ्गेषु घादिष्वित्येवं तत्। अवश्यं चैतदेवं विज्ञेयम्। समानाधिकरणेषु घादिष्वित्युच्यमाने इह प्रसज्येत 'महिषी रूपमिव ब्राह्मणी रूपमिव' इति ॥ तरप्तमपौ ॥

प्र :—**नदीतर इति ;** तरतेः "ऋदोरप्" इत्यप्। सर्वत्र च अनुबन्धाः स्मर्यमाणा एव कार्यं प्रति हेतुत्वं लभन्त इति घसंज्ञाप्राप्तिः। साहचर्यं चेह व्यवस्थाहेतुः सर्वत्र नाश्रीयते। तथा हि "द्विस्त्रिचतुरिति कृत्वोऽर्थे" इति कृत्वोऽर्थ-

(१) क. सानुबन्धकेषु (२) क. तत्.

ग्रहणं चतुश्शब्दविशेषणार्थं कृतम्; अन्यथा द्विस्त्रिश्शब्दसाहचर्याच्चतुश्शब्दोऽपि कृत्वोऽर्थ एव ग्रहीष्यत इति किं कृत्वोऽर्थग्रहणेन। **अप्रतिषेध इति**; न प्रतिषेध इति प्रतिषेधनक्रिया नञा निषिध्यते। भाष्यकारस्तु वस्त्वर्थं व्याचष्टे 'अनर्थकः प्रतिषेधः' इति। **औपदेशिकमिति**; उपदेशः प्रयोजनमस्य, तत्र वा भवमौपदेशिकम्। **यत्रास्येति**; अनुबन्धयुक्तमित्यर्थः। **न चैष इति**; कास्पनिकमस्य तरप्त्वम्, न तु साक्षान्निर्दिष्टम्। **समानाधिकरणेष्विति**; आतिशायनिकश्च स्वार्थिकत्वात्समानाधिकरणः। **यदा तर्हीति**; ननु तीर्णिरिति भवितव्यम्। एवं तर्हि तीर्यत इति तर इति सामान्येन संस्क्रियते, पश्चान्नद्या विशेष्यत इति न दोषः। **स्त्रीलिङ्गेष्विति**; स्वार्थिकश्च प्रकृतिलिङ्गानुविधानात् स्त्रीलिङ्गः। **महिषी रूपमिवेति**; इवशब्दो भिन्नक्रमः। तेनायमर्थः महिषी इवेयमाकृतिरिति। तत्र "सुप् सुपा" इति समासे कृते ह्रस्वत्वं स्यात्।

उ:—पित्वं संपादयति—**तरतेरिति**। [1]**सर्वत्र**; ब्राह्मणीतरेत्यादावपि। ननु तमप्साहचार्यात् तरबपि तद्धित एव गृह्यत इति नदीतर इत्यत्र धातुप्रत्ययसमुदाये नातिप्रसङ्गः; अत आह—**साहचर्यमिति**; साहचर्यं न सर्वत्र व्यवस्थाहेतुरिति इहापि [2]नाश्रीयत इति नकारावृत्त्या योज्यम्। वस्तुतः इह शास्त्रे सर्वत्र नाश्रीयत इत्यन्वयः। तदेवोपपादयति—[3]**तथा हीति**। **द्विरिति**; कृत्वोऽर्थानामेषां विसर्जनीयस्य षो वा स्यात् कुप्वोः परतः 'द्विष्करोति, द्विः करोति' इत्यादि। **चतुश्शब्द इति**; अन्यथा चतुष्कपालमित्यत्रापि विकल्पः स्यात्। **अन्यथा**; साहचर्यस्य नियामकत्वे। भाष्ये **नदीतर इति**; घसंज्ञायां घरूपेति ह्रस्वः स्यादित्यर्थः। अनर्थक इति भाष्ये दर्शनात् मध्यमपदलोपी तत्पुरुष इति भ्रमं निरस्यति—**नेति**। प्रतिषेधार्थोऽकारः पृथक्पदमित्यर्थः। **वस्त्वर्थम्**; तात्पर्यार्थम्। तरब्ग्रहणं ह्यौपदेशिकमित्यत्र कर्मणि ल्युडन्तस्य ग्रहणशब्दस्य तरब्विशेषणत्वमङ्गीकृत्य तस्य औपदेशिकत्वं द्वेधा आह—**उपदेश इति**; उपदेशः विधिः स्वरूपज्ञानं

---

(१) ख. संज्ञाप्राप्तिकाले तरप्रूपत्वाभावात् कथं प्राप्तिस्तत्राह—सर्वत्र.
(२) ख. नाश्रितः. (३) ख. तथा चेति.

वा। द्विवचनेत्यादिसूत्रस्य एतत् प्रयोजनं न तरपः। न चैष उपदेशे तरप्शब्द इति भाष्यासामञ्जस्यं च; अत आह—**तत्र चेति**। अत्र उपदेशशब्दः करणे घञन्तः सूत्रपरः। पूर्वत्र 'प्रयोजनम्' इति ठञ्। परत्र अध्यात्मादेराकृतिगणात्वाठ्ठञ्। नदीतरं निराह—**अनुबन्धेति**। **काल्पनिकमिति**; 'ऋदोरप्' इति सूत्रपर्यालोचनेन अवगतम्। आनुमानिकमित्यर्थः। घस्यार्थान्तरयुक्तस्य कथं प्रकृतिसामानाधिकरण्यम्; अत आह—**स्वार्थिकत्वादिति**; प्रकृत्यभिहितस्यैव द्योतकत्वात् प्रकृतिसमानविषयत्वरूपसामानाधिकरण्यमस्तीत्यर्थः। **ननु तीर्णिरिति**; स्त्रियां क्तिन्, 'ऋत इद्धातोः', रपरत्वम्, 'हलि च' इति दीर्घः, 'ॠकारल्वादिभ्यः क्तिन् निष्ठावत्' इति तस्य नः, 'रषाभ्याम्' इति णः। **सामान्येनेति**; अनिर्धारितेन कर्मविशेषेणेत्यर्थः। तथा च पुंस्त्वोपपत्तिः। घादेः स्त्रीलिङ्गत्वमुपपादयति—**स्वार्थिक इति**। ननु महिषी इति भिन्नपदं चेदाकृतिवचनरूपशब्दस्य कस्याकृतिरिति साकाङ्क्षता स्यात्। षष्ठीसामासे तु रूपशब्दस्य वैयधिकरण्यमिति नास्ति ह्रस्वप्राप्तिः; अत आह—**इवेति**। यद्यप्यत्रापि कस्याकृतिरित्याकाङ्क्षा तथाप्युपमेयस्य प्राधान्यात् सापेक्षस्यापि समासोपपत्तिः। यथाश्रुते रूपस्योपमानत्वेन गुणत्वान्न स्यात् समास इति विशेषः। नन्वाकृतिशब्दस्य श्यामादिवदुपमानोपमेयसाधारणधर्मवचनत्वाभावाद् "उपमानानि सामान्यवचनैः" इत्यनेन न समासः; अत आह—**तत्रेति**। **ह्रस्वत्वमिति**; महीषीशब्दस्योपमेयवृत्त्या सामानाधिकरण्यमस्तीति भावः। तत्र घादिसूत्रे रूपग्रहणं प्रत्ययस्वतन्त्रशब्दसाधारणमित्येतद् भाष्यादवगम्यते। एवं कल्पग्रहणमपि। घमात्रमेव प्रत्ययपरमिति विज्ञेयम्।

## सू.— बहुगणवतुडति सङ्ख्या ॥ १। १। २२ ॥

### ॥ वा ॥ सङ्ख्यासंज्ञायां सङ्ख्याग्रहणं [(१)सङ्ख्यासम्प्रत्ययार्थम्] ॥

**भा :—सङ्ख्यासंज्ञायां सङ्ख्याग्रहणं कर्तव्यम्। 'बहुगणवतुडतयः सङ्ख्यासंज्ञा भवन्ति, सङ्ख्या च सङ्ख्यासंज्ञा भवति'**

(१) क. कोष्ठकान्तर्गतो भागः नोपलभ्यते।

**इति वक्तव्यम्। किं प्रयोजनम्? सङ्ख्यासंप्रत्यार्थम्। एकादिकायाः सङ्ख्यायाः सङ्ख्याप्रदेशेषु संङ्ख्येत्येष संप्रत्ययो यथा स्यात्। ननु च एकादिका सङ्ख्या लोके सङ्ख्येति प्रतीता। तेनास्याः सङ्ख्याप्रदेशेषु सङ्ख्यासंप्रत्ययो भविष्यति। एवमपि कर्तव्यम्। किं प्रयोजनम्?**

**॥ वा ॥ इतरथा ह्यसंप्रत्ययोऽकृत्रिमत्वाद् यथा लोके ॥**

**भा :—अक्रियमाणे हि सङ्ख्याग्रहणे एकादिकायाः सङ्ख्यायाः सङ्ख्येत्येष संप्रत्ययो न स्यात्। किं कारणम्? अकृत्रिमत्वात्। बह्वादीनां कृत्रिमा संज्ञा। कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययो भवति यथा लोके। तद्यथा लोके 'गोपालकमानय, कटजकमानय' इति यस्यैषा संज्ञा भवति स आनीयते; न यो गाः पालयति, यो वा कटे जातः।**

प्र :—**सङ्ख्यासंप्रत्ययार्थमिति**; सङ्ख्याया एकादिकाया. सङ्ख्याप्रदेशेषु संप्रत्ययार्थमित्यर्थः। **ननु चेति**; यथा पशुरपत्यं देवतेति लौकिकोऽर्थो गृह्यते तथा एकादिकापि सङ्ख्या ग्रहीष्यत इत्यर्थः। **कृत्रिमाकृत्रिमयोरिति;** न्यायोऽयम्। तथाहि सर्वार्थाभिधानशक्तियुक्तः शब्दो यदा विशिष्टेऽर्थे संव्यवहाराय नियम्यते तदा तत्रैव प्रतीतिं जनयति नान्यत्र।

उ :—यथा संज्ञासंप्रत्ययार्थ इत्यत्र वृद्ध्यादीनां संज्ञात्वेन संप्रत्ययः तथा इहाप्येकादीनां संख्यात्वेन संप्रत्यय इत्यर्थभ्रमं वारयति—**सङ्ख्याया इति।** स्वरूपसंप्रत्ययोऽत्र विवक्षित इत्यर्थः। भाष्ये **सङ्ख्यासंप्रत्ययः;** सङ्ख्याशब्देन एकादीनां संप्रत्यय इत्यर्थः। संज्ञां विनापि लौकिकग्रहणे दृष्टान्तमाह—**यथेति।** "हरतेर्दृतिनाथयोः पशौ", "तस्यापत्यम्", "सास्य देवता"। न्यायस्य [1]लोकसिद्धत्वमुपपादयति—**तथा हीति। सर्वेति;** वृद्धिसूत्रे प्रदीपव्याख्यानावसरे प्रतिपादितमेतत्।

---

(१) ख. लोकप्रसिद्धिम्.

भा :—यदि तर्हि कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययो भवति. "नदीपौर्णमास्याग्रहायणीभ्यः" इत्यत्रापि प्रसज्येत। पौर्णमास्याग्रहायणीग्रहणसामर्थ्यान्न भविष्यति। तद्विशेषेभ्यस्तर्हि प्राप्नोति 'गङ्गा, यमुना' इति। एवं तर्हि आचार्यप्रवृत्तिर्ज्ञापयति 'न तद्विशेषेभ्यो भवति' इति, यदयं विपाट्छब्दं शरत्प्रभृतिषु पठति। इह तर्हि प्राप्नोति "नदीभिश्च" इति। बहुवचननिर्देशान्न भविष्यति। स्वरूपविधिस्तर्हि प्राप्नोति। बहुवचननिर्देशादेव न भविष्यति। एवं च न चेदमकृतं भवति कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययः इति। न च कश्चिद् दोषो भवति।

प्र :—**नदीपौर्णमासीति;** "यू स्त्र्याख्यौ नदी" इति संज्ञाविधानात् संज्ञिनो ग्रहणं प्राप्तम्, न तु स्वरूपस्य 'अशब्दसं'ज्ञेति निषेधात्। **पौर्णमासीति;** नियमार्थं पौर्णमास्याग्रहायणीग्रहणमीकारान्तानां स्यादिति चेद्, एवमपि 'ऊपौर्णमास्याग्रहायणीभ्यः' इति वक्तव्यं स्यात्। ऊकारग्रहणेन च नदीसंज्ञकमेवोकारान्तं पौर्णमास्याग्रहायणीशब्दसाहचर्याद् ग्रहीष्यते। **तद्विशेषेभ्य इति;** गङ्गादिभ्यः। **यदयमिति;** नित्यार्थः पाठः स्यादिति चेद् व्यवस्थितविभाषया विपाट्शब्दस्य [1]नित्यष्टज् भविष्यतीत्यदोषः। **बहुवचनेति;** अन्यथा "आण् नद्याः" इत्यादौ यथैकवचनेन निर्देशस्तथेहापि कर्तव्यः स्यात्। **न चेदमकृतमिति;** [2]नाश्रितमित्यर्थः।

उ :—**संज्ञिनः;** ईदूदन्तस्त्रीलिङ्गशब्दमात्रस्य। **स्वरूपस्य;** नदीशब्दस्य। तत्र हेतुः—**अशब्देति**। **एवमपीति;** लाघवान्नियमापेक्षया विधेर्ज्यायस्त्वाच्चेत्यर्थः। ननु ऊत्पौर्णमासीत्युक्ते पुलिङ्गेभ्योऽपि खलप्वादिभ्यष्टच् स्यात्; अत आह—**ऊकारेति**। साहचर्यं क्वचिल्लक्ष्यानुसारान्नियामकमङ्गीक्रियत एवेति भावः। शास्त्रे यश्शब्दः संज्ञात्वेन दृष्टः तत्राशब्दसंज्ञेति स्वरूपग्रहणनिषेधः, न तु यत्र शब्दसंज्ञा विवक्षिता तत्रेति मन्वानस्य तद्विशेषेभ्य इति भाष्ये चोद्यम्। तद्विशेषं दर्शयति—

(१) क. नित्यं (२) मु. पु. अनाश्रितमिति

**गङ्गेति ।** **नित्यार्थः ;** विपाट्छब्दपाठः । नदीपौर्णमासीत्यत्र अन्यतरस्यामित्यनुवर्तत इति भावः । **अन्यथा ;** कृत्रिमग्रहणे । एकवचनान्तनदीशब्दस्यैव संज्ञात्वात् प्रदेशेषु संज्ञाभिप्राये तस्यैव निर्देश उचित इति भावः । यदि विपाट्छब्दो ज्ञापकः तर्ह्यशब्दसंज्ञेत्यत्र शब्दस्योपलक्षणत्वे प्रयोजनाभावाद्विशेषणत्वमेवेति मन्यमानस्य चोद्यम् । भाष्ये **स्वरूपेति ।** स्वरूपस्यैकत्वात् तस्मिन्विवक्षिते एकवचनेनैव निर्देशः [1]स्यादित्युत्तरेऽभिप्रायः । न्यायस्य स्वेन कृतत्वाभावादाह—**नाश्रितमिति ।**

**॥ वा ॥ उत्तरार्थं च ॥**

**भा :—उत्तरार्थं च सङ्ख्याग्रहणं कर्तव्यम् ' ष्णान्ता षट् ' । षकारनकारान्तायाः सङ्ख्यायाः षट्संज्ञा यथा स्यात्; इह मा भूत् पामानो विप्रुष इति । इहार्थेन तावन्नार्थः सङ्ख्याग्रहणेन । ननु चोक्तम् ' इतरथा ह्यसंप्रत्ययोऽकृत्रिमत्वात् यथा लोके ' इति । नैष दोषः । अर्थात्प्रकरणाद्वा लोके कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययो भवति । अर्थो वा अस्य एवंसंज्ञकेन भवति । प्रकृतं वा तत्र भवति ' इदम् एवंसंज्ञकेन कर्तव्यम् ' इति । आतश्चार्थात् प्रकरणाद्वा । अङ्ग हि भवान् ग्राम्यं पांसुलपादमप्रकरणज्ञमागतं ब्रवीतु ' गोपालकमानय, कटजकमानय ' इति । उभयगतिस्तस्य भवति । साधीयो वा यष्टिहस्तं गमिष्यति । यथैव तर्ह्यर्थात् प्रकरणाद्वा लोके कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययो भवति एवमिहापि प्राप्नोति ? जानाति ह्यसौ बह्वादीनामियं संज्ञा कृतेति । न यथा लोके तथा व्याकरणे । उभयगतिः पुनरिह भवति ।**

प्र :—**उत्तरार्थं चेति ;** अयं हि सूत्रोपात्तः सङ्ख्याशब्दः स्वरूपपदार्थकः । उत्तरत्र संज्ञिनिर्देशेन प्रयोजनम् । **इहार्थेनेति ;** इह अर्थो यस्येति सामान्यविशेष-

(१) क. स्यादित्यभिप्रायः

भावान्न पौनरुक्त्यम्। **आतश्चेति;** इतश्चेत्यर्थः। **अर्थः;** सामर्थ्यम्। यथा गोपालकमानय माणवकमध्यापयिष्यतीति यष्टिहस्तस्याध्यापनासंभवात् संज्ञिनो ग्रहणम्। **प्रकरणम्;** प्रस्तावः। यथा भोजनप्रकरणे सैन्धवमानयेति लवणे प्रतीतिः, गमनप्रकरणेत्वश्वे। **ग्राम्यमिति;** ऊहितुमसमर्थम्। **पांसुलपादम्;** अचिरोषितम्। अत एवाप्रकरणज्ञम्। **उभयगतिरिति;** किं संज्ञेयं यस्य कस्यचिन्निर्दिष्टा स्याद् उत यष्टिहस्तोऽस्य विवक्षितः स्यादिति सन्देहवान् भवतीत्यर्थः। **साधीयो वेति;** यो मम प्रसिद्धः सोऽनेन चोदितः, न च ममैवंसंज्ञकः प्रसिद्ध इत्येवं मन्यते। लोके च गोपालकशब्दः संज्ञिनि नियम्यमानः संज्ञ्यन्तरं निवर्तयति। क्रियानिमित्तं त्वर्थं न निरस्यति। तुल्यजातीयविषय एव हि नियमो भवति। **एवमिहापीति;** बह्वादय एवात्र सङ्ख्यात्वेन प्रकृता इति भावः। **न यथा लोक इति;** सङ्ख्याशब्दो हि बह्वादिप्रतिपादनाय संज्ञात्वेन विनियुक्तः, न त्वेकादिसङ्ख्यानिरासाय अधिकार्थप्रतिपत्त्यर्थत्वादिह संज्ञाकरणस्य।

उ:—ननु सौत्रसङ्ख्यैवोत्तरसूत्रेऽनुवर्तताम्; अत आह—**अयमिति। स्वरूपेति;** यद्यपि बह्वादिपरस्तत्सामानाधिकरण्यात् तथापि ततः प्राक् स्वरूपपदार्थक इति भावः। **उत्तरत्रेति;** स्वरूपपरसङ्ख्याशब्देन स कर्तुं न शक्यत इत्यर्थः। अर्थ इति सामान्योक्तिः। इहार्थो यस्येति विशेष इत्यर्थः। भाष्ये लोके कृत्रिमग्रहणे अर्थप्रकरणे हेतुः, न तु कृत्रिमत्वमित्यन्वयेनोक्त्वा व्यतिरेकेण वक्तुम् आतश्चेत्युक्तम्। तस्यार्थमाह—**इतश्चेति।** विशेषणानामपुनरुक्तिमाह—**ऊहितुमिति। अचिरेति;** चिरोषितत्वे प्रकरणज्ञानं भवेत्। उभयत्र गतिः ज्ञानमित्यभिप्रेत्याह—**किमिति। सन्देहेति;** एकस्मिन्नपि सोमादिशब्दे रूढियोगयोर्दर्शनादिति भावः। भाष्ये **साधीय इति;** क्रियाविशेषणम्। सम्यगित्यर्थः। विपरीतनिश्चये हेतुमाह—**यो ममेति।** ननु संज्ञाकरणस्य नियमार्थत्वाद्यौगिकार्थप्रतीतिः श्रोतुर्भ्रम एव; अत आह—**लोके चेति। तुल्यजातीयेति;** यथा पञ्चनखभक्ष्यनियमे मांसान्तरमेव निवर्त्यते न त्वोदनभक्षणम् तथेहापीत्यर्थः। प्रकृताः बुद्धिस्थाः। ननु दृष्टान्ते सामर्थ्यादिना कृत्रिमग्रहणम्; विषयभेदेन च तदभावे अकृत्रिममेवेह कथ

न गृह्येत ; अत आह—**सङ्ख्याशब्दो हीति ।** यद्यपि शक्त्यवच्छेदेन संज्ञिनि विनियोग उक्तः संज्ञाशब्देषु ; तथापि शब्दार्थसंबन्धस्य कृत्रिमत्वदर्शने विधेयसंभवान्न-नियमार्थतेति भावः ।

**भा :—अन्यत्रापि, नावश्यमिहैव । तद्यथा "कर्तुरीप्सिततमं कर्म" इति कृत्रिमा कर्मसंज्ञा । कर्मप्रदेशेषु चोभयगतिर्भवति । "कर्मणि द्वितीया" इति कृत्रिमस्य ग्रहणम्, "कर्तरि कर्मव्यतिहारे" इत्यकृत्रिमस्य । तथा "साधकतमं करणम्" इति कृत्रिमा करणसंज्ञा । करणप्रदेशेषु चोभयगतिर्भवति । "कर्तृकरणयोस्तृतीया" इति कृत्रिमस्य ग्रहणम्, "शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे" इत्यत्राकृत्रिमस्य । तथा "आधारोऽधिकरणम्" इति कृत्रिमा अधिकरणसंज्ञा । अधिकरणप्रदेशेषु चोभयगतिर्भवति । "सप्तम्यधिकरणे च" इति कृत्रिमस्य ग्रहणम् । "विप्रतिषिद्धं चानधिकरणवाची" इत्यत्राकृत्रिमस्य ।**

प्र :—**कर्मणि द्वितीयेति** ; ङ्याप्प्रातिपदिकादनभिहिते कर्मणि सङ्ख्यायां द्वितीया विधीयते । न च क्रियायाः सङ्ख्या संभवतीति सामर्थ्यात् कारकस्य ग्रहणम् । "कर्तरि कर्मव्यतिहारे" इत्यत्र तु धातोः साक्षात् क्रियायां वृत्त्या क्रियाया एव ग्रहणम् । **कण्वमेघेभ्यः करणे इति ;** तव्यादिप्रत्ययोत्पत्त्यर्थं धातुसंज्ञा क्रियते । क्रियावाचिनश्च तव्यादयः साधने उत्पद्यन्त इति सामर्थ्यात् क्रियाग्रहणम् । **विप्रतिषिद्धमिति** ; द्वन्द्वावयवानां शक्त्यनभिधायित्वादधिकरणं द्रव्यं गृह्यते ।

उ :—भाष्योदाहरणेषु व्यवस्थितार्थग्रहणे हेतुनाह—**ङ्याप्प्रातिपदिकादित्यादि ।** कर्मणि या सङ्ख्या तस्याम् आख्याताभिहितक्रियाया असत्त्वभूतत्वात् सङ्ख्या न संभवतीत्याह—**न चेति । कारकस्य ;** शक्तिमतो द्रव्यस्य । **धातोः ;** आत्मनेपदेनाक्षिप्तस्य धातोः, पदान्तरनिरपेक्षस्य क्रियायां वृत्तिरित्यर्थः । कारकग्रहणे प्रागुक्त एव हेतुरिति इतरत्र हेतुमाह—**तव्यादीति ।** धातुसंज्ञा सनाद्यन्ता इत्यनेन । यतः साधने कारके तव्यदादयो विधीयन्ते अतः कारकापेक्षितक्रियावाचिन उत्पद्यन्त इत्यन्वयः । **द्वन्द्वेति ;** प्रथमान्तानां द्वन्द्वः ।

तत्र न कारकप्रसक्तिः। सप्तम्यन्तानां द्वन्द्वेऽपि प्रकृतिप्रत्ययसमुदायस्य शक्तिमात्राभिधायित्वं न संभवतीति अधिकरणं द्रव्यं गृह्यत इत्यर्थः।

**भा :—अथवा नेदं संज्ञाकरणम्, तद्वदतिदेशोऽयम् 'बहुगणवतुडतयः सङ्ख्यावद् भवन्ति' इति। स तर्हि वतिनिर्देशः कर्तव्यः। न कर्तव्यः। न ह्यन्तरेण वतिमतिदेशो गम्यते। तद्यथा 'एष ब्रह्मदत्तः' अब्रह्मदत्तं ब्रह्मदत्त इत्याह, ते मन्यामहे 'ब्रह्मदत्तवदयं भवति' इति। एवमिहाप्यसंख्यां संख्येत्याह, संख्यावदिति गम्यते। अथवा आचार्यप्रवृत्तिर्ज्ञापयति 'भवत्येकादिकायाः संख्यायाः संख्याप्रदेशेषु संप्रत्ययः' इति। यदयं 'संख्याया अतिशदन्तायाः कन्' इति तिशदन्तायाः प्रतिषेधं शास्ति। कथं कृत्वा ज्ञापकम्? न हि कृत्रिमा त्यन्ता शदन्ता वा संख्याऽस्ति। ननु चेयमस्ति डतिः। यत्तर्हि शदन्तायाः प्रतिषेधं शास्ति। यच्चापि त्यन्तायाः प्रतिषेधं शास्ति। ननु चोक्तं 'डत्यर्थमेतत् स्यात्' इति। अर्थवद्ग्रहणे नानर्थकस्य' इत्यर्थवतस्तिशब्दस्य ग्रहणम्। न च डतेस्तिशब्दोऽर्थवान्। अथवा महतीयं संज्ञा क्रियते। संज्ञा च नाम यतो न लघीयः। कुत एतत्? लघ्वर्थं हि संज्ञाकरणम्। तत्र महत्याः संज्ञायाः करण एतत् प्रयोजनम् 'अन्वर्थसंज्ञा यथा विज्ञायेत, संख्यायते अनया संख्येति। एकादिकया चापि संख्यायते।**

प :—**तद्वदतिदेशोऽयमिति**। संख्याकार्यातिदेशोऽयमित्यर्थः। यदि हि संज्ञा स्यात्, टिघुभादिसंज्ञावदेकाक्षरा क्रियेत। तस्माल्लौकिकार्थाभिधायी संख्याशब्द उपादीयमानोऽतिदेशार्थत्वमस्य बोधयति। **अथवेति**। गुरुसंज्ञाकरणादेकादयः संख्याशब्देन प्रदेशेषु न त्यज्यन्त इति लिङ्गेनाप्यनुमीयत इत्यर्थः। **अर्थवत इति**। ननु उभयसंभव इयं परिभाषोपतिष्ठते; डत्यन्ता च कृत्रिमास्ति, डतेश्च तिशब्दोऽनर्थक एवेति तस्यैव निषेधः स्यादित्यज्ञापकस्त्यन्तायाः प्रतिषेधः। नैष दोषः। अतिशदन्ताया इत्युच्चारणकाल एवार्थवतस्तिशब्दस्य ग्रहणमिति प्रतीतिरिति ज्ञापकत्वमेव

नामेव संज्ञिनां भवतु संज्ञा यथा सर्वादीनामेव सर्वनामसंज्ञा, न त्वधिकानाम्। तेन बहुगणशब्दयोः सङ्घवैपुल्यवाचिनोः संज्ञा मा भूत्, एकादीनां तु कथं स्यात्। नैष दोषः। इहान्वर्थसंज्ञाकरणेन तावदनुरूपः संज्ञी सर्व आक्षिप्यते। तेनैकादीनां तावद् ग्रहणं भवति। पश्चाद् 'बहुगणवतुडति' इति भूर्यादिनिवृत्त्यर्थं नियमार्थं व्याख्यायते। अत एव सङ्घवैपुल्यवृत्त्योर्बहुगणशब्दयोः संज्ञा न भवति। तद्वदति-देशपक्षेऽपि परस्परसाहचर्यात् संख्यावाचिनोरेव भूर्यादिनिवृत्तये नियमायातिदेशः क्रियत इत्यतिप्रसङ्गो न भवति।

उ:—ननु संज्ञाकरणं विध्यर्थं सदधिकव्याप्त्यर्थमित्येतत् 'सिद्धे शब्दार्थसंबन्ध' इति सिद्धान्तविरुद्धम्। अतो भाष्ये—**अथवेति।** प्राधान्यात्कार्यातिदेश इत्याह—**सङ्ख्येति।** अतिदेशत्वे हेतुः—**यदिति।** यद्यपि "बहुषु बहुवचनम्" इति बहुशब्दः सङ्ख्यावाची तथापि सम्यक् ख्यायते परिच्छिद्यते येनेति सङ्ख्या। परिच्छेदस्य नियतविषयत्वं च सम्यक्त्वम्। तथा चानियतविषयपरिच्छेदहेतुत्वाद्बहुत्वादे-रसङ्ख्यात्वमभिप्रेत्य भाष्ये असङ्ख्यामित्युक्तम्। ननु कन्विधान एवेदं ज्ञापकं स्यात्; अत आह—**गुर्विति।** एकत्वादिवाचिशब्दसंज्ञाकरणादित्यर्थः। ज्ञापकत्वमाक्षि-पति—**नन्विति।** प्राप्तिपूर्वकत्वात्प्रतिषेधस्य प्राप्तिमाह—**त्यन्तेति।** कन्विधौ कृत्रिमसङ्ख्याया एव सङ्ख्याया इत्यनेन ग्रहणात् षष्ठ्यादेरग्रहणान्नोभयसंभव इत्यर्थः। **नैष दोष इति;** अतिशदन्ताया इति पर्युदासः सङ्ख्याविशेषणम्। विशेषण-बुद्धिपूर्वकत्वाद्विशिष्टबुद्धेः सङ्ख्यान्वयात् पूर्वमेव अतिशदन्ताया इत्यस्यार्थो ज्ञेयः। तत्रापि विशेषणत्वात् तिशतौ निरूपणीयौ। तदानीं कृत्रिमग्रहणप्रसङ्गाभावादुभयसंभवेन परि-भाषा प्रवर्तत एवेत्यर्थः। अन्वर्थत्वेऽप्येकादीनां संज्ञित्वं न लभ्यत इति शङ्कते—**नन्विति। तदर्थानुगतानां;** सङ्ख्याशब्दावयवार्थयुक्तानाम्। **सर्वादीना-मेव;** न तु कृत्स्नादीनाम्। अन्वर्थत्वस्य प्रयोजनमाह—**तेनेति।** योगविभाग-मभिप्रेत्य परिहरति—**नैष इति।** आर्थक्रमेण सङ्ख्येति पूर्वो योगः। अत्रावय-वार्थयोग्या एकादयः संज्ञिन आक्षिप्यन्त इति तेषां सङ्ख्येति संज्ञा विधीयते। द्वितीयो योगः पूर्वेणैव संज्ञासिद्धेः नियमार्थ इत्याह—**पश्चादिति।** भूर्यादीत्यादिशब्दः प्रकारे। अनियतसङ्ख्यावाचित्वं चात्र प्रकारः। अनियतसङ्ख्यावाचिनां चेत्

सङ्ख्यासंज्ञा बह्वादिचतुष्टयस्यैवेत्यर्थः। **अत एव**; पूर्वसूत्रप्राप्तनियमादेव। नन्वतिदेशपक्षे सङ्घवैपुल्यवाचिनोरपि सङ्ख्याप्रदेशेषु ग्रहणं स्यात्; अत आह—**तद्वदिति**। अतिदेशपक्षेऽपि सङ्ख्याशब्दस्य लौकिकार्थत्वादेकादिवत्तयोरपि सङ्ख्यावाचिनोरतिदेशं विनापि ग्रहणं सिध्यति; तथापि भूर्यादिनिवृत्तये नियतानियतसङ्ख्यावाचित्वेन भेदं कल्पयित्वा अतिदेशः क्रियमाणो नियतार्थः संपद्यत इति समुदायार्थः। **परस्परेति**; शब्दस्वरूपे साहचर्याभावादर्थद्वारकं[1] तद् ग्राह्यम्। तच्च सङ्ख्यायामेव नार्थान्तर इत्यर्थः।

**भा:—उत्तरार्थेन चापि नार्थः सङ्ख्याग्रहणेन। इदं प्रकृतमुत्तरत्रानुवर्तिष्यते। इदं वै संज्ञार्थम्, उत्तरत्र च [2]संज्ञिविशेषणेनार्थः। न चान्यार्थं प्रकृतमन्यार्थं भवति। न खल्वपि अन्यत् प्रकृतमनुवर्तनादन्यद्भवति। न हि गोधा सर्पन्ती सर्पणादहिर्भवति। यत्तावदुच्यते न चान्यार्थं प्रकृतमन्यार्थं भवतीति। अन्यार्थमपि प्रकृतमन्यार्थं भवति। तद्यथा शाल्यर्थं कुल्याः प्रणीयन्ते ताभ्यश्च पानीयं पीयते, उपस्पृश्यते च, शालयश्च भाव्यन्ते। यदप्युच्यते 'न खल्वप्यन्यत् प्रकृतमनुवर्तनादन्यद्भवति', 'न हि गोधा सर्पन्ती सर्पणादहिर्भवति' इति। भवेद्, द्रव्येष्वेतदेवं स्यात्। शब्दस्तु खलु येन येन विशेषेणाभिसंबध्यते तस्य तस्य विशेषको भवति। अथवा सापेक्षोऽयं ([3]ष्णान्ता इति) निर्देशः क्रियते। न चान्यत् किञ्चिदपेक्ष्यमस्ति। ते सङ्ख्यामेवापेक्षिष्यामहे।**

प्र:—**संज्ञिविशेषणेनार्थ इति**; ष्णान्तेत्यनेन विशिष्टं संज्ञिनं प्रतिपादयितुमुपयोग इत्यर्थः। **न चान्यार्थमिति**; एकशब्दत्वदर्शन इति भावः। भवतु तर्हि प्रतियोगं शब्दभेद इत्याह—**न खल्वपीति**। यथा गोधा देशान्तरगमनमात्रेण गोधात्वं न जहाति एवं शब्दोऽपि रूपान्तरं न [4]गृह्णात्येवेत्यर्थः। **अन्यार्थ-**

(१) क. अर्थग्राहकं.

(२) अस्मन्मते संज्ञाविशेषणेनार्थ इति पाठः स्यादिति प्रतिभाति.

**मपीति ;** पदार्थानां शक्तिवैचित्र्यात् । **शब्दस्त्विति ;** स्वरितत्वाद्वाक्यान्तरे शब्दान्तरं वाक्यार्थानुग्राहिवस्तुप्रतिपादनयोग्यमनुमीयते । साहश्यात्तु तत्त्वाध्यवसाय इत्यर्थः । **सापेक्षोऽयमिति ;** स्त्रीलिङ्गेन निर्देशः कृतः । तत्र प्रकृतत्वादन्यपदार्थत्वेन सङ्ख्या स्वरितत्वेन विनाप्यपेक्ष्यत इत्यर्थः ।

उ :—भाष्ये **संज्ञार्थम् ;** बह्वादिषु समुदायशक्त्यवगमार्थम् । विशेषणेनेत्यस्य तात्पर्यमाह—**ष्णान्तेति ।** उपयोग इत्यर्थशब्दार्थकथनम् । भाष्ये संज्ञिविशेषणेनार्थ इत्यपि पाठः । तत्र ष्णान्तेत्यनेन संज्ञा विशेष्यते किं संज्ञिविशेषणेन (इति) ; अत आह—**ष्णान्तेति ।** संज्ञी विशेष्यते व्यावृत्ततया प्रतिपाद्यते येनानुवृत्तेन सङ्ख्याग्रहणेन तेनेति भाष्यार्थः । प्रदीपे तु वस्त्वर्थ उक्तः । शब्दभेदेऽर्थभेदस्यौत्सर्गिकत्वाद् न चान्यार्थमित्ययुक्तम् ; अत आह—**एकेति ।** गोधायां सावर्ण्यात् प्रसक्तमहित्वं [1]सर्पणस्याहिशब्दप्रवृत्तिनिमित्तत्वाभावेन निषिध्यत इति भाष्यार्थभ्रमं वारयति—**यथेति ।** देशान्तरगमनं नान्यत्वसाधकमित्युक्तं भाष्य इत्यर्थः । **रूपान्तरम् ;** भेदम् । नन्वर्थान्तराभिप्रायेण प्रयुक्तस्य तत्त्यागेनार्थान्तराङ्गीकारे शब्दार्थसंबन्धस्यानित्यत्वं स्यात् ; अत आह—**स्वरितत्वादिति । वाक्यार्थानुग्राहि ;** वाक्यार्थान्वययोग्यम् । **साहश्यादिति ;** एतेन नानार्थस्थले सर्वत्र अर्थभेदे शब्दभेदः सूचितः । भाष्ये **सापेक्ष इति ;** बहुव्रीहेरन्यपदार्थसापेक्षत्वादित्यर्थः । सङ्ख्याग्रहणे नियामकमाह—**स्त्रीलिङ्गेनेति ।** पूर्वस्मादस्य भेदमाह—**स्वरितत्वेनेति ।** लौकिकाधिकार [2]आश्रीयत इति भावः ।

**॥ वा ॥ अध्यर्धग्रहणं च समासकन्विध्यर्थम् ॥**

**भा :—अध्यर्धग्रहणं च कर्तव्यम् । किं प्रयोजनम् ? समासकन्विध्यर्थम् । समासविध्यर्थं कन्विध्यर्थं च । समासविध्यर्थं तावद् अध्यर्धशूर्पम् । कन्विध्यर्थम् अध्यर्धकम् ।**

**॥ वा ॥ लुकि चाग्रहणम्**

**भा :—लुकि चाध्यर्धग्रहणं न कर्तव्यं भवति 'अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम्' इति । 'द्विगोः' इत्येव सिद्धम् ।**

**॥ वा ॥ अर्धपूर्वपदश्च पूरणप्रत्ययान्तः ॥**

भा :—अर्धपूर्वपदश्च पूरणप्रत्ययान्तः सङ्ख्यासंज्ञो भवतीति वक्तव्यम्। किं प्रयोजनम्? समासकन्विध्यर्थमेव। समासविध्यर्थं कन्विध्यर्थं च। समासविध्यर्थं तावद् अर्धपञ्चमशूर्पम्। कन्विध्यर्थम् अर्धपञ्चमकम्।

॥ वा ॥ अधिकग्रहणं चालुकि समासोत्तरपदवृद्ध्यर्थम् ॥

भा :—अधिकग्रहणं चालुकि कर्तव्यम्। किं प्रयोजनम्? समासोत्तरपदवृद्ध्यर्थम्। समासविध्यर्थम् उत्तरपदवृद्ध्यर्थं च। समासविध्यर्थं तावद् 'अधिकषाष्ठिकः, अधिकसाप्ततिकः'। उत्तरपदवृद्ध्यर्थम् 'अधिकषाष्ठिकः, अधिकसाप्ततिकः'। अलुकीति किमर्थम्? 'अधिकषाष्ठिकः, अधिकसाप्ततिकः।'

॥ वा ॥ बहुव्रीहौ चाग्रहणम् ॥

भा :—बहुव्रीहौ चाधिकशब्दस्य ग्रहणं न कर्तव्यं भवति 'सङ्ख्याव्ययासन्नादूराधिकसङ्ख्याः सङ्ख्येये' इति। सङ्ख्येत्येव सिद्धम्।

॥ वा ॥ बह्वादीनामग्रहणम् ॥

भा :—बह्वादीनां ग्रहणं शक्यमकर्तुम्। केनेदानीं सङ्ख्याप्रदेशेषु सङ्ख्यासंप्रत्ययो भविष्यति?

॥ वा ॥ ज्ञापकात् सिद्धम् ॥

भा :—ज्ञापकात्सिद्धमेतत्। ज्ञापकं किम्? यदयं 'वतोरिड्वा' इति सङ्ख्याया विहितस्य कनो वत्वन्तादिटं शास्ति वतोरेव तद् ज्ञापकं स्यात्। नेत्याह। योगापेक्षं ज्ञापकम् ॥ बहुगण ॥

प्र :—**अध्यर्धग्रहणं चेति;** वार्तिके सङ्ख्याग्रहणं कर्तव्यत्वेन स्थितम्। तदपेक्षया समुच्चयार्थश्चशब्दः। विध्यर्थं चेदं ग्रहणम्। अध्यर्धशब्दस्य त्रिभागचतुर्भागादिशब्दवदसङ्ख्यावाचित्वात्। अर्धशब्दश्चैकदेशवाची न सङ्ख्यावाची एकदेशादिशब्दवत्। तस्य अधिशब्देन समासे कृते यौगिकोऽर्थः प्रतीयते, न सङ्ख्या।

**अध्यर्धशूर्पमिति ;** अध्यर्धेन शूर्पेण क्रीतमिति दिक्सङ्ख्येत्यनुवर्तमाने तद्धितार्थेति समासः । ततः "शूर्पादञन्यतरस्याम्" इति अञष्ठञो वा अध्यर्धपूर्वेति लुक् । **अध्यर्धकमिति ;** "सङ्ख्याया अतिशदन्तायाः कन्" इति कन् । **द्विगोरित्येव सिद्धमिति ;** [१]समासविध्यर्थमिति संबन्धसामान्ये षष्ठी । तेन समासे विधीयमाने समासनिमित्ते चान्यस्मिन् कार्ये विधीयमान इत्यर्थः । तेन द्विगुनिमित्तो लुगपि लभ्यते । अन्ये त्वाहुः—अध्यर्धशब्दः सङ्ख्यावाच्येव । तथा हि गण्यते एकोऽध्यर्धो द्वावध्यर्धौ अर्धतृतीय इति । तन्मते नियमार्थमध्यर्धशब्दस्यैव सङ्ख्यात्वेन ग्रहणं यथा स्यात् सार्धादीनां मा भूदिति । वाक्यभेदेन च द्वितीयो नियमः । तस्य च समासकन्विध्यर्थं सङ्ख्यात्वं न कार्यन्तरार्थमित्यर्थः । **अधिकषाष्टिक इति ;** अधिकया षष्ट्या क्रीत इति सङ्ख्याविशेषणमधिकशब्दः न सङ्ख्येति वचनम् । तद्धितार्थेति समासः । "प्राग्वतेष्ठञ्" । अलुकीति वचनात् लुकि कर्तव्ये सङ्ख्यासंज्ञा नास्तीति अध्यर्धपूर्वेति लुङ् न भवति । ततः "सङ्ख्यायाः संवत्सरसङ्ख्यस्य च" इत्युत्तरपदवृद्धिः । ननु उत्तरपदवृद्ध्यर्थमिति वचनाल्लुङ् न भविष्यति, किमलुकीत्यनेन । नैवदस्ति । अर्हत्यर्थात्परेष्वर्थेषु यः प्रत्ययः तस्य लुगभावात् तत्रैवोत्तरपदवृद्धिः स्यात् । **ज्ञापकात्सिद्धमिति;** एकादिवन्नियतसङ्ख्याख्याख्यावाचित्वं बह्वादीनां नास्तीति ज्ञापकाश्रयः । **योगापेक्षमिति ;** अस्य योगस्य प्रत्याख्यानादेतद्योगापेक्षमिति न बोद्धव्यम् । किं तु योगानपेक्षत इति योगापेक्षम् । यदयम् 'बहुपूगगणसङ्घस्य तिथुक् वतोरिथुक् षट्कति' इति डटि परतः आगमं शास्ति, तज्ज्ञापयति 'भवति सङ्ख्याकार्यम्' इति ।

उ :—ननु भाष्ये सङ्ख्याग्रहणस्याकर्तव्यत्वाभिधानात् तत्समुच्चयार्थः चकारो न युक्तः ; अत आह—**वार्तिक इति ।** अध्यर्धशब्दस्य सङ्ख्यावाचित्वाभावाद् नियमार्थं ग्रहणं न संभवति ; अत आह—**विध्यर्थं चेति ।** तत्र हेतुः—**अध्यर्धेति । त्रिभागेति ;** वैधर्म्यदृष्टान्तः । साधर्म्यदृष्टान्त एव वा ; बहुव्रीहिणा भागत्रययुक्तद्रव्यस्यैकस्यैव प्रतीतेः । सङ्ख्यावाचित्वमेवोपपादयति—**अर्धशब्दश्चेति । समास इति ;** अर्धमधिकं यस्मिन्निति अध्यर्धमिति बहुव्रीहिः । समासस्य सङ्ख्याकार्यत्वं वक्तुं 'दिक्सङ्ख्ये इत्यनुवर्तमाने' इत्युक्तम् । **ठञो वेति;** अञोऽभावपक्षे । "प्राग्वतेष्ठञ्" इत्यधिकृतष्ठञ् । एकस्मिन् प्रयोगे प्रत्ययद्वया-

(१) क. समासकन्विध्यर्थम्.

भावाद् अन्यतरस्य लुगित्यर्थः । **कन्निति ;** क्रीताद्यर्थः । ननु समासकनोः सिद्ध्यर्थं विधीयमाना सङ्ख्यासंज्ञा कथं द्विगुनिमित्तलुगर्था स्यात् ; अत आह—**समासेति ।** अध्यर्धशब्दस्य सङ्ख्यावाचित्वम् ; अत आह—**अन्य इति ।** तदुपपादयति—**तथा हीति । अध्यर्धौ द्वाविति ;** अर्धमधिकं यस्मिन्निति बहुव्रीहौ प्राथम्यादेकत्वस्य प्रतीतौ तस्यार्धस्य च समुदायोऽन्यपदार्थ इति भावः । वस्तुत एकादिशब्दवदध्यर्धशब्दोऽपि अनपेक्षितावयवार्थः सार्धवाचक इति ज्ञेयम् । **वाक्यभेदेनेति ;** अध्यर्धग्रहणं चेति एकं वाक्यं सार्धादिव्यावृत्तये नियमार्थम् । **समासकन्विध्यर्थमिति ;** भिन्नं वाक्यं नियमान्तरार्थमित्यर्थः । तदेवाह—**तस्य चेति ।** अधिकशब्दस्य सङ्ख्यावाचित्वे वचनवैयर्थ्यम् ; अत आह—**अधिकयेति ।** यद्यपि एकया षष्ठ्या क्रीतः एकषाष्टिक इत्यत्रैव सङ्ख्याविशेषणत्वं नासङ्ख्यात्वप्रयोजकम्, तथापि एकादिशब्दवदधिकशब्दस्य सङ्ख्यावाचित्वं नास्तीत्यत्र तात्पर्यम् । ततः लुगभावाद् ञिदादौ परे वृद्धिविधानात् । अत एव शङ्कते—**नन्विति । परेषु ;** तमधीष्टे भृतो भूतो भावीत्यादिषु । अध्यर्धेत्यार्हीयप्रत्ययस्यैव लुग्विधानाद् अधीष्टाद्यर्थस्य लुगभावाद् उत्तरपदवृद्ध्यर्थमिति तदर्थं स्यादित्यर्थः । **यः प्रत्यय इति ;** द्वौ संवत्सरावधीष्टः द्विसांवत्सरिकः "प्राग्वतेष्ठञ्" । ननु बह्वादीनामपि एकादिवत्सङ्ख्यावाचकत्वात् किं ज्ञापकाश्रयेण ; अत आह—**नियतेति ।** सङ्ख्याशब्देन नियतसङ्ख्यावाचिन एव प्रसिद्धिवशात् प्रदेशेषु ग्रहणं स्यादिति भावः । **योगानिति ;** योगापेक्षमिति योगग्रहणसामर्थ्यात् सूत्रप्रत्याख्यानोभयोगाच्च बहुवचनान्तेन विग्रहः । अनेकयोगसापेक्षं ज्ञापकमिति भाष्यार्थः । **यदयमिति ;** न चैवं वैपुल्यसङ्घवाचिनोरपि बहुगणशब्दयोः सङ्ख्याकार्यं स्यादिति वाच्यम्, अनियमेनापि सङ्ख्यावाचिनां कार्यं भवतीति ज्ञापकत्वसंभवे सङ्ख्यावाचित्वरहितानामपि तत्कार्यज्ञापनायोगादिति भावः । यद्यपि "वतोरिड् वा" इति भाष्योक्तमस्ति तथापि तस्यैवागमविधायकतया अनित्यतया च 'वतोरिथुक्' इत्युक्तम् ।

## सू.—ष्णान्ता षट् ॥ १ । १ । २३ ॥

### ॥ वा ॥ षट्संज्ञायामुपदेशवचनम् ॥

**भा :—षट्संज्ञायामुपदेशग्रहणं कर्तव्यम् । उपदेशे षकारनकारान्ता [1]सङ्ख्या षट्संज्ञा भवतीति वक्तव्यम् । किं प्रयो-**

(१) क. सङ्ख्या सा

**जनम्? शताद्यष्टनोर्नुम्नुडर्थम् 'शतानि, सहस्राणि'। नुमि कृते "ष्णान्ता षट्" इति षट्संज्ञा प्राप्नोति। उपदेशग्रहणान्न भवति। अष्टानामित्यत्रात्वे कृते षट्संज्ञा न प्राप्नोति। उपदेशग्रहणाद्भवति।**

**॥ वा ॥ उक्तं वा ॥**

**भा :—किमुक्तम्? इह तावत् शतानि सहस्राणीति "सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" इति। अष्टनोऽप्युक्तम्। किमुक्तम्? अष्टनो दीर्घग्रहणं षट्संज्ञाज्ञापकमाकारान्तस्य नुडर्थमिति।**

प्र :—**षट्संज्ञायामिति ;** प्रकृतिप्रत्ययादिविभागेन प्रतिपादनं गुणैः प्रापणमुपदेशः। तेन प्रकृतिप्रत्ययाद्युपदेशे षकारनकारान्ता [1]या सङ्ख्या सा षट्संज्ञेत्यर्थः। **नुम्नुडर्थमिति ;** अर्थशब्दः प्रयोजनवाची। तत्र नुमि शतानीत्यादौ षट्संज्ञानिवृत्तिः प्रयोजनम्; नुटि तु विधीयमाने षट्संज्ञाप्रवृत्तिः प्रयोजनम्। **अष्टानामिति ;** परत्वान्नित्यत्वाच्चात्वे कृते नुटोऽप्राप्तिः कार्यकालत्वात्संज्ञायाः प्रवृत्तेर्नास्त्यन्तरङ्गत्वम्। **अष्टनो दीर्घेति ;** तत्र हि दीर्घग्रहणमष्टस्विति सुप [2]उदात्तत्वनिवृत्त्यर्थं क्रियते। यदि च कृतात्वस्य षट्संज्ञा न स्यात्तदा अष्टस्विति परत्वात् षट्स्वरो "झल्युपोत्तमम्" इति भविष्यतीति किं दीर्घग्रहणेन। कृतं च तत् कृतात्वस्यापि षट्संज्ञां ज्ञापयति। ततश्चापवादत्वात् षट्स्वरोऽनेन बाध्यत इति दीर्घपक्ष इवादीर्घपक्षेऽपि विभक्तेः स्वरः स्यादिति कर्तव्यं दीर्घग्रहणम्।

उ :—[3]स्वरूपप्रतीत्यर्थमुच्चारणमुपदेशोऽन्यत्र प्रसिद्धः। तस्य च पञ्चनादिष्वभावात् तद्वचने क्रियमाणे तेषां संज्ञा न स्यात्, अत आह—**प्रकृतीति।** आदिना आगमादिग्रहः। प्रतिपादनरूपं यद् गुणैः प्रापणं स उपदेश इत्यर्थः। प्रकृत्यादिविभागेन प्रतिपादनं प्रत्ययागमयोरपि इति शतानीत्यस्याप्यावृत्तिमाशङ्क्य प्रकृतेरेव लाभार्थं गुणैः प्रापणमित्युक्तम्। तदेव स्पष्टयति—**तेनेति।** प्रकृतेः प्रत्ययाद्युपदेशकाले या प्रकृतिः षान्ता नान्ता सोक्तसंज्ञेत्यर्थः। नुटीव नुम्यपि संज्ञाप्राप्तेः प्रयोजनत्वशङ्कां वारयति—**प्रयोजनेति।** नुम्नुटोर्नुमि नुटि [4]चार्थः प्रयोजनं यस्येति बहुव्रीहिः। नन्वन्तरङ्गत्वात्पूर्वं प्रवृत्ता षट्संज्ञा आत्वे कृतेऽपि न निवर्तिष्यते; अत

---

(१) मु. पु. या षकारनकारान्ता सङ्ख्या (२) क. आद्युदात्तत्व

(३) ख. स्वरूपप्रतिपत्त्यर्थम (४) ख. वार्थः

आह—**कार्येति**। यदा कार्यं तदा संज्ञा प्रवर्तते। आत्वात् पूर्वं कार्याभावान्न संज्ञा प्रवर्तत इत्यर्थः। कृतात्वस्य षट्संज्ञायां प्रयोजनमाह—**अष्टन इति**। दीर्घान्तादष्टनोऽसर्वनामस्थानविभक्तिरुदात्ता। **झल्युपोत्तमम्;** झलादिविभक्त्यन्तानां षट्त्रिचतुराम् उपोत्तममुदात्तं स्यात् 'पञ्चभिः, तिसृभिः, चतसृभिः'। **यदि चेति;** दीर्घान्तस्य षट्संज्ञाया अभावे अष्टन इत्येतावन्मात्रोक्तावपि अष्टस्वित्यत्र परत्वात् झल्युपोत्तमस्वर एव स्यात्। अयं तु षट्संज्ञारहिते दीर्घान्ते सावकाश इति नोपोत्तमस्वरस्य बाधक इति दीर्घग्रहणं व्यर्थं स्यादित्यर्थः। आकारान्तस्य षट्संज्ञायामनवकाशोऽयं विभक्तिस्वरः उपोत्तमस्वरस्य बाधको भवतीति अष्टस्वित्यत्र उपोत्तमस्वरसिद्ध्यर्थं दीर्घादिति वक्तव्यमित्याह—**ततश्चेति**। **षट्स्वरः;** उपोत्तमस्वरः। **अनेन;** विभक्त्युदात्तत्वेन। भाष्ये **सन्निपातेति:** शिसन्निधाननिमित्तो नुम् शिलोपनिमित्तषट्संज्ञां न प्रवर्तयतीत्यर्थः। भाष्ये **नुडर्थमिति;** संज्ञाप्रयोजनकथनम्।

**भा:—अथवा आकारोऽप्यत्र निर्दिश्यते 'षकारान्ता नकारान्ता आकारान्ता च सङ्ख्या षट्संज्ञा भवति' इति। इहापि तर्हि प्राप्नोति 'सधमादो द्युम्न एकास्ताः' एका इति। नैष दोषः। एकशब्दोऽयं बह्वर्थः। अस्त्येव सङ्ख्यापदम्। तद्यथा 'एको द्वौ बहवः इति। अस्त्यसहायवाची। तद्यथा 'एकाग्नयः, एकहलानि, एकाकिभिः क्षुद्रकैर्जितमिति'। असहायैरित्यर्थः। अस्त्यन्यार्थे वर्तते। तद्यथा 'प्रजामेका रक्षत्यूर्जमेका' इति। अन्येत्यर्थः। 'सधमादो द्युम्न एकास्ताः'। अन्या इत्यर्थः। तद्योऽन्यार्थे वर्तते तस्यैष प्रयोगः। इह तर्हि प्राप्नोति 'द्वाभ्यामिष्टये विंशत्या च' इति। एवं तर्हि सप्तमे योगविभागः करिष्यते 'अष्टाभ्य औश्'। ततः 'षड्भ्यः' षड्भ्यश्च यदुक्तमष्टाभ्योऽपि तद्भवति। ततो 'लुक्' लुक् च भवति षड्भ्यः इति। अथवा उपरिष्टाद्योगविभागः करिष्यते "अष्टन आ विभक्तौ"। ततो "रायः"। रायश्च विभक्तावाकारादेशो भवति। 'हलि' इत्युभयोः शेषः। यद्येवं 'प्रियाष्टौ, प्रियाष्टा' इति न सिद्ध्यति। 'प्रियाष्टानौ, प्रियाष्टान' इति प्राप्नोति। यथालक्षणमप्रयुक्ते।**

ष्णान्ता षट् ॥

प्र:—**एकास्ता इति ;** संख्यावाचित्वाभ्युपगमवादी व्यत्ययेन बहुवचनं मन्यते। अन्यवाचित्वाश्रयं तूत्तरम्। **इह तर्हीति ॥ द्वाभ्यामिति ;** षट्स्वरः स्यात्। **सप्तम इति ;** अष्टाभ्य इति कृतात्वानुकरणादौश्त्वविधानसामर्थ्याच्च लुङ् न विधीयते। **हलीति ;** ततश्चाष्टानामिति नुटि कृते आत्वं भवति। जश्शसोस्तु 'अष्टाभ्य' इति कृतात्वनिर्देशाद् ज्ञापकादात्वं भवति। कृतात्वस्य हि निर्देशस्य प्रयोजनं यत्रात्वं तत्रौश्त्वं यथा स्यादिति। यदि ह्येतत् कृतात्वनिर्देशस्य प्रयोजनं न स्यात्, लाघवार्थम् 'अष्टभ्य औश्' इति ब्रूयात्। **यद्येवमिति ;** हलादावुच्यमानमात्वमौजसोर्न प्राप्नोतीति यत्राष्टार्थस्य प्राधान्यं तत्रौश्त्वेन भवितव्यम्, तत्रैव चौश्त्वेन आत्वमनुमीयत इति जस्यप्यात्वमत्र ज्ञापकान्न प्राप्नोति। विभक्तिमात्रे त्वात्वं विधीयमानमौजसोः सिध्यति। 'अष्टन आ विभक्तौ' इत्यत्र 'पदाङ्गाधिकारे तस्य तदुत्तरपदस्य च' इति तदन्तविधिसद्भावाद् बहुवचननिर्देशाभावाद् गुणभूतेऽप्यष्टार्थे आत्वेन भाव्यमित्यत्रापि सिध्यतीति प्रश्नः। **यथालक्षणमिति ;** यस्य विशिष्टः प्रयोगो न स्मर्यते नापि [1]प्रयोगनिषेधः तद्यथालक्षणमनुगन्तव्यम्। तदत्र मा भूदात्वमित्यर्थः। नैव [2]च लक्षणमप्रयुक्ते प्रवर्तते प्रयुक्तानामेव लक्षणेनान्वाख्यानात् ॥

उ:—नन्वेकशब्दस्य सङ्ख्यावाचित्वे बहुवचनं कथम्; अत आह—**सङ्ख्येति।** संज्ञायामनिष्टमाह—**षट्स्वर इति।** "षट्त्रिचतुर्भ्यो हलादिः" इति विभक्त्याद्युदात्तत्वम्। 'अनुदात्तौ सुप्पितौ' इति अनुदात्तत्वमेवेष्यते। आकारप्रक्षेपस्य द्वाभ्यामित्यत्रातिप्रसञ्जकत्वात्तदपहाय दीर्घान्तस्य षट्संज्ञाया अभावेऽप्यतिदेशेन कार्यसिद्धिमाह—भाष्ये **एवं तर्हीति।** भाष्ये **तद्वद्भवतीति ;** ततश्च अष्टानामिति नुट्सिद्धिरित्यर्थः। नन्वतिदेशेन जश्शसोर्लुगपि स्यात्; अत आह—**कृतात्वेति।** विभक्तौ परत आत्वविधानात् स्थान्यभावे आदेशानुपपत्तेश्चेत्यर्थः। **न विधीयते ;** नातिदिश्यते। नन्वामि कथं दीर्घः हल्परत्वाभावात्; अत आह—**ततश्चेति।** हलीत्युक्त्या तदनन्तरमेव निमित्तसद्भावादित्यर्थः। तर्हि जश्शसोर्हलादित्वाभावादात्वं न स्यात्; अत आह—**जश्शसोरिति। अष्टभ्य इति ;** 'अष्टन औश्' इत्येव ब्रूयादित्यर्थः। **औजसोरिति ;** एतेन भाष्ये प्रियाष्टौ, प्रियाष्टा इति पूर्वं द्विवचनान्तम्, उत्तरं बहुवचनान्तमित्युक्तम्। ननु प्रियाष्टान इत्ययुक्तम् अष्टाभ्य औश् इति जश्शसोरौश्विधानात्; अत आह—**यत्रेति। तत्रेति ;** बहुवचननिर्देशादित्यर्थः। **तत्रैव ;** अष्टार्थस्य

(१) मु. पु. प्रयोगनिषेधस्मृतिः (२) मु. पु. वा

प्राधान्यस्थल एव । **औश्त्वेन**; 'अष्टाभ्य' इति विधीयमानेन । यत्र औश् तत्र आत्वमित्यनुमानमष्टार्थप्राधान्य एव प्रवर्तते, न तु प्रियाष्टान इत्यत्रेत्यर्थः । **अत्र**; प्रियाष्टान इत्यत्र । **ज्ञापकात्**; 'अष्टाभ्यः' इति कृतात्वनिर्देशात्ज्ञापकात् । हलीत्यनुक्तौ तु प्रियाष्टौ प्रियाष्टा इत्यत्रापि आत्वं सिध्यतीत्याह—**विभक्तीति**; हलीत्यनुक्तावित्यर्थः । अष्टन उच्यमानमात्वं प्रियाष्टनः कथं स्यात्; अत आह—**अष्टन इति।** ननु औश्त्ववदात्वमपि अष्टार्थस्य प्रधानस्य एव स्यात्; अत आह—**बहुवचनेति**; आत्वविधावित्यादिः । **अत्रापि**; प्रियाष्टावित्यत्रापि । हलीत्युक्तौ ज्ञापकादात्वं वाच्यम् । तच्चाष्टार्थस्य प्राधान्य एव । तद्विहाय विभक्तिमात्रे तदुक्ता । उपसर्जनत्वेऽपि अष्टार्थस्य आत्वं सिध्यतीति समुदायार्थः । नन्वेवं[1] द्विवचने वृद्ध्या प्रियाष्टाविति सिद्धावपि जस्यात्वसत्त्वेऽपि औश्त्वं न सिध्यति तद्विधौ बहुवचनेन अष्टार्थप्राधान्य एव तद्भावात्; तथा च जसि प्रियाष्टा इति स्यान्न तु प्रियाष्टाविति चेत् । अत्राहुः—औश्त्वानपेक्षमात्र चेद्यत्रात्वं तत्र सर्वत्र औश्त्वेन भाव्यम् । बहुवचनं तु निर्देशमात्रार्थम्, न नियामकम् इति । भाष्यं प्रियाष्टा इत्येव पाठ[2] इत्याहुः । **विशिष्टः प्रयोगः**; अचकमतेत्यत्र णिङभावे कमेश्चङ् वक्तव्य इतिवत् । **प्रयोगनिषेधः**; वचन्त्यादिवत् । एवं प्रियाष्टानौ प्रियाष्टान इत्येव प्रयोक्तव्यमित्युक्तम् । प्रियाष्टौ प्रियाष्टा इत्यत्राव्याप्तिशङ्का न कार्येत्येवंपरतया व्याख्यानान्तरमाह—**नैव चेति।** यथाशब्दो नञर्थलक्षकः । यथा अलक्षणमिति निषेधार्थाकारस्यासमस्तस्य प्रक्षेपो वा अङ्गीकार्य इत्याहुः ।

## सू.—डति च ॥ १। १। २४ ॥

**भा:—इदं डतिग्रहणं द्विः क्रियते सङ्ख्यासंज्ञायां षट्संज्ञायां च। एकं शक्यमकर्तुम्। कथम्? यदि तावत् सङ्ख्यासंज्ञायां क्रियते षट्संज्ञायां न करिष्यते। कथम्? "ष्णान्ता षट्" इत्यत्र 'डति' इत्यनुवर्तिष्यते। अथ षट्संज्ञायां क्रियते सङ्ख्यासंज्ञायां न करिष्यते। कथम्? डति च इत्यत्र सङ्ख्यासंज्ञाप्यनुवर्तिष्यते ॥ डति च ॥**

प्र:—**यदि तावदिति**; तत्र वतुसाहचर्यात् तद्धित एव डतिर्गृह्यते, न तु पातेर्डतिः कृत् । **अथेति**; तत्र सङ्ख्यासंज्ञाया अनुवर्तनादन्वर्थत्वाच्च तस्याः सङ्ख्याप्रश्नविषय एव डतिर्गृह्यते, न त्वौणादिकः ।

---

(१) ख. एवमपि. (२) ख. इति प्राहुः

उ :—स्वरितत्वाड्[1]डतिरेवानुवर्तते, न बह्वादय इत्याशयेनाह—भाष्ये **इतीत्यनुवर्तिष्यत इति।** 'ष्णान्ता च षट्' इति सूत्रं कर्तव्यम्। तथा च संज्ञ्यन्तरसमुच्चयार्थाच्चकारात् स्वरितत्वेन च डति इत्यस्यानुवृत्तिः भाष्याभिप्रेतेति केचित्। चकारप्रक्षेपं विनापि स्वरितत्वप्रतिज्ञामात्रेणानुवृत्तिसंभवात् चकारनुपयोग[2]इति तच्चिन्त्यम्। अतिप्रसङ्गं निराह—**तत्रेति**; सङ्ख्यासूत्र इत्यर्थः। **तद्धितः**; "किमः सङ्ख्यापरिमाणे डति च" इति विहितः। यादृशस्य संज्ञायां ग्रहणं तादृशस्यैवानुवृत्तिरिति नातिप्रसङ्ग इति भावः। स्वरितत्वात् "डति च" इत्यत्र सङ्ख्यासंज्ञापरा अनुवर्तते। तथा च डत्यन्तस्य षट्संज्ञा सङ्ख्यासंज्ञा च विधीयते। न च ष्णान्तेत्यत्र संज्ञिपरत्वेनान्वितस्य सङ्ख्याशब्दस्य कथमग्रे संज्ञापरत्वमिति वाच्यम्। सर्वत्र शब्दान्तरस्य अनुमानाङ्गीकारेण पूर्वत्र संज्ञिपरस्य उत्तरत्र संज्ञापरस्य चानुमानसंभवादिति भावः। अत्र वतुसाहचर्याभावादतिप्रसङ्गः; अत आह—**तत्रेति। तस्याः**, सङ्ख्यासंज्ञायाः। **गृह्यते**; षट्संज्ञायां सङ्ख्यासंज्ञायां च। सङ्ख्यासंज्ञाविषयस्यैव षट्संज्ञाविषयत्वात्। औणादिकः पातेर्डतिः।

## सू.—क्तक्तवतू निष्ठा ॥ १। १। २५ ॥

**॥ वा ॥ निष्ठासंज्ञायां समानशब्दप्रतिषेधः ॥**

**भा :—निष्ठासंज्ञायां समानशब्दानां प्रतिषेधो वक्तव्यः 'लोतो गर्तः' इति।**

**॥ वा ॥ निष्ठासंज्ञायां समानशब्दाप्रतिषेधः ॥**

**भा :—निष्ठासंज्ञायां समानशब्दानामप्रतिषेधः। अनर्थकः प्रतिषेधः अप्रतिषेधः। निष्ठासंज्ञा कस्मान्न भवति? अनुबन्धोऽन्यत्वकरः[3]। अनुबन्धः क्रियते, सोऽन्यत्वं करिष्यति।**

**॥ वा ॥ अनुबन्धोऽन्यत्वकर इति चेन्न लोपात् ॥**

**भा :—अनुबन्धो अन्यत्वकर इति चेत्तन्न। किं कारणम्? लोपात्। लुप्यतेऽत्रानुबन्धः। लुप्ते चानुबन्धे नान्यत्वं[4]भवति। तद्यथा 'कतरद्देवदत्तस्य गृहम्, अदो यत्रासौ काकः' इति।**

---

(१) ख. डतीत्येव (२) ख. इति चिन्त्यम्
(३) ख. ह्यन्यत्वकरः (४) ख. भविष्यति.

**उत्पतिते काके नष्टं तद् गृहं भवति। एवमिहापि लुप्तेऽनुबन्धे नष्टः प्रत्ययो भवति। यद्यपि लुप्यते; जानाति त्वसौ सानुबन्धकस्येयं संज्ञा कृतेति। तद्यथा इतरत्रापि 'कतरद्देवदत्तस्य गृहम् अदो यत्रासौ काकः' इति। उत्पतिते काके यद्यपि नष्टं तद्गृहं भवति अन्ततस्तमुद्देशं जानातीति।**

**॥ वा ॥ सिद्धविपर्यासश्च ॥**

**भा:—सिद्धश्च विपर्यासः। यद्यपि जानाति; संदेहस्तु तस्य भवति। अयं स तशब्दो 'लोतो, गर्त' इति। अयं स तशब्दो 'लूनो, गीर्ण' इति। तद्यथा इतरत्रापि कतरद्देवदत्तस्य गृहम् अदो यत्रासौ काक इति। उत्पतिते काके यद्यपि तमुद्देशं जानाति। संदेहस्तस्य भवति इदं तद्गृहम् इदं तद्गृहम् इति।**

प्र:—इहानुबन्धाः कार्यार्थमुपादीयन्ते। प्रयोगश्चैषां लुप्तत्वान्नास्ति। यत्र सारूप्यं तत्र च सन्देहः कथमस्यानुबन्धकार्यं कृतम् अस्य तु न कृतमिति पूर्वपक्षाभिप्रायः। सिद्धान्तवादी तु मन्यते अध्रुवेणानुबन्धेन नियतसन्निधानार्थाः कारककालादयो लक्ष्यन्ते। तद्दर्शनादनुबन्धस्मृतौ च तल्लक्षितानां कार्याणां साधुत्वं विज्ञायते। तत्र यथा देवदत्तेन लूनः शालिरिति कश्चित् प्रयुङ्क्ते तदा लक्षणज्ञः कर्मभूतकालावगमात् क्तप्रत्ययं मन्यते। यदा तु 'लोतमालभेत' इति प्रयोगः तदा मेषवाची लोतशब्दस्तन्प्रत्ययान्तः प्रयुक्त इति मन्यते। **सिद्धविपर्यास इति;** सिद्धो विपर्यासः संशय इत्यर्थः। **इदं तद्गृहमिति;** बुद्धेरनवस्थितत्वमनेन प्रतिपाद्यते, न त्वेतद् द्विर्वचनं वीप्साद्यर्थाभावात्।

उ:—ककारस्यानुबन्धतया विशेषणत्वाभावेनोपलक्षणत्वात् तशब्दमात्रमुपलक्ष्यमिति मत्वा समानशब्दप्रतिषेधः कर्तव्य इत्युच्यत इत्याह—**इहेति। अनुबन्धकार्यम्;** गुणनिषेधादि। नियतं सन्निधानं येषामर्थानां तानेव दर्शयति—**कारकेति;** तशब्दमात्रं नोपलक्ष्यम्; किन्त्वर्थविशेषावच्छिन्नमिति नातिप्रसङ्ग इति भावः। साधुत्वज्ञानप्रकारमेवाह—**यदेति;** कर्मभूतकालयोरवगमादित्यर्थः। यद्यपि विपर्यासशब्दो निश्चयरूपविपर्ययवाची तथाप्ययथार्थत्वाविशेषात् संशयोऽत्राभिप्रेत इत्याह—**संशय इति। अनवस्थितत्वम्;** सन्देहात्मकत्वम्। **वीप्सादीति;** आदिना आभीक्ष्ण्यग्रहः। सन्देहाभिनयत्वादिति भावः।

भा :—एवं तर्हि

॥ वा ॥ कारककालविशेषात् सिद्धम् ॥

भा :—कारककालविशेषावुपादेयौ। भूते यस्तशब्दः कर्मणि कर्तरि भावे चेति। तद्यथा इतरत्रापि य एव मनुष्यः प्रेक्षापूर्वकारी भवति सोऽध्रुवेण निमित्तेन ध्रुवं निमित्तमुपादत्ते वेदिकां पुण्डरीकं वा। एवमपि [1]प्राकीर्ष्टेत्यत्रापि प्राप्नोति।

॥ वा ॥ लुङि सिजादिदर्शनात् ॥

भा :—लुङि सिजादिदर्शनान्न भविष्यति। यत्र तर्हि सिजादयो न दृश्यन्ते 'प्राभित्त' इति। दृश्यन्तेऽत्रापि सिजादयः। किं वक्तव्यमेतत्? न हि। कथमनुच्यमानं गंस्यते? यथैवायमनुपदिष्टान् कारककालविशेषानवगच्छति एवमेतदप्यवगन्तुमर्हति 'यत्र सिजादयो न' इति ॥ क्तक्तवतू. ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये
प्रथमस्याध्यायस्य प्रथमपादे पञ्चममाह्निकम्

---

प्र :—[2]**प्राकीर्ष्टेति;** अत्र भूतकालोऽस्तीति भावः। **दृश्यन्तेऽत्रेति;** सिजादीत्यादिशब्दः प्रकारे। तत्र 'प्राभित्त घटं देवदत्तः' इति प्रयोगे कर्त्रैकत्वाद्यवगमाल्लुङन्तस्यायं प्रयोगः; न निष्ठान्तस्य इति प्रतिपद्यते। 'अञ्जिघृषिभ्यः क्तः' इत्यस्य निष्ठासंज्ञा न भवति; उणादीनामव्युत्पन्नत्वाद् बाहुलकाद्वा। अन्यथा 'निष्ठा च द्व्यजनात्' इत्याद्युदात्तत्वं स्यात्।

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमस्याध्यायस्य
प्रथमे पादे पञ्चममाह्निकम् ॥

---

(१) क. प्राकार्ष्ट (२) क. अकीर्ष्टेति

उ :—प्राकार्ष्टेत्यत्रोपलक्ष्यतावच्छेदकं संभवतीत्याह—**अत्र भूतकाल इति**। प्राकार्ष्टेति लुङि परस्मैपदमध्यमपुरुषबहुवचनम्। इदमुपलक्षणम् यन्मा प्रकार्ष्टेत्युदाहरणम्। अत्र 'निपातैर्यद्यदि' इत्यादिना 'तिङ्ङतिङ' इति प्राप्तानुदात्तत्वनिषेधे "निष्ठा च द्व्यजनात्" इति नित्यमाद्युदात्तत्वं स्यात्। "आदिः सिचोऽन्यतरस्याम्" इति विकल्प एवात्र इष्यते इति केचित्। अत्र "निष्ठा च द्व्यजनात्" इत्यत्र संज्ञायामित्यनुवृत्तेः नात्र तेनाद्युदात्तप्राप्तिरिति चिन्त्यम्। सिचोऽदर्शनादानुपूर्व्यभावाच्चाह—**प्रकार इति**। लुङ्त्वज्ञापकोपलक्षणमेतदित्यर्थः। ज्ञापकमेवाह—**तत्रेति**। **कर्त्रैकत्वेति;** अभित्तेत्यत्र कर्ता तदेकत्वं च प्रतीयते। निष्ठा चेत् कर्मणि स्यात् प्रथमैकवचनाभावेन एकत्वप्रतीतिरपि न स्यादिति आख्यातान्तत्वं तावन्निश्चीयते। आदिशब्दग्राह्यभूताद्यतनत्वज्ञानात् लुङ्त्वनिश्चय इत्यर्थः। भिदेर्लुङ्यात्मनेपदे [1]परे "झलो झलि" इति सिज्लोपः। **न निष्ठान्तस्य;** न क्तान्तस्य। **अञ्जीति;** यद्यप्युणादीनां संज्ञायां विधानात् न कर्माद्यवगतिः; तथापि गुणाद्यदर्शनात् क्तोऽयमिति निश्चयः स्यादित्यर्थः। **अव्युत्पन्नत्वादिति;** स्वरार्थं प्रकृतिप्रत्ययविभागः कल्पितः न तु प्रत्ययस्यार्थोऽस्ति। तथा चार्थवत एव क्तस्य ग्रहणमिति भावः। व्युत्पत्तिपक्षेऽप्याह—**बाहुलकाद्वेति**। "उणादयो बहुलम्" इत्यत्र बहुलशब्दस्यार्थपरत्वात् सर्वप्रत्ययानामर्थवत्त्वे प्रमाणाभावादौणादिकः क्तो नार्थवानिति भावः। तस्य संज्ञाङ्गीकारेऽनिष्टमाह—**अन्यथेति**। **निष्ठेति;** निष्ठान्तद्व्यच्कमाद्युदात्तं स्यात् संज्ञायां न चेदादिराकारः—[2]उक्तः।

इति श्रीमहामहोपाध्यायाद्वैतविद्याचार्यराघवसोमयाजिकुलावतंसश्रीतिरुमलाचार्यवर्यस्य सूनोरन्नंभट्टस्य कृतौ
महाभाष्यप्रदीपोद्द्योतने प्रथमस्याध्यायस्य प्रथमे पादे
पञ्चममाह्निकम्।

---

श्रीः

प्रथमाध्यायस्य प्रथमे पादे

# षष्ठमाह्निकम्

## सू.—सर्वादीनि सर्वनामानि ॥ १। १। २६ ॥

**भा :—सर्वादीनीति कोऽयं समासः। बहुव्रीहिरित्याह। कोऽस्य विग्रहः। सर्वशब्दः आदिर्येषां तानीमानि इति। यद्येवं सर्वशब्दस्य सर्वनामसंज्ञा न प्राप्नोति। किं कारणम्। अन्यपदार्थत्वाद्बहुव्रीहेः। बहुव्रीहिरयमन्यपदार्थे वर्तते। तेन यदन्यत्सर्वशब्दात् तस्य सर्वनामसंज्ञा प्राप्नोति। तद्यथा 'चित्रगुरानीयताम्' इत्युक्ते यस्य ता गावो भवन्ति स एवानीयते, न गावः। नैष दोषः। भवति हि बहुव्रीहौ तद्गुणसंविज्ञानमपि। तद्यथा 'चित्रवाससमानय' 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इति तद्गुण आनीयते, तद्गुणाश्च प्रचरन्ति।**

प्रः—**कोऽयमिति।** ननु नपुंसकबहुवचननिर्देशादेव बहुव्रीहिनिश्चयात् समासान्तराशङ्कैव[1] नास्तीति प्रश्नानुपपत्तिः। एवं तर्हि किमयं बहुव्रीहिरेव आहोस्वित् बहुव्रीहितत्पुरुषयोरेकशेषः। यथा कतन्तेभ्यः कण्वादिभ्यः इति चेति प्रश्नः। तत्र सारूप्यार्थं सर्वश्चासावादिश्च सर्वादिरित्यत्रादिशब्दः उपादीयते न त्वस्य प्रयोजनान्तरमस्तीति तत्र नपुंसकमनपुंसकेनेति वा स्वरभिन्नानां यस्योत्तरस्वरविधिः स शिष्यत इति वा बहुव्रीहेः शेषः। वक्ष्यमाणेन न्यायेन विनाप्येकशेषेण सर्वशब्दस्य संज्ञा सिध्यतीति मत्वाह **बहुव्रीहिरिति।** एवमपि सन्देहः किं प्राथमकल्पिको[2] बहुव्रीहिः। अथ बहुव्रीहितत्पुरुषयोरेकशेषेण बहुव्रीहिरिति पृच्छति **कोऽस्य विग्रह इति। तानीमानीति ;** अन्यपदार्थस्य प्राधान्यं प्रदर्श्यते। अन्यथा यथा चित्रा गावोऽस्येति गवां

(१) क. शङ्का नैवास्तीति (२) क. कोऽयं

विशेष्यत्वं तद्भूतश्च विशेषणत्वमवगम्यते तथेहाप्यवगम्येत। अत्र चार्थे बहुव्रीहिर्नेष्यते। यदा तु स्वामिनः प्राधान्यं गवां विशेषणभावस्तदा तु बहुव्रीहिः। अत एव चित्रा गावो यस्य स चित्रगुरिति स्वामिनः प्राधान्यं प्रदर्श्यते। तानीमानीति सर्वनामद्वयोपादानेन प्रत्यक्षविषयत्वादिदंशब्दस्य गणपठितेषु सर्वशब्दस्यान्तर्भावात्तद्गुणसंविज्ञानं सूचयति। तस्यान्यपदार्थस्य गुणाः उपलक्षणानि तेषामपि कार्ये संविज्ञानं तद्गुणसंविज्ञानं। तत्र चित्रगुरानीयतामिति स्वस्वामिभावसंबन्धः षष्ठ्यर्थ इति स्वविशेषोपलक्षितस्य स्वामिन एवानयनं न तु गवाम्। दण्डी विषाणी चानीयतामित्यत्र तु संयोगसमवायलक्षणेन सम्बन्धेन सम्बन्धिनि कार्ये विज्ञायमाने उपलक्षणस्याप्यन्तर्भावो भवति। इहाप्यादिशब्दस्यावयववाचित्वादुद्भूतावयवभेदः समुदायः समासार्थः। तस्य च समुदायस्य युगपल्लक्ष्ये प्रयोगाभावात्तदन्तर्भूतानामेव पृथक् प्रयोग[1]त्वात्कार्या[2]र्थितया संज्ञया भवितव्यमिति सर्वशब्दस्यापि सा सिध्यति। [3]यथा देवदत्तशालायां ब्राह्मणा आनीयन्तामित्युक्ते देवदत्तोऽपि यदि ब्राह्मणो भवति स्वशालास्थश्च[4] तदा सोऽप्यानीयत एव।

उ:—प्रश्नानुपपत्तिमाशङ्कते **नन्विति**। नियतपुंलिङ्गस्यादिशब्दस्य समासान्तरे नपुंसकत्वासंभवात् बहुवचनाच्च बहुव्रीहित्वनिश्चयात्प्रश्नानुपपत्तिरित्यर्थः। समाधत्ते—[5]**एवमिति। बहुव्रीहीति;** सर्व आदिः येषामिति बहुव्रीहिः। सर्वश्चासावादिश्चेति तत्पुरुषः। अतद्गुणसंविज्ञानबहुव्रीहौ सर्वशब्दस्य संज्ञाऽप्राप्तेरित्यर्थ.। उक्तसमासद्वयस्यैकशेषे दृष्टान्तः—**यथेति**। लोहितादिर्गर्गाद्यन्तर्गणः। तत्र शकलशब्दः कतकण्वशब्दयोर्मध्ये पठनीयः। सर्वत्र लोहितादिकतन्तेभ्य इत्यत्र कतन्ते समासद्वयम्। कतः अन्ते येषां ते, कतस्यान्तः समीपभूत इति च। तेन शाकल्यायनीति[6] ष्फः सिद्धः। शकन्ध्वादित्वात् सूत्रे पररूपम्। 'कण्वादिभ्यो गोत्र' इत्यत्रापि पूर्ववत् समासद्वयम्। तेन कण्वस्यादिः शकलशब्द इति शाकल्यस्य छात्राः शाकला इति कण्वादिभ्य इत्यण्सिद्धिः। तदुक्तम—'कण्वात्तु शकलः पूर्वः कतादुत्तर इष्यते। पूर्वोत्तरौ तदन्तादी ष्फाणौ तत्र प्रयोजनम्'॥ इति।

नन्वेवं सर्वसर्वादीनीति स्यात् तत्पुरुषे आदिपदवैयर्थ्यात्; अत आह—**तत्रेति। न त्विति;** एकशेषसंपादकसारूप्यसंपादनव्यतिरिक्तप्रयोजनं नास्तीत्यर्थः। नपुंसकत्वाद्

---

(१) क. गसत्त्वा　　(२) क. र्थया
(३) मु पु. यथेति नास्ति　　(४) क स्थश्चेत्
(५) क. एवमपीति　　(६) क. तीष्टसिद्धिः

बहुव्रीहेः शेषमाह—**तत्रेति**; वस्तुकथनमेतत्। तत्पुरुषशेषेऽपि प्रकृते विरोधाभावात् विलक्षणस्वराणां सरूपाणां यस्योत्तरसूत्रेण स्वरविधिः स शिष्यते इति वार्तिकार्थः। तत्पुरुषस्य 'समास इति पूर्वसूत्रेणान्तोदात्तः। बहुव्रीहेस्तु 'बहुव्रीहौ' इत्युत्तरसूत्रेण पूर्वपदाद्युदात्तत्वमिति भावः। **वक्ष्यमाणेनेति।** तद्गुणसंविज्ञानेनेत्यर्थः। बहुव्रीहिविग्रहस्य स्पष्टत्वात् प्रश्नायोगमाशङ्क्याह—**एवमपीति। प्राथमकल्पिकः;** एकशेषरहितः। **पृच्छति;** वक्ष्यमाणन्यायमविद्वानित्यादिः। विग्रहे पृष्टे तन्मात्रं वक्तुमुचितम्, तानीमानीति व्यर्थम्; अत आह—**अन्येति।** अन्यपदार्थप्राधान्यस्योपयोगमाह—**यथेति।** अन्यपदार्थप्राधान्यद्योतकतच्छब्दप्रयोगादपि तथेत्याह—**अत एवेति**; यतोऽन्यपदार्थप्राधान्य एव बहुव्रीहिरत एवेत्यर्थः। इमानीत्यस्य वैयर्थ्यं निराह—**तानीति**; उपादानेन सूचयतीत्यन्वयः। तानीत्यस्यान्यपदार्थप्राधान्यार्थत्वादिमानीत्यस्य सूचकत्वमुपपादयति—**प्रत्यक्षेति।** उद्भूतावयवभेदसमुदायस्येदमा परामर्शादिति भावः। तद्गुणसंविज्ञानमित्यस्यार्थमाह—**तस्येति। उपलक्षणानि;** वासःप्रभृतीनि। **कार्ये;** आनयनादिकार्ये। तद्गुणसंविज्ञानं क्व नेतिविवक्षायामाह—**तत्रेति। स्वविशेषः;** गोरूपधनविशेषः। मत्वर्थे बहुव्रीहिः। तदर्थश्च संबन्धः। सोऽन्यपदार्थविशेषणम्। तस्योपलक्षणस्य कार्यान्वयं विनापि विशेषणत्वसंभवेऽतद्गुणसंविज्ञानमन्यथा तद्गुणसंविज्ञानमिति समुदायार्थः। संयोगसमवायस्थले उपलक्षणस्य कार्यान्वयो नान्यत्रेति स्थिते प्रकृते समवायमाह—**इहेति।** समुदायस्यान्यपदार्थत्वे बहुवचनं कथम्; अत आह—**उद्भूतेति।** तर्हि समुदायस्यैव संज्ञा स्यात् नावयवानाम्; अत आह—**तस्य चेति॥** ननु गणपाठ एव समुदायस्य संज्ञाऽस्तु; अत आह—**कार्येति।** प्रयुक्तशब्दानामन्वाख्यानाय संज्ञा क्रियते, [1]नादृष्टाधानायेति भावः। उपलक्षणस्यापि सर्वशब्दस्य संज्ञान्वये दृष्टान्तमाह—**यथेति।** देवदत्तशालायां ये ब्राह्मणास्ते आनीयन्तामित्यर्थः। अत्रापि समुदायस्थानां संज्ञेति सर्वशब्दस्यापि भवतीत्याशयः॥

**भा:—इह सर्वनामानीति 'पूर्वपदात्संज्ञायामगः' इति णत्वं प्राप्नोति तस्य प्रतिषेधो वक्तव्यः।**

**॥ वा ॥ सर्वनामसंज्ञायां निपातनाण्णत्वाभावः ॥**

---

(१) क· नादृष्टार्थाय

भा :—सर्वनामसंज्ञायां निपातनाण्णत्वं न भविष्यति। किमेतन्निपातनं नाम? अथ कः प्रतिषेधो नाम? अविशेषेण किञ्चिदुक्त्वा विशेषेण 'न' इत्युच्यते, तत्र व्यक्तमाचार्यस्याभिप्रायो गम्यते 'इदं न भवति' इति। निपातनमप्येवंजातीयकमेव। अविशेषेण णत्वमुक्त्वा विशेषेण निपातनं क्रियते। तत्र व्यक्तमाचार्यस्याभिप्रायो गम्यते 'इदं न भवति' इति। ननु च निपातनाच्चाणत्वं स्यात्, यथाप्राप्तं च णत्वम्। किमन्येऽप्येवं विधयो भवन्ति। इह 'इको यणचि' इति वचनात् यण् स्यात्। यथाप्राप्तश्चेक् श्रूयेत। नैष दोषः। अस्त्यत्र विशेषः। षष्ठ्यात्र निर्देशः क्रियते। षष्ठी च पुनः स्थानिनं निवर्तयति।

इह तर्हि 'कर्तरि शप्' 'दिवादिभ्यः श्यन्' इति वचनाच्च श्यन् स्यात्। यथाप्राप्तश्च शप् श्रूयेत। नैष दोषः। शबादेशाः श्यन्नादयः करिष्यन्ते। तत् तर्हि शपो ग्रहणं कर्तव्यम्। न कर्तव्यम्। प्रकृतमनुवर्तते। क्व प्रकृतम्? 'कर्तरि शप्' इति। तद्वै प्रथमानिर्दिष्टम्। षष्ठीनिर्दिष्टेन चेहार्थः। दिवादिभ्य इत्येषा पञ्चमी शबिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति 'तस्मादित्युत्तरस्य' इति। प्रत्ययविधिरयम्। न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति। नायं प्रत्ययविधिः। विहितः प्रत्ययः। प्रकृतश्चानुवर्तते। इह तर्हि 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इति वचनाच्चाकच् स्यात् यथाप्राप्तश्च कः श्रूयेत। नैष दोषः, नाप्राप्ते हि केऽकजारभ्यते स बाधको भविष्यति।

निपातनमप्येवंजातीयकमेव। नाप्राप्ते णत्वे निपातनमारभ्यते। तद्बाधकं भविष्यति। यदि तर्हि निपातनान्यप्येवं जातीयकानि भवन्ति समस्तते दोषो भवति। इहान्ये वैयाकरणाः समस्तते विभाषालोपमारभन्ते 'समो हिततततयोर्वा' इति सततं, संततं, सहितं, संहितमिति। इह पुनर्भवान् निपातनाच्च लोपमिच्छति 'अपरस्पराः क्रियासातत्ये' इति, यथाप्राप्तश्चालोपं 'सततम्' इति। एतन्न सिध्यति। कर्तव्योऽत्र यत्नः। बाधकान्येव हि निपातनानि भवन्ति।

प्र :—**णत्वं प्राप्नोतीति।** राजपुरुषादिवत् संज्ञाशब्दा अपि शास्त्रप्रक्रियायां सन्तमसन्तं वाक्यवार्थमाश्रित्य व्युत्पाद्यन्त इति णत्वप्रसङ्गः। प्रयोगे च सणत्वा अणत्वाश्च नित्या एव शब्दाः। तत्र संज्ञायां सणत्वा एव साधवोऽसंज्ञायां त्वणत्वा एवेति शास्त्रव्यापाराण्णत्वं प्राप्नोत्येव। सर्वार्थाभिधानयोग्यशब्दस्य शक्तिनियममात्रं संज्ञाकरणमिति शब्दार्थसम्बन्धनित्यत्वस्यापि न विरोधः। **निपातनादिति;** लोकेऽप्ययं णत्वरहित एव प्रयुज्यते। तस्यात्र प्रसङ्गेन साधुत्वं प्रतिपाद्यते। **किमेतदिति।** भवत्वस्य साधुत्वं णत्वप्रतिषेधे त्वस्य तात्पर्याभावाद्विकल्पः प्राप्नोतीति भावः। इतरः प्रतिषेधेन साम्यं प्रतिपादयितुं पर्यनुयुङ्क्ते **अथ क इति।** सर्वत्रैव ह्यप्राप्त्यनुमानं बाधः। निपातनं चापि णत्वप्राप्त्यनुमानमिति भावः। **ननु चेति।** प्रतिषेधस्य निवृत्तावेव तात्पर्यम्। निपातनस्य तु तद्रूपसाधुत्वप्रतिपादने न तु रूपान्तरनिवृत्ताविति भावः।

**इको यणचीति।** यणो हि साधुत्वं प्रतिपाद्यते न [१]त्विग्निवृत्तिरित्यर्थः। **षष्ठ्यात्रेति।** ततश्च संहिताविषये स्वाभाविकोऽप्रयोग इकः षष्ठीनिर्देशेन प्रतिपाद्यते यथा दर्भाणां स्थाने शरैः प्रस्तरितव्यमिति न तत्र दर्भाः प्रस्तीर्यन्ते **इह तर्हीति।** विकल्पः प्राप्नोतीति भावः। समुच्चयस्तु न भवति, एकेन परदेशस्यावष्टब्धत्वात् धातुसार्वधातुकयोश्चार्थाभिधाने एकेनैव साहायकस्य संपादनात्। **शबादेशा इति।** श्यनश्च नित्करणं ज्ञापकं स्थानिवद्भावाभावस्य। तेन करोतीत्युप्रत्ययस्यापित्त्वादनुदात्तत्वं न भवति। कुर्वतीत्यत्र शप्श्यनोर्नित्यमिति नुमागमो न भवति। आदित्यधिकाराद्वा। रुधादिभ्यः श्नमित्यत्र रुधादीनां श्रुतत्वात्तेषामेवान्त्यादचः परः श्नं भवति, न तु शपः परः। यथा च 'भ्रस्जो रोपधयो रमन्यतरस्याम्' इति रमागमो रोपधयोर्निवर्तकः, एवं शपः श्नम्। **इह तर्हीति।** देशभेदाद्विरोधाभावेऽपि काकचोरेकार्थत्वाद्विकल्प एव चोद्यते न समुच्चयः। **कर्तव्योऽत्र यत्न इति।** 'लुम्पेदवश्यम' इत्ययं श्लोकोऽन्यार्थमवश्यं पठितव्यस्तेनैव सततं, सन्ततमिति च सिध्यति। न तु निपातनेनेत्यर्थः। सान्तत्यमिति चानभिधानात् ष्यञन्तस्य प्रयोगाभावः। पुराणशब्देन पुरातनशब्दस्य बाधः प्राप्तः पृषोदरादित्वान्न भवति।

उ :—ननु सर्वनामशब्दस्य व्युत्पन्नत्वे वक्ष्यमाणसंज्ञाप्रतिषेधानुपपत्तिरन्वर्थतयैव तन्निरासात्। अव्युत्पन्नत्वे पूर्वपदाभावात् णत्वाप्रसङ्गः; अत आह—**राजेति।**

---

(१) स्थानिनिवृत्तिरिति उद्द्योतनपाठः

सिद्धान्तेऽन्वर्थत्वाङ्गीकारात् सन्तं पूर्वपक्षेऽसन्तम् ।शब्दनित्यत्वविरोधादसतो ग्रहणयोग्दान-मयुक्तम् ; अत आह—**प्रयोग इति ।** ननु संज्ञा चेत्कृत्रिमत्वाच्छब्दार्थसबन्ध-स्यानित्यत्वप्रसङ्गः, असंज्ञा चेन्न णत्वप्रसङ्गः ; अत आह—**सर्वेति ।** ननु सौत्रोऽयं निर्देश इत्येव परिहारः कुतो नोक्तः ; अत आह—**लोक इति ॥** भाष्ये वक्ष्यमाणशङ्काभिप्रायमाह—**भवत्विति ।** प्रतिषेधपर्यनुयोगस्यानुत्तरत्वं परिहरति—**इतर इति ।** साम्यमेवाह—**सर्वत्रेति । निपातनमपीति ।** णत्वतद-भावयोरेकत्र विरोधादिति भावः । प्रतिषेधवैलक्षण्यमाह—**प्रतिषेधस्य इति । निवृत्तावेव ;** अप्रसक्तिप्रतिपादन एव । **निपातनस्य त्विति ।** प्रयोगभेदेन भावाभावयोरविरोधयोरिति भावः । प्रतिपादने निवृत्तावित्युभयत्र तात्पर्यमित्यस्यानु-षङ्गः । **न त्विति ।** निवृत्तिबोधकाभावादित्यर्थः । **स्थानिनो निवृत्तिः ;** स्थानिबुद्धेः निवृत्तिः । सा च शाकलाभावपक्षे क्रियते इत्याह—[1]**न तत्रेति ।** किं-तु तत्प्रसङ्गे तानपहाय शरा एव प्रतीयन्ते इत्यर्थः ॥

तर्हि षष्ठ्यभावस्थले उत्सर्गस्यापि साधुत्वं स्यादित्याह—भाष्ये—**तर्हीति ।** [2]तत्रोभयोर्युगपद्धातुपरत्वासंभवाद्विकल्प अभिप्रेत इत्याह—**विकल्प इति ।** ननु पर इति पूर्वमध्यनिवृत्त्यर्थम् । सार्वधातुक इति च विषयसप्तमी । तथा च विकरणद्वयसमुच्चये बाधकाभावे ; अत आह—**धात्विति ।** साहायकं सहायत्वम् । 'योपधाद् गुरूपोत्तमाद् वुञ्' । विकरणानां निरर्थकत्वात् सहायमात्रत्वम् । तदेकस्यैव लाघवाद्युक्तमिति भावः । ननु श्यनादेः शबादेशत्वे स्थानिवद्भावेन पित्त्वं स्यात् । तथा चोप्रत्ययस्यानुदात्तत्वं स्याद् ; अत आह—**श्यन इति ।** श्यनो नित्वं प्रकृत्याद्युदात्तार्थं क्रियते । स्थानिवद्भावेन श्यनः पित्त्वादनुदात्तत्वे ततः परस्य लसार्वधातुकस्वरेणानुदात्तत्वे धातुस्वरेणैवाद्यु-दात्तत्वसिद्धेर्दिवादावनेकाचो धातोरभावेनानिष्टाभावान्नित्करणं व्यर्थं सत् स्थानिवद्भावाभावं गमयतीत्यर्थः । [3]क्वचिच्छ्यनः शित्करणमिति पाठः । तत्र स्थानिवद्भावेऽपि शिदेव न पिदिति नियमार्थत्वसंभवात् स्थानिवद्भावाभावस्याज्ञापकमिति वक्तुं शक्यत्वात् नित्करण-मित्येव पाठः सम्यगित्याहुः । ज्ञापनस्य प्रयोजनमाह—**तेनेति ।** प्रयोजनान्तर-माह—**कुर्वतीति ।** स्थानिवत्वाभावेनेत्यर्थः । नुमभावे हेत्वन्तरमाह—**आदिति ।**

(१) क. ततश्चेति । न तत्रेति (२) क. अत्र
(३) क. क्वचित्तु

सिद्धान्ते शप्श्यनोरित्यत्राऽदिति नाऽनुवर्तनीयमव्यभिचारात्; आदेशपक्षे उपत्ययनिवृत्तये आच्छीनद्योरित्यत आदित्यनुवर्तनीयमिति भावः। ननु रुधादिभ्य इति पञ्चम्या शबित्यत्य शप इति षष्ठीप्रकल्पनात् शपः परः श्नम् स्यात्; अत आह—**रुधादिभ्य इति।** सार्वधातुक इति सप्तमी रुधादिभ्य इति पञ्चम्याः षष्ठीं प्रकल्पयिष्यतीति आगमान्वययोग्यषष्ठ्यभावो न शङ्कनीयः। श्नान्नलोप इति श्नादुत्तरस्याङ्गावयवनकारस्य लोपविधानं रुधादीनामागमेऽपि लिङ्गमित्याहुः। तर्हि शपः श्रवणं न कुतः; अत आह—**यथेति।** शप इति; षष्ठीप्रकल्पनेन तत्प्रसङ्गे श्नमो विधानादित्यर्थः॥ **एकेति।** एकेनैवाज्ञाताद्यर्थस्य द्योतनसंभवादित्यर्थः। भाष्ये—**समस्तते;** समः परे ततशब्दे। भाष्ये—**यथाप्राप्तंचालोपं;** [1]भवानिच्छतीन्यनुषङ्गः। **न तु निपातनेनेति।** निपातस्याबाधकत्वेनेत्यर्थः। तर्हि सान्तत्यमितिवत् सातत्यमित्यपि स्याद्; अत आह—**सान्तत्यमिति।** तर्हि पुराशब्दादव्ययात् सायंचिरमिति टयुट्युलोरन्यतरस्मिन् पुरातनमिति भवति। पुराणप्रोक्तेष्विति निपातनात् तन्न स्याद्; अत आह—**पुराणेति।**

**॥ वा ॥ संज्ञोपसर्जनप्रतिषेधः ॥**

**भाः—संज्ञोपसर्जनीभूतानां सर्वादीनां प्रतिषेधो वक्तव्यः। सर्वो नाम कश्चित् तस्मै सर्वाय देहि। अतिसर्वाय देहि। स कथं कर्तव्यः?**

**॥ वा ॥ पाठात्पर्युदासः पठितानां संज्ञाकरणम् ॥**

**भाः—पाठादेव पर्युदासः कर्तव्यः। शुद्धानां पठितानां संज्ञा कर्तव्या। सर्वादीनि सर्वनामसंज्ञानि भवन्ति, संज्ञोपसर्जनीभूतानि न सर्वादीनि। किमविशेषेण? नेत्याह। विशेषेण च। किं प्रयोजनम्?**

**॥ वा ॥ सर्वाद्यानन्तर्यकार्यार्थम् ॥**

**भाः—सर्वादीनामानन्तर्येण यदुच्यते कार्यं तदपि संज्ञोपसर्जनीभूतानां मा भूदिति। किं प्रयोजनम्?**

**॥ वा ॥ प्रयोजनं डतरादीनामद्ड्भावे ॥**

---

(१) क. भवानित्यनुषङ्गः

**भा :—डतरादीनामद्ड्भावे प्रयोजनम् । अतिक्रान्तमिदं ब्राह्मणकुलं कतरद् अतिकतरं ब्राह्मणकुलमिति ।**

**॥ वा ॥ त्यदादिविधौ च ॥**

**भा :—त्यदादिविधौ च प्रयोजनम् । अतिक्रान्तोऽयं ब्राह्मणः तं अतितत् ब्राह्मण इति ।**

प्र :—संज्ञोपसर्जनीभूतानामिति । ये विषयान्तरे दृष्टास्त एवेमामवस्थां प्राप्ता इति विवक्षया च्विप्रत्ययनिर्देशः । **सर्वाय देहीति ।** 'पदकार्येषु गौणमुख्यन्यायो, न तु प्रातिपदिककार्येषु' इति शब्दाश्रये च वृद्ध्यात्वे इत्यत्रोक्तमिति प्रसिद्ध्यप्रसिद्धिवशात् संभवन्नपीह स नोक्तः । 'समासकृत्तद्धिताव्ययसर्वनामासर्वलिङ्गा जातिरेकद्रव्योपनिवेशिनी संज्ञा' इत्येतदनपेक्ष्य संज्ञाप्रतिषेधः । तत्र ह्यपेक्षिते परया पूर्वा संज्ञा बाध्यत इति संज्ञासंज्ञया सर्वनामसंज्ञाया बाधनात्प्रसङ्गाभावः । **अतिसर्वायेति ।** प्रादिसमासोऽयं, बहुव्रीहौ संज्ञाप्रतिषेधात् । 'प्रयोजनं सर्वनामाव्ययसंज्ञायाम्' इति तदन्तविधिः [1]परमसर्वस्मा इत्याद्यर्थ आश्रितः । **पाठादिति ।** यथा तिङो गोत्रादीनीत्यत्र कुत्सनाभीक्ष्ण्यग्रहणं गोत्रादिपाठविशेषणं तथेहापि सर्वादिसन्निवेशो विशेष्यते—असंज्ञोपसर्जनानि सर्वादीनि गणसन्निविष्टानि नान्यानीत्यर्थः । **किमविशेषेणेति ।** किं यत् सर्वेषां सर्वादीनां [2]कार्यं तदर्थमेवेति प्रश्नः । **विशेषेण चेति ।** [3]चशब्दादविशेषेणेत्यर्थः । यद् गणपाठोपलक्षितं विशिष्टं कार्यं 'त्यादादीनामः' 'अद्ड्डुतरादिभ्यः' इत्यादि तदर्थमपि पाठविशेषणमित्यर्थः । यत्तु कार्यं युष्मदस्मद्भ्यां ङसोऽशित्यादि स्वरूपमात्राश्रयं न सन्निवेशापेक्षं तदविशेषेण भवति । तत्र हि न गणपठितयोर्युष्मदस्मदोर्निर्देशः, अपित्वौणादिकयोः ।

उ :—गणपठितानां संज्ञा । संज्ञोपसर्जनानां ततो भिन्नत्वात् संज्ञा न प्राप्नोतीति प्रतिषेधानर्थक्यमिति शङ्कानिरासाय भाष्ये च्विरध्याहृतः । तमुपपादयति—**य इति । विषयान्तरे**; कात्स्न्र्यार्थे । **इमां** ; संज्ञोपसर्जनावस्थाम् । ननु गौणमुख्यन्यायेनैव संज्ञानिवृत्तिसंभवात् प्रतिषेधो न कर्तव्यः; अत आह—**पदकार्येष्विति ।** संज्ञा च प्रातिपदिककार्यं विभक्त्यनपेक्षत्वादिति भावः । [4]**उक्तमिति ।**

---

(१) क. परमः सपरमसर्वस्मै (२) क. सर्वनामकार्यं
(३) क. चकाराद (४) ख. उक्तमेतदिति

[1]ओदिति सूत्रे उक्तमितीह नोक्त इत्यन्वयः। ननु संज्ञाशब्दस्य गौणत्वाभावेन न्यायस्यासंभव एवानुक्तिबीजम्; अत आह—**प्रसिद्धीति।** मुख्यस्य ग्रहणे शीघ्र[2]प्रतीतिर्हेतुः, गौणत्यागे विलम्बितप्रतीतिः, न तु गौणत्वं मुख्यत्वं वा न्याये प्रविष्टम्। अत्रापि कार्त्स्न्याद्यर्थस्य पूर्वं प्रतीतिः संज्ञार्थस्य पश्चादिति स न्यायोऽत्रापि संभवत्येवेत्यर्थः। कृत्रिमत्वात् संज्ञार्थ एव पूर्वं प्रतीयत इति गौणमुख्यन्यायोऽत्र न संभवतीत्याहुः। आकडारसूत्रे वक्ष्यमाणप्रकाराश्रयणे संज्ञाप्रतिषेधो व्यर्थ इत्याह—**समासेति।** अनेन क्रमेणैताः संज्ञाः एकसंज्ञाधिकारे कर्तव्या इति वक्ष्यते। **तत्र**; तस्मिन्। ननु 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति प्रादिसमासेऽप्युपसर्जनत्वम्। अतिक्रान्तं सर्वं येनेति बहुव्रीहावपि। तत्र कोऽयं समासः; अत आह—**प्रादीति।** [3]**बहिति।** 'न बहुव्रीहौ' इत्यनेन। तथा चानेन निषेधवैयर्थ्यमित्यर्थः। ननु विशेष्यासन्निधानेन तदन्तविध्यभावात् कथमतिसर्वशब्दे संज्ञाप्रसक्तिः; अत आह—**प्रयोजनमिति॥** वाक्यभेदेन पाठविशेषणत्वं सदृष्टान्तमाह—**यथेति।** तत्र पाठविशेषणप्रयोजनं चनचिदिवगोत्रादीत्यत्र गोत्रादेः कुत्सनाभीक्ष्ण्ययोरेव कार्यं नान्यत्रेति। किमविशेषेणेत्यस्य सर्वादिषु मध्ये विशेषानाश्रयणेन, सर्वेषामेवेति यावदित्यर्थश्चेन्नेत्याह—**विशेषेण चेति।** निषिद्धस्यैव चकारेणानुकर्षणं विरुद्धं विशेषेणेत्युक्तेः वैयर्थ्यं च; अतोऽन्यथा व्याचष्टे—**किमिति॥** भाष्ये अविशेषेणेत्यत्रान्तर्गणो विशेषशब्दार्थः। तथा चान्तर्गणानाश्रयणे[4] विधीयमानकार्याय किं पाठात्पर्युदास इति भाष्यार्थः। **सर्वेषामिति।** सर्वनामशब्दोच्चारणेन यत्कार्यं तदर्थमित्यर्थः॥ स्मायादीनामप्युमादिष्वभावेन सर्वादीनां सर्वेषामभावाद्विशेषेणेत्येतद्विवृणोति—**यदिति।** [5]**सन्निवेशेति।** सर्वादिगणसन्निवेशानपेक्षमित्यर्थः। **अविशेषेणेति।** उपसर्जनेऽपीत्यर्थः। संज्ञायां तु स्वरूपाश्रितमपि कार्यं न भवति। डित्थादिवद्युष्मदस्मदोः कस्यचित्संज्ञात्वे त्वमाद्यादेशायोगात्। तत्राप्यादेशोऽङ्गीक्रियते इत्याह—**तत्र हीति।** न गणपठितत्वाकारेणेत्यर्थः॥ भाष्ये **सर्वाद्यानन्तर्यकार्यार्थमिति।** सर्वादिषु यः क्रमस्तदपेक्षया यत् कार्यं तदर्थमित्यर्थः।

---

(१) क. ओत्सूत्रे (२) क. प्रतिपत्तिः
(३) क. बहुव्रीहीति (४) क. येण
(५) क. न संनिवेशेति

भा :—संज्ञाप्रतिषेधस्तावन्न वक्तव्यः। उपरिष्टाद्योगविभागः करिष्यते 'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायाम्'। ततः 'असंज्ञायाम्' इति। सर्वादीनीत्येवं यान्यनुक्रान्तानि, असंज्ञायां तानि द्रष्टव्यानि।

उपसर्जनप्रतिषेधश्च न कर्तव्यः। 'अनुपसर्जनात्' इत्येष योगः प्रत्याख्यायते। तमेवमभिसंभन्त्स्यामः अनुपसर्जन अ अत्' इति। किमिदं अ अदिति। अकारात्कारौ शिष्यमाणावनुपसर्जनस्य द्रष्टव्यौ। यद्येवम् 'अतियुष्मद्, अत्यस्मद्' इति न सिध्यति। प्रश्लिष्टनिर्देशोऽयम् 'अनुपसर्जन अ अ अदिति। अकाराद् अकारात्कारौ शिष्यमाणावनुपसर्जनस्य द्रष्टव्यौ। अथवा अङ्गाधिकारे यदुच्यते, गृह्यमाणविभक्तेस्तद्भवति। यद्येवं परमपञ्च, परमसप्त 'षड्भ्यो लुक्' इति लुक् न प्राप्नोति। नैष दोषः। षट्प्रधान एष समासः। इह तर्हि 'प्रियसक्थ्ना ब्राह्मणेन' अनङ् न प्राप्नोति। सप्तमीनिर्दिष्टे यदुच्यते, प्रकृतविभक्तौ तद्भवति। यद्येवम्, 'अतितद्, अतितदौ, अतितदः' इति अत्वं प्राप्नोति। तत्रापि वक्तव्यम्। न वक्तव्यम्। इह तावत् 'अद्ड्डतरादिभ्यः पञ्चभ्यः' इति पञ्चमी, अङ्गस्येति षष्ठी, तत्राशक्यं विभिन्नविभक्तित्वात् डतरादिभ्य इति पञ्चम्याङ्गं विशेषयितुम्। तत्र किमन्यच्छक्यं विशेषयितुमन्यदतो विहितात् प्रत्ययात् डतरादिभ्यो यो विहित इति।

इहेदानीम् 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' इति त्यदादीनामो भवतीति। अस्थ्यादीनामित्येषा षष्ठी, अङ्गस्येत्यपि। त्यदादीनामित्यपि षष्ठी, अङ्गस्येत्यपि। तत्र कामचारः गृह्यमाणेन वा विभक्तिं विशेषयितुमङ्गेन वा। यावता कामचारः। इह तावत् 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' इत्यङ्गेन विभक्तिं विशेषयिष्यामः, अस्थ्यादिभिरनङम् 'अङ्गस्य विभक्तावनङ् भवति, अस्थ्यादीनामिति। इहेदानीं त्यदादीनामो भवतीति गृह्यमाणेन विभक्तिं विशेषयिष्यामः, अङ्गेनाकारम्। त्यदादीनां

**विभक्तावो भवति अङ्गस्येति। यद्येवम् 'अतिसः' अत्वं न प्राप्नोति। नैष दोषः। त्यदादिप्रधान एष समासः।**

प्रः—**अनुपसर्जनादिति।** ननु प्रधानेन तदन्तविध्यर्थो योग आरब्धव्यः कौम्भकारेय इति यथा स्यादिति। न चाणिति कृद्ग्रहणं, तद्धितोऽप्यणस्तीति। नैतदस्ति। 'स्त्रीप्रत्यये चानुपसर्जनेन इति' तदादिनियमाभावात् कारशब्दादपि ङीपि कुम्भकारीशब्दात् 'स्त्रीभ्यो ढक्' इति ढक् भविष्यति। **अनुपसर्जन अ अदिति।** 'सुपां सुलुगि'ति षष्ठ्या लुक्। **अ अ अदिति।** अकारेणाकारात्कारौ विशेष्येते। अकारात् परौ यावकारात्कारौ तावनुपसर्जनस्येत्यर्थः। 'पञ्चम्या अत्' इत्ययं तु युष्मदस्मद्भ्यामनकारान्ताभ्यां विधीयते इति परिभाषानुपस्थानादुपसर्जनाभ्यामपि भवति। 'त्यदादीनामः' इत्ययम[1]कारात् परस्य हलः स्थाने विधीयत इति अकारात्परोऽकारो भवतीति परिभाषोपस्थानादतितदित्यत्र न भवति। एवं तु प्रियौ द्वौ अस्येति बहुव्रीहौ कृते अकारान्तादविधानात् परिभाषानुपस्थानादत्वं प्राप्नोति। तदोस्स साविति च सत्वमविशेषितमित्युपसर्जनस्यापि प्राप्नोति। [2]अत्रायं समाधिः। 'त्यदादीनामः' इत्यत्र त्यदादिषु परिभाषोपस्थानादनुपसर्जनानां तेषां ग्रहणम्। तत्साहचर्यात् द्विशब्दोऽपि तथाविध एव गृह्यते। सत्वविधौ च तथाविधानामेवानुवृत्तिरित्यत्रापि न दोषः। अतिसर्वायेत्यादौ त्वविशेषकार्यमपरिहृतमेव। **गृह्यमाणविभक्तेरिति।** गृह्यमाणानां त्यदादीनां डतरादीनां च स्वार्थद्वारेण सम्बन्धिनी या विभक्तिस्तदर्थगतसंख्याकर्मादिवाचिनी तस्या इत्यर्थः। **यद्येवमिति।** गृह्यमाणाद् विहिता या विभक्तिरित्येवं संबन्धं मन्वानस्य प्रश्नः। आर्थः सम्बन्धोऽत्र [3]गृहीत इत्युत्तरेऽभिप्रायः। यद्येवं पञ्चकाः शकुनयः इति कनः स्वार्थिकत्वाज्जसो लुक् प्राप्नोति। उच्यते। कनि कृते शब्दान्तरत्वान्नान्तत्वाभावान्नायं षट्संज्ञक इत्यदोषः। 'युष्मदस्मद्भ्यां ङसोऽश्' इत्यत्र त्वङ्गेन विभक्तिर्विशेष्यत इत्युपसर्जनाभ्यामपि सिध्यति। **प्रियसक्थ्नेति।** सक्थिशब्दश्शकटावयववचनोऽत्रेति 'बहुव्रीहौ सक्थ्यक्ष्णोः' इति समासान्तो न कृतः। **प्रकृतविभक्ताविति।** अङ्गार्थसम्बन्धिन्यां विभक्तावित्यर्थः। **तत्रापीति।** गृह्यमाणविभक्तेरिति सप्तमीनिर्दिष्टे यदुच्यते इति च। **डतरादिभ्यो यो विहित इति;** अर्थद्वारकं विधानमाश्रयितव्यम्। तेन परमकतरदित्यत्रापि भवति। 'युष्मद्-

(१) क. मकारान्तात् (२) मु. पु. तत्र
(३) क. गृह्यते

स्मद्भ्यां ङसोऽश्’ इत्यत्र तु प्रकरणे अङ्गेन विभक्तिर्विशेष्यते अर्थद्वारेण। युष्मदस्मद्भ्यां तु परत्वमात्रेणेत्यतियुष्मदित्यादावपि कार्यं भवति। **अतिस इति।** शोभनः स इति प्रादिसमासः। नञ्समासेऽप्यसः, अषट्, अकतरद्, इति भवति।

उ:—स्वस्थाने प्रयोजनाभावात् अन्यत्र प्रयोजनमिति वक्तुं प्रत्याख्यायत इत्युक्तम्। तदाक्षिपति—**नन्विति॥** येन विधिरिति सूत्रे ‘समासप्रत्ययविधौ प्रतिषेधः’ इति तदन्तविधिप्रतिषेधात् प्रत्ययग्रहणपरिभाषया प्रकृतिप्रत्ययसमुदायादेव स्त्रीप्रत्ययः, न तु तदन्तात्। अनुपसर्जनाधिकारे तु तदन्तविधिज्ञापनात्तदन्तात् प्रत्ययाः सिद्धयन्तीति भावः। यद्यपि तदन्तविधिमात्रं ज्ञाप्यते तथाप्युपसर्जनप्रतिषेधात्प्रधान एव पर्यवस्यतीति प्रधानेनेत्युक्तम्। प्रधानेन तदन्तविधौ प्रयोजनमाह—**कौम्भकारेय इति।** अत्र तदन्तविध्यभावे अणो ङीब् विधीयमानोऽणन्तात्कारशब्दादेव स्यात्। तथा च ‘स्त्रीभ्यो ढक्’ इति स्त्रीप्रत्ययान्तेभ्यो विधीयमानो ढक् कारीशब्दादेव स्यात्। तथा च कुम्भशब्दस्यादिवृद्धिर्न स्यात्। तदन्तविधौ तु कारशब्दान्तात् कुम्भकारशब्दादेव ङीबिति ढगपि तस्मादेवेति कौम्भकारेय इति सिद्धयतीति भावः। ननु टिड्ढाणञित्यत्र कर्मण्यणः कृतो ग्रहणात् कृद्ग्रहणे गतिकारकपूर्वस्यापीति परिभाषया कुम्भकारशब्दादेव ङीप् स्यादिति कौम्भकारेयः सिद्धयति; अत आह—**न चेति। तद्धित इति;** ‘प्राग्दीव्यतोऽण्’ इत्यादिः। कृन्मात्रग्रहणे [१]च कृद्ग्रहणपरिभाषेति भावः। परिहरति—**नेति।** अनुपसर्जने स्त्रीप्रत्यये तदादिनियमो नास्तीति कारशब्दादपि ङीपि कुम्भकारीशब्दाड्ढक् भवतीत्यर्थः। प्रथमभक्षवत्समासेऽकारात्कारानुवादेनानुपसर्जनस्येति नियमविधिर्न संभवतीत्यत आह—**सुपामिति।** ‘त्यदादीनामः’, ‘अद्ड्डतरादिभ्यः’ इति द्वयमनुपसर्जनस्यैवेति नियम्यत इत्यर्थः॥ भाष्ये—**अतियुष्मदिति।** ‘पञ्चम्या अत्’ इत्यत् उपसर्जनान्न स्यादित्यर्थः। **अकारेणेति।** अश्च अच्चेति समाहारद्वन्द्वः। पश्चादस्यादिति षष्ठीसमासः। भाष्यप्रदीपाभ्यां तात्पर्यार्थ उक्तः। विशेष्यासन्निधानेन तदन्तविधेरभावात् पञ्चमीसमासे लक्षणाभावादित्याह—**विधीयत इति।** विधानोत्तरकालमपि नाकारात्परोऽत्कारः, शेषेलोपस्य टिलोपत्वादित्याहुः। अतिप्रसङ्गं शङ्कते—**एवमिति।** प्रियद्विरितीष्यते प्रियद्व इति स्यादिति भावः। **परिभाषा;** अनुपसर्जनादिति परिभाषा।

---

(१) क. एव.

अतिप्रसङ्गान्तरमाह—**तदोरिति । अविशेषितम् ;** अकारात्परत्वेन । असंभवादिति भावः । परिहरति—**अत्रेति । साहचर्यादिति ।** त्यदादीनां द्विशब्दपर्यन्तानामकारविधानादित्यर्थः । द्वितीयदोषं निराह—**सत्वविधाविति । तथाविधानाम् ;** अत्वविधौ गृहीतानामनुपसर्जनानामेव । अपरिहार्यं दोषान्तरमाह—**अतिसर्वायेति ।** अकारात्कारयोरेव अनुपसर्जनस्यैवेति नियमो न स्मायादेरिति भावः । **अपरिहृतमेवेति ।** एतदपरितोषादेव अथवेति भाष्यमिति भावः । [1]अर्थद्वारेण गृह्यमाणविभक्त्योः संबन्धमादाय षष्ठीसमास इत्याह—**गृह्यमाणानामिति । विभक्तेरिति ;** संबन्धसामान्ये षष्ठी । तेन विभक्तौ परतोऽत्वमपि गृह्यते । स्वव्याख्याने शङ्कानुपपत्तेराह—**गृह्यमाणादिति ॥** षड्भ्य इति व्यत्ययेन षष्ठीस्थाने पञ्चमीति मन्वानः चोदयति—**यदीति ;** पञ्चमीति समाधानाभिप्रायः । **कन इति ;** 'संख्यायाः संज्ञासंघसूत्राध्ययनेषु' इत्यनेन संज्ञायां विहितस्य स्वार्थिकत्वमित्यर्थः । **अङ्गेनेति ।** अर्थद्वाराङ्गसंबन्धी यो ङस् युष्मदस्मद्भ्यां परस्तस्य अश् विधीयत इति उपसर्जनाभ्यामपि भवतीत्यर्थः । 'युष्मदस्मदोरनादेशे' इत्यादावपि युष्मदस्मदोर्या विभक्तिरिति न विशेष्यते किन्त्वङ्गेनैव । तथा च गृह्यमाणेन विभक्तेरविशेषितत्वादुपसर्जनत्वेऽपि तयोरत्वादि भवतीति ज्ञेयम् । ननु प्रियसक्थ्नेत्ययुक्तम्, समासान्तेन षचा भाव्यम् ; अत आह—**शकटेति ।** शकटावयवस्य स्वाङ्गत्वाभावान्न समासान्तप्रसङ्ग इत्यर्थः । प्रकृतशब्देनाङ्गं विवक्षितमित्याह—**अङ्गार्थेति ॥** तच्चापीत्यत्र परोक्षवाचिना तच्छब्देन व्यवहितनिर्देशः । चकारेण सन्निहितस्येत्याह—**गृह्यमाणेति ॥** सन्निधानात् डतराद्यर्थगतसंख्याद्यभिधानाय यो विहित इति लभ्यते इत्यभिप्रेत्याह—**अर्थद्वारकमिति ।** [2]अशादीनामुपसर्जनेऽपि प्राप्तिमुक्तामेव विशदयति—**युष्मदिति ।** प्रकरणग्रहणमात्व[3]यत्वसंग्रहार्थम् ॥ नन्वतिस इत्यत्र अतिसर्वायेतिवत्प्राधान्याभावादत्त्वं न प्राप्नोति ; अत आह—**शोभन इति ।** अतिशब्दः पूजार्थः नातिक्रान्तार्थः । तथा च 'प्रादयो गताद्यर्थे प्रथमया' इति समास इत्यर्थः । नञ्समासेऽप्युत्तरपदार्थप्राधान्याद्त्वादिकं भवतीत्याह—**नञ्समासेऽपीति । अषडिति ;** अत्र 'षड्भ्यो लुक्' । कार्यानुरोधेन क्वचिदङ्गेनार्थद्वारा विभक्तिर्विशेष्यते क्वचिद् गृह्यमाणेनेति समुदायतात्पर्यम् ॥

---

(१) क. अर्थद्वारा. (२) क. अशादीनमपि

(३) क. आत्वयत्वादि

भा :—अथवा नेदं संज्ञाकरणम् पाठविशेषणमिदम् 'सर्वेषां यानि नामानि तानि [1]सर्वादीनि। संज्ञोपसर्जने च विशेषेऽवतिष्ठेते। यद्येवं संज्ञाश्रयं यत् कार्यं तन्न सिध्यति 'सर्वनाम्नः स्मै' 'आमि सर्वनाम्नः सुट्' इति। अन्वर्थग्रहणं तत्र विज्ञास्यते। सर्वेषां यन्नाम तत् सर्वनाम। सर्वनाम्न उत्तरस्य ङेः स्मै भवति। सर्वनाम्नः उत्तरस्यामः सुट् भवति। यद्येवं, सकलं कृत्स्नं जगत् इत्यत्रापि प्राप्नोति। एतेषां चापि शब्दानामेकैकस्य स स विषयः तस्मिंस्तस्मिन् विषये यो यः शब्दो वर्तते, तस्य तस्य तस्मिन् तस्मिन् वर्तमानस्य सर्वनामकार्यं प्राप्नोति।

एवं तर्ह्युभयमनेन क्रियते 'पाठश्चैव विशेष्यते, संज्ञा च'। कथं पुनरेकेन यत्नेनोभयं लभ्यम्। लभ्यमित्याह। कथं? एकशेषनिर्देशात्। एकशेषनिर्देशोऽयम्। सर्वादीनि च सर्वादीनि च सर्वादीनि। सर्वनामानि च सर्वनामानि च सर्वनामानि। सर्वादीनि सर्वनामसंज्ञानि भवन्ति। सर्वेषां यानि च नामानि तानि सर्वादीनि। संज्ञोपसर्जने च विशेषेऽवतिष्ठेते।

अथवा महतीयं संज्ञा क्रियते। संज्ञा च नाम यतो न लघीयः। कुत एतत्? लघ्वर्थं हि संज्ञाकरणम्। तत्र महत्याः [2]संज्ञाया एतत्प्रयोजनम् अन्वर्थसंज्ञा यथा विज्ञायेत सर्वादीनि सर्वनामसंज्ञानि भवन्ति। सर्वेषां नामानीति चातः सर्वनामानि। संज्ञोपसर्जने च विशेषेऽवतिष्ठेते।

प्र :—**सर्वेषां यानीति।** स्वविषयापेक्षया सर्वनामत्वं बोद्धव्यम्। यथा गोत्वादेः स्वविषयापेक्षं सर्वगतत्वं न तु सर्वादीनि परस्परपर्यायतां यान्ति भिन्नार्थत्वात्। **एतेषां चापीति।** ततश्च सर्वस्मिन्नोदन इत्योदनशब्दस्यापि सर्वनामकार्यं प्राप्नोति सामानाधिकरण्यादनयोः। ननु प्रतिनियतवस्तुभागाभिनिवेशित्वाच्छब्दानां सर्वत्वमोदनशब्देन[3] नाभिहितं, ओदनत्वमपि सर्वशब्देनेति कुतोऽयं प्रसङ्गः।

(१) क. सर्वादीनीति (२) क. संज्ञायाः करण
(३) क. हीत्यधिकम

[1]तत्रेदं दर्शनम् । सर्वशब्दोऽपि ओदनार्थावग्रहेण प्रवृत्तः ओदनशब्दोऽपि सर्वशब्दार्थावग्रहेण । प्रतिपत्ता तु केवलात् सर्वशब्दात् विशेषं न प्रतिपद्यते, रूपमादृश्यता । नाप्योदनशब्दादिति तत्प्रतिपत्त्यर्थमुभयोरुपादानम् । तत्रैकस्य सर्वनामकार्यं भवति नापरस्येति प्रमाणाभावादतिप्रसङ्ग उद्भावितः । **एकशेषनिर्देश इति ।** ननु सहविवक्षाया अभावात् कथमेकशेषः । एकशेषफलत्वात् तन्त्रन्याय आवृत्तिर्वैकशेषशब्देनोच्यते । अथवा आकृत्यभिधानपक्षे एकस्यैव प्रयोगे सिद्धे प्रत्याख्यातमेकशेषशास्त्रं संज्ञापरिभाषावच्छास्त्रप्रक्रियासंपादनार्थं भवतीति सहविवक्षामन्तरेणापि भवत्येकशेषः । **संज्ञोपसर्जने चेति ।** यदा सर्वशब्दः संज्ञात्वेन विनियुज्यते तदा प्रसिद्धप्रवृत्तिनिमित्तपरित्यागेन स्वरूपमात्रोपकारी प्रवर्तते इति विशेष एवावतिष्ठते । उपसर्जनमपि जहत्स्वार्थमजहद्वा[2] अतिक्रान्तार्थविशेषणतामापन्नमतिक्रान्तार्थवृत्ति भवति । अत्यतिसर्वायेत्यत्र वाक्ये त्वसंसृष्टार्थत्वात् स्वार्थमात्रं प्रतिपादयतो न विशेषेऽवस्थानम् । **यतो न लघीय इति ।** शब्दव्यवहारो लघुस्ततोऽपि लघीयो नाम । तत्र गुरुसंज्ञाकरणात् सर्वादीनां [3]विशिष्टो धर्मोऽनुमीयते—नूनमेतानि संज्ञाप्रवृत्तिनिमित्तेन सर्वनामत्वेन युक्तानि, यतस्तदनुरूपा तेषां संज्ञा कृतेति सर्वनामकार्यमन्तर्गणकार्यं च सर्वनामत्वयुक्तानामेव भवति । न संज्ञोपसर्जनानाम् ।

उ :—**स्वविषयेति ।** लोकव्यवहारे प्रसिद्धं यत् प्रवृत्तिनिमित्तं कात्स्न्र्यादिकं स स्वविषयः । तत्प्रवृत्तिनिमित्तयुक्तसर्ववाचकत्वमित्यर्थः । **यथेति ।** व्यक्तिसर्वगता जातिरित्यत्र स्वाश्रयत्वयोग्यसर्वव्यक्तिगतत्वं न त्वयोग्यव्यक्तिगतत्वं यथा तथात्रापि प्रवृत्तिनिमित्तापेक्षं सर्वनामत्वमित्यर्थः । एवं व्याख्याने हेतुमाह—**न त्विति ।** भाष्ये—**संज्ञोपसर्जने चेति ।** संज्ञा तावदेकद्रव्यवाचिनीति न सर्वेषां नाम । उपसर्जनमपि पदान्तरार्थवृत्तित्वात् न स्वप्रवृत्तिनिमित्ताश्रयं सर्वनामेत्यर्थः ॥ पाठानपेक्षणे सर्वादिशब्दसमानाधिकृतौदनादिशब्दानामपि सर्वनामकार्यं स्यादित्याह—भाष्ये—**एतेषामिति ;** सर्वादीनामित्यर्थः । भाष्ये—**यो यः शब्दः ;** ओदनादिशब्दः । तदुपपादयति—**ततश्चेति ;** पाठानाश्रयणादित्यर्थः । ओदनशब्दस्य सर्वनामत्वे हेतुमाह—**सामानाधिकरण्यादिति । नन्विति ;** प्रवृत्तिनिमित्तैक्ये शब्दानामर्थैक्यं तद्भेदे तद्भेद इति प्रवृत्तिनिमित्तभेदान्नैकार्थ्यमित्यर्थः । जातिगुणद्रव्यात्मके वस्तुनि

(१) क. अत्र (२) क. हत्स्वार्थवा
(३) क. विशेषी

प्रतिनियता ये भागा जात्यादयः तदभिनिवेशित्वात्तद्वाचकत्वादिति योजना। परिहरति—**तत्रेति।** जातिः पदार्थो, व्यक्तिः पदार्थ इति दर्शनद्वयादिदम्। अन्यद्दर्शनं जातिविशिष्टा व्यक्तिरिति। अत एवाशङ्कायां सर्वत्वमोदनशब्देनेत्युक्तम्। **ओदनार्थो;** द्रव्यरूपः। **अवग्रहः;** क्रोडीकारः। एवमग्रेऽपि। **विशेषम्;** ओदनत्वम्। **रूपेति।** द्रव्यस्वरूपस्य सर्वव्यक्तिसाधारण्यादित्यर्थः। **तत्प्रतिपत्त्यर्थं;** विशेषद्वयप्रतिपत्त्यर्थम्। द्वयोरेकव्यक्तिवाचकत्वेन समानार्थत्वादतिप्रसङ्ग इत्याह—**तत्रेति।** अभिहितान्वयमतेन शङ्का, अन्विताभिधानमतेन परिहार इति केचित्। तच्चिन्त्यम्। अन्वितत्वरूपेणौदनत्वादेः सर्वशब्दवाच्यत्वेऽपि स्वरूपविशेषेणावाच्यतया एकार्थत्वासंभवात्। कथञ्चिदेकार्थवृत्तित्वं व्यक्तिमादायापि संभवतीत्यन्विताभिधानपर्यन्तानुपयोगात् प्रकृते एकशेषमाक्षिपति—**सहेति।**

एकेन गुणेन क्रियया वाऽनेकस्य युगपत्तुल्यवत्संबन्धे या सहविवक्षा सा प्रकृते नास्ति। एकैकस्योद्देश्यविधेयरूपभिन्नार्थपरत्वेनैकरूप्यासंभवादित्यर्थः। भाष्यमुपलक्षणतया व्याचष्टे—**एकशेषेति।** अर्थद्वयविवक्षयैकस्य सकृदुच्चारणं तन्त्रम्। यथाश्रुतमपि न सम्यगित्याह—**अथवेति।** **प्रत्याख्यातम्;** लौकिकप्रयोगोपयोगो नास्तीत्यर्थः। शास्त्रव्यवहारसंपादकत्वात् सहविवक्षा नापेक्षितेत्याह—**संज्ञापरीति।** प्रक्रियासंपादकत्वमात्रे संज्ञादिर्दृष्टान्तः। **स्वरूपेति।** शब्दस्वरूपमात्रेणेतरविलक्षणव्यक्तिप्रतीत्युपयोगीत्यर्थः। **अतिसर्वायेत्यत्रेति।** पूर्वान्वयिसमास एवोपसर्जनस्य विशेषेऽवस्थानं न वाक्य इति तत्र तत्र सर्वनामसंज्ञा भवत्येवेत्याह—**वाक्ये त्विति।** **विशेषे;** अतिक्रान्ताद्यर्थविशेषे॥ ईयसुनमुपपादयति—**शब्देति।** इतरशब्दान्नाम लब्धिति विभज्योपपदे ईयसुनित्यर्थः। **विशिष्टो धर्मः;** धर्मविशेषः। तदनुमानमेवाह—**नूनमिति।** **सर्वनामत्वेन;** सर्वेषां नामत्वेन।

**भा :—अथोभस्य सर्वनामत्वे कोऽर्थः?**

**॥ वा ॥ उभस्य सर्वनामत्वेऽकजर्थः।**

**भा :—उभस्य सर्वनामत्वेऽकजर्थः पाठः क्रियते। उभकौ। किमुच्यतेऽकजर्थ इति। न पुनरन्यान्यपि सर्वनामकार्याणि?**

**॥ वा ॥ अन्याभावो द्विवचनटाब्विषयत्वात्॥**

**भा :—अन्येषां सर्वनामकार्याणामभावः। किं कारणम्? द्विवचनटाब्विषयत्वात्। उभशब्दोऽयं द्विवचनटाब्विषयः।**

अन्यानि च सर्वनामकार्याण्येकवचनबहुवचनेषूच्यन्ते। यदा पुनरयमुभशब्दो द्विवचनटाब्विषयः क इदानीमस्यान्यत्र भवति।

॥ वा ॥ उभयोऽन्यत्र ॥

भा :—उभयशब्दोऽस्यान्यत्र भवति। उभये देवमनुष्याः, उभयो मणिरिति। किञ्च स्याद्यद्यत्राकज्न स्यात्। कः प्रसज्येत। कश्चेदानीं काकचोर्विशेषः? 'उभशब्दोऽयं द्विवचनटाब्विषयः' इत्युक्तम्। तत्राकचि सति अकचस्तन्मध्यपतितत्वाच्छक्यत एतद्वक्तुं 'द्विवचनपरोऽयम्' इति। के पुनः सति नायं द्विवचनपरः स्यात्। तत्र द्विवचनपरता वक्तव्या। यथैव तर्हि के सति नायं द्विवचनपरः, एवमाप्यपि सति नायं द्विवचनपरः स्यात्। तत्रापि द्विवचनपरता वक्तव्या।

॥ वा ॥ अवचनादापि तत्परविज्ञानम् ॥

भा :—अन्तरेणापि वचनमापि द्विवचनपरोऽयं भविष्यति। किं वक्तव्यमेतत्? न हि। कथमनुच्यमानं गंस्यते। एकादेशे कृते द्विवचनपरोऽयमन्तादिवद्भावेन।

॥ वा ॥ अवचनादापि तत्परविज्ञानमिति चेत्केऽपि तुल्यम् ॥

भा :—अवचनादापि तत्परविज्ञानमिति चेत् केऽपि अन्तरेण वचनं द्विवचनपरो भविष्यति। कथम्? 'स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्ति' इति प्रकृतिग्रहणेन स्वार्थिकानामपि ग्रहणं भवति।

प्र :—**अन्याभाव इति।** टाब्विषयत्वमपि न द्विवचनादन्यत्र बोद्धव्यम्। तत्रोभादुदात्तो नित्यमित्यत्र नित्यग्रहणस्येदं प्रयोजनं वृत्तिविषये उभशब्दप्रयोगो मा भूत्। उभयशब्दस्यैव यथा स्यादित्युभयपुत्र इत्यादि भवति। 'द्विदण्ड्यादिभ्यश्च' इत्यत्र [1]निपातनादुभा बाह्वीत्यादयः साधवः। **कश्चेदानीमिति।** रूपे स्वरे च नास्ति विशेषः। अवग्रहे च नास्यादरः। न हि लक्षणेन पदकारा अनुवर्त्याः। उभकाभ्यां हेतुभ्यामुभकयोर्हेत्वोरिति षष्ठीतृतीये सिद्धे। 'निमित्तकारण हेतुषु सर्वासां प्रायदर्शनम्' इति

(१) क. त्विक्यधिकम्

वचनात्। **उभशब्दोऽयमिति।** द्विवचनेऽनन्तरे श्रूयमाणे उभशब्देन साधुना भाव्यं न लुप्ते न व्यवहिते। **के पुनः सतीति।** पूर्वस्य द्विवचनस्य लुप्तत्वादपरस्य केन व्यवधानात्। तत्र कविषये व्यवहितद्विवचनविषय उभशब्दः साधुर्भवतीति वक्तव्यम्। **यथैव तर्हीति।** ननु द्विवचनटाब्विषयत्वादित्यत्र टाप उपात्तत्वात् चोद्यानुपपत्तिः। एवं तर्हि टाब्विषयत्वमेकवचनबहुवचनयोर्मा भूदित्येव-मर्थमाप्यपि द्विवचनपरता वक्तव्येत्युक्तम्। **अवचनादिति।** स्वार्थिकत्वादाप उभार्थस्याहानादपि सिद्धा द्विवचनपरतेत्यर्थः। **केऽपि तुल्यमिति।** द्विवचन-विषयत्वादित्यत्र द्विवचनशब्देन प्रत्ययो न गृह्यते। किं तर्हि। द्व्यर्थाभिधानसमर्थ इत्यर्थः। उभयत उभयत्रेति त्रतसोरव्ययत्वात् द्वित्वाभिधानसामर्थ्यं नास्तीति अभेदविषय उभयशब्द एव प्रयुज्यते नतूभशब्दः। एवं प्रत्याख्यातोऽकजर्थ उभशब्दस्य पाठः। 'सर्वनाम्नस्तृतीया च' इति षष्ठीतृतीयार्थः पाठ इति केचित्। 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्' इति वचनात्तदर्थोऽपि पाठो न कर्तव्यः इत्यन्ये।

उ :—द्विवचनटाब्विषयत्वं साधयति—**तत्रेति।** 'द्वित्रिभ्यां तयस्यायज्वा' इति वाकारस्यास्वरितत्वेनाननुवृत्त्यैव नित्यत्वसिद्धिरिति भावः। **वृत्तीति।** वृत्तिसामान्ये नित्यमिति वाक्यभेदेन नियम्यत इत्यर्थः॥ भाष्ये—**क इदानीमिति।** एकवचन-बहुवचनयोरित्यर्थः। **उभाबाहीति**; निपातनादेवेच्प्रत्ययस्यापि लुक्। आदिना उभादण्डीत्यादिग्रहः। **स्वरे चेति।** अकचश्चित्वेनान्तोदात्तत्वे प्रकृत्यकारस्य पररूपे सति ककाराकारस्यैवोदात्तत्वादित्यर्थः। यद्यपि सर्वत्र पदान्ते अवग्रहं पदकारा न कुर्वन्ति। तथाप्यभ्युपेत्याह—**अवग्रहे चेति। न हीति**; तथा च केऽवग्रहा-भावेऽपि नानुपपत्तिरिति भावः। **अनुवर्त्याः**; पदकारैर्नाम लक्षणमनुवर्त्यमिति शेषः। 'सर्वनाम्नस्तृतीया च' इत्येतदकच्पक्ष इव कपक्षेऽपि भवतीत्याह—**उभकाभ्या-मिति। सिद्धे**; कान्तस्यार्पात्यादिः। **निमित्तेति।** असर्वनाम्नोऽपीदं विधान-मित्याशयः। अत एव 'हेतौ' इति सूत्रे प्रदीपः—'असर्वनाम्नोऽपि विधानार्थमत्र सूत्रे इदं पठितम्। न तु "सर्वनाम्नस्तृतीया च" इत्यत्र' इति। ननु कव्यवधानेऽपि उभशब्दस्य द्विवचनपरता न हीयते इति, वक्तव्येत्ययुक्तम्; अत आह—**द्विवचन इति। पूर्वस्येति**; सुबन्तात्कादिविधानादित्यर्थः। **नन्विति।** द्विवचन-

परत्वाभावेऽपि [1]आब्विषयत्वं संभवतीत्यर्थः। ननु टापि द्विवचनपरत्वसंभवेऽपि एकवचनबहुवचनयोः निवृत्त्यर्थं द्विवचनपरत्वं वक्तव्यमित्युक्तम्। तत्र कः समाधिः; अत आह—**स्वार्थिकत्वादिति।** स्त्रियां यस्मात् प्रातिपदिकं वर्तते तस्मात् टाबादिविधानादुभशब्दस्य द्वित्वसंख्याविशिष्टवाचित्वाट्टाप्यपि द्विवचनविषयत्वमवचनसिद्धमित्यर्थः। ननु के सति तेनैव विभक्तेर्व्यवधानमित्युक्तम्; अत आह—**द्विवचनेति।** द्व्यर्थाभिधाने विवक्षिते उभशब्दः प्रयोज्य इत्यर्थः। यद्वा कप्रत्ययः स्वार्थिकत्वाद् द्व्यर्थाभिधानसमर्थः। तस्मिन् परतो द्विवचनपरत्वं संभवतीत्यर्थः। वृत्तौ उभशब्दो नियम्यते। वृत्तिश्च परार्थाभिधानं; स्वार्थिकेषु न परार्थाभिधानमिति भावः। ननूभकाविितिवदुभत इत्याद्यपि स्याद्; अत आह—**उभयत इति। सामर्थ्यं नास्तीति;** तत्र प्रकृत्यैव संख्याविशेषप्रतिपत्तिः। तमिलादेर्विभक्त्यर्थद्योतकत्वमात्रमित्यर्थः। **अभेदविषये;** अद्वित्वाभिधायिप्रत्ययविषये। **केचित्;** निमित्तेत्यादिवार्तिकं सर्वनामविषयमिति मन्यमानाः। **अन्य इति;** उक्तोऽत्राभिप्रायः।

**भा :—अथ भवतः सर्वनामत्वे कानि प्रयोजनानि ?**

**॥ वा ॥ भवतोऽकच्छेषात्वानि ॥**

**भा :—भवतोऽकच्छेषात्वानि प्रयोजनानि। अकच्, भवकान्। शेषः, स च भवांश्च भवन्तौ। आत्वम्, भवादृगिति। किं पुनरिदं परिगणनम् आहोस्वित् उदाहरणमात्रम्? उदाहरणमात्रमित्याह। तृतीयादयोऽपि [2]दृश्यन्ते 'सर्वनाम्नस्तृतीया च' भवता हेतुना, भवतो हेतोरिति ॥ सर्वादीनि ॥ २६ ॥**

प्र :—**अथ भवत इति।** अनकारान्तत्वात् स्मायाद्यभावात् प्रश्नः। **शेष इति;** पाठे सति त्यदादित्वात् शेषो भवति। **तृतीयादयोऽपीति;** 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्' इत्यनपेक्ष्यैतदुक्तम्। इदं तु प्रयोजनम्। भावतायनिः। भवद्‌घङ्। भवन्मयः। पूर्वनिपातश्च। भवन्मित्रः। 'भवतष्ठक्छसौ' इति वृद्धत्वात् ठक्छसौ, गुणवचनसंज्ञाबाधनं च। भवतो भावो भावत्यमिति मा भूत्॥

उ :—भाष्ये—**स च भवांश्चेति।** त्यदादिषु यत्परं तच्छिष्यते इत्यस्योदाहरणम्। 'त्यदादीनि सर्वैर्नित्यम्' इत्यस्य देवदत्तश्च भवांश्च भवन्ताविल्युदाहार्यम्। प्रदीपे

(१) क. भावेऽस्याब्वि (२) क. इष्यन्ते

त्यदादीत्युभयसाधारणहेतुः । **अनपेक्ष्येति ;** तत्त्वसर्वनामार्थमिति भावः । स्वयं प्रयोजनान्याह —**इदं त्विति । भावनायनिरिति ।** भवच्छब्दस्य सर्वादि-पाठे सति 'त्यदादीनि च' इति वृद्धसंज्ञायां 'उदीचां वृद्धादगोत्राद्' इति फिञ्। **भवद्र्यङ् इति ।** विष्वग्देवयोश्चेत्यत्र चकारेण सर्वनाम्न आकर्षणाट्टेरद्र्यादेशः । **भवन्मय-इति ।** पूर्ववद्वृद्धसंज्ञायां नित्यं वृद्धेति मयट् । **पूर्वेति ;** 'बहुव्रीहौ सर्वनाम-संख्ययोरुपसंख्यानम्' इत्यनेन । भवत इति भावत्कः भवदीयः । अत्र शत्रन्तनिवृत्त्यर्थं वृद्धादित्यनुवर्तत इति भावः । एकसंज्ञाधिकारे गुणवचनसंज्ञातः परा सर्वनामसंज्ञा कर्तव्येति वचनाश्रयेण प्रयोजनान्तरमाह—**गुणवचनेति ।**

सू.—विभाषा दिक्समासे बहुव्रीहौ ॥ १। १। २७ ॥

**भा :—दिग्ग्रहणं किमर्थम्? 'न बहुव्रीहौ' इति प्रतिषेधं वक्ष्यति । तत्र न ज्ञायते क्व विभाषा क्व प्रतिषेध इति । दिग्ग्रहणे पुनः क्रियमाणे न दोषो भवति दिगुपदिष्टे विभाषा, अन्यत्र प्रतिषेधः । अथ समासग्रहणं किमर्थम्? समास एव यो बहुव्रीहिः तत्र यथा स्यात् । बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्र मा भूदिति । दक्षिणदक्षिणस्यै देहि । अथ बहुव्रीहिग्रहणं किमर्थम्? द्वन्द्वे मा भूत् 'दक्षिणोत्तरपूर्वाणाम्' इति । नैतदस्ति प्रयोजनम् 'द्वन्द्वे च' इति प्रतिषेधो भविष्यति । नाप्राप्ते प्रतिषेधे इयं विभाषा आरभ्यते । सा यथैव 'न बहुव्रीहौ' इत्येतं प्रतिषेधं बाधते, एवं 'द्वन्द्वे च' इत्येतमपि बाधेत । न बाधते । किं कारणम्? येन नाप्राप्ते तस्य बाधनं भवति । न चाप्राप्ते 'न बहुव्रीहौ' इत्येतस्मिन् प्रतिषेधे इयं विभाषा आरभ्यते । 'द्वन्द्वे च' इत्येतस्मिन् पुनः प्राप्ते चाप्राप्ते च । अथवा 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इत्येवमियं विभाषा 'न बहुव्रीहौ' इत्येतं प्रतिषेधं बाधिष्यते 'द्वन्द्वे च' इत्येतं प्रतिषेधं न बाधिष्यते । अथवा इदं तावदयं प्रष्टव्यः 'इह कस्मान्न भवति' या पूर्वा सोत्तरा अस्योन्मुग्धस्य सोऽयं पूर्वोत्तर उन्मुग्धः तस्मै पूर्वोत्तराय देहीति? लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति ।**

प्र :—**दिग्ग्रहणमिति** । एकस्मिन्विषये विकल्पप्रतिषेधयोरसंभवात् सामर्थ्या-द्विषयभेद आश्रयितव्य इति प्रश्नः । वचनमन्तरेणाभिमतो विषयभेदो न लभ्यते इत्युत्तरम् ।

**समास एवेति ।** मुख्य इत्यर्थः । अन्यस्तु तत्कार्यलाभाय तद्व्यपदेशं लभते इत्यमुख्यः । **दक्षिणोत्तरपूर्वाणामिति ;** 'द्वन्द्वे च' इत्यनेन सर्वाद्यन्तस्य द्वन्द्वस्य सर्वनामसंज्ञाप्रतिषेधः नावयवानामिति सर्वनाम्नो वृत्तिमात्र इति पुंवद्भावः । **येन नाप्राप्त इति ।** अयमत्रार्थः 'न बहुव्रीहौ' इत्यनेन सर्वः स्वविषयो व्याप्तः । 'द्वन्द्वे च' इत्यनेन तु न व्याप्तः । 'विभाषा जसि' इति जसि विकल्पविधानात् । यदि चानेन द्वन्द्वे विभाषा स्यात् जस्यनुवाददोषः प्रसज्येत । बहुव्रीहौ त्वनुवाददोषमलभमाना कृतार्था सती परत्वादियं विभाषा 'द्वन्द्वेच' इत्यनेन बाध्यते । **लक्षणप्रतिपदोक्तयोरिति ।** दिक्समास इति व्यपदेशो दिङ्नामानीति विहितस्य न्याय्यः । तत्र हि दिक्शब्दोऽस्ति ।

उ :—**एकस्मिन्निति ।** नित्यप्रतिषेधविकल्पयोरेकविषयत्वं न संभवति प्रतिषेधपूर्वत्वे विकल्पपूर्वत्वे वा पूर्वस्य व्यर्थत्वात् । **विषयभेद इति ।** प्रयोगवशेनेत्यर्थः । **अभिमत इति ।** दिक्समासे विकल्पोऽन्यत्र प्रतिषेध इत्येवंरूपः । मन्दमध्यमधियां नाभिमतव्यवस्थासिद्धिरित्यर्थः । भाष्ये **दिगुपदिष्ट इति ।** बहुव्रीहाविति शेषः । अतिदिष्टसमासस्यापि समासत्वमस्तु ; अत आह—**मुख्य इति ।** भाष्ये **दक्षिणदक्षिणस्या इति ।** दक्षिणाशब्दस्याबाधेचेति द्विरुक्तिर्बहुव्रीहिवद्भावश्च । 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव' इति पूर्वस्य स्त्रीप्रत्ययस्य लोपः । दक्षिणोत्तरेत्यत्र पुंवद्भावं साधयति—**द्वन्द्वे चेत्यनेनेति ।** द्वन्द्वस्यैव निषेधविषयत्वं न तदवयवानां लक्षणाप्रसङ्गादिति भावः । ननु यथा बहुव्रीहौ द्वन्द्वे चेत्यप्रवृत्तावपीयं विभाषा प्रवर्तते तथा द्वन्द्वे न बहुव्रीहावित्यस्याप्रवृत्तावपीति नाप्राप्ते न बहुव्रीहावित्याद्युक्तम् ; अत आह—**अत्रायमर्थ इति ।** भाष्ये नाप्राप्त इत्यस्यानन्तरं बहुव्रीहावित्यध्याहारः । द्वन्द्वे चेत्यनन्तरं द्वन्द्व इत्यध्याहारः । तथा च न बहुव्रीहाविति निषेधो बहुव्रीहौ सर्वत्र प्राप्तः ; द्वन्द्वे चेति तु न सर्वद्वन्द्वे जस्यभावादिति भाष्यार्थः । **सर्वः स्वविषयः ;** विभाषाविषयः सर्वो दिग्बहुव्रीहिः । **न व्याप्तः ;** सर्वो दिग्द्वन्द्वः । एवमक्षराञ्जस्यमुक्त्वा तात्पर्यमाह—**यदि चेति ।** भाष्ये—**उन्मुग्धो ;** भ्रान्तः । दिग्बहुव्रीहेः दिक्समासत्वं प्रतिपदोक्तमिति दर्शयति—**दिक्समास इति ।**

**भा :—यद्येवं, नार्थो बहुव्रीहिग्रहणेन । द्वन्द्वे कस्मान्न भवति ? 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव' इति । उत्तरार्थं**

तर्हि बहुव्रीहिग्रहणं कर्तव्यम्। न कर्तव्यम्। क्रियते तत्रैव 'न बहुव्रीहौ' इति। द्वितीयं कर्तव्यम्। बहुव्रीहिरेव यो बहुव्रीहिस्तत्रैव यथा स्यात्। बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्र मा भूत्—एकैकस्मै देहि। एतदपि नास्ति प्रयोजनम्। समास इति वर्तते। तेन बहुव्रीहिं विशेषयिष्यामः समासो यो बहुव्रीहिरिति। इदं तर्हि प्रयोजनम्—अवयवभूतस्यापि बहुव्रीहेः प्रतिषेधो यथा स्यात्, इह मा भूत् वस्त्रमन्तरमेषां त इमे वस्त्रान्तराः, वसनमन्तरमेषां त इमे वसनान्तराः। वस्त्रान्तराश्च वसनान्तराश्च वस्त्रान्तरवसनान्तराः॥ विभाषा दिक्समासे २७॥

प्र:—**वस्त्रान्तरेति**। उपसर्जनप्रतिषेधो वार्तिककारस्य न सूत्रकारस्य। न बहुव्रीहावित्यारम्भात् तन्मतेनेदं प्रयोजनमुक्तम्।

उ:—भाष्ये—**समास इति वर्तते इति**। एतत्सूत्रस्थसमासग्रहणं 'न बहुव्रीहौ' इत्यत्रानुवर्तनीयमित्यर्थः। भाष्ये—**इदं तर्हीति;** न बहुव्रीहावित्यत्र बहुव्रीहावित्यनुवर्तनस्येत्यर्थः। भाष्ये—**अवयवभूतस्य;** द्वन्द्वावयवभूतस्य। तथा च वस्त्रान्तरवसनान्तरा इति 'विभाषा जसि' इति विकल्पो न प्रवर्तत इत्यर्थः। ननूपसर्जनप्रतिषेधेनैव तत्सिद्धम्; अत आह—**उपसर्जनेति**। वसनशब्दो गृहवाची। तेन विरूपाणामपि समानार्थानामित्येकशेषो न भवति। राजदन्तादित्वाच्चान्तरशब्दस्य सर्वनाम्नः परनिपातः।

## सू.—न बहुव्रीहौ॥ १। १। २८॥

भा:—किमुदाहरणम्? प्रियविश्वाय। नैतदस्ति प्रयोजनम्। सर्वाद्यन्तस्य बहुव्रीहेः प्रतिषेधेन भवितव्यम्। वक्ष्यति चैतत् 'बहुव्रीहौ सर्वनामसंख्ययोरुपसंख्यानम्' इति। तत्र विश्वप्रियायेति भवितव्यम्। इदं तर्हि द्व्यन्याय त्र्यन्याय। ननु चात्रापि सर्वनाम्न एव पूर्वनिपातेन भवितव्यम्। नैष दोषः। वक्ष्यत्येतत्। 'संख्यासर्वनाम्नो यो बहुव्रीहिः परत्वात्तत्र

संख्यायाः पूर्वनिपातो भवति' इति। इदं चाप्युदाहरणम् 'प्रियविश्वाय'। ननु चोक्तम् 'विश्वप्रियाय इति भवितव्यम्' इति। वक्ष्यत्येतत् 'वा प्रियस्य' इति। न खल्वप्यवश्यं सर्वाद्यन्तस्यैव बहुव्रीहेः प्रतिषेधेन भवितव्यम्। किं तर्हि? असर्वाद्यन्तस्यापि भवितव्यम्। किं प्रयोजनम्? अकज् मा भूदिति। किं च स्यात् यद्यत्राकच् स्यात्? को न स्यात्। कश्चेदानीं काकचोर्विशेषः? व्यञ्जनान्तेषु विशेषः 'अहकं पिता यस्य मकत्पितृकः, त्वकं पिता यस्य त्वकत्पितृक' इति प्राप्नोति। 'मत्कपितृकः त्वत्कपितृकः' इति चेष्यते। कथं पुनरिच्छतापि भवता बहिरङ्गेण प्रतिषेधेनान्तरङ्गो विधिः शक्यो बाधितुम्? अन्तरङ्गानपि विधीन् बहिरङ्गो विधिर्बाधते 'गोमत्प्रिय' इति यथा। क्रियते तत्र यत्नः 'प्रत्ययोत्तरपदयोश्च' इति। ननु चेहापि क्रियते 'न बहुव्रीहौ' इति। अस्त्यन्यदेतस्य वचने प्रयोजनम्। किम्? प्रियविश्वाय। उपसर्जनप्रतिषेधेनाप्येतत् सिद्धम्। अयं खल्वपि बहुव्रीहिरस्त्यैव प्राथमकल्पिकः। यस्मिन्नैकपद्यमैकस्वर्यमेकविभक्तिकत्वं च। अस्ति तादर्थ्यात्ताच्छब्द्यम्। बहुव्रीह्यर्थानि पदानि बहुव्रीहिरिति। तद्यत्तादर्थ्यात्ताच्छब्द्यं तस्येदं ग्रहणम्।

प्रः—**प्रियविश्वायेति।** प्रियशब्दस्य विश्वविशेषणत्वात् पूर्वनिपातं मन्यते। **द्व्यन्यायेति।** सङ्ख्यायाः सङ्ख्येयपरतन्त्रत्वात् विशेषणत्वम्। **सर्वनाम्न एवेति।** नियमः कथमिति चेदुच्यते। विशेषणत्वात् सङ्ख्यायाः पूर्वनिपाते प्राप्ते एवमर्थमुपसङ्ख्यानं स्यात् सर्वनामसङ्ख्ययोः सन्निपाते सर्वनाम्न एव पूर्वनिपातः स्यादिति। **वक्ष्यत्येतदिति।** नैष वाक्यार्थो यस्त्वया कल्पित इत्यर्थः। **व्यञ्जनान्तेष्विति।** उपलक्षणमेतत्। द्विकपुत्रो द्वकिपुत्रः इत्यत्रापि विशेषदर्शनात्। **कथं पुनरिति।** अन्तरङ्गत्वात् संज्ञानिमित्तेनाकचा तावद्भाव्यं पश्चात्पदान्तरसंनिधाने वर्तिपदार्थविशेषणान्यपदार्थविवक्षायां बहिरङ्गेण बहुव्रीहिणेत्यर्थः। **अन्तरङ्गानपीति।** प्रत्ययोत्तरपदयोश्चेति सामान्येन ज्ञापकम्। बहिरङ्गोऽपि समासाश्रयो विधिरन्तरङ्गं बाधते इत्यस्यार्थस्येति भावः। **क्रियते तत्रेति।**

लुग्विषयमेव तज्ज्ञापकमित्यर्थः। **अस्त्यन्यदिति।** अत्र हि विधिप्रतिषेधौ समानकालौ कार्यकालत्वात् संज्ञाया इति मन्यते। **अयं खल्वपीति।** सूत्रोपारूढ एवायमर्थ इति प्रतिपादयति। अप्रयोगसमवायि यत् प्रक्रियावाक्यं तत्रायं प्रतिषेधो न लौकिके वाक्ये प्रयोगार्हे। तस्य पृथगेव प्रयोगात्तादर्थ्याभावात्।

उ:—प्रियशब्दस्य पूर्वनिपातं संभावयति—**प्रियशब्दस्येति।** मन्यत इति वचनेन सर्वनाम्नो विशेष्यस्यापि पूर्वनिपातावश्यकत्वादिति भावः। द्विशब्दस्य विशेषणत्वमाह—**संख्याया इति।** द्व्यादीनां संख्यावाचकत्वादिति भावः। **नियम इति।** संख्याया अपि पूर्वनिपातविधानादिति भावः। **उच्यत इति।** सप्तमीविशेषण इत्यनेनैव संख्यायाः पूर्वनिपाते सिद्धे सर्वनामसंख्ययोरित्येतत् सर्वनाम्न एव पूर्वनिपातविधानार्थम्। संख्याग्रहणं विषयनिर्देशार्थमिति भावः। एवमर्थमित्येतदेवाह—**सर्वनामेति।** सर्वनाम्न एवेत्येवकारेण वार्तिकस्य नियमपरत्वं नोच्यते। सर्वनाम्नः पूर्वनिपातस्याप्राप्ततया नियमपरत्वासंभवात्। किं त्वर्थसिद्ध इतरस्य पूर्वनिपाताभावोऽनूद्यते इति ज्ञेयम्। **नैष इति।** उत्तरवाक्यविरोधात्, सन्निपात इत्यध्याहारप्रसङ्गाच्चेति भावः। भाष्ये **परत्वादिति।** सर्वनामसंख्ययोरिति वार्तिके परपाठात्। शब्दपरविप्रतिषेधादिति भावः। भाष्ये—**न खल्विति।** बहुव्रीहौ यानि सर्वादीनि तेषां न सर्वनामसंज्ञेति सूत्रार्थ इति भावः। अकचि निषेधाप्रवृत्तिमुपपादयति—**अन्तरङ्गत्वादिति।** संज्ञायाः पदान्तरनिरपेक्षतयाऽन्तरङ्गत्वात् तन्मात्रापेक्षाकचोऽप्यन्तरङ्गत्वमित्यर्थः। निषेधस्य बहिरङ्गत्वमाह—**पश्चादिति। बहिरङ्गेणेति;** तथा च तदपेक्षो निषेधोऽपि बहिरङ्ग इत्यर्थः। भाष्ये—**गोमत्प्रिय इति।** अत्र विभक्त्याश्रयो नुम् बहिरङ्गेणापि सुपो लुका बाध्यते। त्वमावेकवचने इत्येव सिद्धे 'प्रत्ययोत्तरपदयोश्च' इत्यनेन लुको बहिरङ्गस्यापि पूर्वं प्रवृत्तिर्ज्ञाप्यते। लुका हल्ङ्यादिलोपोऽपि बाध्यते। अन्यथा प्रत्ययलक्षणेन नुम् स्यात्। ननु लुक एव बाधकत्वं तत्र ज्ञाप्यते न त्वन्यस्य; अत आह—**सामान्येनेति।** तदेवाह—**बहिरङ्गोऽपीति।** त्वकत्पितृक इत्यत्रायं निषेधो न प्रवर्तते; प्रियसर्वायेत्यत्र तु प्रवर्तते इत्यत्रहे तुमाह—**अत्र हीति।** बहुव्रीहेर्विभक्त्युत्पत्तौ सर्वनामकार्यस्मायादिप्राप्तेरित्यर्थः। अकच्चान्तरङ्गत्वात् पूर्वमेव स्यादिति भावः। भाष्ये **उपसर्जनप्रतिषेधेनापीति।** तथा चाकज् निरासायैवेदं सूत्रमित्यर्थः।

ननु 'न बहुव्रीहौ' इत्यनेन समासात्प्रागकजर्थं प्राप्ता सर्वनामसंज्ञा कथं निवार्येत्याशङ्का-निरासायायं खल्वपीति भाष्यमित्याह—**सूत्रेति**। भाष्ये **ऐकपद्यम्**; एकार्थीभावः। **ऐकस्वर्यम्**; एकोदात्तयोगः। **एकविभक्तिकत्वम्**; एककारकशक्तियोगः। ननु वाक्यं संज्ञानिषेधश्चेद्वहकं पिता यस्येत्यकच्प्रयोगो न स्यात्। के तु सुप्स्वरत्वा-भावात् त्वाहौ न स्याताम्; अत आह—**अप्रयोगेति**। समासार्थप्रतिपादक-विग्रहवाक्य इत्यर्थः। तादर्थ्ये बहुव्रीह्यर्थः।

**भा :—गोनर्दीयस्त्वाह 'अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयौ। त्वकत्पितृको मकत्पितृक इत्येव भवितव्यम्' इति।**

**॥ वा ॥ प्रतिषेधे भूतपूर्वस्योपसंख्यानम् ॥**

**भा :—प्रतिषेधे भूतपूर्वस्योपसंख्यानं कर्तव्यम्। आढ्यो भूतपूर्वः आढ्यपूर्वः आढ्यपूर्वाय देहीति।**

**॥ वा ॥ प्रतिषेधे भूतपूर्वस्योपसंख्यानानर्थक्यं पूर्वादीनां व्यवस्थायामिति वचनात् ॥**

**भा :—प्रतिषेधे भूतपूर्वस्योपसंख्यानमनर्थकम्। किं कारणम्? पूर्वादीनां व्यवस्थायामिति वचनात्। पूर्वादीनां व्यवस्थायां सर्वनामसंज्ञोच्यते। न चात्र व्यवस्था गम्यते॥ न बहुव्रीहौ ॥ २८ ॥**

प्र :—**गोनर्दीयस्त्वाहेति**; सूत्रप्रत्याख्यानमेतद्। यथोत्तरं हि मुनित्रयस्य प्रामाण्यम्। **स्वरः** 'स्वाङ्गशिटामदन्तानाम्' इत्याद्युदात्तत्वम्। **आढ्यपूर्वायेति।** अबहुव्रीह्यर्थं वचनम्। **न चात्रेति**। प्राधान्येनेति भावः। अत्र हि पूर्वत्वमाढ्यत्वस्य विशेषणम्। यथातिपूर्वायेति पूर्वोर्थोऽतिक्रान्तस्येत्युपसर्जनत्वात् पूर्वार्थस्य न भवति संज्ञा। मयूरव्यंसकादित्वाच्चात्र समासः।

उः—**सूत्रेति**; अतिसर्वायेत्याद्यर्थमुपसर्जनप्रतिषेधावश्यकत्वे तत एव प्रियविश्वाये-त्याद्यपि सिद्धम्, त्वत्कपितृक इत्यत्राकज्निवृत्त्यर्थमेवैतदिति पर्यवसितम्। तत्राकजङ्गीकारे सूत्रं व्यर्थमित्यर्थः। ननु सूत्रानुरोधात् क एव भवतु; अत आह—**यथोत्तरमिति**। फिट्सूत्रे **शिट्** सर्वनाम। बहुव्रीहावपि प्रकृति-

स्वरेणाद्युदात्तत्वमेव भवतीति भावः नन्वाद्यपूर्व इत्यत्रापि पूर्वशब्दो व्यवस्थावाच्येव समस्यते; अत आह—**प्राधान्येनेति**। अप्राधान्यमाह—**अत्रेति**। आद्यपूर्वयित्यत्र समानविशेषलक्षणं न किञ्चिद्; अत आह—**मयूरेति** ॥

## सू.—तृतीयासमासे ॥ १। १। २९ ॥

**भा :—समास इति वर्तमाने पुनः समासग्रहणं किमर्थम्? अयं तृतीयासमासोऽस्त्येव प्राथमकल्पिकः, यस्मिन्नैकपद्यमैकस्वर्यमेकविभक्तिकत्वं चेति। अस्ति च तादर्थ्यात्ताच्छब्द्यम्। तृतीयासमासार्थानि पदानि तृतीयासमास इति। तद्यत्तादर्थ्यात्ताच्छब्द्यं तस्येदं ग्रहणम्। अथवा समास इति वर्तमाने पुनः समासग्रहणस्यैतत् प्रयोजनम् 'योगाङ्गं यथोपजायेत'। सति च योगाङ्गे योगविभागः करिष्यते—'तृतीया'। तृतीयासमासे सर्वादीनि सर्वनामसंज्ञानि न भवन्ति। मासपूर्वाय देहि, संवत्सरपूर्वाय देहि। ततः—'असमासे' असमासे च तृतीयायाः सर्वादीनि सर्वनामसंज्ञानि न भवन्ति। मासेन पूर्वाय देहि, संवत्सरेण पूर्वाय देहीति ॥ तृतीयासमासे ॥**

प्र :—अत्र तादर्थ्यात्ताच्छब्द्यलाभे सति प्रयोगार्हस्य लौकिकस्य वाक्यस्य ग्रहणे स्यान् मासेन पूर्वायेति प्रयोगः साधुः। वाक्यभेदेन च मुख्ये समासे निषेधः। **अथवेति**। पर्युदासाश्रयणात् समाससदृशस्य वाक्यस्य ग्रहणम्। पूर्वसदृशेति च प्रतिपदोक्तस्तृतीयासमासो गृह्यते।

उ :—पूर्वत्रेवात्रापि अप्रयोगार्हस्य संज्ञानिषेधे मासेन पूर्वायेति न सिद्ध्यति; अत आह—**अत्रेति। प्रयोगार्हस्येति;** अप्रयोगार्हे निषेधप्रयोजनं किमपि नास्ति। पूर्वत्र त्वकजभावः प्रयोजनमिति भावः। **वाक्यभेदेनेति**। तृतीयेति लुप्तषष्ठीकं पृथक्पदम्। तदनुवर्तमानसमासग्रहणेनैकवाक्यं सत् समासे संज्ञां निषेधति। द्वितीयेन वाक्ये तन्निषेध इति भावः। ननु पूर्वस्मा इत्यत्रापि निषेधः स्यात् असमासत्वात्; अत आह—**सदृशेति**। सादृश्यं चार्थः। **पूर्वेति**। अन्यत्र संज्ञाप्रसक्त्यभावादिति भावः।

सू.—विभाषा जसि ॥ १। १। ३१ ॥

**भा :—जसः कार्यं प्रति विभाषा। अकज्झि न भवति, 'द्वन्द्वे च' इति प्रतिषेधात् ॥ विभाषा जसि ॥**

प्र :—**जसः कार्यं प्रतीति।** जस इ जसीति निर्देशादिकारेण ईकारस्य ग्रहणादित्याहुः। अन्ये तु कार्यकालत्वात्संज्ञायाः 'जसः शी' इत्यत्रैवोपस्थानं मन्यन्ते।

उ :—ननु वर्णाश्रमेतरे इत्यत्राकजपि स्यात् सर्वनामसंज्ञासद्भावाद्; अत आह–भाष्ये **जसः कार्यं प्रतीति।** तत्र लक्षणाप्रसङ्गं निराह—**जस इति।** जसः सर्वनामकार्यं शीभावः। स च सूत्रोपात्त एवेति न लक्षणाप्रसङ्गो नाप्यकचि विकल्प इति भावः। नन्विकारग्रहणेऽपीकारो न गृहीतः; अत आह—**इकारेणेति।** इकारस्य सर्वनामकार्यत्वाभावादीकारो गृह्यत इति भावः। सूत्रे द्वितीयाया लुक्। जसं प्रति विभाषेत्यर्थः। उक्तरीत्येकारलाभः क्लिष्टः; अत आह—**अन्ये त्विति।** जसीति सप्तम्यन्तमेतत् सूत्रोपस्थानदेशप्रदर्शनार्थम् यत्र सर्वनामकार्यविधौ जस उच्चारणं तत्र द्वन्द्वे विभाषेत्येतदुपतिष्ठते संज्ञाविकल्पायेति भावः।

सू.—पूर्वपरावरदक्षिणोत्तरापराधराणि
व्यवस्थायामसंज्ञायाम् ॥ १। १। ३३ ॥

**॥ वा ॥ अवरादीनां च पुनः सूत्रपाठे ग्रहणानर्थक्यं गणे पठितत्वात् ॥**

**भा :—अवरादीनां च पुनः सूत्रपाठे ग्रहणमनर्थकम्। किं कारणम्? गणे पठितत्वात्। गणे ह्येतानि पठ्यन्ते। कथं पुनर्ज्ञायते 'स पूर्वः पाठः, अयं पुनः पाठ' इति? तानि हि पूर्वादीनि, इमान्यवरादीनि। इमान्यपि पूर्वादीनि। एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति 'स पूर्वः पाठः, अयं पुनः पाठः' इति। यदयं 'पूर्वादिभ्यो नवभ्यो वा' इति नवग्रहणं करोति। नवैव हि पूर्वादीनि।**

प्र :—**अवरादीनां चेति।** किमर्थं प्रतिपदं पूर्वादीनि जसि विभाषार्थं पठितानि यावता गण एवार्थविशेषेण विशिष्टानि नित्यसर्वनामसंज्ञार्थं पठ्यन्ते। तत्र

पूर्वादीनि नवेत्येव सूत्रं पठितव्यम्। प्राप्तविभाषा चेयं भविष्यति। तेषामेवात्र प्रत्यभिज्ञानात् गण एवार्थनिर्देशः पाठविशेषणं भविष्यति। यथा तिङो गोत्रादीनि इत्यत्र कुत्सनाभीक्ष्ण्यग्रहणं गोत्रादिपाठविशेषणमिति वार्तिककाराभिप्रायः। अवरादीनामित्यत्र प्रकारार्थं आदिशब्दः। तेन पूर्वपरशब्दावपि गृह्येते। **कथं पुनरिति।** पूर्वं गणपाठो नियतसन्निवेशो व्यवस्थितः पश्चात्तु सूत्रपाठ इत्यत्र प्रमाणाभावात्। आदिशब्दः प्रकारवाची दृष्टो व्यवस्थावाची च। तत्र सर्वादीनि इत्यत्रादिशब्दस्य प्रकारार्थतापि संभवति। प्रकारार्थताप्रदर्शनाय पश्चादभियुक्ता गणान् पठन्ति। यदुक्तं श्रेण्यादयः पठ्यन्ते कृतादिराकृतिगण इति। कृतादयश्च वृत्तिकारैर्निदर्शनार्थं पठिताः। तत्र वेदे मध्यमस्यामवमस्यामिति प्रयोगदर्शनात् प्रकारार्थतादिशब्दस्य सर्वादीनीत्यत्र सम्भाव्यत इति प्रश्नः। **तानि हि पूर्वादीनीति।** पूर्वकालपठितत्वात् पूर्वशब्देन सर्वशब्दोऽभिधीयते। तेनायमर्थः। सर्वादीनीत्यत्र व्यवस्थावाच्यादिशब्दः। प्रकारवाचित्वे हि कृत्स्नादीनामपि संज्ञा स्यात्। मध्यमस्यामिति[1] तु व्यत्ययेन च्छान्दसः प्रयोगः। **इमान्यवरादीनीति।** अवरकालपाठात्पूर्वशब्दोऽवरशब्देनोच्यते। तेन पूर्वं गणपाठः, पश्चात सूत्रपाठ इत्यर्थः। हेत्वभिधानमन्तरेणाशक्योऽयमर्थः प्रतिपत्तुमित्याह—**इमान्यपीति। नवग्रहणमिति;** तत्र [2]हि नवग्रहणं त्यदादीनां निरासार्थं क्रियते। यदि च नियतसन्निवेशो गणपाठः पूर्वः ततोऽधिकव्यवच्छेदाय नवग्रहणं कर्तव्यम्।

उ:—ननु गणपठितानामपि जसि विभाषार्थं पुनः सूत्रे पाठः स्यात्; अत आह—**किमर्थमिति। अर्थविशेषः;** [3]व्यवस्थाख्येत्यादिः। नन्वेवमर्थान्तरेऽपि विभाषा स्याद्; अत आह—**प्राप्तेति।** तामेवोपपादयति—**तेषामेवेति।** ननु पूर्वादीनि नवेत्युक्ते व्यवस्थाग्रहणाभावात् गणेऽप्यर्थविशेषो न लभ्यते; अत आह—**गण एवेति।** व्यवस्थायामित्येतद्गण एव पूर्वादीनि विशिनष्टि। एवमुत्तरसूत्रद्वयेऽपीति भावः। सूत्रस्थेनार्थेन पाठविशेषणे विस्मरणशीलं प्रत्युक्तमेव दृष्टान्तमाह—**यथेति।** अवरादीनामित्युक्त्या पूर्वपरयोरपि ग्रहणम्। तेन पूर्वादीनि नवेति स्वोक्तस्य न विरोध इत्याह—**प्रकारार्थं इति।** ननु पूर्वाद्यनुक्तौ व्यवस्थाज्ञातिधनबहिर्योगोपसंव्यानरूपार्थस्य नवस्वन्वयः स्यादिति चेन्न।

(१) क. स्यावमस्यामिति (२) क. हिर्नास्ति.
(३) क. व्यवस्थारूपेत्यादिः

योग्यतावशात् व्यवस्थापितान्वयोपपत्तेरिति भावः। शङ्कातात्पर्यमाह— **पूर्वमिति।** पूर्वं गणपाठे पूर्वादीनि नवेति वक्तुं शक्यते, नान्यथेति भावः। ननु सर्वादीनीत्यादिशब्दात् पूर्वं गणपाठ इति निश्चीयते; अत आह— **आदिशब्द इति।** ननु गणस्य पूर्वभावित्वाभावे वृत्तौ तत्पाठोऽनर्थकः स्यात्; अत आह— **प्रकारार्थेति।** सूत्रकृदपठितस्यापि वृत्तिकारैः पाठे दृष्टान्तः— **तदुक्तमिति।** नन्वादिशब्दस्य निदर्शनार्थत्वे प्रकारार्थता स्यात्, तदेव कुतः; अत आह— **तत्र वेद इति॥** तानीत्येतन्नोक्तशङ्कास्कन्दकम्। सर्वादीनीति वक्तव्ये पूर्वादीनीत्ययुक्तम्; अत आह— **पूर्वकालेति।** तथा च सर्वादीनां पूर्वपाठात् पूर्वादीनि तन्निविष्टान्येवेति भाष्यार्थः। **प्रकारेति।** कृत्स्नार्थत्वव्यतिरिक्तप्रकाराभावादिति भावः। इमान्यपीतिशङ्कातात्पर्यमाह— **हेत्विति।** भाष्ये— **इमान्यपि पूर्वादीनि;** पूर्वपठितानि। नन्वादिशब्दस्य प्रकारवाचित्वेऽपि तत्र नवग्रहणं [१]संभवतीति न तस्य पश्चाद्भावद्योतकत्वम्; अत आह— **तत्रेति।**

**भा:— इदं तर्हि प्रयोजनम्— व्यवस्थायामसंज्ञायामिति वक्ष्यामीति। एतदपि नास्ति प्रयोजनम्। एवंविशिष्टान्येवैतानि गणे पठ्यन्ते। इदं तर्हि प्रयोजनम् 'द्व्यादिपर्युदासेन पर्युदासो मा भूद्' इति। एतदपि नास्ति प्रयोजनम्। आचार्यप्रवृत्तिर्ज्ञापयति 'नैषां द्व्यादिपर्युदासेन पर्युदासो भवति' इति। यदयं 'पूर्वत्रासिद्धम्' इति निपातनं करोति। वार्तिककारश्च पठति 'जश्भावादिति चेदुत्तरत्राभावादपवादप्रसङ्गः' इति। इदं तर्हि प्रयोजनम् 'जसि विभाषां वक्ष्यामि' इति॥ पूर्वपरा॥ ३३॥**

प्र:— **इदं तर्हीति;** प्रतिनियतविशेषणाभिधानाय प्रतिपदपाठ इत्यर्थः। **एवंविशिष्टान्येवेति।** पाठविशेषणं गणेऽर्थनिर्देश इत्यर्थः। **द्व्यादिपर्युदासेनेति।** त्यदादीनि पठित्वा गणे कैश्चित् पूर्वादीनि पठितानि। तत्राद्व्यादिभ्य इति तसिलादीनां प्रतिषेधः प्राप्नोति। तत्र पुनः सर्वनामसंज्ञा [२]तसिलादिविधानार्थं विधीयते। तेन द्व्यादिपर्युदासो बाध्यते। यथा 'अनुर्लक्षणे' इति पुनर्विधानेन

(१) क. संगच्छते

(२) सर्वनामसंज्ञया तसिलादीरिति उद्द्योतनाभिमतः पाठः

हेतुतृतीया बाध्यते। वाक्यभेदेन च विभाषा जसि विधीयते। यथा 'अमि पूर्वः' 'संप्रसारणाच्च' इत्यत्र वाक्यभेदेन वा च्छन्दसीति सम्बन्धाच्छन्दसि विकल्पः क्रियते इति भावः। **इदं तर्हीति ;** यदि [1]तर्हि पूर्वादीनि नवेत्युच्यते, तदा गणपाठेऽर्थनिर्देशस्य नित्यसंज्ञाविधान एवोपयुक्तत्वात् पाठविशेषणे प्रमाणाभावादप्राप्तविभाषेयमर्थान्तरे पूर्वादीनां जसि विज्ञायेत ; प्राप्तविभाषायामुक्तानुवाददोषप्रसङ्गादप्राप्तविभाषायामपूर्वविधानात्। **विभाषामिति।** प्राप्तविभाषामित्यर्थः। प्रतिपदपाठं चान्तरेण सङ्करेणार्थनिर्देशोऽशक्यः कर्तुमिति भाष्यकारेण प्रतिपदपाठः समर्थितः ॥ ३४ ॥

उ :—**प्रतिनियतेति।** पूर्वादीनां सप्तानां व्यवस्था विशेषणम्, स्वस्या ज्ञात्यादि, अन्तरस्य बहिर्योगादीत्यर्थः। **पाठेति ;** उक्तोऽभिप्रायः। यद्वा गण एवार्थनिर्देशः कर्तव्यो नान्यत्रेत्यर्थः। नन्वत्र सर्वादिपाठे त्यादिपर्युदासः कथं बाध्यते, पर्युदासो वा कथं प्राप्तः ; अत आह—**त्यदादीनीति।** प्राप्तिमुपपाद्य निरासप्रकारमाह—**तत्रेति। पुनरिति ;** पूर्वादीनि सर्वनामसंज्ञानीति पुनः संज्ञात्र विधीयते कार्यार्थत्वात् संज्ञायाः। तसिलादिकमेव पुनः संज्ञाविधानस्य कार्यमिति त्यादिपर्युदासो बाध्यत इत्यर्थः। **तसिलादिरिति ;** तदर्थत्वात् पुनः संज्ञाया इति भावः। पुनः संज्ञाविधानेन वचनान्तरप्राप्तकार्यबाधने दृष्टान्तमाह—**यथेति।** लक्षणेत्थंभूतेत्येव सिद्धे कर्मप्रवचनीयत्वे 'अनुर्लक्षणे' इति पुनर्विधानेन परत्वात् हेतुतृतीया प्राप्ता कर्मप्रवचनीयद्वितीयया बाध्यते। शाकल्यस्य संहितामनु प्रावर्षदित्यत्र संहिताया वृष्टिहेतुत्वमेवानुना द्योत्यते इति तृतीयाप्राप्तिरिति। नन्वेवं जसि विकल्पो न स्याद् ; अत आह—**वाक्येति।** विभाषा जसीत्यनुवर्त्य पूर्वादीनां जसि विकल्पो विधीयत इत्यर्थः। नित्यविधेः सूत्रान्तरानुवृत्त्या स्थलविशेषविकल्पे दृष्टान्तमाह—**यथेति। इत्यत्र ;** सूत्रद्वयेऽपीत्यर्थः। भाष्ये पूर्वत्रोत्तरत्रेति ज्ञापकद्वयाद् त्यादिपर्युदासो न भवतीत्यर्थः। वार्तिककाराभिप्रायं दूषयति—**यदि तर्हीति।** ननु नित्यसंज्ञाया एवात्र विकल्प इत्यत्राप्यर्थविशेषलाभः ; अत आह—**पाठविशेषण इति।** यद्वा नित्यसंज्ञायामेव चरितार्थत्वात् विभाषाविधाने पाठविशेषणत्वे प्रमाणाभावादित्येकग्रन्थतया योज्यम्। अस्तु प्रमाणाभावः ; अत आह—**अप्राप्त इति।** ननु प्राप्तविभाषेयम्। अतो नार्थान्तरं भविष्यति ; अत आह—**प्राप्तेति।** विध्यंशे पूर्वार्थत्वसंभवेऽनुवादस्यायोगादप्राप्तविभाषैव युक्ता। अत एव प्राप्ताप्राप्तविभाषापि न भवतीति भावः।

(१) मु. पु. तर्हि इति नास्ति

इष्टापत्तिशङ्कां वारयति—**प्राप्तेति।** नन्वर्थान्तरे संज्ञाविकल्पबाधायार्थनिर्देशमात्रं क्रियतां, किं प्रतिपदपाठेन; अत आह—**प्रतिपदेति।** योग्यतया तदवगमस्तु क्लिष्ट इति भावः। **भाष्यकारेणेति।** पूर्वादीनि नव व्यवस्थाज्ञातिधनान्यबहिर्योगोपसंव्यानेष्वित्युक्तयेऽर्थस्य व्यवस्थयान्वयासंभवाद्यथान्यासमेव सूत्रमिति समर्थितमित्यर्थः।

## सू.—स्वमज्ञातिधनाख्यायाम्॥ १। १। ३४॥

**भा:—आख्याग्रहणं किमर्थम्। ज्ञातिधनपर्यायवाची यः स्वशब्दः तस्य यथा स्यात्। इह मा भूत् 'स्वे पुत्राः, स्वाः पुत्राः; स्वे गावः, स्वा गावः'॥ स्वमज्ञाति॥ ३४॥**

प्र:—आत्मात्मीयज्ञातिधनवचनः स्वशब्दः। आमिनिज्विषयस्त्वैश्वर्यवाची। **आख्याग्रहणमिति।** स्वे पुत्राः स्वे गावः इत्यत्र स्वशब्द आत्मीयत्वमेवाह। पुत्रादिशब्दस्तु ज्ञातिधनयोर्वर्तते न स्वशब्द इति प्रतिषेधो न भविष्यतीति प्रश्नः। **तस्य यथा स्यादिति।** प्रतिषेध इति शेषः। **इह मा भूदिति।** असत्याख्याग्रहणे स्वे पुत्रा इत्यादौ स्यादेव प्रतिषेधः। अत्राप्यात्मीयत्वं प्रवृत्तिनिमित्तमुपादाय स्वशब्दो ज्ञातिधनयोर्वर्तते पुत्रादिभिः सामानाधिकरण्यात्। आख्याग्रहणे तु सति न दोषः। स्वशब्दोऽपि अत्रात्मीयस्याख्या न तु ज्ञातिधनयोरिति विधिः सिद्धः।

उ:—स्वशब्दस्यार्थज्ञानं विना विधिनिषेधाज्ञानादर्थभेदानाह—**आत्मेति।** आत्मत्वमात्मीयत्वं ज्ञातित्वं धनत्वं च प्रवृत्तिनिमित्तचतुष्टयमित्यर्थः। **आमिनिज्विषय इति।** स्वामिन्नैश्वर्ये इति निपातनात् तत्रैवैश्वर्यवाची नान्यत्रेत्यर्थः। अत्र स्वे पुत्राः, स्वाः पुत्राः, स्वे गावः, स्वा गावः इति ज्ञातिधनयोरपि विकल्पसिद्ध्यर्थमाख्याग्रहणमिति प्रतिपादयितुमाख्येत्यादिभाष्यम्। अत्र प्रश्नतात्पर्यमाह—**स्वे पुत्रा इति। आत्मीयत्वमेवेति;** तावन्मात्रं विशेषणत्वेनान्वेतीत्यर्थः। **प्रतिषेधः;** अज्ञातिधनेति प्रतिषेधः। भाष्ये—**इह मा भूत्;** प्रतिषेधः इत्यध्याहृतशेषस्यानुषङ्गः। प्रश्नाभिप्रायमन्यथयति—**असतीति।** ज्ञातिधनवृत्तित्वे हेतुः **पुत्रादीति। आत्मीयस्य;** आत्मीयत्वस्य; **ज्ञातिधनयोः;** ज्ञातित्वधनत्वयोः। विधिः प्रतिषेधप्रतियोगिविकल्प इति यावत्॥

सू.—अन्तरं बहिर्योगोपसंव्यानयोः ॥ १। १। ३५ ॥

॥ वा ॥ **उपसंव्यानग्रहणमनर्थकं बहिर्योगेण कृतत्वात्** ॥

**भा :—उपसंव्यानग्रहणमनर्थकम्। किं कारणम्? बहिर्योगेण कृतत्वात्। बहिर्योग इत्येव सिद्धम्।**

॥ वा ॥ **न वा शाटकयुगाद्यर्थम्** ॥

**भा :—न वा अनर्थकम्। किं कारणम्? शाटकयुगाद्यर्थम्। शाटकयुगाद्यर्थं तर्हीदं [१]वक्तव्यम्। यत्रैतन्न ज्ञायते—किमन्तरीयं किमुत्तरीयमिति। अत्रापि य एष मनुष्यः प्रेक्षापूर्वकारी भवति निर्ज्ञातं तस्य भवति इदमन्तरीयमिदमुत्तरीयमिति।**

प्र :—बहिरित्यनावृतदेश उच्यते। तेन योगो बहिर्योगः। स च बाह्यस्य भवतीत्यन्तरे गृहा इति नगरबाह्याश्चण्डालादिगृहा उच्यन्ते। यदा तु बहिःशब्देन बाह्य उच्यते बाह्येन योगो बहिर्योग इति तदा नगराभ्यन्तरे ये गृहाः ते उच्यन्ते। उभयथापि स्मर्यते। उपसंव्यानशब्दोऽपि कर्मकरणार्थभेदात् भिन्नार्थः। ततः सर्वथा बहिर्योगात् सिद्धिं मत्वाह—**उपसंव्यानेति। न वेति;** समानप्रमाणे शाटकयुगे अपरिहिते [२]इदं न ज्ञायते किमुत्तरीयं किमन्तरीयमेतदित्यर्थः। **अत्रापीति।** यथोपसंव्यानत्वं भाविबुद्ध्या व्यवस्थाप्यते तथा बहिर्योगोऽपीत्यर्थः। अन्ये त्वाहुः। आदिशब्दो वार्तिके शाटकयुगाद्यर्थमित्यत्रोपात्तस्तत्र शाटकानां त्रये चतुष्टये वा तृतीयचतुर्थयोर्बहिर्योगाभावादुसंव्यानग्रहणं कर्तव्यम्।

उ :—वार्तिकोपयोगितया बहिर्योगशब्दार्थमाह—**बहिरिति। उभयथापि स्मर्यते;** इष्यते। **उपसंव्यानशब्दोऽपीति।** यत्र वस्त्रद्वयं परिधीयते तत्र कर्मव्युत्पत्तौ द्वितीयव्याख्यानानुसारेण बाह्येन योगात् बहिर्योगोऽन्तस्स्थस्य। करणव्युत्पत्तौ आद्यव्याख्यानानुसारेणानावृतदेशसंयोगात् द्वितीयस्य बहिर्योग इति विवेकः। एतदभिप्रेत्याह-**सर्वथेति।** नन्वल्पपरिमाणमन्तरीयं महापरिमाणमुत्तरीयमिति ज्ञातुं शक्यम्; अत आह—**समानेति। अपरिहिते इति;** परिधाने विभागो ज्ञातुं शक्यते। तत्रापि विकल्पसिद्धय उपसंव्यानग्रहणमित्यर्थः। नन्वपरिहितशाटकद्वयस्य बहिर्योगाभावात्

(१) क. स्याद्। (२) क. इदमिति नास्ति.

तदर्थमुपसंख्यानग्रहणं स्यात्; अत आह—**यथेति**। वार्तिकोक्तप्रयोजननिरासो भाष्यकृता आदिशब्दमनपेक्ष्येत्याह—**अन्ये त्विति**। त्रये त्रितीयस्य, चतुष्टये चतुर्थस्य शरीरसंयुक्तस्य। वस्त्रद्वयमेव स्त्रीणां परिधानम्। तत्र बहिर्योग इत्येव सिद्धम्। यत्र क्वाचित्कं त्रयं चतुष्टयं तत्र तृतीयचतुर्थयोरन्तरा शाटका इत्येव भवितव्यम्। न तु विकल्पः। वार्तिके आदिपदमाधेयार्थमिति भगवदाशय इत्यपरे।

**॥ वा ॥ अपुरि ॥**

**भा :—अपुरीति वक्तव्यम्। इह मा भूत् अन्तरायां पुरि वसति।**

**॥ वा ॥ वाप्रकरणे तीयस्य ङित्सूपसंख्यानम् ॥**

**भा :—वाप्रकरणे तीयस्य ङित्सूपसंख्यानं कर्तव्यम्। द्वितीयायै द्वितीयस्यै, तृतीयायै तृतीयस्यै। 'विभाषा द्वितीयातृतीयाभ्याम्' इत्येतन्न वक्तव्यं भवति। किं पुनरत्र ज्यायः? उपसंख्यानमेवात्र ज्यायः। इदमपि सिद्धं भवति—द्वितीयाय द्वितीयस्मै, तृतीयाय तृतीयस्मै ॥ अन्तरं ॥ ३५ ॥**

प्र :—**अपुरीति**। गणसूत्र एतत् कर्तव्यम्। लिङ्गविशिष्टपरिभाषया ग्रहणप्रसङ्गात्। इह त्वनेन नार्थः। अत इति जसः शीविधानादावन्तात्प्राप्त्यभावात्। पूः कस्मिंश्चिद्देशे प्राकाराभ्यन्तरे क्रियते क्वचित्प्राकाराद् बहिरिति अस्ति पुरो बहिर्योगः।

उ:—ननु जसि विधीयमानविकल्पस्य सप्तम्यामप्रवृत्तेरपुरीति व्यर्थम्; अत आह—**गणेति**। तथा च पुरव्यतिरिक्तवाचकस्यैव अन्तरशब्दस्य गणे पाठात् तस्य पुरवाचित्वे सर्वनामसंज्ञा कापि नास्तीत्यर्थः। नन्वन्तरशब्दस्य गणे पाठात् अन्तराशब्दस्य न संज्ञाप्रसङ्ग इति निषेधो व्यर्थः; अत आह—**लिङ्गविशिष्टेति**। 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति परिभाषयेत्यर्थः। इह पुरीत्यस्यानुपयोगमाह—**इह त्विति**। ननु बहिर्योगग्रहणेनैव पुरव्यावृत्तिः किं न स्याद्; अत आह—**पूरिति**। **अस्ति पुर इति;** प्राकारान्तरे बाह्येन, प्राकारात् बहिश्चेदनावृतदेशेनेत्युभयथा बहिर्योग इत्यर्थः।

सू.—स्वरादिनिपातमव्ययम् ॥ १। १। ३६ ॥

**भा :—किमर्थं पृथग् ग्रहणं स्वरादीनां क्रियते, न चादिष्वेव पठ्येरन्? चादीनां वै असत्ववचनानां निपातसंज्ञा, स्वरादीनां पुनः सत्ववचनानामसत्ववचनानां च।**

प्र :—**किमर्थमिति।** स्वरादिषु किंचित् क्रियाप्रधानं किञ्चित्साधनप्रधानमिति असत्ववचनत्वाच्चादिष्वेव स्वरादीनि पठितव्यानीति मत्वा प्रश्नः। **स्वरादीनां पुनरिति।** स्वस्ति वाचयति स्वः पश्येति क्रियासंबन्धेऽनेकशक्तिदर्शनात् सत्ववाचित्वनिश्चयः। लोहितगङ्गमित्यादीनामव्ययानां सत्त्वधर्मनपुंसकत्वदर्शनात् व्यक्तमेव सत्त्ववाचित्त्वम्।

उ :—**साधनप्रधानम्;** कारकशक्तिप्रधानम्। क्रियाशक्तयोरद्रव्यत्वमित्यर्थः। **असत्त्ववचनत्वात्;** अद्रव्यवचनत्वात्। **अनेकेति;** शक्तियोगित्वं द्रव्यस्यैवेति भावः। भाष्ये—**असत्त्ववचनानां च;** अव्ययसंज्ञा इष्यत इति शेषः।

**भा :—अथ किमर्थमुभे संज्ञे क्रियेते, न निपातसंज्ञैव स्यात्। नैवं शक्यम्। 'निपात एकाजनाङ्' इति प्रगृह्यसंज्ञोक्ता, सा स्वरादीनामप्येकाचां प्रसज्येत क इव केव। एवं तर्ह्यव्ययसंज्ञैवास्तु। तच्चाशक्यम्। वक्ष्यत्येतत् 'अव्यये नञ्कुनिपातानाम्' इति। तद्गरीयसा न्यासेन परिगणनं कर्तव्यं स्यात्। तस्मात् पृथग् ग्रहणं कर्तव्यम्। उभे च संज्ञे कर्तव्ये ॥ स्वरादि ॥ ३६ ॥**

प्र :—**न निपातसंज्ञैवेति।** प्राग्रीश्वरान्निपाताः स्वरादीनि चादयोऽसत्त्वे इति सूत्रन्यासः कार्यः इत्यर्थः। **स्वरादीनामिति।** किमोऽदिति, अत्प्रत्ययो 'दक्षिणादाज्' इत्याच् केन्प्रभृतयस्तु कृत एकाचः सन्तीति भावः। **तच्चाशक्यमिति।** अव्ययसंज्ञायामेव सत्यामव्ययमेकाजनाङिति सूत्रं कर्तव्यम्। ततश्चात्प्रभृतीनामपि प्रगृह्यसंज्ञाप्रसङ्गः प्राप्नोति। अथ चादय एकाजनाङिति क्रियते तदा चादीनामसत्त्ववचनत्त्वविशेषणमलभ्यम्।

उ :—ननु स्वरादीनां सत्त्ववाचित्वमपीत्युक्तत्वान्न निपातसंज्ञैवेत्युक्तम्; अत आह—**प्रागिति।** स्वरादिष्वेकाचामभावान्न प्रगृह्यसंज्ञाप्रसङ्गः; अत आह—

**किमोऽदिति ।** सर्वेषामव्ययसंज्ञासंज्ञिनां तद्धितानां स्वरादिषु पाठस्य वक्ष्यमाणत्वादित्यर्थः । भाष्ये **नञ्कुनिपातानामिति ।** तत्पुरुषे तुल्यार्थेत्यत्राऽव्ययग्रहणे इदं परिगणनं क्रियते । तत्र निपातसंज्ञाया अभावे चादीनां पृथक् प्रत्येकग्रहणप्रसङ्गात् गौरवं स्यादित्यर्थः । ननु पूर्वपदप्रकृतिस्वरः समासे । स च निपातेषु गतिसंज्ञकानां प्रादीनामेव । तथा च नञ्कुगतीनामपि परिगणनं करिष्यते; अत आह— **अव्ययेति ।** तथा च तस्मादिति भाष्ये उपसंहारो युक्त इत्यर्थः ॥

## सू.—तद्धितश्चासर्वविभक्तिः ॥ १। १। ३७ ॥

**॥ वा ॥ असर्वविभक्तावविभक्तिनिमित्तस्योपसंख्यानम् ॥**

**भा :—असर्वविभक्तावविभक्तिनिमित्तस्योपसंख्यानं कर्तव्यम् । विना नाना ॥ किं पुनः कारणं न सिध्यति ?**

**॥ वा ॥ सर्वविभक्तिर्ह्यविशेषात् ॥**

**भा :—सर्वविभक्तिर्ह्येष भवति । किं कारणम् ? अविशेषेण विहितत्वात् ।**

**॥ वा ॥ त्रलादीनां चोपसंख्यानम् ॥**

**भा :—त्रलादीनां चोपसंख्यानं कर्तव्यम् । तत्र यत्र ततः यतः । ननु च विशेषेणैते विधीयन्ते 'पञ्चम्यास्तसिल्' 'सप्तम्यास्त्रल्' इति । वक्ष्यत्येतद् 'इतराभ्योऽपि दृश्यन्ते' इति ।**

प्र :—इह संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधात् यद्यपि केवलस्य प्रत्ययस्य ग्रहणं तथापि 'प्रयोजनं सर्वनामाव्ययसंज्ञायाम्' इति वाचनिकस्तदन्तविधिरस्तीति तदन्तस्याव्ययसंज्ञा विज्ञायते । तत्र वृत्तिकारेण व्याख्यातम् असर्वा विभक्तिर्यस्य सोऽसर्वविभक्तिरिति । तत्र यदा अयमर्थः यस्य तद्धितस्य असर्वा विभक्तिः कार्या यस्मान्न सर्वा विभक्तिरुत्पद्यते [१]इति तदा न दोषः । यदा तु यस्य तद्धितस्योत्पत्तौ निमित्त-

(१) क. इत्यर्थः

त्वेनासर्वा विभक्तिराश्रिता सोऽसर्वविभक्तिः। यथा सर्वैकान्येति दाप्रत्ययस्य सप्तम्येवोत्पत्तिनिमित्तमित्यस्मिन्[1] सूत्रार्थे विनानानेत्यस्याव्ययसंज्ञा न सिध्यति। न हि विनञ्भ्यामित्यत्र प्रतिनियता काचित् विभक्तिराश्रितेत्याह—**असर्वविभक्ताविति।** अतिव्याप्तिश्चास्मिन् सूत्रार्थे दाक्षिरितीञः षष्ठ्येव निमित्तमिति संज्ञाप्रसङ्गात्। **अविभक्तिनिमित्तस्येति।** अश्रूयमाणविभक्तिकमव्ययमविभक्तीत्युच्यते। तन्निमित्तस्य यस्येष्यते न च प्राप्नोति तस्योपसङ्ख्यानं कर्तव्यम्। न तु सामान्येनाविभक्तिनिमित्तस्य संज्ञा विधेया विशालविशङ्कटादीनामपि प्रसङ्गात्। **किं पुनरिति।** एकवचनमुत्सर्गत इति वचनात् क्रमव्यतिक्रमे कारणाभावात् विनानानेत्यत्रापि असर्वा विभक्तिरुत्पत्तौ निमित्तमिति प्रश्नः। **सर्वविभक्तिरिति।** अविशेषेणोत्पद्यन्ते,[2] उत्पन्नानां नियमः क्रियत इत्यव्ययात् सर्वा विभक्तय उत्पद्यन्त इत्यर्थः। **अविशेषादिति।** विशेषस्यानाश्रयणादित्यर्थः। **अलादीनां चेति।** आदिशब्दस्य प्रकारवाचित्वात्तसिलपि गृह्यते। **वक्ष्यत्येतदिति।** भवदादिप्रयोग एवाप्राप्तिश्चोद्यते इत्यर्थः।

उ:—वार्तिकावतारोपयोगितया सूत्रार्थमाह—**इहेति।** **केवलेति;** तथा च तद्धितान्ताद्विहितः सुबव्ययान्न विहित इति लुङ् न स्यादिति भावः। **वृत्तिकारेण;** वार्तिकात्पूर्वं वृत्तिकारेण। **न दोषः;** विनानानेत्यादौ नानुपपत्तिः। **असर्वा विभक्तिराश्रिता;** न सर्वा विभक्तिराश्रिता, किन्तु एकैवेति यावत्। तादृशमुदाहरति—**यथेति।** अस्मिन् सूत्रार्थे स्वयमतिव्याप्तिमप्याह—**अतिव्याप्तिश्चेति।** यथाश्रुतेऽतिप्रसङ्गं वक्ष्यन् व्याचष्टे—**अश्रूयमाणेति।** 'अव्ययादाप्सुपः' ति लुग्विधानादश्रूयमाणविभक्तिकमव्ययम्। अव्ययग्रहणे व्युत्पत्तिकथनमेतत्। उपकुम्भाद्गतः इतः इत्यादौ विभक्तेरपि श्रवणात् एतत्सूत्रविषयाव्यय एवायं नियमो विवक्षितः। **तन्निमित्तस्य;** अव्ययत्वनिमित्तस्य। **यस्य;** नानाआदेः। **इष्यते;** अव्ययत्वम्। यथाश्रुतं निरस्यति—**न त्विति।** 'वेः शालच्छङ्कटचौ' इत्यत्रापि विभक्त्यनपेक्षणात्। **एकवचनमिति।** स्वादिविधेः द्व्येकयोरित्यादेश्च एकवाक्यत्वे अव्ययस्यैकत्वाद्यभावेन अविभक्तिकत्वनिरासायैकवचनमेकत्वनिरपेक्षमेव सामान्येन विधीयते। द्वित्वादिवचनात् द्विबह्वोर्द्विवचनबहुवचने। तथा च संख्यानिरपेक्षमेकवचनमव्ययादपि स्यादित्यर्थः। नन्वनियमात् सर्वैकवचनप्रसक्त्या सर्वविभक्तिरवमेव स्याद्; अतः

(१) क. मित्येतस्मिन् (२) क. इतीत्यधिकम्।

आह—**क्रमेति**। तथा च सुप्रत्यय एक एव भवतीत्यर्थः। **अविशेषेणेति**। वाक्यभेदेन स्वादीनां सामान्येन विधाने पश्चात् द्व्येकयोरित्यादिना नियमः क्रियते द्वित्वे द्विवचनमित्यादिः। तेनाव्ययादपि सर्वविभक्त्युत्पत्तिरित्यर्थः। **सर्वा इति**। यद्यपि पदत्वार्थं प्रथमैकवचनमात्रमुत्पद्यते प्राथम्यात्। न त्वन्यानि, अनुपयोगात्। समुच्चयस्य सर्वेषां प्रातिपदिकार्थत्वासंभवेन चायोगात्। तथाप्येकत्वाद्यनपेक्षणात् संभावनामात्रेण ग्रन्थगमनिकामात्रमेतदिति ज्ञेयम्। **विशेषस्य;** विभक्तिविशेषस्य। त्रलादीनामित्युक्त्वा ततः पूर्वस्य तसिल उदाहरणमयुक्तम्; अत आह—**आदिशब्दस्येति**। ननु भवदादिप्रयोग एवेतराभ्य इति प्रवृत्तेरन्यत्राव्याप्तिशङ्का नास्ति; अत आह—**भवदादीति**। दृशिग्रहणात् भवद्दीर्घायुःदेवानांप्रियायुष्मद्योग एवेष्यते।

**भा :—यदि पुनरविभक्तिश्शब्दोऽव्ययसंज्ञो भवतीत्युच्यते।**

**॥ वा ॥ अविभक्ताावितरेतराश्रयत्वादप्रसिद्धिः ॥**

**भा :—अविभक्तावितरेतराश्रयत्वादप्रसिद्धिः संज्ञायाः। का इतरेतराश्रयता? सत्यविभक्तित्वे [1]संज्ञया भवितव्यम्। संज्ञया चाविभक्तित्वं भाव्यते। तदेतद् इतरेतराश्रयं भवति। इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते।**

**॥ वा ॥ अलिङ्गमसङ्ख्यमिति वा ॥**

**भा :—[2]अलिङ्गसंख्यमव्ययसंज्ञं भवतीति वक्तव्यम्। एवमपि इतरेतराश्रयमेव भवति। का इतरेतराश्रयता? सत्यलिङ्गसंख्यत्वे संज्ञया भवितव्यम्। संज्ञया चालिङ्गासंख्यत्वं भाव्यते। तदेतदितरेतराश्रयं भवति। इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते। नेदं वाचनिकमलिङ्गता असंख्यता च। किं तर्हि? स्वभाविकमेतत्[3]। तद्यथा समानमीहमानानां चाधीयानानां च केचिदर्थैर्युज्यन्ते, अपरे न। तत्र किमस्माभिः कर्तुं शक्यम्। स्वाभाविकमेतत्। तर्त्तर्हि वक्तव्यम 'अलिङ्गमसंख्यम्' इति। न वक्तव्यम्।**

---

(१) क. अव्ययसंज्ञया। (२) क. अथवालिङ्ग
(३) क. मेव तत्।

**॥ वा ॥ सिद्धं तु पाठात् ॥**

**भा :—पाठाद्वा सिद्धमेतत्। कथं पाठः कर्तव्यः? तसिलादयः प्राक्पाशपः। शस्प्रभृतयः प्राक् समासान्तेभ्यः; मान्तः। तसिवती। कृत्वोऽर्थः। नानाञाविति।**

प्रः—**यदि पुनरिति।** प्रयोगे योऽश्रूयमाणविभक्तिः सोऽव्ययमित्यर्थः। न च दधि मध्वित्यत्रातिप्रसङ्गः, दध्नीत्यादौ विभक्तिश्रवणात्। **अविभक्ताविति।** अव्ययत्वादविभक्तित्वमविभक्तित्वादव्ययत्वमिति दोषः। **अलिङ्गमसङ्ख्यमिति।** अविभक्तिरव्ययमित्यस्य लक्षणस्य दूषितत्वात् अत्रापि तदेव दूषणमिति प्रदर्शनार्थो वाशब्दः। अलिङ्गासङ्ख्यत्वस्य लौकिकत्वान्नेतरेतराश्रयत्वमिति पूर्वपक्षः। **एवमपीति।** अर्थमपि कश्चित् क्वचित् शास्त्रादेव प्रतिपद्यत इति भावः। **सिद्धं त्विति।** वार्तिककारस्येतरेतराश्रयदोषः स्थित एवेति तुशब्दो विशेषप्रदर्शनार्थः। भाष्यकारेण त्वितरेतराश्रयदोषः परिहृतः इति वाशब्दार्थस्तुशब्दो व्याख्यातः। य एव प्रकारवचने थाल् स एव प्रत्नादिभ्यो विधीयते इति नाव्याप्तिः। **मान्त इति**; आम्, अम्। **तसिः**; प्रतियोगे 'पञ्चम्यास्तसिः' 'तेनैकदिक् तसिश्च' इति। **कृत्वोऽर्थाः**; कृत्वसुच्सुच्धाः।

उ:—ननु पदत्वायाव्ययादपि विभक्तेरावश्यकत्वादविभक्तिरित्ययुक्तम्; अत आह—**प्रयोग इति।** यस्य क्वापि प्रयोगे विभक्तिर्न श्रूयते तत्त्वं विवक्षितमित्यभिप्रेत्याह—**न चेति।** इतरेतराश्रयत्वं स्फुटयति—**अव्ययत्वादिति।** वार्तिकस्थवाशब्दस्य पूर्ववार्तिकाविरुद्धमर्थमाह—**अविभक्तिरिति।** दूषितत्वात् वार्तिककृतेतरेतराश्रयत्वेनेत्यर्थः। स्वव्याख्यानुसारेण भाष्यं संगमयितुमाह—**अलिङ्गेति।** *भाष्ये अथवेत्येतत्न वार्तिकस्थवाकारव्याख्यानार्थम्; किं तु उक्तेतरेतराश्रयव्यावृत्त्यर्थम्। तस्याभिप्रायो लौकिकत्वादित्यनेनोक्तः। निरासाभिप्रायमाह—**अर्थमपीति। कश्चित्**; मध्यमोऽधमश्च। तं प्रतीतरेतराश्रयत्वमपरिहार्यमित्यर्थः। लिङ्गमशिष्यमिति न्यायेनालिङ्गासंख्यत्वयोरपि लोकसिद्धत्वान्मन्दमध्यमयोरपि लिङ्गवदलिङ्गज्ञानमपि लोकादेव भविष्यतीति नेतरेतराश्रयत्वमिति नेदं वाचनिकमिति भाष्यार्थः। प्रातिपदिकत्वाविशेषेऽपि कस्यचिल्लिङ्गसंख्यायोगः कस्यचिन्नेत्येतदुपपादयति भाष्ये—**तद्यथेति।** सिद्धं त्वितीत्यस्य पाठाद्वेति व्याख्यानायोगं परिहरति—**वार्तिककारस्येति।** ननु प्रत्नपूर्वेति थाल् न परिगणितान्तःपातीत्यव्ययत्वं न स्यात्; अत आह—**य एवेति।** प्रत्नादिसूत्रे

इवार्थः ; पूर्वत्र प्रकारार्थ इत्यर्थभेदेऽपि प्रत्यय एक एव, प्रत्यभिज्ञानादिति भावः। मान्तमाह—**आमिति**। 'किमेत्तिङव्ययघा'त्याम्। 'अम् च छन्दसि' इत्यम्। ननु शस्प्रभृतिष्वेव तसिरिति पुनस्तसिग्रहणं व्यर्थम् ; अत आह—**तसिरिति**। यथाऽयं शस्प्रभृतिषु तथा तदनन्तर्भूतोऽप्यस्तीति प्रतिपादनाय प्रतियोगे तसिरुदाहृतः। यद्यपि प्रत्नादिथाल्वत् दिकृतसिरपि शस्प्रभृतिस्थ एवेति वक्तुं शक्यम्। न च स्वार्थिकत्वास्वार्थिकत्वाभ्यां भेदः ; थाल्यप्यर्थभेदस्य तुल्यत्वात्। तथाप्यर्थभेदेन भेदमङ्गीकृत्य स्थितस्य गतिरुक्तेति ज्ञेयम्। कृत्वसुजिनि वक्तव्ये कृत्वोऽर्थ इत्यस्य प्रयोजनमाह—**कृत्वोऽर्थ इति**। 'संख्यायाः' इति कृत्वसुच्। 'द्वित्रिचतुर्भ्यः सुच्' इति सुच्। 'विभाषा बहोर्धा' इति धा। भाष्ये 'उपसर्गाच्छन्दसि धात्वर्थे' इति विहितवतिव्यतिरिक्तवतिरेव ग्राह्यः। तस्य कारकशक्तिमद्द्रव्याभिधायित्वेनाव्ययत्वाभावादित्याहुः।

**भा :—अथवा पुनरस्तु 'अविभक्तिशब्दोऽव्ययसंज्ञो भवति' इत्येव। ननु चोक्तम् 'अविभक्ताावितरेतराश्रयत्वादप्रसिद्धिः' इति। नैष दोषः। इदं तावदयं प्रष्टव्यः 'यद्यपि तावद्वैयाकरणा विभक्तिलोपमारभमाणा अविभक्तिकान् शब्दान् प्रयुञ्जते। ये त्वेते वैयाकरणेभ्योऽन्ये मनुष्याः कथं तेऽविभक्तिकान् शब्दान् प्रयुञ्जते' इति। अभिज्ञाश्च पुनर्लौकिका एकत्वादीनामर्थानाम्। आतश्चाभिज्ञाः। अन्येन हि वस्नेनैकं गां क्रीणन्ति, अन्येन द्वावन्येन त्रीन्। अभिज्ञाश्च न च प्रयुञ्जते। तदेतदेवं संदृश्यताम् 'अर्थरूपमेवैतदेवंजातीयकं येनात्र विभक्तिर्न भवति' इति। तच्चाप्येतदनुगम्यमानं दृश्यताम्। किंचिदव्ययं विभक्त्यर्थप्रधानं, किंचित् क्रियाप्रधानम्। उच्चैर्नीचैरिति विभक्त्यर्थप्रधानम्, हिरुक् पृथगिति क्रियाप्रधानम्। तद्धितश्चापि कश्चित् विभक्त्यर्थप्रधानः, कश्चित् क्रियाप्रधानः। तत्र यत्रेति विभक्त्यर्थप्रधानः, विना नानेति क्रियाप्रधानः। न चैतयोरर्थयोर्लिङ्गसंख्याभ्यां योगोऽस्ति।**

प्र :—**अथवेति**। वृद्धव्यवहारादेव शब्दार्थसम्बन्धावगमादेकत्वादिव्यवहारवदलिङ्गासङ्ख्यत्वमप्यव्ययार्थस्य प्रसिद्धमित्यर्थः। [1]तत्रैवोपपत्तिमाह—**तच्चापीति**।

(१) मु. पु. अत्रैव.

**किंचिदिति।** अव्ययानां द्वैविध्यमेवेति प्रतिपाद्यते अलिङ्गासङ्ख्यत्वप्रतिपादनाय। अन्ये त्वाहुः। किञ्चिदव्ययं क्रियाप्रधानं किंचित्साधनप्रधानम्। अन्यत्तु नापि क्रियाप्रधानं नापि साधनप्रधानम्। यथा स्वः पश्य लोहितगङ्गं, उन्मत्तगङ्गं देश इति। तथा चात्र नपुंसकत्वं 'अव्ययीभावश्च' इत्यन्वाख्यायते। पूर्वं च भाष्यकारेणोक्तं स्वरादीनां पुनः सत्ववचनानामसत्ववचनानां चेति। तस्माद् बाहुल्याभिप्रायेणालिङ्गम-सङ्ख्यमव्ययमित्युच्यते। **उच्चैर्नीचैरिति।** सप्तम्यर्थे वर्तते इति साधनप्रधानता। **हिरुक् पृथगिति।** क्रियाविशेषणत्वादेषां क्रियाप्राधान्यम्। क्रियापदप्रयोगम-न्तरेणापि पृथक् देवदत्त इत्यादिप्रयोगः क्रियाक्षेपादुपपद्यते। शब्दशक्तिस्वाभाव्याच्चैक-स्मिन्नर्थे विधीयमानयोः 'नेनैकदिक्' 'तसिश्च' इत्यण्तसोर्भिन्नधर्मत्वम्। तत्र पैलु-मूलमिति द्रव्यं प्राधान्येनाभिधीयते। पीलुमूलत इति तु द्रव्योपसर्जनस्तृतीयार्थ इति तस्य साधनप्रधानता।

उ:—अथवेत्यस्य तात्पर्यमाह—**वृद्धेति।** शब्दस्यार्थस्य संबन्धस्य चावग-मादित्यर्थः। नन्वेकादिसंख्यापरिज्ञानात्तद्वाचिविभक्तिमवैयाकरणा न प्रयुञ्जते; अत आह भाष्ये—**अभिज्ञाश्चेति। तत्रैव;** अलिङ्गासंख्यात्व एव। उपपत्ति-त्वमेव व्यनक्ति—**अव्ययानामिति।** विभक्त्यर्थक्रिययोरद्रव्यत्वेन लिङ्गसंख्या-योगासंभवादित्यर्थः। द्वैविध्यनियमो नास्तीति मतान्तरमाह—**अन्ये त्विति। नापि साधनप्रधानम्;** किं तु द्रव्यप्रधानमिति शेषः। द्रव्यप्राधान्यं सूत्रकृतोऽपि संमतमित्याह—**तथा चेति।** त्रैविध्यं भाष्यकारस्यापि संमतमित्याह—**पूर्वं चेति। क्रियाक्षेपादिति;** अस्तिर्भवन्तिपर इति न्यायेन अस्त्यादिक्रियाक्षे-पात्, योग्यक्रियान्तराक्षेपाद्वेत्यर्थः। शब्दभेदे स्वाभाव्यात् तत्तत्प्रधानत्वेनालिङ्गा-संख्यत्वं व्यवस्थापितम्। एकार्थे विहितप्रत्यययोरपि स्वाभाव्यादेव लिङ्गसंख्यायोगायोगौ क्वचिदङ्गीकार्यावित्याह—**शब्दशक्तीति।** तदेवाह—**तत्रेति। पैलुमूल-मिति;** पीलुमूलेन समानदिग्वस्तु अभिधीयते। प्रत्ययाभिधेयं द्रव्यमुपसर्जनं यस्य प्रकृत्यभिधेयतृतीयार्थस्य स इति विग्रहः।

**भा:—अथाप्यसर्वविभक्तिरित्युच्यते। एवमपि न दोषः। कथम्? इदं चाप्यव्ययत्वे अतिबहु क्रियते 'एकस्मिन्नेकवचनम्, द्वयोर्द्विवचनम्, बहुषु बहुवचनम्' इति। कथं तर्हि? एक-वचनमुत्सर्गः करिष्यते। तस्य द्विबह्वोरर्थयोर्द्विवचनबहुवचने बाधके भविष्यतः। न चाप्येवं विग्रहः करिष्यते 'न सर्वाः**

**असर्वाः, असर्वा विभक्तयो यस्मात्' इति। कथं तर्हि? न सर्वा असर्वा, असर्वा विभक्तिरस्मात्' इति। त्रिकं पुनर्विभक्तिसंज्ञम्।**

प्रः—**अद्यत्व इति।** सूत्रारम्भकाल इत्यर्थः। पूर्वं हि न्यासान्तराश्रयेण सूत्रं प्रत्याख्यातम्। **अतिबह्विति।** एकस्मिन्नित्यपनीय एकवचनमिति सूत्रं कर्तव्यम्। ततो द्विबह्वोः द्विवचनबहुवचने इत्येवं कर्तव्यम्। तेन द्वित्वबहुत्वयोर्द्विवचनबहुवचने भविष्यतः। एकवचनं त्वेकस्मिन्नपि भविष्यति अलिङ्गासङ्ख्येभ्योऽव्ययेभ्यश्च। ननु 'कर्मणि द्वितीया' इत्यादिना कर्मादिषु द्वितीयादीनां नियतत्वात् कथमेकवचनमव्ययेभ्यः स्यात्। नैष दोषः। एतदर्थमेवैकवचनमित्येतत् क्रियतेऽप्राप्तप्रापणार्थम्। तेन कर्माद्यभावेऽपि भवति। द्वित्वबहुत्वयोस्तु प्राप्तं द्विवचनबहुवचनाभ्यां बाध्यते। न सर्वा विभक्तयः उत्पत्तौ निमित्तमस्येति येन वृत्तिकारेण व्याख्यातं तन्मतं दूषितम्। इदानीं वृत्तिकारान्तरमतं विशेषदर्शनेन संस्क्रियते। **न चाप्येवमिति।** एवं विग्रहे सर्वशब्दस्य प्रकारकात्स्न्र्येऽपि वर्तनादेकवचनमात्रोत्पत्तावपि सर्वाः विभक्तयः सप्ताव्ययेभ्यः उत्पद्यन्ते इति न स्यादसर्वविभक्तिकत्वम्। **कथं तर्हीति।** द्रव्यकात्स्न्र्यवृत्तिः सर्वशब्दः। एकवचनमात्रोत्पत्तौ निरवशेषा विभक्तिर्नोत्पन्ना भवतीति भवत्येवासर्वविभक्तित्वम्। यदा त्वयं न्यायः प्रथमातिक्रमे कारणाभावात् प्रथमाया एवैकवचनमव्ययेभ्य उत्पद्यत इति तदा असर्वा विभक्तयो यस्मादित्यपि विग्रह आश्रिते न दोषः। यदा तु खलेकपोतिकन्यायेन सर्वैकवचनोत्पत्तिपक्षस्तदैतदुक्तम्। अव्ययीभावादप्येकवचनमात्रमेवोत्पद्यते। तावतैव 'तृतीयासप्तम्योर्बहुलम्' इत्यस्योपपादनात्।

उः—अद्यत्वस्यार्थमाह—**सूत्रेति।** इदानीं सूत्रादेव सर्वविभक्तित्वमित्यानेतुमिदं भाष्यमित्यभिप्रेत्याह—**पूर्वमिति। न्यासान्तरम्;** असर्वविभक्तावित्यादिन्यासान्तरम्। **प्रत्याख्यातम्;** इदानीं समर्थ्यत इति शेषः। भाष्ये—**अतिबहु;** अत्यधिकम्। आधिक्यमेव प्रतिपादयति—**एकस्मिन्नित्यादि।** अव्ययेभ्योऽप्राप्तिं शङ्कते—**नन्विति।** यद्यपि प्रथमैकवचनमनियतत्वात् स्यादेव, तथापि भाष्ये सर्वैकवचनानामव्ययेभ्य उत्पत्त्यङ्गीकारात्तत्रेयमाशङ्का। प्रथमाप्यभिहिते कारके नियतेति तु न सम्यक्। अकारकेऽपि प्रातिपदिकार्थमात्रे तत्संभवात्।

**एतदर्थमेव ;** कर्माद्यभावेऽपि एकवचनार्थमेव। **द्वित्वबहुत्वयोस्त्विति।** यद्यप्यनिर्दिष्टार्थत्वेन स्वार्थिकत्वान्न द्वित्वबहुत्वयोः प्राप्तिस्तथापि पञ्चकप्रातिपदिकार्थपक्षे संख्यात्रयेऽपि प्राप्तिः संभवतीत्यभिप्रायः। **दूषितमिति।** 'इतरेभ्योऽपि दृश्यन्ते' इत्यव्याप्तेर्दाक्षिरित्यादावतिव्याप्तेश्चेति भावः। **वृत्तिकारान्तरेति।** यस्य तद्धितस्य सर्वविभक्तिः कार्या यस्मान्न सर्वा विभक्तिरुत्पद्यते इत्युक्तेत्यर्थः। **प्रकारकात्स्न्र्ये-ऽपीति।** प्रथमात्वद्वितीयात्वरूपप्रकारकात्स्न्र्ये इत्यर्थः। **सर्वा विभक्तयः ;** सर्वप्रकाराः। **द्रव्येति।** प्रकाराश्रयैकवचनद्विवचनबहुवचनकात्स्न्र्यवृत्तिरित्यर्थः। क्वचिदनेकविधानि धान्यानि पृथग्राशयस्तिष्ठन्ति। तत्र सर्वाणि धान्यान्यानीयन्तामित्युक्ते सर्वराशीनामेकैकमुष्टिमात्रानयनेऽपि वचनार्थोऽनुष्ठितः। सर्वं धान्यमानीयतामित्युक्ते निरवशेषमानीयत इति बहुवचने प्रकारकात्स्न्र्यमपि संभवति। एकवचनेऽवयवकात्स्न्र्यमेवेति लोकव्युत्पत्तिसिद्धोऽयमर्थ इति भावः। एवं च दाक्षिरित्यादौ नातिव्याप्तिः। वचनत्रयस्यापि तत उत्पत्तेः। विनादौ च नाव्याप्तिः, वचनत्रयस्यापि ततोऽनुत्पत्तेरिति न पूर्वोक्तदोषः। बहुवचनान्तेन विग्रहेऽपि न दोष इत्याह—**यदेति।** भाष्यं संगमयति—**यदा त्विति।** अर्थविशेषाऽनपेक्षतया युगपत्सर्वोत्पत्तिसंभावनामात्रेण तदुक्तम् ; वस्तुतः सर्वेषां युगपत्प्रातिपदिकपरत्वासंभवात् प्रथमैकवचनपक्ष एव सम्यगिति भावः। ननु अव्ययात्सर्वविभक्त्यनुत्पत्तौ अव्ययीभावेऽपि तदा स्यात्। तथा च तृतीयासप्तम्योरित्ययुक्तम् ; अत आह—**अव्ययीभावादिति।** न च प्राथम्यन्यायपक्षे तदसङ्गतिः शङ्कनीया। अस्मादेव ज्ञापकात् तृतीयासप्तमीपञ्चम्येकवचनोत्पत्तावपि विभक्त्यन्तरस्यानुत्पत्त्या बहुवचनपक्षस्याप्यदुष्टत्वात्।

**भा :—एवं गते कृत्यपि तुल्यमेत-**
**न्मान्तस्य कार्यं ग्रहणं न तत्र।**
**ततः परे चाभिमता न कार्या-**
**स्त्रयः कृदर्था ग्रहणेन योगाः ॥ १ ॥**

**कृत्तद्धितानां ग्रहणं तु कार्यं**
**संख्याविशेषमभिनिश्रिता ये।**

**तेषां प्रतिषेधो भवतीति वक्तव्यम्। इह मा भूत् 'एको, द्वौ, बहवः।' इति**

**तस्मात् स्वरादिग्रहणं च कार्यं**
**कृत्तद्धितानां ग्रहणं च पाठे ॥ २ ॥**

प्र :—**एवं गत इति**। यदा असर्वा विभक्तिरस्मादिति विग्रह आश्रीयते। तदैवं विज्ञाते सत्येतावल्लक्षणमस्त्वसर्वविभक्त्यव्ययमिति। पञ्चसूत्री न कर्तव्या। एतदसर्वविभक्तित्वं कृत्यपि तुल्यम्। यस्य कृन्मेजन्त इत्यनेनाव्ययसंज्ञेष्यते। **मान्तस्येति ;** सूत्रोपलक्षणम्। **ततः पर इति**। कृन्मेजन्त इत्यस्मात् सूत्रा परे कृदर्थाः कृत्संज्ञाविषयाः 'क्त्वातोसुन्कसुनः' इत्यर्थः। ग्रहणेनोच्चारणेन प्रतिपदमित्यर्थः। **योगाश्च न कर्तव्याः** 'स्वरादिनिपातमव्ययम्' इत्येवमादयः पञ्चेत्युपसंहारः। इदानीमतिव्याप्तिपरिहारार्थं तद्धितग्रहणं कर्तव्यम्। तस्मिन् कृते कृन्मेजन्त इत्याद्यपि कर्तव्यमिति दर्शयति—**कृत्तद्धितानामिति**। **सङ्ख्याविशेषमिति**। तन्निवृत्त्यर्थमित्यर्थः। **तेषामिति**। असति तद्धितग्रहणे एकादीनामतद्धितान्तानामप्यसर्वविभक्तित्वात् प्रतिषेधो वक्तव्यः स्यादिति तद्धितग्रहणं कर्तव्यम्। तस्मिन् कृते स्वरादिग्रहणं कर्तव्यम् स्वरादीनामतद्धितान्तत्वात्। ननूभयशब्दस्य द्विवचनानुत्पादादसर्वविभक्तित्वं तथा गोदौ वरगा इति तत एषामपि, तद्धितश्चासर्वविभक्तिरित्यव्ययसंज्ञाप्रसङ्ग इत्याह—**कृत्तद्धितानामिति**। प्रतिपदं तद्धिताः पठितव्याः येषामव्ययसंज्ञेष्यत इत्यर्थः। तस्माद्गणपाठ एवाश्रयितव्यः। प्रपञ्चार्थस्तु [१]सूत्रारम्भः।

उ :—असर्वविभक्त्यव्ययमित्येव वक्तव्यं, यथाश्रुतसूत्रपञ्चकं न कर्तव्यमित्येवंपरतया 'एवं गत' इति श्लोकं व्याचष्टे—**यदेति**। **ज्ञात इति**। गत इत्यस्य व्याख्या। मान्तस्येत्यनेन एजन्तस्याग्रहणशङ्कां वारयति—**सूत्रोपलक्षणमिति**। भाष्यगतश्लोके—**तत्र ;** अव्ययसंज्ञाविषय इत्यर्थः। सूत्र इत्यर्थ इति तु चिन्त्यम्। अभेदेनाधारत्वासंभवात्। तथा च **ग्रहणं** श्लोके उच्चारणं। 'कृन्मेजन्त' इति सूत्रं न कर्तव्यमिति यावत्। कृदर्था इत्यनेन योगा इत्यस्यानन्वयादुपसंहारत्वेन व्याचष्टे—**योगाश्चेति**। द्वितीयश्लोकं परिहारत्वेनावतारयति—**इदानीमिति**। **अतिव्याप्तीति ;** एको द्वौ बहव इत्यादौ। तदर्थमित्यध्याहारशङ्कां वारयति—**तन्निवृत्त्यर्थमिति**। भाष्ये—**अभिनिश्रिताः ;** आश्रिताः। संख्याविशेषप्रतिपादका इति यावत्। तेषामित्यस्य पूर्वैकवाक्यतानिवृत्तये व्याचष्टे—**असतीति**। भाष्ये य इत्यनन्तरमन्यथेत्यध्याहारोऽनेन सूचितः। ननु पञ्चसूत्र्या सर्वसंग्रहात् कृत्तद्धि-

---

(१) क. सूत्रप्रबन्धः

-तानां पाठवचनमयुक्तम् ; अत आह—**नन्विति।** पौनरुक्त्यपरिहाराय शङ्कोत्तरत्वेन व्याख्यानमिति तु न। पूर्वं सूत्रकर्तव्यतोक्ता इदानीं पाठस्येति[1] पौनरुक्त्यशङ्कानवकाशात्। **गोदाविति।** गोदयोरदूरभवः गोदौ वरणाया अदूरभवः वरणाः 'वरणादिभ्यश्च' इति चातुरर्थिकस्य लुक्। 'लुपि युक्तवद्व्यक्तिवचने' इति वचनान्तराभावः। **इत्याह ;** इत्यत आह। ननु तद्धितवत्कृतामपि पाठसंभवात् चतुःसूत्री व्यर्था ; अत आह—**तस्मादिति। प्रपञ्चः ;** समूहः।

**भ :—पाठेनेयमव्ययसंज्ञा क्रियते। सेह न प्राप्नोति परमोच्चैः परमनीचैः' इति। तदन्तविधिना भविष्यति। इहापि तर्हि प्राप्नोति 'अत्युच्चैः अत्युच्चैसौ अत्युच्चैस' इति। उपसर्जनस्य नेति प्रतिषेधो भविष्यति। स तर्हि प्रतिषेधो वक्तव्यः। न वक्तव्यः। सर्वनामसंज्ञायां प्रकृतः प्रतिषेध इहानुवर्तिष्यते। स वै तत्र प्रत्याख्यायते। यथा स तत्र प्रत्याख्यायते इहापि तथा शक्यः प्रत्याख्यातुम्। कथं च स तत्र प्रत्याख्यायते? 'महतीयं संज्ञा क्रियते' इति। [2]इयमपि च महती संज्ञा क्रियते। संज्ञा च नाम यतो न लघीयः। कुत एतत्? लघ्वर्थं हि संज्ञाकरणम्। तत्र महत्याः संज्ञायाः करणे एतत् प्रयोजनम् अन्वर्था संज्ञा यथा विज्ञायेत 'न व्येतीत्ययम्' इति। क पुनर्न व्येति? स्त्रीपुन्नपुंसकानि सत्त्वगुणाः, एकत्वद्वित्वबहुत्वानि च। एतानर्थान् केचिद्वियन्ति केचिन्न वियन्ति। ये न वियन्ति तदव्ययम्।**

**सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।**
**वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्॥ १॥**

**॥ तद्धितश्चा ॥ ३७ ॥**

प्र :—**तदन्तविधिनेति।** 'प्रयोजनं सर्वनामाव्ययसंज्ञायाम्' इति वचनेनेति भावः। **अत्युच्चैसाविति।** शक्तिप्रधानान्यप्यव्ययानि वृत्तिविषये शक्तिमत्प्रधानानि भवन्ति। यथा दोषामन्यमहः, दोषाभूतमहरिति। तत उच्चैश्शब्दस्य प्रक्रियायां द्वितीयान्तस्य समासः। **क पुनरिति।** श्लोके सप्तमीनिर्देशात् प्रश्नेऽपि सप्तमी

(१) क. अपौनरुक्त्यात् इत्यधिकम् (२) क. एवमिहापि।

निर्दिष्टा। **सदृशमिति।** लिङ्गविशेषप्रतिपादने सामर्थ्याभावात्। **विभक्तिष्विति;** कारकेषु। तत्र यानि साधनप्रधानानि अव्ययानि तेषां शक्त्यन्तरानावेशात् क्रियाप्रधानानां च शक्तिसम्बन्धाभावात् सर्वासु च विभक्तिष्वित्युक्तम्। **वचनेष्विति।** एकत्वादिषु। अव्ययीभावस्य शक्तिलिङ्गविशेषयोगेऽपि वचनादव्ययत्वम्। यथा स्वत्यादीनां कर्मप्रवचनीयसंज्ञा। तत्र यान्यसत्वभूतार्थाभिधायीन्यव्ययानि तेषां लिङ्गादिभिरयोगः। तेषां द्रव्यधर्मत्वात्। सत्त्ववाचिनामपि[1] शब्दशक्तिस्वाभाव्यात्तद्योगो यथा युष्मदस्मदोर्लिङ्गायोगः। केचित्तु लिङ्गादिवि[2]शेषणायोगात् तत्सामान्येन तु योगमव्ययानामाहुः। तदयुक्तम्। लिङ्गादिसामान्यसद्भावे प्रमाणाभावात्। **यन्न व्येतीति।** नानात्वं न गच्छतीति सत्त्वधर्मान् न गृह्णातीत्यर्थः।

उ :—विशेष्यासन्निधानात् कथं तदन्तविधिः; अत आह—**प्रयोजनमिति।** 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति कर्मार्थेन समासः। उच्चैःशब्दश्चाधिकरणप्रधानो न कर्मवाचीति कथं समास; अत आह—**शक्तीति। दोषामन्यमिति।** 'आत्ममाने खश्च'। 'खित्यनव्ययस्य' इत्युक्तेर्न ह्रस्वमुमागमौ। दोषाशब्दोऽत्र द्वितीयार्थे वर्तते। दोषाभूतमित्यत्र प्रथमार्थे। भाष्ये **उपसर्जनेन तदन्तविधिर्नेति।** अत्युच्चैसावित्यत्राव्ययसंज्ञा न भविष्यतीत्यर्थः। गौरवं शङ्कते भाष्ये—**स तर्हीति।** भाष्ये सर्वनामेति संज्ञोपसर्जनप्रतिषेधोऽत्रानुवर्तनीय इत्यर्थः। प्रत्याख्यातस्यात्र नानुवृत्तिः संभवतीति शङ्कते भाष्ये—**स इति।** प्रत्याख्यानमत्रापि समानमित्याह भाष्ये—**यथेति।** नन्वर्थानित्यग्रिमभाष्यानुरोधात् कानिति वक्तव्यं, न तु क्वेत्यत आह—**श्लोक इति।** कर्मणोऽप्यधिकरणत्वविवक्षया तत्रापि सप्तमीति द्योतयितुं भाष्येऽर्थानित्युक्तमिति भावः। सर्वलिङ्गसादृश्ये हेतुमाह—**लिङ्गेति।** अव्यये विभक्तिपरत्वासंभवात् करणव्युत्पत्त्या कारकग्रहणमित्याह—**कारकेष्विति।** तत्रेति युक्तिकथनम्। वचनपरत्वस्याप्यसंभवादाह—**एकत्वेति। यथेति।** कर्मप्रवचनीयसंज्ञाऽप्यन्वर्था। कर्म प्रोक्तवन्तः कर्मप्रवचनीयाः। कर्मशब्देन क्रियोच्यते। अप्रयुज्यमानक्रियानिमित्त[3]संबन्धद्योतका इति यावत्। शाकल्यस्य संहितामनु प्रावर्षदित्यत्राप्रयुज्यमानपाठक्रियानिमित्तकस्य वर्षसंहितयोः हेतुहेतुमद्भावसंबन्धस्यानुना द्योतनात्। तत्र सुषिक्तं भवतेत्यादौ सेकगतपूजाद्योतकस्य सोरन्वर्थसंज्ञाभावेऽपि 'सुः पूजायामि'ति

---

(१) क. वचनाना। (२) क. विशेषा

(३) क. संबन्धविशेष

वचनात् यथा तत्संज्ञा तथाऽत्रापीत्यर्थः। अव्ययानां लिङ्गसंख्यायोगाभावे हेतुमाह— **तत्रेति। सत्त्ववाचिनामिति।** स्वरित्यादीनां। एषु यन्न व्येति किंतु सदृशमेव तदव्ययमिति श्लोकयोजना।

सू.—कृन्मेजन्तः ॥ १। १। ३८ ॥

**भा :—कथमिदं विज्ञायते 'कृद्यो मान्त' इति आहोस्वित् 'कृदन्तं यन्मान्तम्' इति। किं चातः? यदि विज्ञायते कृद्यो मान्त इति 'कारयांचकार, हारयांचकार' इत्यत्र न प्राप्नोति। अथ विज्ञायते 'कृदन्तं यन्मान्तम्' इति, 'प्रतामौ प्रतामः' अत्रापि प्राप्नोति। यथेच्छसि तथास्तु। अस्तु [1]तर्हि 'कृद्यो मान्त' इति। कथं 'कारयांचकार हारयांचकार' इति? किं पुनरत्र अव्ययसंज्ञया प्रार्थ्यते? 'अव्ययात्' इति लुग् यथा स्यादिति। मा भूदेवम्। 'आमः' इत्येवं भविष्यति। न सिध्यति। लिग्रहणं तत्रानुवर्तते। लिग्रहणं [तत्र] निवर्तिष्यते। यदि निवर्तते प्रत्ययमात्रस्य लुक् प्राप्नोति। इष्यते च प्रत्ययमात्रस्य। आतश्चेष्यते। एवं ह्याह 'कृञ्चानुप्रयुज्यते लिटि' इति। यदि च प्रत्ययमात्रस्य लुग्भवति तत एतदुपपन्नं भवति। अथवा पुनरस्तु 'कृदन्तं यन्मान्तम्' इति। कथं 'प्रतामौ प्रतामः' इति? आचार्यप्रवृत्तिर्ज्ञापयति 'न प्रत्ययलक्षणेनाव्ययसंज्ञा भवति' इति यदयं प्रशान्शब्दं स्वरादिषु पठति।**

प्र :—**कथमिति।** किं मेजन्तग्रहणेन कृद्विशेष्यते पूर्वं पश्चात्तु कृता तदन्तविधिः। आहोस्वित् पूर्वं कृता तदन्तविधिः पश्चात्तु कृदन्तं मेजन्तग्रहणेन विशेष्यते इति प्रश्नः। 'प्रयोजनं सर्वनामाव्ययसंज्ञायाम्' इति वचनात् तदन्तविधिः। अथवा अन्वर्थसंज्ञाश्रयणात् प्रत्ययग्रहणे संज्ञाविधावप्यत्र तदन्तविधिर्भवति। न हि केवलस्य प्रत्ययस्याप्रयोगार्हस्य नानागमनमनानागमनं वा संभवति। **कारयांचकारेति।** लिडत्र कित्। स च मान्तो न भवति। **प्रतामाविति।** क्विपि लुप्ते प्रत्ययलक्षणेन कृदन्तमेतद्भवति, श्रुत्या च मान्तम्। **अव्ययादिति लुगिति।**

(१) क. तावत्।

ननु हल्ङ्यादिलोपेन सिद्धत्वात् किं लुका प्रयोजनम्। यदा तद्धनुप्रयोगवशात् द्वित्वबहुत्वावगतिस्तदास्ति द्विवचनबहुवचनोत्पत्तिरिति लुगेषितव्यः। अकच् तु न भवत्यपरिसमाप्तार्थत्वादज्ञातादिभिः योगाभावाच्च। **इष्यते चेति।** पूर्वोक्ताद्धेतो-स्तरबाद्यनुत्पादादनुप्रयोग एव तरबाद्युत्पत्तिः। समाप्तार्थस्य प्रकर्षादियोगादित्यर्थः। तत्रैवार्थे ज्ञापकमाह। **आतश्चेति।** तत्र ह्युक्तं व्यवहितनिवृत्त्यर्थं चेति। **प्रशान्-शब्दमिति।** तस्य 'मो नो धातोः' इति नत्वस्यासिद्धत्वात् सिद्धमव्ययत्वमिति भावः। तुल्यजातीयस्य धातोर्नियमेन व्यावृत्तिः क्रियते इति कारयांचकारेति भवत्येव मान्तस्या-प्यव्ययसंज्ञा। शान तेजने इत्यस्य तु प्रशानिति रूपं न भवति। तस्य क्विबन्तस्य प्रयोगादर्शनात्। लावयतेर्लौरित्यस्यापि न भवति। अस्मादेव ज्ञापकाल्लाक्षणिकत्वा-द्वौकारस्य।

उ:—मेजन्तकृत्प्रत्ययस्य वा संज्ञा कृदन्तस्य वेति संशयार्थः। प्रयोजन-मित्यादिना तदन्तविध्यङ्गीकारात् प्रत्ययमात्रात् सुपोऽनुत्पत्त्या 'अव्ययादिति' लुगभाव-प्रसंगाच्च। किं पश्चात्कृता तदन्तविधिः पूर्वं वेति संशयार्थ इत्यभिप्रेत्याह—**किमिति।** प्रयोजनमित्यस्यापुरस्कारेऽप्यन्वर्थसंज्ञासामर्थ्यादत्र तदन्तविधिरित्याह—**अथवेति।** नन्वामः कुतो मान्तत्वमस्त्यत आह—**लिडन्तेति।** आमस्तृतीयधात्वधिकारे विहितत्वाभावात् न कृत्संज्ञेत्याशयः। प्रतामाविति तमेः क्विप्। 'अनुनासिकस्य क्विझलोः' इति दीर्घः। तत्र 'अव्ययात्' इति लुक्प्रसङ्गः। **नन्विति।** एकवचनमुत्सर्गतः करिष्यते इति प्राथम्यात् सुरेव। तस्यान्यत एव लोपः सिद्ध इति भावः। द्विवचनादिलोपाय लुगेषितव्य इति तत्प्रसक्तिपूर्वकमाह—**यदेति।** मा भूदित्ययुक्तम्, अकजर्थं संज्ञाया आवश्य-कत्वात्; अत आह—**अकजिति।** अपरिसमाप्तार्थत्वं संख्यावच्छिन्नकर्त्राद्यन-भिधायित्वम्। **पूर्वोक्तादिति।** असमाप्तार्थत्वात् पूर्वोक्तादित्येतदेवाह—**समा-प्तेति।** ज्ञापकत्वमेवाह—**तत्रेति।** कृञ्चेतिसूत्रे अनुपसर्गान्न पूर्वं प्रयोगः नापि व्यवधानेनेति वक्ष्यत इत्यर्थः। प्रशान्शब्दस्य नान्तत्वादप्राप्तसंज्ञाविधानाय तत्पाठ इति न मान्तानामव्ययत्वज्ञापकाः; अत आह—**तस्येति।** प्रकृत्यन्तरत्वे मानाभा-वादिति भावः। अतिप्रसङ्गं निराह—**तुल्यजातीयस्येति।** धातुत्वेनेत्यादिः। ननु प्रशानिति नान्तधातोरेव रूपमतो न ज्ञापकत्वम्; अत आह—**शान तेजन इति।** **लावयतेरिति।** ण्यन्तात्क्विपि णिलोपे 'क्वौ लुप्तं न स्थानिवद्' इति स्थानिवत्त्वनिषेधात् 'छ्वोः शूडि'त्यूठि 'एत्येधत्यूठस्वि'ति वृद्धौ लौरिति भवति।

तस्य प्रत्ययलक्षणेन कृदन्तत्वादेजन्तत्वाच्चाव्ययसंज्ञा प्राप्ता [1]ज्ञापकादेव निरस्तेत्यर्थः। अत्यन्तसजातीयतया मान्तधातोरेव निवृत्तिश्चेदाह—**लाक्षणिकत्वाद्वेति।**

**॥ वा ॥ कृन्मेजन्तश्चानिकारोकारप्रकृतिः ॥**

**भा :—कृन्मेजन्तश्चानिकारोकारप्रकृतिरिति वक्तव्यम्। इह मा भूत् 'आधये आधेः, चिकीर्षवे चिकीर्षोः' इति।**

**॥ वा ॥ अनन्यप्रकृतिरिति वा ॥**

**भा :—अथवा अनन्यप्रकृतिः कृदव्ययसंज्ञो भवतीति वक्तव्यम्। किं पुनरत्र ज्यायः? अनन्यप्रकृतिरिति वचनमेव ज्यायः। इदमपि सिद्धं भवति 'कुम्भकारेभ्यः नगरकारेभ्यः' इति। तत्तर्हि वक्तव्यम्?**

**॥ वा ॥ न वा संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति ॥**

**भा :—न वा वक्तव्यम्। किं कारणम्? 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इत्येषा परिभाषा कर्तव्या। कः पुनरत्र विशेषः। एषा वा परिभाषा क्रियेत, अनन्यप्रकृतिरिति वोच्येत। अवश्यमेषा परिभाषा कर्तव्या। बह्वन्येतस्याः परिभाषायाः प्रयोजनानि।**

प्र :—**अनिकारोकारेति।** एच एतद्विशेषणं न मकारस्य व्यवच्छेद्यासम्भवात्। **आधय इति।** गुणे कृते अन्तरङ्गबहिरङ्गयोरिति न्यायादव्ययसंज्ञा स्यान्न त्वयादयः। अन्तरङ्गत्वादेव च सुब्लुक् स्यात्। परिभाषान्तरप्रयोजनकथनार्थं लक्षणप्रतिपदोक्तयोरित्येतदनाश्रितम्। लाक्षणिकं ह्यनुमेयं प्रतिपदोक्तं तु प्रत्यक्षमिति तस्यैव ग्रहणं न्याय्यम्। **सन्निपातलक्षण इति;** सन्निपातः संश्लेषः। तन्निमित्तो यो विधिः स तद्विघातस्यानिमित्तं तं संनिपातं यो विहन्ति तस्येत्यर्थः।

उ :—भाष्ये इकारोकारप्रकृतिरिति बहुव्रीहिः। आङ्पूर्वाद्धाञः 'उपसर्गे घोः किः'; 'आतो लोप इटि च' आधिः। चिकीर्षशब्दात् 'सनाशंसभिक्ष उः',

(१) क. उक्तज्ञापका.

चिकीर्षुः। आभ्यां चतुर्थ्येकवचने पञ्चम्येकवचने च [1]गुणेऽतिव्याप्तिर्भाष्ये उक्ता। सा न युक्ता, अयादौ कृतेऽनतिव्याप्तेः; अत आह—**गुणे कृत इति।** सुबन-पेक्षत्वेन संज्ञाया अन्तरङ्गत्वम्। अयादय इत्यादिना पञ्चम्येकवचने पूर्वरूपस्य संग्रहः। ननु संज्ञासत्त्वे [2]सिलुपः पूर्वमयादिः; अत आह—**अन्तरङ्गत्वादेवेति।** अजादिसुबपेक्षायादेः सुब्मात्रापेक्षो लुगन्तरङ्ग इत्यर्थः। ननु लौरित्यत्रेव लक्षणप्रतिपदोक्त-परिभाषयैव नात्रातिव्याप्तिः; अत आह—**परिभाषान्तरेति।** आश्रिते तस्मिन्नाति-व्याप्तिरित्याह—**लाक्षणिकं हीति।** **संश्लेषः;** आनन्तर्यम्।

**भा :—कानि पुनस्तानि?**

**॥ वा ॥ प्रयोजनं ह्रस्वत्वं तुग्विधेर्ग्रामणिकुलम् ॥**

**भा :—'ग्रामणिकुलं सेनानिकुलम्' इत्यत्र ह्रस्वत्वे कृते 'ह्रस्वस्य पिति कृति तुक्' इति तुक् प्राप्नोति। 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न दोषो भवति। नैतदस्ति प्रयोजनम्। बहिरङ्गं ह्रस्वत्वमन्तरङ्गस्तुक्। 'असिद्धं बहिरङ्गमन्तरङ्गे'।**

**॥ वा ॥ न लोपो वृत्रहभिः ॥**

**भा :—'वृत्रहभिः भ्रूणहभिः' इत्यत्र नलोपे कृते 'ह्रस्वस्य पिति कृति तुक्' इति तुक् प्राप्नोति। 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न दोषो भवति। एतदपि नास्ति प्रयोजनम् असिद्धो नलोपः। तस्यासिद्धत्वान्न भविष्यति।**

**॥ वा ॥ उदुपधत्वमकित्त्वस्य निकुचिते ॥**

**भा :—उदुपधत्वमकित्त्वस्यानिमित्तम्। क?। निकुचिते। निकुचितमित्यत्र नलोपे कृते "उदुपधाद्भावादिकर्मणोरन्यतरस्याम्" इत्यकित्त्वं प्राप्नोति। "संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य" इति न दोषो भवति। एतदपि नास्ति प्रयोजनम्। अस्त्वत्राकित्त्वम्, "न धातुलोप आर्धधातुके" इति प्रतिषेधो भविष्यति।**

(१) क. गुणे कृते (२) क. लुकः

॥ वा ॥ नाभावो यञि दीर्घत्वस्यामुना ॥

**भा :—नाभावो यञि दीर्घत्वस्यानिमित्तम् । क ? अमुना । नाभावे कृते "अतो दीर्घो यञि" "सुपि च" इति दीर्घत्वं प्राप्नोति । 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य" इति न दोषो भवति । एतदपि नास्ति प्रयोजनम् । वक्ष्यते तत् "न मुटादेशे" इति ।**

प :—**ग्रामणिकुलमिति ।** इका ह्रस्वः इति पूर्वोत्तरपदसन्निपातनिमित्तं ह्रस्वत्वं तुको न निमित्तम् । तुकि हि सति पूर्वोत्तरपदयोरानन्तर्यविघातः । यदा तु ह्रस्वमात्रस्य तुगागमो न तदन्तस्य अवयवावयवश्च समुदायावयवो न भवति तदैतत् प्रयोजनम्, न त्वन्यथा । **बहिरङ्गमिति ।** द्विपदाश्रयत्वात् । यदपि 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वं तदपि अर्थाश्रयत्वात् बहिरङ्गम् । तुक् तु वर्णाश्रयत्वादन्तरङ्गः । यदि तु सन्निपातलक्षणः इत्याश्रीयते तदा ग्रामणिच्छत्रमित्यत्रापि तुग्न स्यात् । ह्रस्वत्वतुगागमयोस्त्वत्र साम्यादन्तरङ्गत्वं बहिरङ्गत्वं नास्तीति छलक्षणस्तुक् सिद्धो भवति । **असिद्धो नलोप इति ।** 'नलोपः सुप्स्वर' इति 'असिद्धं बहिरङ्गम्' इति वा । **निकुचित इति ।** [1]कुंचेर्भावे क्तप्रत्ययः । अनिदितामितिनलोपः । तत्र कित्त्वनिमित्तमुदुपधत्वमुदुपधादित्यकित्त्वस्यानिमित्तमिति गुणो न भवति । **अमुनेति ।** 'न मुने' इत्यस्यायमर्थः । ने कर्तव्ये मुभावः सिद्धो भवति न तु ने परतो [2]यद्दीर्घत्वं प्राप्नोति तत्र । तथा च मुभावस्यासिद्धत्वादकारान्तत्वाद् दीर्घप्रसङ्गः । तस्मिन् कृते 'अदसोऽसेः' इति दीर्घस्य दीर्घ ऊकारः प्राप्नोति । ततश्चामूनेति स्यात् । उकारसन्निपातनिमित्तस्तु नाभावो दीर्घत्वस्यानिमित्तमिति सिद्धममुनेति । **न मु टादेश इति ।** अनेकविभक्त्यन्तस्तत्र समासः आश्रितः । टाया आदेशः, टायामादेश इति ।

उ :—ग्रामणि कुलमित्यत्र ह्रस्वत्वं तुग्विधेर्न निमित्तमिति [3]वाक्यार्थः । तदुपपादयति—**इक इति । पूर्वेति ;** 'अलुगुत्तरपदे' इति उत्तरशब्दस्य संबन्धिशब्दत्वात् पूर्वपदापेक्षेति भावः । ननु ह्रस्वान्तस्य पूर्वपदस्य तुग्विधीयते । तथा च पूर्वपदावयवस्तुक् न पदद्वयानन्तर्यविघातकः; अत आह—**यथेति ।** तथापि ह्रस्वावयवस्यापि पूर्वपदावयवत्वान्न व्यवधायकत्वम् ; अत आह—**अवयवेति ।** पूर्वपद-

(१) क. निकुंचे
(२) क. अतो दीर्घो यञि इत्यधिकम् ।
(३) क. वार्तिकार्थः ।

स्यावयवो ह्रस्वः। तस्यावयवस्तुक् पदस्यावयवो न भवति। [1]नन्ववयवानां पटावयवत्वाभावात्। साक्षात्कार्यद्रव्यसमवायिन एवावयवत्वादिति भावः। अवयविनः अवयवावयवसमवेतत्वे घटस्य परमाणुसमवेतत्वप्रसक्तौ वायुघटसंयोगवत्प्रत्यक्षाप्रत्यक्षसमवेतत्वेन अप्रत्यक्षत्वप्रसङ्गादिति भाव इति केचित्। तच्चिन्त्यम्। जातिवत्प्रत्यक्षाश्रये प्रत्यक्षोपपत्तेः। अप्रत्यक्षमात्रसमवेतव्यणुकस्य प्रत्यक्षत्वेन द्रव्ये तादृशनियमाभावाच्च । **न त्विति**। तुकः पूर्वपदावयवत्वेऽवयवावयवस्य समुदायावयवत्वे वा व्यवधायकत्वाभावेन परिभाषया तन्निवृत्त्यसंभवादिति भावः। बहिरङ्गपरिभाषैव व्यापकत्वादाश्रयणीयेत्याह—**यदपीति**। ग्रामणि कुलमित्यत्र समासे नपुंसकह्रस्वत्वे कृते सन्निपातपरिभाषया तुङ्निवृत्तिर्न संभवतीति भावः। **तुक्त्विति;** विशेष्यासन्निधानेन तत्र तदन्तविधौ मानाभावादिति भावः। तुकि सन्निपातपरिभाषाङ्गीकारे दोषमप्याह—**यदि त्विति**। ननु बहिरङ्गपरिभाषयाऽप्यत्र तुङ् न स्याद्; अत आह—**ह्रस्वेति; साम्यादिति;** उत्तरपदे ह्रस्वः छे तुगिति साम्यम्। अत्र यदि नपुंसकह्रस्वत्वं तदा पिति कृति तुग्वच्छे तुगपि न प्राप्नोतीति चिन्त्यम्। न केवलं सूत्रात् न्यायादपीत्याह—**असिद्धमिति**। सुब्निमित्तपदत्वापेक्षो नलोपः तन्निरपेक्षतुगपेक्षया बहिरङ्ग इत्यर्थः। भाष्ये **न धातुलोप इति**। न च सन्निपातपरिभाषया एतत्सिद्धेस्तत्सूत्रं व्यर्थमित्युक्तम्। अत्र तेनैतत्सिद्धिरुच्यत इति विरोध इति वाच्यम्, एतत्परिभाषाया अवश्यकर्तव्यतया तत्सूत्रं न कर्तव्यमेव। अत्राभ्युपेत्यवादेन प्रयोजननिरासादविरोधः। ननूकारस्य दीर्घप्रसङ्गान्नानिष्टमित्याशङ्क्य अकारदीर्घेणानिष्टरूपमुपपादयितुं सूत्रार्थमाह—**न मु न इत्यस्येति**। **ने कर्तव्ये इति;** न तु ने परत इत्यर्थः। मुभावात्पूर्वं घिसंज्ञाया अभावेन नाभावस्यैवाभावादित्यर्थः। **असिद्धात्वादिति;** शास्त्रासिद्धत्वादित्यर्थः। **दीर्घ इति**। अन्तरतमत्वादित्यादिः। ननु टादेशो नाभाव एव तत्र दीर्घोऽपरिहृतः; अत आह—**अनेकेति**। अनेकविभक्तिकपूर्वपद इत्यर्थः। सम्बन्धसामान्ये षष्ठीसमास इति तात्पर्यम्। आश्रितत्वमेवाह—**टाया इति**। तथा च टायां परतो दीर्घादेशं प्रति मुभावस्यासिद्धत्वादकारान्नत्वाभावान्न दीर्घप्रसङ्ग इति भावः।

**॥ वा ॥ आत्वं कित्त्वस्योपादास्त ॥**

**भा :—"आत्वं कित्त्वस्यानिमित्तं स्यात्। क्व?। उपादास्तास्य स्वरः शिक्षकस्येति। आत्वे कृते "स्याध्वोरिच" इतीत्वं**

(१) ख. तदवयवावयवानां तदवयवत्वाभावात्

प्राप्नोति। "संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य" इति न दोषो भवति। एतदपि नास्ति प्रयोजनम्। उक्तमेतत्—दीङः प्रतिषेधः स्थाघ्वोरित्त्वे इति।

॥ वा ॥ तिसृचतसृत्वं ङीब्विधेः ॥

भा :—तिसृचतसृत्वं ङीब्विधेरनिमित्तम्। क्व?। तिस्रस्तिष्ठन्तीति चतस्रस्तिष्ठन्तीति। तिसृचतसृभावे कृते 'ऋन्नेभ्यो ङीप्' प्राप्नोति। 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न दोषो भवति। एतदपि नास्ति प्रयोजनम्। आचार्यप्रवृत्तिर्ज्ञापयति—न तिसृचतसृभावे कृते ङीब् भवतीति यदयं "न तिसृ चतसृ" नामि दीर्घत्वस्य प्रतिषेधं शास्ति। इमानि तर्हि प्रयोजनानि—'शतानि सहस्राणि' नुमिकृते "ष्णान्ता षट्" इति षट्संज्ञा प्राप्नोति। 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न दोषो भवति। शकटौ पद्धतौ। अत्त्वे कृते "अत" इति टाप् प्राप्नोति। 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न दोषो भवति। इयेष उवोष। गुणे कृते "इजादेश्च गुरुमतोऽनृच्छः" इत्याम् प्राप्नोति। 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न दोषो भवति।

प्र :—**उपादास्तेति ;** एज्विषय आत्वविधानादकित्वसन्निपातनिमित्तमात्वं 'स्थाघ्वोरिच्च' इति कित्वस्यानिमित्तम्। कित्वसंनियुक्तं चेत्त्वमिति कित्त्वाभावे न भवति। **यदयमिति**। ननु समस्तार्थमेतत्स्यात्। प्रियतिसृणां ब्राह्मणानामिति। अत्र ह्यङ्गं पुंसि वर्तत इति नास्ति ङीपः प्राप्तिरिति केचित्। तदयुक्तम्। न हि ङीब्विधानेऽङ्गाधिकारोऽस्ति, तत्रावयवस्य स्त्रीत्ववृत्तित्वात् ङीपः प्राप्तिः केन वार्यत इति ज्ञापकमेव। ज्ञापकादेव च सिद्धत्वात् स्वस्रादिष्वनयोः पाठो न कर्तव्यो भवति। **शतानीति**। विभक्तिसन्निपातनिमित्तो नुमागमः षट्संज्ञाहेतुकस्य विभक्तिलुको न निमित्तम्। 'ष्णान्ता षड्' इत्यन्तग्रहणमौपदेशिकप्रतिपत्त्यर्थमित्यत्र न भविष्यतीति चेत्, सङ्ख्यासंप्रत्ययार्थं बहुव्रीह्यर्थं तत्स्यादित्यदोषः। **शकटाविति**। विभक्तिसन्निपातकृतमत्वं यदि टापो निमित्तं स्यादानन्तर्यं विहन्येत। शास्त्रीये च कार्येऽन्वादिवद्भावो नानन्तर्ये लौकिके।

टापि च सति शकटाग्रामिति स्यात्। 'अच्च घेः' इति तपरकरणेनाप्यत्र टाप् निवर्तयितुं शक्यते। इदुतोर्हि स्थाने भाविन एवाकारो भविष्यति। भाव्यमानत्वाच्चायमाकारो ग्राहको न भविष्यतीति लक्षणान्तरेणापि प्राप्तस्य दीर्घत्वस्य निराकरणार्थं तपरकरणं संपद्यते। **इयेषेति।** आमि सति लुक् स्यादिति प्रकृतिप्रत्ययसंनिधानस्य विघातः स्यात्। उषविदेति विकल्प ओषाञ्चकतुः ऊषतुरित्यादौ सावकाश इत्युवोपेति नित्य आम्प्रसज्येत। प्रतिपदविधेस्तु बलवत्त्वात् परत्वाच्चात्रापि विकल्पेनैव भाव्यमित्यनुदाहरणमेतत्। गुरुमत इति नित्ययोगे मतुबाश्रयणादपि शक्योऽत्रामभावः प्रतिपादयितुम्।

उ:—नन्वात्वस्याकित्त्वनिमित्तकत्वाभावान्न परिभाषोपस्थानम्; अत आह—**एज्विषय इति।** मीनातीतिसूत्रस्थचकारेणेत्यर्थः। ननु कित्त्वाभावेऽपीत्वं स्याद्; अत आह—**कित्वेति।** भाष्ये **तिसृचतसृत्वमिति;** विभक्तिपरत्वमाश्रित्य तद्विधीयते। ङीपि सति प्रकृतेस्तत्परत्वव्याघात इत्यर्थः। **समस्तार्थं;** समासार्थम्। **तत्रावयवस्येति;** उपलक्षणमेतत्। अन्तरङ्गत्वात्समासात्प्रागेव ङीप् स्यादेवेत्याहुः। 'न षट्स्वस्रादिभ्य' इति निषेधात् ङीबभावः कस्मान्नोक्त; अत आह—**ज्ञापकादेवेति। विभक्तीति।** सर्वनामस्थानस्य विभक्तित्वादित्यर्थः। **अन्तग्रहणमिति।** तत्सामर्थ्यादिति भावः। सामर्थ्यमसिद्धमित्याह—**संख्येति।** राजन् रत्नमुट् इत्यादिव्यावृत्तये संख्येति वक्तव्यम्। ततो बहुव्रीहिरेवायमित्यर्थः। **विभक्तीति।** ङेरौत्वसंनियोगशिष्टं घेरत्वं ङिघ्यंगसंनिपातकृतमिति भावः। ननु टापा सहैकादेशेऽन्तवद्भावान्न व्यवधायकत्वम्; अत आह—**शास्त्रीये चेति।** ननु टाप्यपि वृद्ध्या शकटाविति सिद्धे किं टान्निषेधेन; अत आह—**टापीति।** परत्वात् वार्णादाङ्गस्य बलीयस्त्वाच्च वृद्धेः[1] प्रागाम् स्यादिति भावः। इदं प्रयोजनं दूषयति—**अच्चेति।** दीर्घनिवृत्त्यर्थं तपरकरणं न भवतीत्याह—**इदुतोरिति।** आन्तरतम्यादित्यर्थः। अकारस्य दीर्घग्राहकत्वाभावादपि न दीर्घप्रसङ्ग इत्याह—**भाव्यमानत्वाद्वेति। लक्षणान्तरेणेति।** टापि सति सवर्णदीर्घस्येत्यर्थः। अत्र टापि सति सवर्णदीर्घमात्रं तपरत्वेन वार्यते। न तु टाबपि। अतष्टान्निवृत्तिः परिभाषासाध्यैवेत्याहुः। परिभाषाप्रवृत्तिमाह—**आमि सतीति। विकल्प इति।** तत्र गुणाभावेन द्विर्वचनात्प्राग्गुरुमत्त्वाभावात् विकल्पः सावकाश इत्यर्थः। **नित्य इति;** इजादेरित्यनेन। **एतत्;** उवोषेत्येतत्। इयेष उवोषेति रूप[2]द्वयसाधारणं

(१) क. वृद्धेः ङेः (२) ख. द्वय

हेत्वन्तरमाह—**गुरुमत इति।** तत्र गुणात्पूर्वं न गुरुमत्त्वमिति नित्ययोगाभावः। अत्र लिड्विधानकाले योगो नित्ययोगः। तेन इन्धाञ्चकारेत्यादौ समनन्तरं गुरुमत्त्वेऽप्याम् सिद्ध्यतीत्याहुः—**शक्योऽत्रेति।** उदाहरणद्वयेऽपीत्यर्थः।

**॥ वा ॥ तस्य दोषो वर्णाश्रयः प्रत्ययो वर्णविचालस्य ॥**

**भा :—तस्यैतस्य लक्षणस्य दोषो वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं स्यात्। क्व?। "अत इञ्" दाक्षिः प्लाक्षिः। न प्रत्ययः संनिपातलक्षणः। अङ्गसंज्ञा तर्ह्यनिमित्तं स्यात्।**

**॥ वा ॥ आत्वं पुग्विधेः क्षापयति ॥**

**भा :—आत्वं पुग्विधेरनिमित्तं स्यात्। क्व?। क्षापयतीति।**

**॥ वा ॥ पुग् ह्रस्वत्वस्यादीदपत् ॥**

**भा :—पुग् ह्रस्वत्वस्यानिमित्तं स्यात्। क्व?। अदीदपदिति।**

**॥ वा ॥ त्यादाद्यकारष्टाब्विधेः ॥**

**भा :—त्यदाद्यकारष्टाब्विधेरनिमित्तं स्यात्। क्व?। या सेति।**

**॥ वा ॥ इड्विधिराकालोपस्य ययिवान् ॥**

**भा :—इड्विधिराकारलोपस्यानिमित्तं स्यात्। क्व?। ययिवान् [1]तस्थिवानिति।**

**॥ वा ॥ मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्य ॥**

**भा :—मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्याऽनिमित्तं स्यात्। क्व?। अग्निमान् वायुमान्, परमवाचा परमवाचे इति।**

**॥ वा ॥ नदीह्रस्वत्वं संबुद्धिलोपस्य ॥**

**भा :—नदीह्रस्वत्वं संबुद्धिलोपस्यानिमित्तं स्यात्। क्व?। 'नदि कुमारि किशोरि ब्राह्मणि ब्रह्मबन्धु' इति। नदीह्रस्वत्वे**

---

(१) पपिवान् इत्युद्द्योतनाभिमतः पाठः.

**कृते "एङ्ह्रस्वात्सम्बुद्धेः" इति सम्बुद्धिलोपो न प्राप्नोति। मा भूदेवम्। ङ्यन्तादित्येवं भविष्यति। न सिध्यति। दीर्घादित्युच्यते, ह्रस्वान्ताच्च न प्राप्नोति। इदमिह संप्रधार्यम् ह्रस्वत्वं क्रियतां संबुद्धिलोप इति। किमत्र कर्तव्यम्। परत्वाद् ह्रस्वत्वम्। नित्यः संबुद्धिलोपः। कृते ह्रस्वत्वे प्राप्नोति, अकृतेऽपि। अनित्यः संबुद्धिलोपः। न हि कृते ह्रस्वत्वे प्राप्नोति। किं कारणम्?। 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति।**

प्र:—**दाक्षिरिति।** प्रयोगे व्यवस्थितस्यैवेकारस्यान्वाख्यानमनेन क्रियत इति सन्निपातलक्षणत्वं प्रत्ययस्य सम्भाव्यते। **न प्रत्यय इति।** कल्पितप्रकृति-प्रत्ययविभागेनान्वाख्यानात् प्रकृतेरविद्यमान एव प्रत्यय उत्पाद्यत इत्याशयः। **अङ्ग-संज्ञेति।** सत्यामङ्गसंज्ञायामकारलोप इति स्यादानन्तर्यविघातः। तत्र **वर्णविचाल-स्यानिमित्तं स्यादिति।** अङ्गसंज्ञाद्वारेणेत्यर्थः। अत्र केचिद्वर्णाश्रय इति व्याचक्षते। तेषामात्रेयाद्यप्युदाहरणम्। अन्ये त्ववर्णाश्रय इत्यकारप्रश्लेषमाहुः। **क्षापयतीति।** णिचि वृद्धौ कृतायामात्वं पुको न निमित्तं स्यात्। अङ्गस्य य आकारः तस्य पुक् इत्यवयवभक्तं पुकं मत्वा दोषोपन्यासः। **अग्निमानिति;** पूर्वमुदात्तमाश्रित्य मतुप उदात्तत्वं क्रियमाणं पूर्वस्य निघातं न कुर्यात्। **परमवाचेति।** अन्तोदात्तादुत्तर-पदादिवि विभक्त्युदात्तत्वं विधीयमानं पूर्वनिघातस्यानिमित्तं स्यात्। **मा भूदिति।** हल्ङ्यादिसूत्रे दीर्घग्रहणमदृष्ट्वेदमुच्यते। तत्र कृतेऽपि ह्रस्वत्वे स्थानिवद्भावाद् भविष्यतीति भावः। ब्रह्मबन्धुशब्दापेक्षया च नैतदुच्यते, तस्याङ्याबन्तत्वात्। **नित्य इति।** कार्यं तावन्नित्यम्। तद्येनकेनचिल्लक्षणेन भवत्विति भावः। सम्बुद्धिलोपस्यावकाशो हे देवदत्तेति।

उ:—प्रत्ययस्य सन्निपातलक्षणत्वं संभावयति—**प्रयोग इति। अन्वा-ख्यानम्;** साधुत्वान्वाख्यानम्। **अनेन;** 'अत इञ्' इत्यनेन। न त्वपूर्वं उत्पाद्यते येन सन्निपातलक्षणत्वं न स्यादिति भावः। **प्रत्ययस्य;** साधुत्वावच्छिन्नप्रत्ययस्य। न प्रत्यय इति भाष्यतात्पर्यमाह—**कल्पित इति। अविद्यमान एवेति;** मन्दमध्यमास्तथा प्रतियन्ति। परीक्षकाणाम[1]ध्यध्यारोपरूपा तथा प्रतीतिरस्तीति भावः। प्रत्ययोऽङ्गसंज्ञाद्वारेणानिमित्तमिति वार्तिकार्थमभिप्रेत्याङ्गसंज्ञा तर्हीति भाष्यम्। तदुप-

(१) क. प्वाहार्यारोपरूपा.

पादयति—**सत्यामिति**। अकारनिमित्तकप्रत्ययाश्रयाङ्गसंज्ञा नाकारलोपनिमित्तम्। तथा सति प्रत्ययाकारयोः सन्निपातविघातः स्यादित्यर्थः। अस्मिन्नर्थे वार्तिकं संगमयति—**तत्रेति**। **केचिदिति**; तस्य दोषो वर्णाश्रय इत्यत्राकारप्रश्लेषं विना पदच्छेदेनेत्यर्थः। **तेनेति**; 'इतश्चानिञ' इति ढक् नावर्णाश्रयः; किं त्विकाराश्रय इति भावः। **अन्ये**; भाष्यानुसरिणः। न्यायसाम्यादेवात्रेयादेरपि सिद्धेरत्रैव तदुदाहरणत्वमित्यत्र नाग्रहः कार्य इति भावः। **वृद्धाविति**। एचः संपादनार्थमित्यर्थः। **आत्वं**; 'क्रीङ्जीनां णौ' इति विहितम्। ननु पुकः प्रकृत्यवयवत्वात् न व्यवधायकत्वम्; अत आह—**अङ्गस्येति**। भाष्ये **पुक् ह्रस्वत्वस्येति**; ण्याकारसन्निपातनिमित्तः पुक् तद्विघातस्य 'णौ चङ्युपधाया' इति ह्रस्वत्वस्यानिमित्तं स्यादिति वार्तिकार्थः। **भाष्ये पपिवानिति**। पा पाने, लिट्, द्वित्वम्, अभ्यासह्रस्वः, 'क्वसुश्चेति' लिटः क्वसुरादेशः, तस्य इट्, 'आतो लोप इटि च' इत्यालोपः। 'उगिदचाम्' इति नुम्। 'सान्तमहत' इति दीर्घः। हल्ङ्यादिसंयोगान्तलोपौ। 'वस्वेकाजाद्धसाम्' इत्याकारसन्निपातेन विधीयमान इट् आकारलोपस्य निमित्तं न भवतीत्यर्थः। भाष्ये **मतुब्विभक्त्योरुदात्तत्वमिति** विग्रहः। **पूर्वमिति**। 'ह्रस्वनुड्भ्यां मतुप्' ह्रस्वान्तादन्तोदात्तान्नुटश्च मतुबुदात्तः। अग्निवायुशब्दौ 'फिष' इति प्रत्ययस्वरेण वाऽन्तोदात्तौ। **निघातम्**; अनुदात्तं पदमेकवर्जमिति निघातम्। **अन्तोदात्तादिति**; अनित्यसमासे यदुत्तरपदमेकाजन्तोदात्तं तस्मात्परा तृतीयादिविभक्तिरन्यतरस्यामुदात्तेति सूत्रार्थः। ननु ङयन्तादित्ययुक्तं, तत्र दीर्घादिति सत्त्वेन ह्रस्वादप्राप्तेः; अत आह—**हल्ङ्यादिसूत्र इति**। ननु ह्रस्वे कृते कथं ङ्यन्तत्वम्; अत आह—**तत्रेति**। ङ्यन्तादित्यत्र भविष्यतीति भाष्यं ब्रह्मबन्धुव्यतिरिक्तविषयमित्याह—**ब्रह्मेति**। भाष्ये **दीर्घादित्युच्यत इति**; दीर्घं न पृथग्लोपस्य निमित्तम्। तथा सति लाघवाय हल्ङ्याद् दीर्घादित्येव क्रियेत। किं तु विशेषणम्। तत्र ङ्यावोर्न हल इत्यभिप्रायः। भाष्ये **ह्रस्वत्वम्**; अम्बार्थेत्यनेन। **संबुद्धिलोपः**; 'हल्ङ्याभ्य' इत्यनेन। ननु कृते ह्रस्वत्वे 'एङ्ह्रस्वाद्' इत्यनेन, अकृते 'हल्ङ्याभ्य' इत्यनेनेति लक्षणभेदात्कथं नित्यत्वम्; अत आह—**कार्यमिति**। ननु एङ्ह्रस्वादित्यत्र ह्रस्वग्रहणस्य निरवकाशत्वात् संनिपातपरिभाषा बाधिष्यते; अत आह—**संबुद्धीति**।

**भा:—एते दोषाः समा भूयांसो वा। तस्मान्नार्थोऽनया परिभाषया। न हि दोषाः सन्तीति परिभाषा न कर्तव्या,**

**लक्षणं वा न प्रणेयम्। न हि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते। न च मृगाः सन्तीति यवा नोप्यन्ते। दोषाः खल्वपि साकल्येन परिगणिताः। प्रयोजनानामुदाहरणमात्रम्। कुत एतत्?। न हि दोषाणां लक्षणमस्ति। तस्माद्यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा परिभाषा कर्तव्या। प्रतिविधेयं दोषेषु॥ कृन्मेजन्तः॥**

प्र :—**भूयांसो वेति;** दुष्टत्वप्रतिपादनाय प्रकर्षारोपः। सर्वादिषु समशब्दस्य सर्वशब्दपर्यायस्य सर्वनामसंज्ञाविधानात्तुल्यवाचिनोऽत्र समा इति प्रयोगः। अस्ति समशब्दः सर्वपर्यायः। यथा समराज्यं वर्तते। सर्वेषां राज्यं वर्तत इत्यर्थः। वेदेऽपि मानः समस्य दूढ्य इति प्रयोगः। सर्वस्य दुर्धियो मान इत्यर्थः। तत्र प्रयोजनानामल्पत्वात् तान्येवोपसंख्यातव्यानीत्यर्थः। **प्रतिविधेयमिति।** तत्र विधानसामर्थ्यादाङो वर्णविचालो भविष्यति। कष्टायेति ज्ञापकाद्यशब्दे दीर्घो भविष्यति। 'न यासयोः' इति लिङ्गादाप् भविष्यति। **ययिवानिति;** वस्वेकाजादित्ययं नियम इटो, न त्वपूर्वोऽयं विधिरिति आकारस्य लोपः। क्नापयतीत्याकारान्तभक्तः पुग् न व्यवधायकः। अदीदपदिति लिङ्गाद् ह्रस्वः। यदयं मारणतोषणेति जानातेः मित्त्वमुपधाह्रस्वार्थं शास्ति तद् ज्ञापयति पुकि कृते उपधाह्रस्वत्वं भवतीति। न हि जानातेरकृते पुकि ह्रस्वभाविन्युपधा भवति। अग्निमानिति 'अनुदात्तं पदमेकवर्जम्' इति परिभाषा स्वरविषया सन्निपातपरिभाषां बाधते। एङ्ह्रस्वादित्यत्रापि गुणात्संबुद्धेरिति वक्तव्ये ह्रस्वग्रहणसामर्थ्यात्सन्निपातपरिभाषाभावः। दर्वीत्यत्र च्छन्दसि गुणाभावपक्षे छान्दसो लुग् भविष्यति।

उ :—ननूक्तदोषाणामुक्तप्रयोजनेभ्यो बहुत्वमेव [१]नेति कथं प्रकर्षप्रत्ययः; अत आह—**दुष्टत्वेति।** ननु सर्वनामत्वात्समा इत्ययुक्तम्; अत आह—**सर्वादिष्विति।** अन्वर्थसंज्ञाविज्ञानादिति भावः। समशब्दस्य सर्वशब्दपर्यायताऽस्तीत्याह—**अस्ति इति। सर्वस्येति।** अत्र तैत्तिरीयशाखावाक्ये मा न इति पदद्वयम्। समस्यास्मदादिसदृशस्येति च भाष्ये व्याख्यातम्। तथा च शाखान्तरीयवाक्यमुदाहृतमिति मन्तव्यम्। दूढ्य इत्यस्यार्थो दुर्धिय इति। ध्यायतेर्विचि षष्ठ्येकवचने 'आतो धातोः' इति लोपे 'दुरोदाशनाशदंभध्येषूत्वमुत्तरपदादेः ष्टुत्वं च' इत्यूत्वे

(१) क. न इति नास्ति.

त्त्वे च दूढ्य इति रूपम् । वृत्तौ तु दुष्टं ध्यायति इति दूढ्यः । दुःशब्दोपपदात् ध्यायतेः ‘ आतश्चोपसर्गे ’ इति कप्रत्यय इति प्रथमान्तत्वमुक्तम् । पृषोदरादिसूत्रे तस्मादिति भाष्याभिप्रायमाह—**तत्रेति ।** भाष्ये **न हि दोषाणामिति ।** येषां लक्षणमस्ति तेषां बहुत्वेन साकल्येनोदाहरणासंभवात् किञ्चिदेव प्रदर्शनार्थमुदाह्रियते । दोषाणां तु लक्षणाभावात् परिगणितव्यतिरिक्तसद्भावे मानाभावादेतावन्त एवेत्यर्थः । क्रमेण प्रतिविधान-प्रकारमाह—**तत्रेति । सामर्थ्यादिति ।** वचनसामर्थ्यादित्यर्थः । यादृश-प्रकृतिप्रत्ययसन्निपातनिमित्ताङ्गसंज्ञा तादृशसन्निपातविघातं विना यस्येति लोपस्योदाहरणासंभ-वादिति भावः । भाष्यानुक्तमप्यकारसन्निपातनिमित्तं यत्वं तद्विघातकात्वस्य निमित्तं न स्यादिति दोषान्तरं परिहरति—**कष्टायेति । नेति ।** आप्परत्वनिर्देशः आबुत्पत्तौ ज्ञापक इत्यर्थः । **नियम इति ।** क्रादिनियमादेवेट्सिद्धेरित्यर्थः । तथा च नेडा-कारसन्निपातलक्षण इति भावः । **न त्विति ।** परिभाषायां विधिशब्दोऽपूर्वविधि-परः । तथा चात्र सा न प्रवर्तत इति भावः । **आकारान्तेति ।** तदन्तग्रह-णादङ्गस्येत्यनेनात इत्यस्य सामानाधिकरण्येनान्वयसंभवे वैयधिकरण्येनान्वयायोगादित्यर्थः । **अदीदपदिति ।** दाण् णौ पुकि चङ्युपधाया ह्रस्वः द्वित्वं सन्वद्भावादभ्यास-स्येत्त्वं ‘ दीर्घो लघो ’रिति दीर्घः । **मित्त्वमिति ;** ‘ मितां ह्रस्वः ’ इत्यत्र ‘ ऊदुप-धाया गोहः’ इत्यत उपधाग्रहणमनुवर्तत इति भावः । **ह्रस्वभाविनीति ; ‘ अचश्च ’** इत्यच एव ह्रस्वादिविधानादिति भावः । ह्रस्वो भावी यस्याः सेति विग्रहः । **बाधत इति ।** विशेषविषयत्वादिति भावः । **गुणादिति ।** तावतैव देवदत्त, अग्ने, वायो, इत्यादौ संबुद्धिलोपसिद्धेरित्यर्थः । **ह्रस्वेति ।** इकारोकारार्थेत्यादिः । ननु दर्वीशब्दात्संबुद्धौ ‘ जसादिषु छन्दसि वावचनं प्राङ्णौ चङ्युपधाया ह्रस्व ’ इति वचनात् तत्र चादिशब्दस्य प्रकारवाचित्वात् हे दर्वे हे दर्वीति रूपद्वयमिष्टम् । तत्र गुणाभावपक्षे संबुद्धिलोपार्थं ह्रस्वग्रहणं स्यादिति सन्निपातपरिभाषाबाधने तस्य सामर्थ्यं नास्ति ; अत आह—**दर्वीति । छान्दसः ;** सुपां सुलुगित्यनेन ।

## सू.—अव्ययीभावश्च ॥ १। १। ४० ॥

**॥ वा ॥ अव्ययीभाव[1]स्याव्ययत्वे प्रयोजनं लुङ्मुख-स्वरोपचाराः ॥**

---

(१) क. स्याप्य.

भा :—अव्ययीभावस्याव्ययत्वे प्रयोजनम्। किम्?। लुङ्मुखस्वरोपचाराः। लुक्—उपाग्नि प्रत्यग्नि। "अव्ययात्" इति लुक् सिद्धो भवति। मुखस्वरः—उपाग्निमुखः। प्रत्यग्निमुखः। "नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः" इत्येष प्रतिषेधः सिद्धो भवति। उपचारः—उपपयःकारः उपपयःकाम इति। "अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य" इति प्रतिषेधः सिद्धो भवति। किं पुनरिदं परिगणनमाहोस्विदुदाहरणमात्रम्। परिगणनमित्याह। अपि खल्वप्याहुः—"यदन्यदव्ययीभावस्याव्ययकृत प्राप्नोति तस्य प्रतिषेधो वक्तव्यः" इति। किं पुनस्तत्?। पराङ्गवद्भावः। पराङ्गवद्भावेऽव्ययप्रतिषेधश्चोदित उच्चैरधीयान नीचैरधीयानेत्येवमर्थम्। स इहापि प्राप्नोति—उपाग्न्यधीयान प्रत्यग्न्यधीयानेति। अकच्यव्ययग्रहणं क्रियते उच्चकैर्नीचकैरित्येवमर्थम्। तदिहापि प्राप्नोति,—उपाग्निकं प्रत्यग्निकमिति। मुमि अव्ययप्रतिषेधश्चोद्यते—दोषामन्यमहर्दिवामन्या रात्रिरित्येवमर्थम्। स इहापि प्राप्नोति—उपकुम्भंमन्य उपमणिकंमन्य इति। "अस्य च्वौ" अव्ययप्रतिषेधश्चोद्यते—दोषाभूतमहर्दिवाभूता रात्रिरित्येवमर्थम्, स इहापि प्राप्नोति—उपकुम्भीभूतम् उपमणिकीभूतम्। यदि परिगणनं क्रियते, नार्थोऽव्ययीभावस्याव्ययसंज्ञया। कथं यान्यव्ययीभावस्याव्ययत्वे प्रयोजनानि?। नैतानि सन्ति। यत्तावदुच्यते—लुगिति। आचार्यप्रवृत्तिर्ज्ञापयति—भवत्यव्ययीभावाल्लुगिति। यदयम्—"नाव्ययीभावादतः" इति प्रतिषेधं शास्ति। उपचार इति। अनुत्तरपदस्थस्येति वर्तते। तत्र मुखस्वर एकः प्रयोजयति। न चैकं प्रयोजनं योगारम्भं प्रयोजयति। यद्येतावत्प्रयोजनं स्यात्तत्रैवायं ब्रूयात्—नाव्ययादव्ययीभावाच्च" इति॥ अव्ययी ॥ ४० ॥

प्र :—**प्रयोजनमिति ;** मुखस्वरोपचारौ निवर्त्यमानौ प्रयोजनम्। यथा मशकार्थो धूम इति। **अपि खल्विति।** एवं खल्वित्यर्थः। परिगणनमनेन दृढीक्रियते। **उपाग्न्यधीयानेति।** अग्निसमीमे अधीयानेत्यर्थः। तत्र 'षष्ठ्या-

मन्त्रितकारकवचनम्' इति पराङ्गवद्भावो भवति। **न चैकमिति।** सामान्यलक्षणमेकप्रयोजनार्थं न कर्तव्यमित्यर्थः। **तत्रैवायमिति।** न चोक्तम्, तस्मान्मुखस्वरेणात्र भवितव्यमित्याहुः। अन्ये तु वर्णयन्ति। अनव्ययमव्ययं भवतीत्यन्वर्थसंज्ञाविज्ञानात् मुखस्वरनिवृत्तिर्भवतीति नार्थः सूत्रेणेति। केचित्तु स्वरादिपाठात् सिद्धायामव्ययसंज्ञायां पुनर्वचनमनित्यत्वज्ञापनार्थं, तेन कतिपयान्येवाव्ययकार्याणि भवन्तीति नार्थः परिगणनेनेत्याहुः। तेषां वचनमन्तरेण विशेषे प्रमाणाभावः।

उ:—वार्तिके उपचारः विसर्जनीयस्थाने विधीयमानः सकारादिः। निवर्त्यस्य प्रयोजनवाचिना अर्थशब्देन सामानाधिकरण्यं न दृष्टम्; अत आह—**यथेति।** भाष्ये **नाव्ययेति।** 'नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः'। एभ्यः स्वाङ्गवाचि मुखं बहुव्रीहावन्तोदात्तं न स्यात्। उच्चैर्मुख इत्यादि। **अत्र** पूर्वपदप्रकृतिस्वर एव। भाष्ये **अत इति।** अतः कृकमीत्यनेन विधीयमानस्य विसर्जनीयस्य स्थाने सकारस्यानव्ययस्येति प्रतिषेधः सिद्धो भवतीत्यर्थः। **परिगणनमिति।** वक्ष्यमाणाव्ययकार्याणां पराङ्गवद्भावादीनामव्ययीभावेऽनङ्गीकारात्परिगणनदृढीकार इत्यर्थः। उपाग्नीति सामीप्येऽव्ययीभाव इत्याह—**अग्निसमीप इति।** अव्ययीभावात्सप्तम्या लुगित्यर्थः। सप्तम्यन्तत्वकथनस्य प्रकृतोपयोगमाह—**तत्रेति।** उपाग्नीत्यस्य सप्तम्यन्तत्वे सतीत्यर्थः। **षष्ठीति;** पराङ्गसूत्रे इदं वार्तिकम्। षष्ठ्यन्तस्यामन्त्रितस्य कारकस्य च पराङ्गवद्भावो नान्यस्येति तदर्थः। तथा च अधिकरणकारकत्वादत्र परङ्गवद्भावसिद्धिरिति भावः। भाष्ये **अनुत्तरपदस्थस्येति वर्तत इति।** उपपयःकार इत्यत्र उत्तरपदस्थत्वात् विसर्जनीयस्य न सादेश इत्यर्थः। 'अग्नेर्ढक्' इत्यादेः सत्त्वादाह—**सामान्यलक्षणमिति।** भाष्ये **तत्रैव;** नाव्ययदिक्शब्देति सूत्र एव। [ननु[1] तत्रावचनेन तादर्थ्यमात्राभावे अस्य वचनस्य किं तत्र मुखस्वरमिष्टमुत निवृत्तिरित्यपेक्षायां मतभेदं दर्शयति—**न चोक्तमिति] अन्ये त्विति।** अव्ययीभाव इत्यन्वर्थसंज्ञा। तत्र च्विप्रत्ययेनाव्ययत्वानव्ययत्वयोः प्रतीतेः प्रयोगानुसारेण किञ्चिदव्ययकार्यं भवति किंचिन्नेतीष्टसिद्धेरित्यर्थः। **सूत्रेण;** अव्ययीभावश्चेत्यनेन। **वचनमन्तरेण;** परिगणनमन्तरेण। **विशेषे;** कार्यविशेषे। तथा च तन्मतमयुक्तमित्यर्थः। पुनर्विधानात् स्वरादिसूत्रविहितसंज्ञाया अनित्यत्वेऽपि द्विर्बद्धं सुबद्धं भवतीति न्यायेनाव्ययीभावस्य नित्यैव संज्ञा स्यादिति नेष्टसिद्धिरित्याहुः।

---

(१) क. कोष्ठकान्तर्गतो भागः नास्ति.

सू.—शि सर्वनामस्थानम् ॥ १। १। ४१ ॥

सू.—सुडनपुंसकस्य ॥ १। १। ४२ ॥

**॥ वा ॥ शि सर्वनामस्थानं सुडनपुंसकस्येति चेज्जसि शि-प्रतिषेधः ॥**

**भा :—शि सर्वनामस्थानं सुडनपुंसकस्येति चेज्जसि शेः प्रतिषेधः प्राप्नोति। कुण्डानि तिष्ठन्ति। वनानि तिष्ठन्ति।**

**॥ वा ॥ असमर्थसमासश्च ॥**

**भा :—असमर्थसमासश्चायं द्रष्टव्योऽनपुंसकस्येति। न हि नञो नपुंसकेन सामर्थ्यम्। केन तर्हि?। भवतिना—न भवति नपुंसकस्येति। यत्तावदुच्यते—शि सर्वनामस्थानं सुड-नपुंसकस्येति चेज्जसि शिप्रतिषेधः इति।**

**॥ वा ॥ नाप्रतिषेधात् ॥**

**भा :—नायं प्रसज्यप्रतिषेधो-[1]नपुंसकस्य नेति। किं तर्हि?। पर्युदासोऽयम्—यदन्यन्नपुंसकादिति। नपुंसके न व्यापारः। यदि केनचित्प्राप्नोति तेन भविष्यति। पूर्वेण च प्राप्नोति।**

**॥ वा ॥ अप्राप्तेर्वा ॥**

**भा :—अथवा अनन्तरा या प्राप्तिः सा निषिध्यते। कुत एतत्?। अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति। पूर्वा प्राप्तिरप्रतिषिद्धा, तया भविष्यति। ननु चेयं प्राप्तिः पूर्वां प्राप्तिं बाधते। नोत्सहते प्रतिषिद्धा सती [2]बाधितुम्। यदप्युच्यते—असमर्थसमासश्चायं द्रष्टव्य इति। यद्यपि वक्तव्यः। अथवैतर्हि बहूनि प्रयोजनानि। कानि?। असूर्यं पश्यानि मुखानि, अपुनर्गेयाः श्लोकाः, अश्राद्धभोजी ब्राह्मण इति। सुड ॥ ४२ ॥**

प्र :—**सुडनपुंसकस्येति चेदिति।** अस्मिन् सूत्रन्यासे दोषः। सुट् स्त्रीपुंसयोरित्यस्मिन् न्यासे न दोष इत्यर्थः। प्रसज्यप्रतिषेधाश्रयेण पूर्वपक्षः, पर्युदा-

---

(१) क. अनपुंसकस्येति। (२) क. पूर्वामिलषिकम्

साश्रयेण सिद्धान्तः । **अप्राप्तेर्वेति ।** प्रसज्यप्रतिषेधेऽप्यदोषः । तत्र सुडित्यनेन या प्राप्तिः सा निषिध्यते न तु 'शि सर्वनामस्थानम्' इति प्राप्तिः । अन्यथा 'शि सर्वनामस्थानम्' इति निरवकाशं स्यात् : नपुंसकस्यैव हि शिः संभवति । **ननु चेयमिति ।** परत्वादित्यर्थः । प्रतिषेधयुक्तायुक्तत्वाच्च विरोधसद्भावः । तत्र परत्वात् सुडिति प्राप्तिः पूर्वां प्राप्तिं बाधते, तामपि प्रतिषेधः इति दोषः । **नोत्सहत इति ।** अपवादविषयपरिहारेणास्याः प्रवर्तनादित्यर्थः । **अथवैतर्हीति ।** इदानीमित्यर्थः । तत्र स्त्रीपुंसयोरिति वक्तव्ये अनपुंसकस्येति वचनं ज्ञापकं प्रसज्यप्रतिषेधेऽपि नञ्समासोऽस्तीति ।

उ :—वार्तिके चेदित्यनेन न्यासान्तरे दोषो नास्तीति सूचितम् । तदाह—**अस्मिन्निति ।** ननु पर्युदासपक्षे न दोषः ; अत आह—**प्रसज्येति ।** नञः स्वार्थवृत्तित्वलाभादित्यर्थः । **पर्युदासेति ।** यद्यपि पर्युदासेऽभाववाचिनो नञोऽभाववल्लक्षणा तथाऽपि वाक्यभेदासमर्थसमासरूपदोषयुक्तात् प्रतिषेधात् दोषद्वयशून्यतया लक्षणामात्राङ्गीकार एव युक्त इत्यर्थः । अप्राप्तेर्वेतिवार्तिकतात्पर्यमाह—**प्रसज्येति ।** पूर्वसूत्रविहितसंज्ञायाः प्रतिषेधाप्राप्तेरिति वार्तिकार्थः । **अन्यथेति ।** सुडित्यनपेक्ष्य नपुंसकसंबन्धिनः सर्वनामस्थानसंज्ञा नेत्येतावन्मात्रोक्ताविरयर्थः । ननु विरोधाभावात् कथं परत्वमात्रेण बाधकत्वम् ; अत आह—**प्रतिषेधेति ।** प्रतिषेधयुक्तत्वायुक्तत्वाभ्यां द्वयोः स्वरूपेण विरोधोऽस्तीत्यर्थः । ननु प्रतिषेधात् सुट् बाध्यताम् ; अत आह—**अपवादेति ।** अस्याः सुडित्यनेन विहितसंज्ञायाः नपुंसकेऽप्राप्तिरेवेत्यर्थः । [1]अथवेत्यस्य पक्षान्तरद्योतकत्वं निराह—**इदानीमिति ।** असमर्थसमासाङ्गीकार इति यावत् । ज्ञापकत्वमेवाह—**तत्रेति ।** 'सूर्यं न पश्यन्ति, पुनर्न गेयाः ; श्राद्धं न भुङ्क्ते' इत्युदाहरणार्थः ।

### सू.—न वेति विभाषा ॥ १। १। ४३ ॥

**॥ वा ॥ न वेति विभाषायामर्थसंज्ञाकरणम् ॥**

**भा :—न वेति विभाषायामर्थस्य संज्ञा कर्तव्या । नवाशब्दस्य योऽर्थस्तस्य संज्ञा भवतीति वक्तव्यम् । किं प्रयोजनम् ? ।**

**॥ वा ॥ शब्दसंज्ञायां ह्यर्थासंप्रत्ययो यथान्यत्र ॥**

**भा :—शब्दसंज्ञायां हि सत्यामर्थस्यासम्प्रत्ययः स्यात् । यथान्यत्र ।**

---

(१) क. अथवैतर्हीं

अन्यत्रापि हि शब्दसंज्ञायां शब्दस्यैव संप्रत्ययो भवति, नार्थस्य। क्वान्यत्र?। "दाधाघ्वदाप्" "तरप्तमपौ घः" इति। घुग्रहणेषु घग्रहणेषु च शब्दस्य संप्रत्ययो भवति, नार्थस्य। तत्तर्हि वक्तव्यम्। न वक्तव्यम्।

॥ वा ॥ इतिकरणोऽर्थनिर्देशार्थः ॥

भा:—इतिकरणः क्रियते सोऽर्थनिर्देशार्थो भविष्यति। किं गतमेतदितिना आहोस्विच्छब्दाधिक्यादर्थाधिक्यम्? गतमित्याह। कुतः?।

॥ वा ॥ लोकतः ॥

भा:—तद्यथा लोके गौरित्ययमाहेति गोशब्दादितिकरणः प्रयुज्यमानो गोशब्दं स्वस्मात्पदार्थात्प्रच्यावयति। सोऽसौ स्वस्मात्पदार्थात्प्रच्युतो यासावर्थपदार्थकता तस्याः शब्दपदार्थकः संपद्यते। एवमिहापि नवाशब्दादितिकरणः [1]प्रयुज्यमानो नवाशब्दं स्वस्मात्पदार्थात्प्रच्यावयति। सोऽसौ स्वस्मात्पदार्थात्प्रच्युतो यासौ शब्दपदार्थकता तस्या लौकिकमर्थं प्रत्याययति—नवेति यद्गम्यते नवेति यत्प्रतीयते—इति।

प्र:—**नवेतिविभाषायामिति।** समुदायस्यानुकरणत्वादनुकरणस्य चानुकार्येणार्थवत्त्वात् प्रातिपदिकत्वे सति विभक्त्युत्पत्तिः। स्त्रीप्रत्यये च तदादिनियमाभावाट्टाडामौ भवतः। अथवा नवेत्युच्चार्य या विभाषा कृता तस्यामिति व्याख्या। तत्र लोके क्रियापदसन्निधाने नवाशब्दयोर्योऽर्थो द्योत्यो विकल्पप्रतिषेधलक्षणः स संज्ञीत्यर्थः। अन्यथा विभाषाप्रदेशेषु नवाशब्दावेवादेशौ स्याताम्। **घुग्रहणेष्विति।** शब्दस्य संज्ञाकरणात् प्रदेशेषु तस्यैव संप्रत्यय इत्यर्थः। **इतिकरण इति।** क्रियते इति करणः, कर्मणि ल्युट्। इतिश्चासौ करणश्चेति [2]समासः। **क्रियत इति।** सामान्यविशेषभावेन निर्देशः। **शब्दाधिक्यादिति।** उपहासपरमेतच्चोदकस्य वचनम्। [3]शब्दार्थस्यालाभादिति भावः। **गौरित्ययमाहेति।** यद्यपि नित्यं

(१) क. परःइत्यधिकम् (२) क. विशेषणसमासः
(३) क. अशब्दार्थ

शब्दार्थसम्बन्धे उपात्तस्यार्थस्य त्यागो नास्ति, तथापि प्रसिद्धिवशादेतदभिधीयते, अर्थपदार्थकतायाः प्रच्युत इति। तत्त्वतस्त्वादावेव स्वरूपपदार्थको गोशब्दः प्रयुक्तः। साहश्यात्तु तमर्थमनभिव्यक्तमितिशब्दो द्योतयतीति पदार्थविपर्यासकृदि[1]तिरुच्यते। **अर्थपदार्थकतेति।** सम्बन्धे भावप्रत्ययः। सम्बन्धात्[2] प्रच्युतोऽर्थादपि प्रच्युतो भवति।

उ:—नन्वर्थवत्समुदायानां समासग्रहणं नियमार्थमिति वाक्यात् कथं विभक्त्युत्पत्तिः। न च निपातानामानर्थक्यान्नायमर्थवत्समुदाय इति वाच्यम्। द्योत्यार्थेनार्थवत्त्वोपपत्तेः। किं चानर्थक्ये प्रातिपदिकत्वाभावेन सुतरां विभक्त्यनुत्पत्तिः; अत आह—**समुदायस्येति।** वार्तिकस्थसप्तम्यन्तं सूत्रस्यानुकरणमनुकार्येणार्थवदिति समुदायस्य प्रातिपदिकसंज्ञायां विभक्त्युत्पत्तिः। अर्थवत्समुदायत्वाभावाच्च न समासग्रहणेन निवृत्तिरिति भावः। ननु समुदायाद्विभक्त्युत्पत्तावपि विभाषाशब्दादेव टाबुत्पत्तिर्न समुदायादिति याडामौ कथं स्याताम्; अत आह—**स्त्रीप्रत्यय इति।** ह्रस्वङ्याभ्य इति दीर्घग्रहणाज्ज्ञापकादिति भावः। अनुकरणस्य प्रकृतिप्रत्ययविभागाभावेऽपि प्रकृतिवदनुकरणमिति अतिदेशादाबन्तत्वम्। अत एव विभक्त्युत्पत्तिरपीति भावः। विभक्त्युत्पत्तिक्लेशमसहमान आह—**अथवेति।** नवाशब्दार्थमाह—**तत्रेति।** नामपदेनान्वितस्य प्रत्यग्रवाचित्वं न क्रियापदान्वितस्येतीष्टसिद्धिद्योतनाय क्रियापदेत्युक्तम्। यथा कस्यचिदातुरस्य पथ्यकथनावसरे पूर्वं निषिध्य पश्चाद्विकल्पेन किञ्चिदभ्यनुज्ञायते तद्वदित्यभिप्रेत्य विकल्पेत्युक्तम्। **अन्यथा** शब्दसंज्ञात्वे। घुघादौ स्वरूपग्रहणमेव किं न स्यादित्याशङ्क्य अशब्दसंज्ञेति प्रतिषेधान्नेत्याह—**शब्दस्येति।** भाष्ये घग्रहणेषु च इत्यस्यानन्तरं शब्दस्य संज्ञाकरणप्रदेशेष्वित्यध्याहारः। पुंस्त्वसिद्ध्यर्थमाह—**कर्मणीति।** 'कृत्यल्युटो बहुलम्' इत्यनेन विशेषणत्वस्य विवक्षाधीनत्वात् करणेत्यस्य परनिपातः। **क्रियत इति;** सामान्यनिर्देशः। करणम्; इति विशेषः। शब्दार्थसंबन्धस्य नित्यत्वात् तस्मात् प्रच्यवासंभवमाशङ्क्य निराह—**यद्यपीति। प्रसिद्धीति।** मन्दबुद्धीनामित्यादिः। लोकेऽर्थपरत्वेनैव प्रयोगप्राचुर्यं वा प्रसिद्धिः। **तत्त्वत इति।** गोशब्दो गोस्वरूपयोः सर्वदा वाचक इत्यर्थः। **आदौ;** सूत्रप्रणयनकाले। तर्हीतिशब्दो व्यर्थः; अत आह—**साहश्यादिति।** स्वरूपपदार्थकार्थपदार्थकयोरर्थभेदेन भिन्नयोरपि प्रचुरप्रयोगादर्थपरोऽयं शब्द इति शङ्कानिरासायेतिशब्द इत्यर्थः।

---

(१) क. इतिरित्युच्यते (२) क. अत इत्याधिकं

**तमर्थं ;** शब्दस्वरूपार्थम् । भाष्ये स्वस्मात्पदार्थात् प्रच्युतः शब्दपदार्थकः संपद्यत इत्यन्वयः । कोऽसौ स्वपदार्थ [१]इत्याशङ्कायां यासावित्युक्तम् । दार्ष्टान्तिके शब्दपदार्थकता स्वं रूपमिति वचनात् । **संबन्ध इति ।** यौगिकेभ्यो भावप्रत्ययस्य संबन्धाभिधायित्वादित्यर्थः । स्वस्मात्पदार्थादित्युक्त्वा तस्या इति संबन्धाभिधानमयुक्तम् ; अत आह—**संबन्धादिति ।**

**॥ वा ॥ समानशब्दप्रतिषेधः ॥**

**भा :—समानशब्दानां प्रतिषेधो वक्तव्यः । नवा कुण्डिका नवा घटिकेति । किं च स्यात्, यद्येतेषामपि विभाषासंज्ञा स्यात्? । "विभाषा दिक्समासे बहुव्रीहौ" दक्षिणपूर्वस्यां शालायाम् । अचिरकृतायां संप्रत्ययः स्यात् ।**

**॥ वा ॥ न वा विधिपूर्वकत्वात् प्रतिषेधसंप्रत्ययो यथा लोके ॥**

**भा :—न वा एष दोषः । किं कारणम्? । विधिपूर्वकत्वात् । विधाय किंचिन्न वेत्युच्यते, तेन प्रतिषेधवाचिनः संप्रत्ययो भवति । तद्यथा—लोके ग्रामो भवता गन्तव्यो न वा । नेति गम्यते । अस्ति कारणम्—येन नवेति लोके प्रतिषेधवाचिनः संप्रत्ययो भवति । किं कारणम्? । विलिङ्गं हि भवान् लोके निर्देशं करोति । अङ्ग हि समानलिङ्गो निर्देशः क्रियतां प्रत्यग्रवाचिनः संप्रत्ययो भविष्यति । तद्यथा—ग्रामो भवता गन्तव्यो नवः । प्रत्यग्र इति गम्यते । एतच्चैव न जानीमः क्वचिद्व्याकरणे समानलिङ्गो निर्देशः क्रियत इति । अपि चात्र कामचारः प्रयोक्तुः शब्दानामभिसंबन्धे । तद्यथा—'यवागूर्भवता भोक्तव्या नवा' । यदा यवागूशब्दो भुजिना संबध्यते, भुजिर्नवाशब्देन, तदा प्रतिषेधवाचिनः संप्रत्ययो भवति । यवागूर्भवता भोक्तव्या न वा, नेतिगम्यते । यदा तु नवाशब्दो यवागू-**

(१) क. त्वपेक्षायां

**शब्देनाभिसंबध्यते, न भुजिना, तदा प्रत्यग्रवाचिनः संप्रत्ययो भवति। यथा—यवागूर्नवा भवता भोक्तव्या। प्रत्यग्रेति गम्यते। न चेह वयं विभाषाग्रहणेन सर्वादीन्यभिसंबध्नीमः—दिक्समासे बहुव्रीहौ सर्वादीनि विभाषा भवन्तीति। किं तर्हि?। भवतिरभिसंबध्यते दिक्समासे बहुव्रीहौ सर्वादीनि भवन्ति विभाषेति।**

प्र :—**समानशब्दप्रतिषेध इति।** समानः शब्दो वाचको येषामर्थानां तेषामित्यर्थः। **विभाषा दिक्समास इति।** विभाषाशब्देनाभिनवलक्षणोऽर्थः प्रत्याय्यते। तत्र प्रत्यग्रवाची यो दिक्समास इति संप्रत्ययः स्यात्। तत्र दिशो नित्यत्वान्नवपुराणत्वासंभवात् तन्निमित्तो यदा शालायां व्यपदेशः दक्षिणपूर्वा शाला सा चाभिनवा तदा संज्ञा स्यादित्यर्थः। संज्ञाकार्यंऽयङ्ग्यं च प्रत्यग्रत्वं स्यात्। **न वा विधिपूर्वकत्वादिति।** प्रदेशवाक्यार्थं पर्यालोच्येयं संज्ञा व्यवस्थाप्यते। प्रदेशेषु च कार्याणि विधाय विभाषाशब्द उच्चारितो [1]नवार्थं गमयति। तत्र लोकवन्निपातार्थावगतिर्भवति, न तु प्रत्यग्रार्थावगतिरित्यर्थः। **विलिङ्गमिति।** भिन्नलिङ्गं व्यधिकरणमित्यर्थः। विलिङ्गत्वेन वैयधिकरण्यं लक्ष्यते। न तु प्रतिषेधवाचिनो नवाशब्दस्य लिङ्गयोगोऽस्ति। **एतच्चैवेति।** नैव कचिद् व्याकरणे समानलिङ्गो निर्देश इत्यर्थः। विभाषासेनासुरेति यद्यपि समानलिङ्गो निर्देशः तथापि भिन्नविभक्तित्वात्सामानाधिकरण्याभावः। **अपि चेति।** तत्र सामर्थ्याद्विशेषावगतिः। यदा अप्राप्ते यवागूभोजने वाक्यमुदीर्यते तदा प्रत्यग्रार्थावगतिः। [2]यदा त्वातुरं प्रति [3]यवागूभोजननिषेधार्थमुच्यते तदा निषेधावगतिः। **न चेहेति।** क्रियायाः प्राधान्यात् सैव विभाषाग्रहणेन सम्बध्यते, न तु तदङ्गमित्यर्थः। तदेवं स्थितमेतत्। न वा विधिपूर्वकत्वादिति।

उ :—इतिकरणस्यार्थनिर्देशार्थत्वे स्थिते कर्मधारयायोगादाह—**समान इति। यो दिक्समास इति।** यद्यपि न चेह वयमिति भाष्यालोचनया पूर्वपक्षे विभाषाशब्दस्य सर्वादिशब्दसम्बन्ध एव प्रतीयत इति समासान्वयाभिधानमयुक्तम्, थापि शालायामचिरनिर्वृत्तायामित्येतद्ग्रन्थदर्शनात्प्रत्यग्रवाचित्वेन समासविशेषणत्वमेव, अग्रिम-

(१) क. नवाशब्दार्थं (२) क. यदा प्राप्ते
(३) क. गुरुमो

भाष्यमपि समासाभिप्रायमेवेति व्याख्येयमिति भावः। **संज्ञा ;** सर्वनामसंज्ञा। 'न बहुव्रीहौ' इति निषेधं बाधित्वा नित्यसंज्ञा स्यादित्यर्थः। भाष्ये **संप्रत्ययः ;** संज्ञाया इति शेषः। ननु सर्वनामस्थानसंज्ञाविधानानन्तरत्वेऽप्येतत्सूत्रस्य संज्ञाविधिपरत्वेन पूर्वसंज्ञाप्रतिषेधपरत्वाभावात् कथं प्रतिषेधसंप्रत्ययः ; अत आह—**प्रदेशेति**। वार्तिके विधिशब्दः प्रदेशपर इत्यर्थः। भाष्ये **नवेत्युच्यत इति ;** तदर्थवाचक विभाषाशब्द उच्यत इत्यर्थः। **न त्विति**। तथा च प्रदेशवाक्यानुगुण्यायेहापि प्रतिषेधवाचिनो ग्रहणं न प्रत्ययवाचिन इत्यर्थः ; यद्यपि प्रदेशवाक्येष्वेव निषेधार्थावगमे संज्ञा व्यर्था, तथाप्युभयत्र विभाषासंज्ञाप्रयोजनं वक्ष्यत इति भावः। विलिङ्गमिति लिङ्गशून्यत्वं नार्थः, समानलिङ्ग इति भाष्यदर्शनात् ; अत आह—**भिन्नलिङ्गमिति**। निपातानां लिङ्गाभावदाह—**वैयधिकरण्यमिति**। व्याख्यानवीजमाह—**न त्विति**। व्याकरणे समानाधिकरणप्रयोगस्य काप्यभावात् निषेधार्थावगतिरेवेत्याह—भाष्ये **एतच्चैवेति**। तद्व्याचष्टे **नैवेति**। विलिङ्गत्वाभावेऽप्यर्थविशेषनिश्चयः संभवतीत्याह भाष्ये—**अपि चेति**। ननूभयथा संभवे कथमन्यतरनिर्णयः ; अत आह—**तत्रेति**। **अप्राप्ते ;** अकर्तव्यत्वेनावगते। विनिगमकमाह—**क्रियाया इति**। **न त्विति**। क्रियानिर्वृत्त्यर्थतया कारकाणां तदङ्गत्वमित्यर्थः। उक्ताक्षेपाय नोत्तरवार्तिकं किन्तु उक्तमङ्गीकृत्यैवेति दर्शयितुमुक्तमुपसंहरति—**तदेवमिति**।

**॥ वा ॥ विध्यनित्यत्वमनुपपन्नं प्रतिषेधसंज्ञाकरणात् ॥**

**भा :—विधेरनित्यत्वं नोपपद्यते। शुशाव शुशुवतुः शुशुवुः। शिश्वाय शिश्वियतुः शिश्वियुः। किं कारणम्?। प्रतिषेधसंज्ञाकरणात्। प्रतिषेधस्येयं संज्ञा क्रियते। तेन विभाषाप्रदेशेषु प्रतिषेधस्यैव संप्रत्ययः स्यात्।**

**॥ वा ॥ सिद्धं तु प्रसज्यप्रतिषेधात् ॥**

**भा :—सिद्धमेतत्। कथम्?। प्रसज्यप्रतिषेधात्। विधाय किञ्चिन्नवेत्युच्यते। तेनोभयं भविष्यति।**

**॥ वा ॥ विप्रतिषिद्धं तु ॥**

**भा :—विप्रतिषिद्धं तु भवति। अत्र न विज्ञायते केनाभिप्रायेण प्रसजति, केन निवृत्तिं करोतीति।**

॥ वा ॥ न वा प्रसङ्गसामर्थ्यादन्यत्र प्रतिषेधविषयात् ॥

भा :—न वा एष दोषः। किं कारणम्?। प्रसङ्गसामर्थ्यात्। प्रसङ्गसामर्थ्याच्च विधिर्भविष्यति। अन्यत्र प्रतिषेधविषयात्। प्रतिषेधसामर्थ्याच्च प्रतिषेधो भविष्यति। अन्यत्र विधिविषयात्। तदेतत् क्व सिद्धं भवति—या अप्राप्ते विभाषा। या हि प्राप्ते विभाषा, कृतसामर्थ्यस्तत्र पूर्वेणैव विधिरिति कृत्वा प्रतिषेधस्यैव संप्रत्ययः स्यात्। एतदपि सिद्धम्। कथम्?। विभाषेति महती संज्ञा क्रियते। संज्ञा च नाम यतो न लघीयः। कुत एतत्? लघ्वर्थं हि संज्ञाकरणम्। तत्र महत्याः संज्ञायाः करणे एतत्प्रयोजनम्—उभयोः संज्ञा यथा विज्ञायेत नेति च वेति च। तत्र या तावदप्राप्ते विभाषा, तत्र प्रतिषेध्यं नास्तीति कृत्वा वेत्यनेन विकल्पो भविष्यति। या हि प्राप्ते विभाषा तत्रोभयमुपस्थितं भवति नेति च वेति च। तत्र नेत्यनेन प्रतिषिद्धे वेत्यनेन विकल्पो भविष्यति।

प्र :—**विध्यनित्यत्वमिति**। विकल्प इत्यर्थः। नवाशब्द एक एव निपातः प्रतिषेधवाची तस्येहोपादानादिति भावः। परिहारान्तराभिधानाय तु 'न बहुव्रीहौ' इत्यसम्बद्धं स्यादिति नोक्तम्। **सिद्धं त्विति**। प्रतिषेधाद्विधिरनुमास्यते। ततो विकल्पः सेत्स्यतीत्यर्थः। **विप्रषिद्धं त्विति**। एकविषययोर्विधिप्रतिषेधयोर्विरोधादित्यर्थः। **न वा प्रसङ्गेति**। सामर्थ्याद्विधिप्रतिषेधयोः पर्यायो भविष्यतीत्यर्थः। **महती संज्ञेति**। तेन द्वावत्र संज्ञिनौ विकल्पप्रतिषेधावित्यर्थः। यदि हि केवलः प्रतिषेधः संज्ञी स्यात् संज्ञाकरणमनर्थकं स्यात्। विभाषाप्रदेशेषु नेत्येव ब्रूयात्। तत्र समुदायस्यैव संज्ञेति विभाषाप्रदेशेषु विकल्पप्रतिषेधावुपतिष्ठेते। अप्राप्तविभाषासु च प्राप्त्यभावात् प्रतिषेधस्याव्यापारात् विकल्प एवोपतिष्ठते।

उ :—ननु विधेरप्रवृत्तिरूपस्यानित्यत्वस्य प्रतिषेधेऽपि नानुपपत्तिः; अत आह—**विकल्प इति**। ननु वाशब्दस्य विकल्पार्थत्वात् कथं स्यादनुपपत्तिः; अत आह—**नवेति**। ननु प्रतिषेधसंज्ञापक्षेऽपि 'विभाषा दिक्समासे' इति सूत्रं संज्ञाप्रतिषेधार्थं स्यात्। तत्र दिक्समासग्रहणमदिक्समासे संज्ञाप्रवृत्त्यर्थमिति वक्तव्यम्। तदा 'न

बहुव्रीहौ' इत्यनेनादिक्समासेऽपि निषेधे तद्विरोधः, दिक्समास एव निषेधे पुनरुक्तिः; अत आह—**परिहारान्तरेति**। ननु पूर्वशास्त्रेण प्रसक्तस्य निषेधे अभाव एव स्यान्न विकल्पः; अत आह—**प्रतिषेधादिति**। प्रतिलक्ष्यं लक्षणभेदपक्षे प्रतिषेधान्यथानुपपत्त्या प्रसञ्जकशास्त्रमनुमेयं, तथा च विकल्प इत्यर्थः। **ततो**; विकल्पितविधेः। अन्यथा तद्वैयर्थ्यप्रसङ्गादिति भावः। ननु प्रतिषेधो विकल्पानुकूल एव; अत आह—**एकेति**; युगपदित्यादिः। भाष्ये **अत्रेति**; सिद्धान्तिनं प्रत्यनैष्ठुर्याय पूर्वपक्षिणः स्वात्मन्यज्ञानारोपः। **सामर्थ्यादिति**; विकल्पितविधेरप्रामाण्यायोगादिति भावः। वार्तिके—**प्रतिषेधविषयात्**; कालविशेषविशिष्टात्। **अन्यत्र**; तत्रैव विषये कालान्तरविशिष्ट इत्यर्थः। भाष्ये **कृतसामर्थ्य इति**। पूर्वशास्त्रेण यो विधिः स प्रतिषेधविषयादन्यत्र कृतसामर्थ्यः चरितार्थविधिशक्तिर्निषेधविषये न प्रवर्तेत इत्यर्थः। यद्यपि तस्मिन्विषयेऽनुमितस्य नान्यत्र चरितार्थता तथापि प्रकल्प्यापवादन्यायेन तत्राप्रवृत्तस्यैव विधेरारोपमात्रप्रसङ्गान् निषेधोऽभ्युपेयोऽन्यथा सर्वनिषेधेषु विकल्प एव स्यादिति भावः। महत्त्वं न संज्ञाक्षरबाहुल्यं, किंतु संज्ञिबाहुल्यं विवक्षितमित्याह—**तेनेति**। संज्ञिद्वयमत्र न विवक्षितं चेत्संज्ञैव व्यर्थेत्याह—**यदीति**। भाष्ये संज्ञाया बहुत्वं संज्ञिप्रतिपादनार्थं नवेतिपदद्वययुक्तत्वम्। संज्ञिद्वयस्य प्रयोजनमाह—**तत्रेति**। **समुदायस्य**; प्रतिषेधविकल्पसमुदायस्य। प्रत्येकं संज्ञात्वे लाघवात् प्रदेशेष्वेव क्वचिन्न क्वचिद्वेति वक्तव्यं स्यात्। संज्ञाकरणसामर्थ्यात्समुदायस्यैव संज्ञेत्यर्थः।

**भा :—एवमपि।**

**॥ वा ॥ विधिप्रतिषेधयोर्युगपद्वचनानुपपत्तिः ॥**

**भा :—विधिप्रतिषेधयोर्युगपद्वचनं नोपपद्यते। शुशाव शुशुवतुः शुशुवुः। शिश्वाय शिश्वियतुः शिश्वियुः। किं कारणम्।**

**॥ वा ॥ भवतीति चेन्न प्रतिषेधः ॥**

**भा :—भवतीति चेत् प्रतिषेधो न प्राप्नोति।**

**॥ वा ॥ नेति चेन्न विधिः ॥**

**भा :—नेति चेद्विधिर्न सिध्यति।**

**॥ वा ॥ सिद्धं तु पूर्वस्योत्तरेण बाधितत्वात् ॥**

भा :—सिद्धमेतत्। कथम्?। पूर्वविप्रतिषेधादुत्तरो विधिर्बाधते। इतिकरणोऽर्थनिर्देशार्थ इत्युक्तम्।

॥ वा ॥ साध्वनुशासनेऽस्मिन् शास्त्रे यस्य विभाषा तस्य साधुत्वम् ॥

भा :—साध्वनुशासनेऽस्मिन् शास्त्रे यस्य विभाषा क्रियते, सा विभाषा साधुः स्यात्। समासस्यैव हि विभाषा क्रियते, तेन समासस्यैव विभाषा साधुत्वं स्यात्। अस्तु। यः साधुः, स प्रयोक्ष्यते। असाधुर्न प्रयोक्ष्यते। न चैव हि कदाचिद् राजपुरुष इत्येतस्यामवस्थायामसाधुत्वमिष्यते।

॥ वा ॥ द्वैधाऽप्रतिपत्तिः ॥

भा :—अपि च द्वैधं शब्दानामप्रतिपत्तिः स्यात्। इच्छामश्च पुनर्विभाषाप्रदेशेषु द्वैधं शब्दानां प्रतिपत्तिः स्यादिति। तच्च न सिध्यति। यस्य पुनः कार्याः शब्दाः, विभाषासौ समासं निवर्तयति। यस्यापि नित्याः शब्दास्तस्याप्येष दोषो न भवति। कथम्?। न विभाषाग्रहणेन साधुत्वमभिसंबध्यते। किं तर्हि? समाससंज्ञाभिसम्बध्यते समास इत्येषा संज्ञा विभाषा भवतीति। तद्यथा "मेध्यः पशुर्विभाषितः मेध्योऽनड्वान् विभाषितः" इति। नैतद्विचार्यते—अनड्वान्न अनड्वानिति। किं तर्हि। आलब्धव्यो नालब्धव्य इति।

प्र :—**एवमपीति**। यद्यपि विरुद्धयोरेकसंज्ञा क्रियते। तथापि प्रदेशेषु युगपद् विरोधाद् भावाभावौ विधातु न शक्येते इत्यर्थः। **सिद्धं त्विति**। उभयत्रविभाषासु प्रतिषेधेन समीकृते विषये पश्चाद्विकल्पः प्रवर्तत इत्यर्थः। यदि तु पूर्वं विकल्पः प्रवर्तते पश्चात् प्रतिषेधस्ततो विकल्पप्रवृत्तिरनर्थिकैव स्यात्। आनुपूर्वी च या संज्ञाविधावाश्रिता सैव प्रदेशवाक्येष्वाश्रीयते। उभयत्रविभाषार्था चेयं संज्ञा। प्राप्तविभाषायामप्राप्तविभाषायां च संज्ञाकरणस्यानुपयोगात्। तथाहि। प्राप्तविभाषासु पक्षे निवृत्तिः क्रियते पक्षे तु प्रवृत्तिः स्थितैव। अप्राप्तविभाषासु च पक्षे कार्यस्य प्रवृत्तिः क्रियते पक्षान्तरं त्वप्रवृत्तिः स्थितैवेति नास्ति तत्र संज्ञाफलम्। 'विभाषा श्वेः' इत्यत्र तु यदि विधिमुखेन विभाषाश्रुतिः प्रवर्तते पित्स्वेव संप्रसारणं विभाषा स्यात्। किन्तु यजा-

दित्वान्नित्यमेव स्यात्। अथ प्रतिषेधमुखेन प्रवृत्तिस्तदा किस्त्वेव विकल्प इति पिस्तु न स्यात्। संज्ञाकरणे तु पूर्वं प्रतिषेधे कित्सु प्रवृत्तिः पश्चाद्विधिमुखेन सर्वत्र पक्षे संप्रसारणस्य प्रवर्तनादिष्टं सिध्यति। यदा तु प्रतिलक्ष्यं भेदेन 'विभाषा श्वेः' इत्यस्य व्यापारः क्वचिद् विधिमुखेन क्वचित्प्रतिषेधमुखेन तदा संज्ञाकरणमन्तरेणापि सिध्यतीति अशिष्योऽयं योग इति वक्ष्यते 'अशिष्यो वा विदितत्वाद्' इति। **साध्वनुशासन इति।** साधुत्वप्रतिपादनार्थत्वाच्छास्त्रस्य साधुत्वस्यैव प्राधान्याद्विकल्पेन सम्बन्धः स्यात्। न तु तदङ्गभूतानां समाससंज्ञादीनामिति भावः। ततश्च 'विभाषा श्वेः' इत्यस्यायमर्थः स्यात्। विभाषा श्वयतेस्साधु संप्रसारणं भवति। पक्षे त्वसाध्विति। **अस्तु यः साधुरिति।** यथा भक्ष्याभक्ष्यसन्निधौ भक्ष्यमेवोपादीयते। **न चैव हीति।** सर्वदा त्वस्य साधुत्वं नोभयरूपत्वमित्यर्थः। **द्वेधा प्रतिपत्तिरिति।** साधुत्वविकल्पने विभाषाग्रहणस्योपयुक्तत्वात् शिश्वियतुरित्यादिरूपं न सिध्यतीत्यर्थः। **यस्य पुनरिति।** एवं मन्यते—व्याकरणेनैव शब्दा उत्पाद्यन्ते, तन्मते विभाषाग्रहणेनापूर्वत्वेन विधेयत्वात् संप्रसारणमेव विकल्प्यत इति द्वैधं प्रतिपत्तिः शब्दानां सिध्यतीति भावः। **यस्यापीति।** साधुत्वस्यापौरुषेयत्वादविकल्प्यत्वात्तदङ्गानामेव विकल्पः। **तद्यथेति।** पशुत्वानडुहृत्वयोरविकल्प्यत्वात् क्रिया विकल्प्यते। नन्वन्यत्रोक्तं न च संज्ञाया भावाभावाविष्येते इति, इह तूक्तं [1]संज्ञाभिसम्बध्यत इति, ततश्च विरोधः। नैष दोषः। इह वृत्तिवाक्ययोर्मुख्यार्थभेदादभिन्नार्थत्वमाश्रित्योक्तम्। अन्यत्र तु व्यपेक्षैकार्थीभावभेदाद् भिन्नार्थत्वमाश्रित्यैकार्थीभावे एव संज्ञाया भावाभावौ नेष्येते इत्युक्तमित्यविरोधः।

उ:—ननु संज्ञाकरणसामर्थ्याद्युगपद्वचनं स्याद्; अत आह—**यद्यपीति।** भावाभावावित्यनेन विधिप्रतिषेधशब्दौ भावाभावपरौ व्याख्यातौ। ननु समुदायस्य संज्ञित्वे पूर्वं विकल्पस्यापि प्रवृत्तेः प्रतिषेधेन समीकृत इत्ययुक्तम्; अत आह—**यदीति।** **आनुपूर्वीति।** नवेति क्रमेणैवार्थप्रत्ययौ न तु व्युत्क्रमेण मानाभावादिति भावः। संज्ञाकरणस्य प्रयोजनमाह—**उभयत्रेति।** तदेवोपपादयति—नेति। **हीति** संज्ञां विनापि विकल्पार्थकविभाषाशब्दस्य प्रदेशेषु प्रयोगे विधिमुखेन क्वचिन्निषेधमुखेन क्वचिद्व्यवस्थया विकल्पः प्रवर्तते। उभयत्रविभाषासूभयथा प्रवृत्तिरिष्यते नैकस्य युगपदुभयत्र तात्पर्यमिति संज्ञाकरणमिति समुदायार्थः। प्रत्याख्यानतात्पर्यमप्यस्मिन्नेवाह—

(१) क. संज्ञाभिः

**यदेति।** वाक्यभेदाङ्गीकारान्नैकस्य तात्पर्यद्वयमिति विरोधलेशोऽपि नास्तीत्यर्थः। यस्य विकल्पोऽभिमतस्तस्य विकल्पेन साधुत्वं स्यात्। शास्त्रस्य साध्वनुशासनार्थत्वेन साधुत्वस्य प्राधान्यात्तेनैव विभाषाशब्दार्थान्वयः स्यादिति वार्तिकार्थमभिप्रेत्याह—**साधुत्वेति।** समासे महाविभाषाऽधिकारस्य प्रत्याख्यानादुभयत्रविभाषाया एव संज्ञाप्रयोजनत्वाच्चोदाहरणान्तरमाह—**ततश्चेति।** असाधुत्यागे दृष्टान्तमाह—**भक्ष्येति। सर्वदेति;** अतिसादृश्यादसाधुपरित्यागेन साधूपादानमशक्यमित्यपि द्रष्टव्यम्। साध्वनुशासन इति वार्तिके विविच्यज्ञापनवाचिनाऽनुशासनशब्देन शब्दनित्यत्वपक्षेऽयं दोषः न कार्यशब्दपक्ष इति सूचितम्। तद्विशदयितुं **यस्य पुनरिति** भाष्यम्। तस्याशयमाह—**एवं मन्यत इति।** प्राधान्यात्साधुत्वमेव विभाषया संबध्यत इति यदुक्तं तत्राह—**साधुत्वस्येति।** साधुत्वं शब्दत्वावान्तरजातिः। साक्षादर्थप्रतीतिसाधनत्वमभ्युदयसाधनशब्दत्वं वा। मतभेदेन तस्य [१]पुंयत्नासाध्यत्वात् न विकल्पार्हतेत्यर्थः। तदङ्गानां साधुत्वज्ञानोपयोगीनां संप्रसारणादीनामानर्थक्यात्तदङ्गेष्विवति न्यायादिति भावः। किं तर्हि संज्ञाऽभिसंबध्यत इति भाष्यस्य भाष्यान्तरविरोधं शङ्कते—**नन्विति। अन्यत्र;** समर्थसूत्रे। **मुख्यार्थाभेदात्;** प्रधानार्थाभेदात्। **व्यपेक्षेति।** परस्पराकाङ्क्षा व्यपेक्षा वाक्य एव। पृथगर्थानां पदानां प्रधानार्थाभिधेयत्वमेकार्थीभावः। स च वृत्तावेव। तथा च वृत्तिवाक्ययोर्भिन्नार्थत्वान्न वृत्त्या वाक्यस्य बाधः प्रसक्त इति वाक्याभ्यनुज्ञानाय विभाषाग्रहणमनुपयुक्तमिति वृत्तावेव संज्ञाविकल्पार्थं तद्वाच्यम्। न च वृत्तावेव संज्ञा विकल्पयिष्यत इति तत्रोक्तमिति न विरोध इत्यर्थः।

**॥ वा ॥ कार्येषु युगपदन्वाचययौगपद्यम् ॥**

**भा :—कार्येषु शब्देषु युगपदन्वाचयेन च यदुच्यते, तस्य युगपद्वचनता प्राप्नोति—"तव्यत्तव्यानीयरः" "ढक् च मण्डूकात्" इति। यस्य पुनर्नित्याः शब्दाः प्रयुक्तानामसौ साधुत्वमन्वाचष्टे। ननु च यस्यापि कार्यास्तस्याप्येष न दोषः। कथम्?। प्रत्ययः परो भवतीत्युच्यते। न चैकस्याः प्रकृतेरनेकस्य प्रत्ययस्य युगपत्परत्वेन संभवोऽस्ति। नापि ब्रूमः—प्रत्ययमाला प्राप्नोतीति। किं तर्हि?। कर्तव्यमिति प्रयोक्तव्ये युगपद्द्वितीयस्य तृतीयस्य च प्रयोगः प्राप्नोतीति। नैष दोषः।**

---

(१) क. प्रयत्न

**अर्थगत्यर्थः शब्दप्रयोगः। अर्थं संप्रत्याययिष्यामीति शब्दः प्रयुज्यते। तत्रैकेनोक्तत्वात्तस्यार्थस्य द्वितीयस्य तृतीयस्य च प्रयोगेण न भवितव्यम्। "उक्तार्थानामप्रयोगः" इति।**

**॥ वा ॥ आचार्यदेशशीलने च तद्विषयता ॥**

**भाः—आचार्यशीलनेन देशशीलनेन च यदुच्यते, तस्य तद्विषयता प्राप्नोति "इको ह्रस्वोऽङ्यो गालवस्य" "प्राचामवृद्धात् फिन् बहुलम्" इति। गालवा एव ह्रस्वान्प्रयुञ्जीरन्, प्राक्षु चैव हि फिन् स्यात्। तद्यथा "जमदग्निर्वा एतत्पञ्चममवदानमवाद्यत्। तस्मान्नाजामदग्न्यः पञ्चावत्तं जुहोति"। यस्य पुनर्नित्याः शब्दाः, गालवग्रहणं तस्य पूजार्थम्, देशग्रहणं च कीर्त्यर्थम्। ननु च यस्यापि कार्याः शब्दास्तस्यापि गालवग्रहणं पूजार्थं स्यात्, देशग्रहणं च कीर्त्यर्थम्।**

**॥ वा ॥ तत्कीर्तने च द्वैधाऽप्रतिपत्तिः ॥**

**भाः—तत्कीर्तने च द्वैधं शब्दानामप्रतिपत्तिः स्यात्। इच्छामश्च पुनराचार्यग्रहणेषु देशग्रहणेषु च द्वैधं शब्दानां प्रतिपत्तिः स्यादिति, तच्च न सिध्यति।**

प्रः—नित्यवादी कार्यपक्षे दूषणमाह—**कार्येष्विति।** युगपद्भावे युगपच्छब्दो वर्तत इति द्वन्द्वः कृतः। अन्वाचयः समुच्चयोऽभिमतो, यस्य चकारेण स्वरितत्वेन वा विधानम्। यस्य कार्याः शब्दाः स प्रयोगनिरपेक्षः शब्दानन्वाचष्ट इति तव्यादीनां युगपदुत्पत्तिः प्राप्नोति। **न चैकस्या इति।** ननु व्यवहितेऽपि परशब्दः प्रवर्तते। सत्यम्। अन्तरालस्थमनपेक्ष्यानन्तर्यमारोप्य तत्र परशब्दप्रयोगः निर्दिष्टग्रहणं त्वानन्तर्यार्थमिति कुतो व्यवहितस्य प्रयोगः। कथं तर्ह्युक्तम् 'एका प्रकृतिर्बहवश्च यत्र' इति। तत्र यत्राकृतेरेकत्वात् तस्याश्च परत्वादानन्तर्याच्चादोषः। तव्यदादयस्त्वेकाकृतियुक्ता न भवन्ति। **नापि ब्रूमः इति।** एकस्याः प्रकृतेः सर्वे भवन्तीति न ब्रूमः। किं तर्हि? प्रत्ययान्तरेण प्रकृत्यन्तरस्याक्षेपात् कर्तव्यमिति प्रयुयुक्षिते करणीयादीनामपि प्रयोगः प्राप्नोति। **अर्थगत्यर्थं इति।** तव्यत्तव्यानीयर इत्यस्माद् वाक्याद्वाक्यान्तराण्युपप्लवन्ते। तत्प्रतिपादकानि धातोस्तव्यद्भवति भावकर्मणोरित्यादीनि। तत्र कर्तव्यशब्देन तस्यार्थस्य प्रतिपादितत्वात्

करणीयशब्दो न प्रयुज्यते। **आचार्येति।** आचार्यस्य देशस्य च पुनः पुनः सङ्कीर्तनमाचार्यदेशशीलनं तत्र तस्य शब्दस्य तद्विषयत्वमेव स्यात्। सर्वप्रयोक्तृत्वप्रसङ्गे गालवस्येति नियमार्थं स्यात्। **यस्य पुनरिति।** अनादित्वाच्छब्दव्यवहारस्य नित्यत्वपक्षे नास्ति प्रयोक्तृनियमः। केवलं गालवः स्मर्तृत्वेन निर्दिष्टोऽस्य शास्त्रस्य प्रामाण्यं प्रतिपादयितुमिति पूजार्थमाचार्यग्रहणम्। शास्त्रस्य ह्यनाद्यर्थप्रतिपादकत्वात्पूजा भवति। **कीर्त्यर्थमिति।** कीर्तौ सत्यां तेषां स्वर्गाद्यवस्थानं चिरं भवति। यथा इन्द्रद्युम्नादीनाम्। **ननु च यस्यापीति।** कार्यपक्षेऽपि पूजा शक्यते व्याख्यातुं, यस्माद् गालवेन ह्रस्वत्वं प्रयुक्तं तस्मात् त्वमपि प्रयुङ्क्ष्वेति स्तुत्यर्थोऽर्थवादः स्यादित्यर्थः। इदानीं कार्यपक्षे दूषणमाह—**तत्कीर्तन इति।** कार्यपक्षेऽयमर्थः स्यात्। यस्माद् गालवेन ह्रस्वत्वं प्रयुक्तं तस्मात् प्रयोक्तव्यमिति। ततश्च ह्रस्वत्वस्य विकल्पो न स्यात्। नित्यत्वपक्षे तु गालवो ह्रस्वत्वस्य स्मर्ता अन्यो दीर्घस्येति स्मृत्यन्तरानुसन्धानद्वारेण विकल्पः सिध्यतीति नित्यपक्ष एव युक्तः।

उ:—ननु युगपच्छब्द एकस्मिन् काले इत्यर्थे वर्तते। अन्वाचयशब्दश्च सप्तम्यर्थवृत्तिरिति कथं चार्थयोगः; अत आह—**युगपद्भाव इति।** उभयोरपि प्रथमान्तत्वात् द्वन्द्वोपपत्तिरित्यर्थः। अन्वाचयशब्दस्याप्रधानार्थकत्वात् ढक् चेत्यत्र समुच्चयस्य विवक्षितत्वात् प्रकृतानुपयोगात् आह—**अन्वाचय इति। स्वरितत्वेन वेति;** 'काश्यादिभ्यष्ठञ्ञिठौ' इति वर्तमाने वाहीकग्रामेभ्यश्चेत्यत्र यद्यपि चकारं विना स्वरितत्वेनान्वयः; तथापि 'ढक् च मण्डूकाद्' इत्यत्राणः स्वरितत्वाभावेऽपि अन्वयः, अत्र स्वरितत्वेनेति वास्तवकथनमेतत्। यौगपद्यमेवाह—**यस्येति। तत्र;** व्यवहिते। नन्वत्राप्यारोपादेव प्रयोगोऽस्तु; अत आह—**निर्दिष्टग्रहणमिति। उक्तम्;** सरूपप्रत्ययविधावपि तस्मादित्युत्तरस्येति परिभाषामङ्गीकृत्येदमुक्तम्। **उक्तम्;** सूत्रादौ। **तव्यादय इति।** प्रत्ययत्वादयः संज्ञा न तु जातय इति भावः। **एकस्या इति;** पञ्चमी। [1]अर्थोऽपि समुदायस्यैवास्तु; अत आह—**तव्यदिति।** तथा च संज्ञाविधौ तेषामुद्देश्यत्वेन साहित्यस्याविवक्षितत्वात् प्रत्येकमेव कृत्यादिसंज्ञा। तथा च कृत्यसंज्ञया भावाद्यर्थे विधीयमानानां प्रत्येकमेवार्थवत्त्वमित्यर्थः। पुनः पुनरिति शीलशब्दार्थ उक्तः। तद्विषयत्वे हेतुमाह—**सर्वेति।** भाष्ये **पञ्चावत्तमिति।** उपस्तरणं द्विर्हविरवदानमभिघारणद्वयम्। हविष एव वा त्रिरवदानमिति पञ्चावदानानि।

(१) क. अथापि

**अनादित्वादिति।** गालवव्यतिरिक्तैरपि शिष्टैः प्रयोगान्न नियमार्थता संभवतीत्यर्थः। पूजार्थत्वमाह—**केवलमिति। प्रामाण्यम्;** संवादेनेत्यादिः। एवं प्रामाण्येन पूजेत्युक्तम्। अनाद्यर्थप्रतिपादकत्वेन वा पूजा तदर्थमाचार्यग्रहणमित्याह—**शास्त्रस्य हीति।** भाष्ये **कीर्त्यर्थमिति।** सर्वदेशप्रयुक्तशब्दान्वाख्यानात् सर्वदेशेषु व्याकरणप्रचारो भवतीति कीर्तिः कर्तुः स्यादित्यर्थः। कीर्तिप्रयोजनमाह—**कीर्ताविति। दूषणम्;** अपरिहार्यमित्यादिः। तदेवाह—**कार्यपक्ष इति।** नित्यपक्षे नैतद् दूषणमित्याह—**नित्येति।**

**॥ वा ॥ अशिष्यो वा विदितत्वात् ॥**

**भा :—अशिष्यो वा पुनरयं योगः। किं कारणम्? विदितत्वात्। यदनेन योगेन प्रार्थ्यते तस्यार्थस्य विदितत्वाद्। येऽपि ह्येतां संज्ञां नारभन्ते तेऽपि विभाषेत्युक्तेऽनित्यत्वमवगच्छन्ति। याज्ञिकाः खल्वपि संज्ञामनारभमाणा विभाषेत्युक्तेऽनित्यत्वमवगच्छन्ति। तद्यथा "मेध्यः पशुर्विभाषितो मेध्योऽनड्वान्विभाषितः" इति। आलब्धव्यो नालब्धव्य इति गम्यते। आचार्यः खल्वपि संज्ञामारभमाणो भूयिष्ठमन्यैरपि शब्दैरेतमर्थं संप्रत्याययति—बहुलम्, अन्यतरस्याम्, उभयथा, वा, एकेषाम् इति।**

प्र :—**अशिष्यो वेति।** वाशब्दो विकल्पे। तेनाकृतिपक्षे उभयत्रविभाषार्थं सूत्रं कर्तव्यम्। व्यक्तिपक्षे तु लक्ष्यभेदेन लक्षणभेदात् क्वचित् किञ्चिल्लक्षणं विधिमुखेन प्रवर्तते, क्वचिन्निषेधमुखेन प्रवर्तते इतीष्टसिद्ध्या सूत्रं न कर्तव्यमित्यर्थः।

उ :—**विकल्प इति।** व्यवस्थित इत्यर्थः। तमेवाह—**तेनेति। क्वचित्;** शुशावेत्यादौ। **किञ्चित्;** विभाषा श्वेरित्यादिः। **क्वचित्;** शुशुवतुरित्यादौ।

**॥ वा ॥ अप्राप्ते त्रिसंशयाः ॥**

**भा :—इत उत्तरं या विभाषा अनुक्रमिष्यामः' अप्राप्ते ता द्रष्टव्याः। त्रिसंशयास्तु भवन्ति—प्राप्तेऽप्राप्ते उभयत्र वेति।**

**॥ वा ॥ द्वन्द्वे च, विभाषा जसि ॥**

**भा :—प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः। कथं वा प्राप्ते ?, कथं वाऽप्राप्ते ?; कथं वोभयत्र ?। उभयशब्दः सर्वादिषु पठ्यते। तयपश्चायजादेशः क्रियते। तेन वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति। अप्राप्ते, अयच् प्रत्ययान्तरम्। यदि प्रत्ययान्तरं, उभयीति ईकारो न प्राप्नोति। मा भूदेवं मात्रजित्येवं भविष्यति। कथम् ?। मात्रजिति नेदं प्रत्ययग्रहणम्। किं तर्हि ?। प्रत्याहारग्रहणम्। क्व संनिविष्टानां प्रत्याहारः ?। मात्रशब्दात्प्रभृति आअयचश्चकारात्। यदि प्रत्याहारग्रहणम्। कति तिष्ठन्ति अत्रापि न प्राप्नोति। अत इति वर्तते। एवमपि तैलमात्रा घृतमात्रा अत्रापि प्राप्नोति। सदृशस्याप्यसंनिविष्टस्य न भविष्यति—प्रत्याहारेण ग्रहणम्।**

प्र :—**अप्राप्त इति;** अधिकारोऽयम्। **त्रिसंशया इति;** त्रिष्वर्थेषु संशयः यासु ताः त्रिसंशयाः। **द्वन्द्वे चेति।** प्रकरणोपलक्षणार्थमेतदुपात्तम्। प्रथमचरमतयेत्यत्र तयग्रहणे संशयः। तत्र तयशब्दस्य प्रयोजनं सर्वनामाव्ययसंज्ञायामिति वान्वर्थसंज्ञाविज्ञानाद्वा केवलस्य प्रयोगाभावात्तदन्तस्यैव सर्वनामत्वसम्भवात् प्रत्ययग्रहण इति परिभाषया वा तदन्तविधिः। तत्र यदि सर्वादिग्रहणेन तयान्तं विशेष्यते, नेमशब्दोऽव्यभिचारात् प्रथमादयस्त्वसम्भवान्न विशेष्यन्ते, तदोभयशब्दस्य जसि नित्या संज्ञा विभाष्यत इति प्राप्तविभाषा स्यात्। अथ सर्वादीनि इति निवृत्तं पूर्वविप्रतिषेधश्च तदाप्राप्तविभाषा। अथ परविप्रतिषेधस्तदोभयत्रविभाषा। **प्रत्ययान्तरमिति।** आदेशपक्षे पूर्वविप्रतिषेधो वक्तव्य इति प्रत्ययान्तरपक्ष आश्रितः। 'उभादुदात्त' इत्यत्र तयस्येति नानुवर्तते [१]तदा प्रत्ययान्तरमयज् भवति। **तैलमात्रेति।** प्रत्याहारे सति चकारेण मात्रशब्दो न विशेषित इति 'हुयामाश्रुवसिभसिभ्यस्त्रन्' इति त्रन्नन्तादपि मात्रशब्दात् ङीप्प्रसङ्गः। **सदृशस्यापीति।** प्रमाणे वर्तमानात् प्रमेये यो मात्रज् विहितः स प्रत्याहारेण गृह्यते इत्यर्थः।

उ :—इत उत्तरमित्यस्य कथं लाभः; अत आह—**अधिकार इति।** अधिकारकरणस्य प्रयोजनं वक्तुं त्रिसंशया इत्युक्तम्। तद्व्याचष्टे—**त्रिष्विति।**

---

(१) क. इति.

ननु वार्तिके 'द्वन्द्वे च, विभाषा जसि' इत्यभिधानात् भाष्ये उभयशब्दः सर्वादिषु पठ्यते। तयपश्चायजादेश इत्ययुक्तम्; अत आह—**प्रकरणेति**। विभाषा जसीत्येवोक्तौ तस्यैव विचार्यत्वशङ्का स्यात्। 'द्वन्द्वे च' इत्येतत्प्रकरणपरम्। तथा च सर्वनामसंज्ञाप्रकरणे यद्विभाषाग्रहणं तत्र तयग्रहणे संशयत्रयं भवतीति वार्तिकार्थः। यद्यपि विभाषा जसि प्रथमचरमतयेति पठितुं शक्यं, तथापि वैचित्र्यात् द्वन्द्वे चेति पठितमिति ज्ञेयम्। ननूभयशब्दस्य सर्वादित्वात् संज्ञा, अत्र तयप्रत्ययस्येत्यप्राप्तविभाषात्वनिश्चयान्न संशयः; अत आह—**तत्रेति**। येन विधिरिति सूत्रे प्रयोजनमिति वार्तिकं 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्' इति परिभाषा संज्ञाविधावपि प्रवर्तते इत्यभ्युपेत्योक्तम्—**प्रत्ययेति**। तयशब्दस्य तदन्तविधिरित्यन्वयः। तदन्तविधौ सति संशयोपपत्तिमाह—**तत्रेति**। **तयान्तमिति**। द्वितयादिव्यावृत्त्यर्थमित्यर्थः। **नित्या;** सर्वादिसूत्रविहिता। **पूर्वेति**। सर्वादिपाठात् जसोऽन्यत्र उभयशब्दस्य संज्ञा सावकाशा द्वितयादौ विकल्पः सावकाशः। उभयशब्दस्य जस्युभयप्रसङ्गे पूर्वविप्रतिषेधश्चेत्तत्र नित्यैव संज्ञा। द्वितयादिष्वेव विकल्प इत्यप्राप्तविभाषेत्यर्थः। **उभयत्रेति;** द्वितयादावप्राप्ते उभयशब्दे प्राप्ते च। ननु पूर्वविप्रतिषेधेनैव सिद्धौ प्रत्ययान्तरत्वं किमर्थमुक्तम्; अत आह—**आदेशेति**। ननु तयस्यायजिति षष्ठीनिर्देशेनादेशत्वनिश्चयात्कथं प्रत्ययान्तरत्वम्; अत आह—**उभाविति**। तन्नन्तादपीत्यपिना द्वयसजर्थादपीत्यर्थः। यद्यपि लाक्षणिक[1]त्वादपि तन्निवृत्तिस्तथापि समाधानान्तरमाह भाष्ये—**सहशस्यापीति**। तद्व्याचष्टे—**प्रमाण इति**। दघ्नच्साहचर्यान्मात्रोऽपि तद्धित एव गृह्यते। अर्थविशेषेण च तन्निश्चय इत्यभिप्रायः।

### ॥ वा ॥ ऊर्णोतेर्विभाषा ॥

**भा :—प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः। कथं वा प्राप्ते, कथं वा अप्राप्ते, कथं वोभयत्र?। "असंयोगाल्लिट् कित्" इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति। [अप्राप्ते] अन्यद्धि कित्वमन्यद्धि ङित्वम्। एकं चेत्ङित्कितौ। यद्येकं ङित्कितौ, ततः संदेहः। अथ हि नाना, नास्ति संदेहः। यद्यपि नाना, एवमपि संदेहः। प्रोर्णुवीति। "सार्वधातुकमपित्" इति नित्ये प्राप्तेऽन्यत्र वाऽप्राप्ते उभयत्र वेति। अप्राप्ते।**

---

(१) क. त्वादेत.

॥ वा ॥ विभाषोपयमने ॥

भा :—प्राप्ते अप्राप्ते, उभयत्र वेति संदेहः ?। कथं वा प्राप्ते कथं वाप्राप्ते कथं वोभयत्र। गन्धन इति वा नित्ये प्राप्ते। अन्यत्र वाऽप्राप्ते उभयत्र वेति। अप्राप्ते। गन्धन इति निवृत्तम्।

॥ वा ॥ अनुपसर्गाद्वा ॥

भा :—प्राप्तेऽप्राप्ते उभयत्र वेति सन्देहः। कथं वा प्राप्ते कथं वाप्राप्ते कथं वोभयत्र। 'वृत्तिसर्गतायनेषु क्रमः' इति वा नित्ये प्राप्ते अन्यत्र वाप्राप्ते उभयत्र वेति। अप्राप्ते वृत्त्यादिष्विति निवृत्तम्।

॥ वा ॥ विभाषा वृक्षमृगादीनाम् ॥

भा :—प्राप्तेऽप्राप्ते उभयत्र वेति संदेहः। कथं वा प्राप्ते, कथं वा अप्राप्ते, कथं वोभयत्र ?। "जातिरप्राणिनाम्' इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते उभयत्र वेति। अप्राप्ते "जातिरप्राणिनाम्" इति निवृत्तम्।

प्र :—**ऊर्णोतेर्विभाषेति ;** 'विभाषोर्णोः' इति सूत्रं यदि 'असंयोगाल्लिट् किद्' इत्यात्रानुवर्तते। ऊर्णुश्चासंयोगान्त एवेत्यसंयोगग्रहणात् वाक्यभेदेनोर्णोः परस्येडादेर्लिटो नित्यं कित्वं प्राप्तं विकल्प्यते ततः प्राप्तविभाषा। इडुपजीवनार्थं तु स्थानान्तरे सूत्रं पठितम्। अथ तत्र सूत्रं नानुवर्तते परविप्रतिषेधश्च ततोऽप्राप्तविभाषा। अथ पूर्वविप्रतिषेधः तदोभयत्रेति संशयः। **अन्यद्धीति।** व्यपदेशातिदेशोऽयमिति कित्वङित्वयोर्भेदः। **एकं चेदिति;** कार्यातिदेशपक्षे गुणनिषेधस्य कार्यस्यैकत्वादेकत्वमनयोरित्यर्थः। **प्रोर्णुवीति।** लङ उत्तमैकवचनम्, सार्वधातुकमपिदित्यत्र यदि विभाषोर्णोरित्येतद्वाक्यभेदेन संबध्यते, ततः प्राप्तविभाषा। अथासम्बन्धः पूर्वविप्रतिषेधश्च तत उभयत्रविभाषा। परविप्रतिषेधे त्वप्राप्ते। **विभाषोपयमन इति ;** यदा गन्धनाङ्गमुपयमनं तत्र गृह्यते तदा प्राप्ते, पूर्वविप्रतिषेधे त्वप्राप्ते, परविप्रतिषेधे तु उभयत्र वेति सन्देहः। **जातिरिति।** चर्मादिमयास्तदा मृगादयो ग्राह्याः। **निवृत्तमिति।** तन्निवृत्तौ च गौणत्वाच्चर्मादिमयानामग्रहणम्।

उ :—ननु 'ऊर्णोतेर्विभाषा इति' वृद्धिविकल्पार्थं सूत्रम्। तत्र 'असंयोगाल्लिट् कित्' इत्यादिभाष्यमयुक्तम् ; अत आह—**विभाषेति।** वार्तिके इदं सूत्रमर्थतः

पठितमित्यर्थः। संशयत्रयमुपपादयति—**यदीति।** **वाक्यभेदेनेति।** 'असंयोगाल्लिट् कित्' ऊर्णोतेः परं इडादिर्लिट् वा किदित्येवमर्थः। तर्हि किमर्थं पुरस्तात्सूत्रकरणम्; अत आह—**इडिति।** ऊर्णोतिनैव संबद्धस्येड्ग्रहणस्यानुवर्तनात् न सार्वधातुकमपिदित्यनेनेटः संबन्ध इति भावः। **अत्र;** असंयोगाल्लिट्किदित्यत्र। **परेति;** विकल्पस्यालिडवकाशः। असंयोगाल्लिट्किदित्यस्य चेनत्यादयः। ऊर्णोतेरिडादौ लिटि परत्वादसंयोगादित्यस्यैव प्राप्तावन्यत्राप्राप्तविभाषैवेत्यर्थः। **उभयत्रेति।** लिटि प्राप्ते अन्यत्राप्राप्ते। व्यपदेशभेदस्योक्तत्वात् कथमेकत्वम्; अत आह—**कार्येति।** यद्यपि वचिस्वपियजादीनां कित्यत्र संप्रसारणं न ङितीति च सर्वकार्यैक्यं तथाप्यूर्णोतौ कार्यान्तरासंभवात् कित्वङित्वयोरेककार्यत्वमभिप्रेत्य गुणनिषेधस्येत्युक्तम्। **लङ इति।** आत्मनेपदस्येत्यर्थः। **वाक्यभेदेनेति।** ऊर्णोतेरिडादिप्रत्ययो वा ङिदित्येकं वाक्यम्। ऊर्णोतेः सार्वधातुकमपिद्वा ङिदित्येकमित्यर्थः। पृथक्पाठसामर्थ्याद्वाक्यभेदेनेत्युक्तम्। **अथेति।** वाक्यभेदपक्ष एवासंबन्धोऽभिमतः एकवाक्यत्वे ऊर्णोतेः इत्यस्येडादिप्रत्ययविषयतया सार्वधातुके प्रवृत्त्यभावेन प्राप्ताप्राप्तविभाषात्वासंभवात्। **पूर्वेति;** द्वितीयसूत्रस्योर्णोतेः परो यः कश्चित् प्रत्ययो वा ङित्स्यादित्यर्थः। तत्र सार्वधातुके प्राप्तविभाषाऽसार्वधातुकेऽप्राप्तविभाषेत्यर्थः। यद्वा वाक्यभेदाभावेऽपि इड्ग्रहणमननुवर्त्य संशयत्रयोपपादनमिति ज्ञेयम्। ननु गन्धनं सूचनम्। उपयमनं विवाहस्तयोर्भेदात् कथं गन्धन इत्यनेनोपयमने प्राप्तम्; अत आह—**यदेति।** गन्धनाङ्गमिति बहुव्रीहिः। गन्धनग्रहणानुवृत्त्या गन्धनपूर्वकोपयमनं यदि तत्र गृह्यते तदा प्राप्तविभाषेत्यर्थः। **पूर्वेति।** उपयमने गन्धन इति नानुवर्तते विवाहश्च गन्धनपूर्वकस्तदन्यश्च। तत्र पूर्वविप्रतिषेधे गन्धनपूर्वके गन्धने नित्यं कित्त्वमित्यप्राप्तविभाषा। परविप्रतिषेधे तूभयत्रेत्यर्थः। भाष्ये **गन्धन इति निवृत्तमिति;** पूर्वविप्रतिषेध आश्रित इत्यर्थः। भाष्ये **अनुपसर्गाद्वेति।** वृत्त्यादेरत्रानुवृत्तौ प्राप्तेऽननुवृत्तौ पूर्वविप्रतिषेधे चाप्राप्ते, परविप्रतिषेधे उभयत्रेति संशयः। **पूर्वविप्रतिषेध इति।** वृत्त्यादिष्विति निवृत्तमिति भाष्यार्थः। ननु जातिसूत्रं विभाषा वृक्षेत्यत्रानुवर्तयितुं न शक्यते मृगादेरप्राणित्वेन विशेषणासंभवाद्; अत आह—**चर्मेति। तदा;** अनुवृत्तिपक्षे। अत्र वृक्षादौ प्राप्तविभाषैव। मृगादौ गौणमात्रग्रहणे प्राप्तविभाषा। गौणमुख्यग्रहणे उभयत्र। मुख्यमात्रग्रहणे अप्राप्त इति ज्ञेयम्, वृक्षादावुभयत्रविभाषाया असंभवात्।

॥ वा ॥ उषविदजागृभ्योऽन्यतरस्याम् ॥

**भा :**—प्राप्तेऽप्राप्ते उभयत्र वेति संदेहः। कथं वा प्राप्ते, कथं वाऽप्राप्ते कथं वोभयत्र। प्रत्ययान्तादिति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति। अप्राप्ते। प्रत्ययान्ता धात्वन्तराणि।

॥ वा ॥ दीपादीनां विभाषा ॥

**भा :**—प्राप्तेऽप्राप्ते उभयत्र वेति सदेहः। कथं वा प्राप्ते कथं वा अप्राप्ते कथं वोभयत्र?। "भावकर्मणोः" इति वा नित्ये प्राप्ते अन्यत्र वाऽप्राप्ते उभयत्र वेति। अप्राप्ते। कर्तरीति हि वर्तते। एवमपि सदेहः—न्याय्ये वा कर्तरि कर्मकर्तरि वेति। नास्ति संदेहः। सकर्मकस्य कर्ता कर्मवद्भवति। अकर्मकाश्च दीपादयः। अकर्मका अपि वै सोपसर्गाः सकर्मका भवन्ति। कर्मोपदिष्टा विधयः कर्मस्थभावकाणां कर्मस्थक्रियाणां [1]वा भवन्ति। कर्तृस्थभावकाश्च दीपादयः।

प्र :—**प्रत्ययान्तादिति वेति ;** कथ पुनः प्रत्ययान्ताः शब्दाः रूपान्तरयुक्ता उषादिव्यपदेशं लभन्ते। उच्यते। 'सनाद्यन्ता धातवः' इत्यस्य यदायमर्थो व्याख्यायते, धातवः सनाद्यन्ता[2] भवन्ति, धातूनामन्तावयवाः सनादयो भवन्ति, यथा समासान्ताष्टजादयस्तदा पूर्वोक्तदो[3]षाभाव इति भावः। **प्रत्ययान्ता इति।** 'सनाद्यन्ता धातव' इत्ययं योगः संज्ञासंज्ञिसंबन्धार्थ इति भावः। **भावकर्मणोरिति वेति।** 'चिण् भावकर्मणोः' इत्यत्र सूत्रे यदि दीपजनेत्यतः सूत्रमनुवर्त्य वाक्यभेदेन सम्बन्धः क्रियते, पृथक्पाठसामर्थ्यात्तदा प्राप्तविभाषा, अथ नानुवर्तते परविप्रतिषेधश्च तदा अप्राप्तविभाषा, पूर्वविप्रतिषेधे तु उभयत्रविभाषेति संशयः। **अकर्मकाश्चेति।** यद्यपि बुधिः सकर्मकस्तथापि एकपरिहारोपन्यासार्थमविशेषेणैतदुक्तम्। **सोपसर्गा इति ;** अर्थान्तरवृत्तित्वादनुभवतिवदिति भावः। **कर्तृस्थभावकाश्चेति;** 'अचः कर्तृयकि' इत्यत्र जायते स्वयमेवेत्युदाहृतम्। तस्य ण्यर्थवृत्तित्वात् कर्मस्थभावकत्वमिति नास्ति तेनास्य विरोधः।

---

(१) क. च. (२) क. घमयवा
(३) क. चोषा

उ :—**कथमिति ;** सनादिरन्तोऽवयवो येषां समुदायानामिति बहुव्रीहिः। ततश्च प्रत्ययान्तसमुदाया नोपादेयः तदेकदेशोपादेयश्च न समुदाय इति नोपादेयग्रहणेन समुदायग्रहणं संभवतीत्यर्थः। सनाद्यन्ता इत्यस्य संज्ञाविधायकत्वमभिप्रेत्य चोदितेऽर्थान्तरमाश्रित्य परिहरति—**उभयन इति।** सनाद्यवयवा इति बहुव्रीहिः। तथापि शङ्काऽनुद्धारादाह—**धातूनामिति।** अतिदेशादेव धातोरिति विहितम् सनाद्यन्तादपि भवतीति भावः। भाष्ये उभविदेत्यस्याप्राप्तविभाषात्वं प्रत्ययादित्यस्याननुवृत्तौ सनाद्यन्ता इत्यस्यातिदेशकत्वपक्षे पूर्वविप्रतिषेधे सति, संज्ञाविधायकत्वपक्षे पूर्वविप्रतिषेधं विनैव, अतिदेशपक्ष एव परविप्रतिषेधे सत्युभयत्रविभाषा। प्रत्ययान्तानां केवलानां चोषविदेत्यनेन ग्रहणादिति ज्ञेयम्। नन्वतिदेशपक्षे कथं धात्वन्तरत्वम् ; अत आह—**सनाद्यन्ता इति।** एवं हि यथाक्रममुद्देश्यविधेयभावोऽध्याहाराभावश्चेति भावः। **वाक्यभेदेनेति।** धातुमात्राद्भावकर्मणोश्चिल्लेश्चिणं विधाय दीपजनेत्यनेनैकवाक्यतामापन्नेन पुनर्विशेषणाद्वाक्यभेद इत्यर्थः। वाक्यभेदे–हेतुः **पृथगिति। परेति ;** भावकर्मणोर्नित्यमेव, अन्यत्र विकल्पाप्राप्तेः। **पूर्वेति ;** दीपादेर्भावकर्मणोरन्यत्र च विकल्प इत्यर्थः। **एकेति ;** कर्तृस्थभावकेत्यादिः। नन्वर्थस्याकर्मकत्वं धातोः सोपसर्गत्वे न गच्छति ; अत आह—**अर्थान्तरेति।** उपसर्गवशाद्धातोः सकर्मकार्थान्तरवृत्तित्वं संपद्यत इत्यर्थः। भाष्ये **कर्मापदिष्टाः ;** कर्मवद्भावेन प्राप्यमाणाः। साधनगतोऽपरिस्पन्दलक्षणो धात्वर्थो भावः। सपरिस्पन्दलक्षणश्च क्रियेति भावः। ननु दीपादीनां कर्तृस्थभावकत्वे तदन्तर्गतस्य जनेः जायते स्वयमेवेति कर्मकर्तरि यदुदाहरणं स्वरप्रकरणे भाष्यकारस्य विरुद्धम् ; अत आह—**अच इति।** अजन्तानां कर्तृयक्यादिरुदात्तो वा स्यात्। **जायते स्वयमेव।** जनादीनामुपदेश एवात्वं एतत्स्वरसिद्ध्यर्थमिष्यते। **अण्यर्थवृत्तित्वात् ;** लक्षणयेत्यादिः। स्वरूपलाभरूपं प्रयोजकव्यापारफलं प्रयोज्यव्यापारलक्षणं कर्मणि समवेतमिति कर्मस्थभावकत्वमित्यर्थः।

॥ वा ॥ विभाषाग्रेप्रथमपूर्वेषु ॥

**भा :—प्राप्तेऽप्राप्ते उभयत्र वेति संदेहः। कथं वा प्राप्ते, कथं वा अप्राप्ते, कथं वोभयत्र?। "आभीक्ष्ण्ये" इति वा नित्ये प्राप्ते। अन्यत्र वाप्राप्ते उभयत्र वेति। अप्राप्ते। "आभीक्ष्ण्ये" इति निवृत्तम्।**

(१) ख. विधेयत्वं

॥ वा ॥ तृन्नादीनां विभाषा ॥

भा :—प्राप्तेऽप्राप्ते उभयत्र वेति संदेहः। कथं वा प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र?। "आक्रोशे" इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति। अप्राप्ते। "आक्रोशे" इति निवृत्तम्।

॥ वा ॥ एकहलादौ पूरयितव्येऽन्यतरस्याम् ॥

भा :—प्राप्तेऽप्राप्ते उभयत्र वेति संदेहः। कथं वा प्राप्ते, कथं वा अप्राप्ते, कथं वोभयत्र। "उदकस्योदः संज्ञायाम्" इति वा नित्ये प्राप्ते, अन्यत्र वा अप्राप्ते, उभयत्र वेति। अप्राप्ते। संज्ञायामिति निवृत्तम्।

॥ वा ॥ श्वादेरिञि। पदान्तस्यान्यतरस्याम् ॥

भा :—प्राप्तेऽप्राप्ते उभयत्र वेति संदेहः। कथं वा प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र?। इञीति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते उभयत्र वेति। अप्राप्ते। इञीति निवृत्तम्।

॥ वा ॥ सपूर्वायाः प्रथमाया विभाषा ॥

भा :—प्राप्ते अप्राप्ते उभयत्र वेति संदेहः। कथं वा प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र?। चादिभिर्योग इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति। अप्राप्ते। चादिभिर्योग इति निवृत्तम्।

॥ वा ॥ ग्रो यङ्यचि विभाषा ॥

भा :—प्राप्तेऽप्राप्ते उभयत्र वेति संदेहः। कथं वा प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र?। यङीति वा नित्ये प्राप्ते, अन्यत्र वाप्राप्ते, उभयत्र वेति। अप्राप्ते। यङीति निवृत्तम्।

प्र:—**आभीक्ष्ण्य इति निवृत्तमिति।** पूर्वविप्रतिषेधश्चेति भावः। **तृन्नादीनामिति।** आक्रोश इत्यत्र यथचूकौ इति नानुवर्तते ततोऽयं संशयः। **एकहलादाविति** पूरयितव्यस्य चास्ति संज्ञा उदपानमिति। **चादिभिरिति।** प्रतिषेधस्याप्राप्तविभाषा

स्थाप्यते, विधेस्तु प्राप्तविभाषैव । **यङीति चेति**; यङ्लुकि कृते अजादिः परः संभवति, निजेगिल इति । अत्र पचाद्यचि कृते यङोऽचि चेति लुक् ।

उ :—भाष्ये **त्रिभाषा एते** ; आक्रोश इत्यनुवृत्तौ प्राप्ते, अननुवृत्तौ परविप्रतिषेधे उभयत्र, पूर्वविप्रतिषेधे अप्राप्त इति ज्ञेयम् । भाष्ये **तृन्नादीनामिति ।** 'विभाषा तृन्नन्नतीक्ष्णशुचिषु' । नञ उत्तराण्येतान्यन्तोदात्तानि । **अकर्तेत्यादि ।** नन्वाक्रोश इत्यत्राच्कावित्यनुवर्तते । तथा च तृन्नादिषु न संशयत्रयसंभवः ; अत आह—**यदीति ।** आक्रोशे गम्यमाने नञ उत्तरमच्कान्तमन्तोदात्तम् । अपचः, अक्षिपः । शक्तोऽपि यः पाकादीन्न करोति स निन्द्यते । आक्रोश इत्यननुवृत्तौ परविप्रतिषेधे उभयत्र, पूर्वविप्रतिषेधे अप्राप्त इति ज्ञेयम् । ननु पूरयितव्यस्य संज्ञाया अभावात् संशयायोगः; अत आह—**पूरयितव्यस्येति ।** अत्राप्यननुवृत्तौ परविप्रतिषेधे उभयत्र ; पूर्वविप्रतिषेधेऽप्राप्ते । नञः [1]अननुवृत्तिमनपेक्ष्य भाष्यवार्तिकयोः [2]संशयनिर्णयाविति सूचयन्नाह—**प्रतिषेधस्येति ।** नन्वचि परतो ग्रो लत्वं विधीयते । यङीत्यनुवृत्तौ कथमच्परत्वम् ; अत आह—**यङ्लुकीति ।** प्रत्ययलक्षणेन यङ्परत्वमपि संभवतीति भावः । भाष्ये **यङीति निवृत्तमिति ;** पूर्वविप्रतिषेधश्चेत्यर्थः ।

**॥ वा ॥ प्राप्ते च ॥**

**भा :—इत उत्तरं या विभाषा अनुक्रमिष्यामः ; प्राप्ते ता द्रष्टव्याः । त्रिसंशयास्तु भवन्ति प्राप्तेऽप्राप्ते उभयत्र वेति ।**

**॥ वा ॥ विभाषा विप्रलापे ॥**

**भा :—प्राप्तेऽप्राप्ते उभयत्र वेति संदेहः । कथं वा प्राप्ते, कथं वा अप्राप्ते, कथं वोभयत्र ? । "व्यक्तवाचाम्" इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति । प्राप्ते । व्यक्तवाचामिति हि वर्तते ।**

**॥ वा ॥ विभाषोपपदेन प्रतीयमाने ॥**

**भा :—प्राप्तेऽप्राप्ते उभयत्र वेति संदेहः । कथं वा प्राप्ते, कथं वाप्राप्ते, कथं वोभयत्र ? । "स्वरितञितः" इति वा नित्ये प्राप्ते, अन्यत्र वाप्राप्ते, उभयत्र वेति । प्राप्ते । स्वरित इति हि वर्तते ।**

---

(१) क. अनुवृत्तिमपेक्ष्य (२) क. संशयो इति

॥ वा ॥ तिरोऽन्तर्धौ, विभाषा कृञि ॥

भा :—प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः। कथं वा प्राप्ते? कथं वाऽप्राप्ते? कथं वोभयत्र?। "अन्तर्धौ" इति वा नित्ये प्राप्तेऽन्यत्र वाऽप्राप्ते उभयत्र वेति। प्राप्ते। "अन्तर्धौ" इति हि वर्तते।

॥ वा ॥ अधिरीश्वरे, विभाषा कृञि ॥

भा :—प्राप्तेऽप्राप्ते उभयत्र वेति सन्देहः। कथं वा प्राप्ते? कथं वाऽप्राप्ते? कथं वोभयत्र?। ईश्वर इति वा नित्ये प्राप्ते, अन्यत्र वाप्राप्ते, उभयत्र वेति। प्राप्ते। "ईश्वरे" इति हि वर्तते।

॥ वा ॥ दिवस्तस्यदर्थस्य, विभाषोपसर्गे ॥

भा :—प्राप्तेऽप्राप्ते उभयत्र वेति संदेहः। कथं वा प्राप्ते? कथं वाप्राप्ते? कथं वोभयत्र?। तदर्थस्येति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति। प्राप्ते। "तदर्थस्य" इति हि वर्तते।

प्र :—**प्राप्ते चेति**। प्रकृतानुवृत्त्या प्राप्तविभाषा व्यवतिष्ठते। **अन्यत्र वेति**। विप्रवदन्ति शकुनयः इत्यत्र पूर्वविप्रतिषेधश्च यदीति भावः। **विभाषोपपदेन प्रतीयमान इति**। कर्त्रभिप्रायक्रियाफलविषये आत्मनेपदं भवतीत्येवं प्राप्तविभाषा व्यवतिष्ठते। अथ तु तदर्थद्योतनायात्मनेपदं क्रियते तदोपपदेनैव द्योतितत्वात् अप्राप्त विभाषा स्यात्।

उ :—प्राप्तविभाषात्वे सर्वत्र साधारणप्राप्तिमाह—**प्रकृतेति**। व्यक्तवाग्विषयादन्यत्रोदाहरति—**विप्रवदन्तीति**। विवक्षाभेदेनाप्राप्तविभाषापि संभवतीत्याह—**कर्त्रभिप्राय** इति।

॥ वा ॥ उभयत्र च ॥

भा :—इत उत्तरं या विभाषा अनुक्रमिष्यामः, उभयत्र ता द्रष्टव्याः। त्रिसंशयास्तु भवन्ति—प्राप्ते, अप्राप्ते, उभयत्र वेति।

॥ वा ॥ हृक्रोरन्यतरस्याम् ॥

भाः-प्राप्तेऽप्राप्ते उभयत्र वेति संदेहः। कथं वा प्राप्ते, कथं वाप्राप्ते, कथं वोभयत्र?। "गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ" इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र-वेति। उभयत्र। प्राप्तेतावत्—अभ्यवहारयति सैन्धवान्, अभ्यवहारयति सैन्धवैः। विकारयति सैन्धवान्, विकारयति सैन्धवैः। अप्राप्ते—हरति भारं देवदत्तः। हारयति भारं देवदत्तम्, हारयति भारं देवदत्तेन। करोति कटं देवदत्तः। कारयति कटं देवदत्तम्, कारयति कटं देवदत्तेन।

॥ वा ॥ न यदि, विभाषा साकाङ्क्षे ॥

भा :—प्राप्तेऽप्राप्ते उभयत्र वेति संदेहः। कथं वा प्राप्ते? कथं वाप्राप्ते, कथं वोभयत्र?। यदीति वा नित्ये प्राप्ते,अन्यत्र वाऽप्राप्ते, उभयत्र वेति। उभयत्र। प्राप्ते तावत्—अभिजनासि देवदत्त यत्कश्मीरेषु[1] वत्स्यामः। यत्कश्मीरेष्ववसाम[2]। यत्त्रौदनं भोक्ष्यामहे, यत्त्रौदनमभुञ्ज्महि। अप्राप्ते, अभिजानासि देवदत्त यत्कश्मीरान् गमिष्यामः कश्मीरानगच्छाम, तत्रौदनं भोक्ष्यामहे यत्त्रौदनमभुञ्ज्महि।

॥ वा ॥ विभाषा श्वेः ॥

भा :—प्राप्तेऽप्राप्ते उभयत्र वेति संदेहः। कथं वा प्राप्ते, कथं वा अप्राप्ते, कथं वोभयत्र। कितीति वा नित्ये प्राप्तेऽन्यत्र वाऽप्राप्ते, उभयत्र वेति। उभयत्र। प्राप्ते तावत्—शुशुवतुः, शुशुवुः, शिश्वियतुः, शिश्वियुः। अप्राप्ते—शुशाव शुशविथ, शिश्वाय शिश्वयिथ।

॥ वा ॥ विभाषा संघुषास्वनाम् ॥

भा :—संपूर्वाद्घुषेः प्राप्तेऽप्राप्ते उभयत्र वेति संदेहः। कथं वा प्राप्ते, कथं वा अप्राप्ते, कथं वोभयत्र। "घुषिरविशब्दने" इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति।

(१) क. काश्मीरेषु (२) क. काश्मीरे।

उभयत्र। प्राप्ते तावत्—संघुष्टा रज्जुः संघुषिता रज्जुः। अप्राप्ते—संघुष्टं वाक्यमाह संघुषितं वाक्यमाह।

आङ्पूर्वात्स्वनेः—प्राप्ते अप्राप्ते उभयत्र वेति संदेहः। वा कथं प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र। मनसीति वा नित्ये प्राप्तेऽन्यत्र वा अप्राप्ते उभयत्र वेति। उभयत्र। प्राप्ते तावत्—आस्वान्तं मन आस्वनितं मनः। अप्राप्ते—आस्वनितो देवदत्तः आस्वान्तो देवदत्त इति।

**इति श्रीभगवत्पतञ्जलिकृतौ महाभाष्ये प्रथमपादे षष्ठमाह्निकम् ॥ ६ ॥**

प्रः—**गतिबुद्धीति ;** तत्र विपूर्वो हरतिर्गत्यर्थोऽभ्यवपूर्वः प्रत्यवसानार्थः। करोतिः कश्चिदकर्मको यथा विकुर्वते सैन्धवा इति। **यदीति वेति।** प्रतिषेधे प्राप्ते इत्यर्थः। लुट् तु यदि प्रतिषिद्धः। दैवयज्ञीत्यादि न विचारितम्। तस्माद् दिङ्मात्रप्रदर्शनार्थं कृतम्।

इति उपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे प्रथमाध्यायस्य प्रथमे पादे षष्टमाह्निकम्।

---

उः—हृक्रोर्गत्याद्यर्थत्वमाह—**तत्रेति।** कस्मिन् प्राप्ते इत्यपेक्षायामाह—**प्रतिषेध इति।** कस्य प्रतिषेधो; अत आह—**लुट् त्विति।** 'अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे' इत्यतो गोत्र इत्यस्यानुवृत्त्यननुवृत्तिभ्यां संशयत्रयसंभवादाह—**दैवेति।** 'दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्डेविद्धिभ्योऽन्यतरस्याम्' इत्यत्रेत्यर्थः। गोत्र इति निवृत्तम्। परविप्रतिषेधश्च। तथा च गोत्रे प्राप्ते अनन्तरे अप्राप्ते इत्युभयत्र विभाषेत्यर्थः। आदिना फक्फिञोरन्यतरस्यामित्यादिग्रहः। तत्रापि यूनीत्यस्यानुवृत्त्यननुवृत्तिभ्यां संशयसंभवात् यूनीत्यनुवर्तते। प्राप्तविभाषेति निर्णयः।

इति श्रीमहामहोपाध्यायाद्वैतविद्याचार्यराघवसोमयाजिकुलावतंस-श्रीतिरुमलाचार्यवर्यस्य सूनोः अन्नंभट्टस्य कृतौ महाभाष्यप्रदीपोद्योतने प्रथमस्याध्यायस्य प्रथमे पादे षष्ठमाह्निकम्।

---

# सप्तममाह्निकम्

सू.—इग्यणः संप्रसारणम् ॥ १। १। ४४ ॥

भा :—किमियं वाक्यस्य संप्रसारणसंज्ञा क्रियते–इग्यण इत्येतद्वाक्यं सम्प्रसारणसंज्ञं भवतीति। आहोस्विद्वर्णस्य—इग्यो यणः स्थाने वर्णः स संप्रसारणसंज्ञो भवतीति। कश्चात्र विशेषः।

॥ वा ॥ संप्रसारणसंज्ञायां वाक्यस्य संज्ञा चेद्वर्णविधिः ॥

भा :—संप्रसारणसंज्ञायां वाक्यस्य संज्ञा चेद्वर्णविधिर्न सिध्यति—संप्रसारणात्परः पूर्वो भवतीति संप्रसारणस्य दीर्घो भवतीति। न हि वाक्यस्य संप्रसारणसंज्ञायामेष निर्देश उपपद्यते। नाप्येतयोः कार्ययोः संभवोऽस्ति। अस्तु तर्हि वर्णस्य

॥ वा ॥ वर्णसंज्ञा चेन्निर्वृत्तिः ॥

भाः—वर्णस्य संज्ञा चेन्निर्वृत्तिर्न सिध्यति, 'ष्यङःसंप्रसारणम्' इति। स एव हि तावदिग् दुर्लभः,यस्य संज्ञा क्रियते। अथापि कथंचिल्लभ्येत, केनासौ यणः स्थाने स्यात्। अनेन ह्यसौ व्यवस्थाप्यते। तदेतदितरेतराश्रयं भवति। इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते।

॥ वा ॥ विभक्तिविशेषनिर्देशस्तु ज्ञापक उभयसंज्ञात्वस्य ॥

भा :—यदयं विभक्तिविशेषैर्निर्देशं करोति संप्रसारणात्परः पूर्वो भवतीति, संप्रसारणस्य दीर्घो भवतीति, ष्यङः सम्प्रसारणं भवतीति। तेन ज्ञायते—उभयोः संज्ञा भवतीति। यत्तावदाह—संप्रसारणात्परः पूर्वो भवतीति, संप्रसारणस्य दीर्घो भवतीति, तेन ज्ञायते—वर्णस्य भवतीति। यदप्याह—ष्यङः संप्रसारणमिति तेन ज्ञायते—वाक्यस्य संज्ञा भवतीति।

प्र:—**इग्यणः संप्रसारणम्।** पक्षद्वयस्यपि लिङ्गदर्शनाद्युगपच्चोभयोः संज्ञित्वस्यैकस्मिन् वाक्येऽनुपादानादेकतरपक्षाश्रयणे सर्वकार्यासिद्धिप्रसङ्गात् प्रश्नः—**किमियमिति।** वाक्यशब्देन वाक्यार्थ उच्यते। इग्यण इत्यत्र भवतीत्यध्याहारादिग्यणो भवतीति योऽयं वाक्यार्थस्तस्येयं संज्ञेत्यर्थः। अथवा वाक्यस्यैवेयं संज्ञा। तत्प्रतिपादितं च वाक्यं स्वार्थमपि प्रतिपादयति। यणः स्थाने य इग्वर्णः स संप्रसारणसंज्ञो भवतीति वर्णसंज्ञापक्षः। **वर्णविधिरिति।** वर्णाश्रयो विधिर्दीर्घादिः। **न ह्रीति।** वाक्यार्थेन पौर्वापर्याभावात्तस्य चासत्त्वभूतस्य स्थानित्वासंभवादित्यर्थः। **दुर्लभ इति।** कार्यपक्षे न लभ्यते नित्यपक्षे तु लभ्यते इति दुर्लभत्वमुक्तम्। **केनासाविति।** लोके इगेव नित्यं प्रयोगेऽस्ति तस्य तु यणूस्थानित्वं शास्त्रसमधिगम्यमित्यर्थः। भाविसंज्ञाविज्ञानं तु परिहारान्तराभिधानाय न तावदत्रोक्तम्। **उभयसंज्ञात्वस्येति।** उभयोः संज्ञा उभयसंज्ञा तस्या भावः उभयसंज्ञात्वम्। तत्र तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयणेनोभयोः संज्ञा सिध्यति।

उ:—**लिङ्गेति।** प्रदेशेषु ष्यङः संप्रसारणमित्यादिप्रथमानिर्देशो वाक्यार्थसंज्ञायां लिङ्गम्। संप्रसारणाच्च सप्रसारणस्येत्यादिविभक्त्यन्तनिर्देशो वर्णस्य संज्ञायाम्। एतदनुपदमेव भाष्ये वक्ष्यति। तर्हि उभयमस्तु; अत आह—**युगपदिति।** तर्हि अन्यतरस्यैवास्तु; अत आह—**एकतरेति।** ननु वाक्यसंज्ञायां ष्यङः संप्रसारणमित्यादौ वाक्यमेवादेशः स्यात्; अत आह—**वाक्यशब्देनेति।** ननु यणः स्थानित्वेन विशेषितो वर्णो वाक्यार्थ एवेति वर्णपक्षादस्य को भेदः; अत आह—**भवतीति।** इतिकरणश्च पूर्वसूत्रादनुवर्तनीयः इत्याशयः। **तत्प्रतिपादितं** संज्ञया बोधितम्। **स्वार्थमिति;** तदर्थमेव वाक्यसंज्ञाकरणादिति भावः। वाक्यस्यात्र ग्रहणं तस्यार्थसमर्पकत्वाभावाद्वा तत्समर्पितार्थस्यानुपयोगाद्वा, तदुभयमप्यत्र नास्तीति भावः इत्याहुः। **यणः स्थान इति।** यद्यपि विध्यङ्गपरिभाषानुवादे नोपतिष्ठते, तथापि षष्ठीस्थान इत्यत्रैतत्सूत्रानुवृत्त्या तल्लाभ इति भावः। विधिशब्दः कर्मसाधनः। संबन्धसामान्ये षष्ठीसमास इत्यभिप्रेत्याह—**वर्णाश्रय इति।** भाष्योक्तनिर्देशानुपपत्तौ हेतुर्वाक्येति। कार्यासंभवे हेतुः **तस्य चेति।** भवतिक्रियाया वाक्यार्थत्वादसत्त्वभूतत्वम्। **गार्ग्येति;** संज्ञया तद्भाव्यते विद्यमानस्य च संज्ञेति दुर्लभत्वम्। तथाऽपीत्यस्य तात्पर्यमाह—**नित्येति; शास्त्रेति।** तथाचेतरेतराश्रयत्वमिति भावः। **परिहारान्तरेति;** वाक्यभेदेनोभयसंज्ञारूपेत्यादिः।

भयत्वमिति भावः। **परिहारान्तरेति ;** वाक्यभेदेनोभयसंज्ञारूपेत्यादिः। **अत्रेति ;** तेन वर्णसंज्ञापक्षे समर्थिते पश्चाद्वाक्यभेदेनोभयसंज्ञापक्षानुत्थानादिति भावः। उभयशब्दस्य संज्ञापरत्वं न संभवति संप्रसारणमिति संज्ञाया एकत्वात्। नापि संज्ञिपरत्वं तस्य संज्ञात्वाभावेन त्वप्रत्ययान्तेन षष्ठीसमासानुपपत्तेः। अत आह— **उभयोरिति ;** समासानन्तरं त्वप्रत्यय इति भावः। प्रतिपदमेकशेषः। छान्दसं चैकवचनमिति भावः।

**भा :–अथवा पुनरस्तु वाक्यस्यैव। ननु चोक्तम्–संप्रसारणसंज्ञायां वाक्यस्य संज्ञा चेद्वर्णविधिः इति। नैष दोषः। यथा काकाज्जातः काकः, श्येनाज्जातः श्येनः। एवं संप्रसारणाज्जातं संप्रसारणम्। तस्मात्परः पूर्वो भवति, तस्य दीर्घो भवतीति। अथवा दृश्यन्ते हि वाक्येषु वाक्यैकदेशान् प्रयुञ्जानाः, पदेषु च पदैकदेशान्। वाक्येषु तावद्वाक्यैकदेशान्—प्रविश, पिण्डीम्, प्रविश, तर्पणम् इति। पदेषु पदैकदेशान्—देवदत्तो दत्तः, सत्यभामा भामेति। एवमिहापि—संप्रसारणनिर्वृत्तात्संप्रसारणनिर्वृत्तस्येत्येतस्य वाक्यस्यार्थे संप्रसारणात्संप्रसारणस्येत्येष वाक्यैकदेशः प्रयुज्यते। तेन निर्वृत्तस्य विधिं विज्ञास्यामः—संप्रसारणनिर्वृत्तात्संप्रसारणनिर्वृत्तस्येति। अथवा आहायं संप्रसारणात्परः पूर्वो भवतीति संप्रसारणस्य दीर्घो भवतीति। न च वाक्यस्य संप्रसारणसंज्ञायां सत्यामेष निर्देश उपपन्नः, नाप्येतयोः कार्ययोः संभवोऽस्तीति तत्र वचनाद्भविष्यति।**

प्र :—**यथा काकादिति ;** ननु काकत्वाभिसंबन्धात् काकः। अन्यत्र चोक्तम्। येनैव हेतुना एकः काक तेनैवापरोऽपीति। नैष दोषः। यदा अनुपजातजात्यभिव्यञ्जकसंस्थानविशेषः काको भवति निर्ज्ञातं च तस्य काकाज्जन्म भवति, तदैतदुक्तम्। एवमिहापि संप्रसारणात् जातत्वादुपचाराद्वर्णोऽपि ताच्छब्द्यं लभते इति भावः। **प्रविशेति।** प्रवेशनक्रिया कर्म योग्यमाक्षिपति। तत्र पिण्ड्यां प्रवेशासंभवात् गृहप्रतिपत्तिः। एवं पिण्डीमिति कर्म योग्यां क्रियामाक्षिपद् भक्षणक्रियां प्रकरणवशात् प्रत्याययति। एवं संप्रसारणादित्येतन्निर्वृत्तार्थमाक्षेप्स्यतीत्यर्थः। यथा च पदैकदेशप्रयोगस्तथा 'सिद्धे शब्दार्थसंबन्धे' इत्यत्र प्रतिपादितम्। **अथ-**

**वेति।** यथा ब्राह्मणशतं भोज्यतामित्युक्ते सामर्थ्यात् संख्येया ब्राह्मणा भोज्यन्ते तथेहापि संप्रसारणादित्युक्ते वाक्यार्थेन पौर्वापर्याभावात् तत्फलस्य वर्णस्य प्रतीतिः।

उ :—असत्येव काकत्वे तस्माज्जातत्वमात्रेण तत्प्रत्ययशब्दप्रयोगौ भाष्यकृतोऽभिमताविति मन्वानः शङ्कते—**नन्विति।** **अन्यत्र ;** 'एको गोत्रे' इत्यत्र। अनुपजातो जात्यभिव्यञ्जकः संस्थानविशेषः आकृतिविशेषः यस्येति विग्रहः। कथं तर्हीदानीं तत्प्रत्ययशब्दप्रयोगौ ; अत आह—**निर्ज्ञातमिति।** यद्यपि काकापत्ये काकशब्दो मुख्यः। इह तु वर्णे औपचारिकस्तथापि तस्माज्जाते तच्छब्दप्रयोग[1]मात्रसाम्यात् दृष्टान्तदार्ष्टान्तिकता ज्ञेया। योग्यक्रियादर्शनादिरपि ; अतः—**प्रकरणेति ;** एवं जलं प्रविश, तर्पणं कुर्वित्यर्थः। पूर्वपरिहारे वर्णे लक्षणेत्युक्तम्। इह पदैकदेशलक्षितेन पदसमुदायेन वर्णप्रतीतिरिति भेदः। यद्वा पूर्वत्र लक्षणा, अत्राक्षेप इति भेदः। **यथेति।** समुदाये संज्ञात्वेन विनियुज्यमाने पःात्मिका अवयवा अनुनिष्पादिन्यः संज्ञा इति तत्र तत्र प्रतिपादितम्। नित्यशब्दपक्षे परिहारान्तरम् **अथवेति।** तदुपपादयति—**यथेति।** **तत्फलस्य ;** यणः स्थाने इग्भवतीति वाक्यार्थफलस्य। यणः प्रसङ्गे इक्साधुरिति प्रतिपादितस्येक इत्यर्थः।

**भा :—अथवा पुनरस्तु वर्णस्य। ननु चोक्तम्—वर्णसंज्ञा चेन्निर्वृत्तिः इति। नैष दोषः। इतरेतराश्रयमात्रमेतच्चोदितम्। सर्वाणि चेतरेतराश्रयाण्येकत्वेन परिहृतानि—सिद्धं तु नित्यशब्दत्वाद् इति। नेदं तुल्यमन्यैरितरेतराश्रयैः। न हि तत्र किंचिदुच्यते अस्य स्थाने ये आकारैकारौकारा भाव्यन्ते ते वृद्धिसंज्ञा भवन्तीति। इह हि पुनरुच्यते—इग्यो यणः स्थाने वर्णः स संप्रसारणसंज्ञो भवतीति। एवं तर्हि भाविनीयं संज्ञा विज्ञास्यते। तद्यथा-कश्चित्कंचित् तन्तुवायमाह—'अस्य सूत्रस्य शाटकं वय' इति। स पश्यति—यदि शाटको न वातव्यः अथ वातव्यो न शाटकः, शाटको वातव्यश्चेति विप्रतिषिद्धम्, भाविनी खल्वस्य संज्ञाऽभिप्रेता, स मन्ये वातव्यो—यस्मिन्नुते शाटक इत्येतद्भवति इति। एवमिहापि स यणः स्थाने भवति यस्याभिनिर्वृत्तस्य संप्रसारणमित्येषा संज्ञा भविष्यति। अथवा—**

(१) क. मात्रेति नास्ति।

**इज्यादियजादिप्रवृत्तिश्चैव हि लोके लक्ष्यते। यजाद्युपदेशात्तु इज्यादिनिवृत्तिः प्रसक्ता। प्रयुञ्जते च पुनर्लोका इष्टं उप्तमिति। ते मन्यामहे—अस्य यणः स्थाने इममिकं प्रयुञ्जते इति। तत्र तस्यासाध्वभिमतस्य शास्त्रेण साधुत्वमन्वाख्यायते—क्विति साधुर्भवति, ङिति साधुर्भवतीति॥ इग्यणः॥ ४४॥**

प्र:—**भाविनीति**; 'ष्यङः संप्रसारणम्' इत्यादिविधिप्रदेशेषु भाविसंज्ञाविज्ञानमित्यर्थः। सिद्धं तु नित्यशब्दत्वादित्येतत्समर्थनार्थमाह—**अथवेति**। बुद्धिविपरिणाममात्रं स्थान्यादेशभाव इत्यर्थः। **असाध्वभिमतस्येति**। प्राक् संप्रसारणशास्त्रादिति भावः। यथासंख्यसंबन्धात् अदुहितरामितीकारस्य संप्रसारणसंज्ञा न भवति। 'दिव उत्' इत्युत्वे यणादेशे कृते 'हल' इति दीर्घत्वं तपरकरणान्न भवति द्युभ्यामिति। अक्षद्युवावित्यत्र 'संप्रसारणाच्च' इति पूर्वैकादेशो न भवति। अतः पश्चात् सन्निधानात्। अथवा वार्णादाङ्गस्य बलीयस्त्वात्।

उ:—यस्याभिनिर्वृत्तस्य संप्रसारणसंज्ञा भविष्यति स संप्रसारणशब्देन लक्ष्यत इत्याह भाष्ये—**एवं तर्हीति**। तद्विधिस्थल एव न सर्वत्रेत्याह—**ष्यङ इति**। शाटकशब्दस्य लोके तन्तुकार्यविशेषे व्युत्पन्नत्वात् भाविसंज्ञाविज्ञानं युक्तम्। संप्रसारणशब्दस्य यणः स्थानिकेग्वाचकत्वस्याप्रसिद्धेः कथमत्र भाविसंज्ञाविज्ञानं विधिप्रदेशेषु इतरेतराश्रयप्रसङ्गेन संज्ञाया अनिर्वृत्तेः; अत आह—भाष्ये—**अथवेति**। एतदेवावतारयति—**सिद्धमिति**। **बुद्धीति**; यण्बुद्धिं विहाय इग्बुद्धिः कर्तव्या। तथा च धातुपाठपर्यालोचनेन यण्स्थानिकत्वमिकः सुबोधमिति भावः। भाष्ये **यजादीति**; धातुपाठ इत्यादिः। ननु दुहेर्लङ्यात्मनेपदोत्तमपुरुषैकवचने इटि लादेशत्वेन यण्स्थानिकत्वेन संप्रसारणसंज्ञायामदुहितरामित्यत्र हल इति दीर्घः स्यात्। अत आह—**यथेति**। यकारस्थानिकस्यैवेकारस्य संज्ञा न लकारस्थानिकस्येत्यर्थः। ननु द्युभ्यामित्यत्र 'हल' इति दीर्घः स्यादुकारस्य वकारस्थानिकत्वेन संप्रसारणत्वाद्; अत आह—**दिव इति**। नन्विगिति सवर्णग्रहणेनाठोऽपि संप्रसारणत्वात अक्षद्युवावित्यत्र परपूर्वत्वं किं न स्याद्; अत आह—**अक्षेति**। **पश्चादिति**; अक्षद्यूरिति क्विबन्तस्य निष्पत्तौ प्रातिपदिकसंज्ञायां पश्चादौकारस्य सन्निधानादित्यर्थः। संप्रसारणेन सहैकाङ्गवर्तित्वाभावो विवक्षितः। संप्रसारणात्परपूर्वत्वे समानाङ्गग्रहणमसमानाङ्गनिषेधार्थमिति वक्ष्यमाणत्वादिति भावः। अङ्गस्य उवङः।

---

(१) क. तर्हि

## सू.—आद्यन्तौ टकितौ ॥ १। १। ४५ ॥

**भा :—समासनिर्देशोऽयम्। तत्र न ज्ञायते—क आदिः कोऽन्त इति। तद्यथा—" अजाविधनौ देवदत्तयज्ञदत्तौ " इत्युक्ते तत्र न ज्ञायते 'कस्याजा धनम्, कस्यावयः' इति। यद्यपि तावल्लोक एष दृष्टान्तः। दृष्टान्तस्यापि तु पुरुषारम्भो निवर्तको भवति। अस्ति चेह[1] कश्चित्पुरुषारम्भः। अस्तीत्याह। कः ?। संख्यातानुदेशो नाम।**

प्र :—**आद्यन्तौ**। लोकव्यवहारादत्र क्रमव्यवस्था न सिध्यति। अपि तु शास्त्रेणैवेति प्रदर्शनाय पूर्वपक्षः। **समासनिर्देशोऽयमिति**। अभिन्नस्यार्थस्य समासेन प्रतिपादनादित्यर्थः। यद्यपि देवदत्तस्य यज्ञदत्तस्य च अजा अवयश्च धनमिति वाक्येऽपि क्रमव्यवस्था नास्ति तथापि समासे सुतरां नास्ति इति प्रतिपादयितुं समासनिर्देश इत्युक्तम्। **यद्यपीति**। दर्शनं दृष्टं तस्यान्तो निश्चयः। यद्यपि लोके एतद् दर्शनमित्यर्थः।

उ :—यथासंख्यमित्यपश्यतो नात्र पूर्वपक्षः किंतु तदवश्यमाश्रयणीयमिति दर्शयितुमित्याह—**लोकेति**। **अभिन्नस्य**; अपृथग्भूतस्य। **सुतरामिति**। यत्र साहित्यस्य न प्रतिपत्तिस्तत्रापि चेन्न क्रमव्यवस्था तर्हि साहित्यस्य प्रतीतावव्यवस्थेति किं वाच्यमित्यर्थः। यथा लोके न तथा व्याकरणे, इतिकरणरहितगोशब्दस्य लोके अर्थपरत्वात्, अत्र 'स्वं रूपम्' इति वचनेन शब्दपरत्वादिति लोके वैलक्षण्यकथनार्थं **यद्यपीति** भाष्यम्। तत्र साध्यसाधनसंप्रतिपत्तिस्थानं दृष्टान्त इति प्रसिद्धम्। तस्य प्रकृतानुपयोगादाह—**दर्शनमिति**। निश्चयपर्यन्तं दर्शनाकाङ्क्षा, तस्मिन् सति निवर्तत इति दर्शनावसानवाचिनान्तशब्देन निश्चयोऽभिधीयत इत्यर्थः। तदेवाह—**यद्यपीति**। **दर्शनं**; निश्चयः। भाष्ये **अस्ति पुनरिति**; काक्वा प्रश्नः।

**भा :—कौ पुनष्टकितावाद्यन्तौ भवतः। आगमावित्याह। युक्तं पुनर्यन्नित्येषु नाम शब्देषु आगमशासनं स्यात्। न नित्येषु नाम शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः। आगमश्च नामापूर्वः शब्दोपजनः। अथ युक्तं यन्नित्येषु शब्देष्वादेशाः स्युः। बाढं युक्तम्। शब्दान्तरे-**

---

(१) पुनरिह इत्युद्द्योतनपाठः,

रिह भवितव्यम्। तत्र शब्दान्तराच्छब्दान्तरस्य प्रतिपत्तिर्युक्ता। आदेशास्तर्हीमे भविष्यन्ति। अनागमकानां सागमकाः। तत्कथम्?। संज्ञाधिकारोऽयम्। आद्यन्तौ चेह संकीर्त्येते टकारककारवितावुदाह्रियेते। तत्राद्यन्तयोष्टकारककारावितौ संज्ञे भविष्यतः। तत्र "आर्धधातुकस्येड्वलादेः" इत्युपस्थितमिदं भवति आदिरिति। तेनेकारादिरादेशो भविष्यति। एतावदिह सूत्रम् इडिति। कथं पुनरियता सूत्रेण इकारादिरादेशो लभ्यः। लभ्य इत्याह। कथम्?। बहुव्रीहिनिर्देशात्। बहुव्रीहिनिर्देशोऽयम्। इकारः इ आदिरस्येति। यद्यपि तावदत्रैतच्छक्यते वक्तुम्। इह तु कथम्—'लुङ्लङ्लृङ्क्ष्वडुदात्तः" इति यत्राशक्यमुदात्तग्रहणेनाकारो विशेषयितुम्। तत्र को दोषः?। अङ्गस्योदात्तत्वं प्रसज्येत। नैष दोषः। त्रिपदोऽयं बहुव्रीहिः। तत्र वाक्य एवोदात्तग्रहणेनाकारो विशेष्यते—अकार उदात्त आदिरस्येति। यदि तर्ह्यनुवृत्त्यैतद्भवति—"आडजादीनाम्"इति। वक्ष्यत्येतत् 'अजादीनामटा सिद्धम्' इति।

प्र:—**संज्ञाधिकारोऽयमिति;** यद्येवं संज्ञासंज्ञिप्रत्यायनार्थौ संज्ञिनं प्रत्याय्य स्वयमेव निवर्तेत इति किमिद्ग्रहणेन टकावित्येवास्तु। नैष दोषः। इत्संज्ञत्वेन देशविशेष उपलक्ष्यते। तेनेत्संज्ञकस्य यो देशः तद्देशावस्थितौ टकौ संज्ञे भवतः इति आलजाटचावित्याटच्प्रत्यये टकारः संज्ञा न भवति। तत्रेड्ग्रहणेनेकारादिः शब्दो गृह्यते। स्थानेऽन्तरतमश्चादेशो भवतीति तव्यस्य इतव्यो भवतीति सिद्धमिष्टम्। **अङ्गस्योदात्तत्वमिति।** तच्चालोऽन्त्यस्येत्यन्त्यस्य स्यात्। **त्रिपदोऽयमिति।** विशेषणस्याप्युदात्तस्य सौत्रत्वान्निर्देशस्य परनिपातः। **यत्र तर्हीति।** तत्र ह्युदात्तग्रहणमेवानुवर्तेत इत्यशक्यो बहुव्रीहिराश्रयितुमिति भावः। **वक्ष्यत्येतदिति।** सूत्रस्यैव प्रत्याख्यानाददोष इत्यर्थः;

उ:—भाष्ये **कौ पुनरिति;** किमागमावुतादेशावित्यर्थः। इद्ग्रहणं न निवृत्तये किं तु देशविशेषोपलक्षणार्थमिति परिहरति—**नैष इति। देशः;** 'चुटू' 'लशक्वतद्धिते' इत्यादिना निर्दिष्टः। **तत्र;** 'आर्धधातुकस्येड्वलादेः' इत्यादौ।

**इकारादिरिति।** इकारेणादिरिति प्रतीताविकार आदिर्यस्येत्यर्थलाभादित्यर्थः। तर्हि इकारादिर्यः कश्चिदादेशः स्याद्; अत आह—**स्थान इति। अन्तरतमः;** श्रुतितोऽर्थतश्च। ननु प्राथम्यादङ्गस्योदात्तत्वमट एव स्यात्; अत आह—**तच्चेति।** नन्वेवमुदात्तादिति निर्देशः स्यात्; अत आह—**सौत्रत्वादिति।**

**भा :—अथवा—यत्तावदयं सामान्येनोपदेष्टुं शक्नोति, तत्तावदुपदिशति—प्रकृतिम्, ततो वलाद्यार्धधातुकम्, ततः पश्चादिकारम्। तेनायं विशेषेण शब्दान्तरं समुदायं प्रतिपद्यते तद्यथा—खदिरबर्बुरयोः—खदिरबर्बुरौ गौरकाण्डौ सूक्ष्मपर्णौ। ततः पश्चादाह—कङ्कटवान् खदिर—इति। तेनाऽसौ विशेषेण द्रव्यान्तरं समुदायं प्रतिपद्यते। अथवा एतयानुपूर्व्याऽयं शब्दान्तरमुपदिशति—प्रकृतिम्। ततो वलाद्यार्धधातुकम्। ततः पश्चादिकारं यस्मिंस्तस्यागमबुद्धिर्भवति।**

प्र :—**अथवेति।** परिभाषापक्षेऽपि न दोष इत्यर्थः। न हि व्यवस्थितस्य तव्यस्य पश्चादिकारोऽवयव आगच्छति, येनानित्यत्वं स्यात्। किं तर्हि। नित्यं पदमनेनोपायेनान्वाख्यायते। खदिरबर्बुरयोरिति निर्धारणे षष्ठी। तयोः कङ्कटवान् खदिर इत्युक्ते द्रव्यान्तरं खदिरं प्रतिपद्यते। न तत्र कङ्कटास्तदानीमारोप्यन्ते प्रतिपादनोपाय एवायमित्यर्थः। **अथवेति।** एतदाह अस्ति, स्त एधोति तत्त्वतो रूपार्थान्वयाभावात् कल्पिताभ्यामेवान्वयव्यतिरेकाभ्यामर्थवत्तामाश्रित्याऽसत्यप्रकृतिप्रत्ययोपदेशेन सत्यस्य पदस्य व्युत्पादनं क्रियते रेखागवयेनेव सत्यगवयस्य।

उ :—अदोषमेवाह—**न हीति।** ननु खदिरबर्बुरयोरिति खदिरबर्बुरापेक्षया न प्रतियोग्यनुयोगिभावे संबन्धमात्रे वा षष्ठी, भेदाभावात्; अत आह—**निर्धारण इति।** दृष्टान्तत्वमुपपादयति—**तयोरिति।** मध्य इत्यर्थः। **प्रतिपादनेति।** एका प्रकृतिः एकः प्रत्ययः। तस्य न कश्चिदिकार आदावित्येवंरूपेणान्वाख्यानान्नानित्यत्वशङ्केति भावः। पूर्वस्माद्भेदमाह—**एतदिति।** पूर्वं नित्यमेव पदं प्रकृत्याद्यवयवक्रमेणोपदिश्यत इत्युक्तम्। इदानीं नित्यशब्दबोधनाय प्रकृत्यादिकमन्यदेवापूर्वं कल्प्यत इत्युच्यते। अत एव भाष्ये पूर्वत्र समुदायं प्रतिपद्यत इत्युक्तम्। इह तु शब्दान्तरमुपदिशतीत्युक्तमित्याशयः। एतदेव विवृणोति। **अस्तीति।**

**एधीति ;** अस्तेर्लोटि सिपि तासस्त्योरिति सलोपः। सेर्हिः। सलोपस्यासिद्धत्वात् 'हुझल्भ्य' इति हेर्धिः। घ्वसोरेद्धावित्येत्वम्। **कल्पिताभ्यामिति।** स्त इत्यत्रापि अस् तस्, अस्नेरकालोप इति। एधीत्याघे त्रीनि, प्रकृतिप्रत्ययकल्पना तदर्थभेदकल्पना चेत्यर्थः।

**॥ वा ॥ टकितोराद्यन्तविधाने प्रत्ययप्रतिषेधः ॥**

**भा :—टकितोराद्यन्तविधाने प्रत्ययस्य प्रतिषेधो वक्तव्यः। प्रत्यय आदिरन्तो वा मा भूदिति। "चरेष्टः" "आतोऽनुपसर्गे क" इति।**

**॥ वा ॥ परवचनात्सिद्धम् ॥**

**भा :—पर वचनात्प्रत्यय आदिरन्तो वा न भविष्यति।**

**॥ वा ॥ परवचनात्सिद्धमिति चेन्नापवादत्वात् ॥**

**भा :–परवचनात्सिद्धमिति चेत् तन्न। किं कारणम्? अपवादत्वात्। अपवादोऽयं योगः। तद्यथा—"मिदचोऽन्त्यात्परः" इत्येष योगः स्थानेयोगत्वस्य प्रत्ययपरत्वस्य चापवादः। विषम उपन्यासः। युक्तं तत्र यदनवकाशं मित्करणं स्थानेयोगत्वं प्रत्ययपरत्वं च बाधते। इह तु पुनरुभयं सावकाशम्। कोऽवकाशः? टित्करणस्यावकाशः 'टितः' इति ईकारो यथा स्यात्। कित्करणस्यावकाशः 'किति' इत्याकारलोपो यथा स्यात्। प्रयोजनं नाम तद्वक्तव्यम् यन्नियोगतः स्यात्। यदि चायं नियोगतः परः स्यात्तत एतत्प्रयोजनं स्यात्। कुतो नु खल्वेतत्—टित्करणादयं परो भविष्यति न पुनरादिरिति, कित्करणाच्च परो भविष्यति न पुनरन्त इति।**

प्र :—**प्रत्ययप्रतिषेध इति।** प्रत्ययपरत्वस्याप्ययमपवादः प्राप्नोति भावः। **परवचनादिति।** पुरस्तादपवादन्यायेन स्थानेयोगत्वमेवानेन बाध्यते न प्रत्ययपरत्वमिति भावः। **नापवादत्वादिति।** बाधमात्रापेक्षायां पुरस्तादपवादन्यायो नास्तीति भावः। सर्वापवादत्वायाह—**प्रयोजनमिति।** सति परत्वे प्रयोजनमेतत्स्यात् परत्वमेव त्वलभ्यमित्यर्थः। **टित्करणादिति।** ङीबर्थादित्यर्थः। **कित्करणादिति ;** आकारलोपार्थात्।

उ:—**प्रत्ययेति**। यथा स्थानेयोगत्वस्य एवं परत्वस्यापीत्यपेरर्थः। भाष्ये विषम उपन्यास इत्यादिना प्रत्ययपरत्वस्य बाधकं न भवतीत्युक्तम्। प्रयोजनमिति भाष्यं [1]तद्दूषणपरत्वेनावतारयति—**सर्वेति**। भाष्ये **एतत्प्रयोजनम्**; ङीबाकारलोपरूपम्। प्रयोजनमेतदिति प्रदीपस्यायमेवार्थः। **परत्वमेवेति**। तथा च प्रत्ययपरत्वस्यापि बाधकमेवेत्यर्थः। टित्कारो भवतीति वचनाभावात् टित्करणादित्ययुक्तम्; अत आह—**ङीबर्थादिति**। कित्त्वमपि न परत्वनिमित्तम्; अत आह—**आकारेति**।

**भा:—टितः खल्वप्येष परिहारः। यत्र नास्ति सम्भवः—यत्परश्च स्यादादिश्च। कितस्त्वपरिहारः, अस्ति हि संभवो यत्परश्च स्यादन्तश्च। तत्र को दोषः?। "उपसर्गे घोः किः" आध्योः प्रध्योः। "नोङ्धात्वोः" इति प्रतिषेधः प्रसज्येत। टितश्चाप्यपरिहारः। स्यादेव ह्ययं टित्करणादादिर्न पुनः परः। क्व तर्हि इदानीमिदं स्यात्—टित ईकारो भवतीति?। य उभयवान्—"गापोष्टक्" इति।**

**॥ वा ॥ सिद्धं तु षष्ठ्यधिकारे वचनात् ॥**

**भा:—सिद्धमेतत्। कथम्?। षष्ठ्यधिकारोऽयं योगः कर्तव्यः—"आद्यन्तौ टकितौ षष्ठीनिर्दिष्टस्य" इति।**

**॥ वा ॥ आद्यन्तयोर्वा षष्ठ्यर्थत्वात्तदभावेऽसंप्रत्ययः ॥**

**भा:—आद्यन्तयोर्वा षष्ठ्यर्थत्वात्तदभावे षष्ठ्या अभावे; असंप्रत्ययः स्यात्—आदिरन्तो वा न भविष्यति। युक्तं पुनर्यच्छब्दनिमित्तको नामार्थः स्यात्। नार्थनिमित्तकेन नाम शब्देन भवितव्यम्। अर्थनिमित्तक एव शब्दः। तत्कथम्?। आद्यन्तौ षष्ठ्यर्थौ। न चात्र षष्ठीं पश्यामः। ते मन्यामहे—आद्यन्तावेवात्र न स्तः। तयोरभावे षष्ठ्यपि न भवतीति। आद्यन्तौ० ॥ ४६ ॥**

---

१. क. देवदूषण ?

प्र :—प्रयोजनमभ्युपेत्याह—**टित इति। कितस्त्विति;** ननु परत्वावयवत्वयोः विरोधात्कथमुच्यते परश्च स्यादन्तश्चेति। नैष दोषः। परस्य सतोऽन्तवत्कार्यप्राप्तया अन्तत्वमुच्यते, यथा समासान्तानाम्। **टितश्चापीति।** पूर्वोक्तमेव समर्थयतेऽधिकं वक्तुम्। **गापोष्टगिति।** अत्र कित्वात्परत्वादन्तत्वमिति टिदन्तमेतद्भवतीति ङीपोऽयमवकाशः। ततश्च 'चरेष्ट' इत्ययमादिः स्यात्। **षष्ठ्यधिकार इति।** यत्र स्थानषष्ठी प्राप्ता तत्रोपस्थानमस्याः, न तु प्रत्ययपरत्वबाधनाय। **आद्यन्तयोर्वेति।** षष्ठ्याः प्रयोजकावाद्यन्तौ। षष्ठ्यभावाच्चाद्यन्ताभावावगतिरित्यर्थः। **युक्तं पुनरिति।** शब्दभावाभावाभ्यामर्थभावाभावयोः शब्दनिमित्तकत्वमर्थस्य प्राप्तम्। तच्च पुनर्न युक्तम्। ज्ञापको हि शब्दोऽर्थस्य न तु कारकः। सर्वेण सर्वस्यार्थस्य क्रियाप्रसङ्गादिति भावः। **अर्थनिमित्तक एवेति;** अर्थ एव शब्दस्य प्रयोजकः, तत्प्रतिपादनाय शब्दप्रयोगः। अप्रयोगाच्चानुमीयते—नूनम् अर्थ एवात्र प्रयोजको नास्ति शब्दप्रयोगं यः प्रयुञ्जीतेत्यर्थः। 'चरेष्टः' इत्यत्र 'परश्च' इत्यधिकारात् पञ्चम्येव युक्ता। 'गापोष्टक्' 'व्रीहिशाल्योर्ढक्' इत्यादावप्यानन्तर्यसंबन्धे षष्ठी, न त्ववयवावयविसंबन्धे। प्रत्ययपरत्वेन प्रतियोगं सन्निहितेनाकाङ्क्षाविच्छेदादनर्थित्वादस्या अनुपस्थानात्। पुरस्तादपवादन्यायस्तु यथोद्देशपक्षे संभवति, न कार्यकालपक्ष इति नाश्रितः॥ ४६॥

उ :—**प्रयोजनं;** ङीबाल्लोपरूपम्। अन्तशब्दस्यावयववचनत्वात् विरोधं शङ्कते—**नन्विति।** समासान्ता इत्यत्राप्येष एव परिहार इत्याशयेनाह—**यथेति।** भाष्ये **नोङ् इति।** 'उपसर्गे घोः किः' प्रत्ययस्वरेणोदात्तः। तत्स्थानिकयणः [१]परासर्वनामस्थानविभक्तेरुदात्तत्वम् 'उदात्तयणो हल्पूर्वात्' इति विहितमत्रेष्यते। क्विप्रत्ययस्य धात्ववयवत्वे 'नोङ्धात्वोः' इति निषेधः स्यादित्यर्थः। **पूर्वोक्तम्;** टित्करणादयं परो भवति न पुनरादिरित्युक्तम्। **अधिकं;** टित इति ङीपो विषयान्तरमित्यर्थः। **परत्वादिति।** शब्दपरविप्रतिषेधादित्यर्थः। यद्यपि नदट् चेलडित्यादिकं ङीपो विषयः संभवति तथापि ढादिसाहचर्यात् प्रत्यय एव टित् गृह्यते। नदडित्यादौ टित्त्वसामर्थ्यादप्रत्ययान्तस्यापि भवतीति यदुच्यते तदैतदुक्तमिति मन्तव्यम्। भाष्ये **षष्ठ्यधिकारे वचनं;** तत्रानुवृत्तिः। ततः फलितमाह—**यत्रेति। प्राप्ता;** एतदुपस्थानात् प्रागवस्थिता। **न त्विति।** सार्वचरमित्यादौ षष्ठ्य-

---

(१) क. परत्वेन विभक्तेरुदात्तत्वेनादात्तयणो

भावादित्यर्थः। **बाधनाय;** षष्ठ्यभावेऽप्युपस्थानमिति शेषः। आद्यन्तशब्दयोरवयववाचित्वेनावयविनि षष्ठीं विनान्वयो न संभवतीति षष्ठीस्थल एव अस्योपस्थानं, नान्यत्रेति षष्ठ्यधिकारवचनं विनापि सिध्यतीति भाष्यार्थमाह—**षष्ठ्या इति। प्रयोजकौ;** व्याप्तौ। तेनार्थशब्देन प्रयोजनवाचिना वार्तिके प्रयोजकोऽभिधीयते इत्युक्तम्। आदिरन्तो वा न भविष्यतीत्यनेनासंप्रत्यय इत्यस्याभाव इति व्याख्यानं कृतमित्यभिप्रेत्य शङ्कातात्पर्यमाह—**शब्देति।** भावाभावयोरभिधान इति शेषः। शब्दस्यार्थकारकत्वे बाधकमाह—**सर्वेणेति। क्रिया;** निष्पादनम्। शत्रुर्नास्तीतिशब्दादपि तदभावः सिध्येदिति भावः। **अप्रयोगादिति।** विभक्त्यन्तरप्रयोगस्थले षष्ठ्यप्रयोगादित्यर्थः। यः प्रयुञ्जीत सोऽर्थो. नास्तीत्यन्वयः। अप्रयोगोऽसिद्धः 'चरेष्टः' इत्यादौ दर्शनात्; अत आह—**चरेष्ट इति।** पूर्वत्र परत्र चानुवर्तमानस्य परत्वस्याकस्माच्चरेरित्यत्रानन्वये मानाभावात्, घातोरित्यनेन सामानाधिकरण्यसंभवाच्च पञ्चम्येवेयमित्यर्थः। **न त्विति।** एतत्सूत्रोपस्थानेनेत्यर्थः। तत्र हेतुः **प्रत्ययेति। आकाङ्क्षेति;** आकाङ्क्षानिबन्धनः संबन्धः तदभावे न संभवतीत्यर्थः। **अनर्थित्वात्;** आनन्तर्यसंबन्धेन निराकाङ्क्षत्वात् घातोः परष्टग् भवति, प्रातिपदिकात्परष्टक् भवति। स च भवन् धातोरनन्तरः, व्रीहिशाल्योरनन्तरः इति तदर्थ इत्यर्थः। यद्यपि बाध्यमात्रापेक्षायामयं न्यायो नास्तीत्युक्तम, तथापि तथा सति स न्याय एवोत्सीदेदिति सा न पारमर्थिकी युक्तिरिति अभिप्रेत्य तदनाश्रयणे युक्त्यन्तरमाह—**पुरस्तादिति। न कार्येति।** 'चरेष्टः' इत्यत्र युगपदाद्यन्तौ टकितौ, षष्ठी स्थानेयोगा, परश्चेत्यनेकेषामुपस्थितौ पौर्वापर्यनियामकाभावादिति भावः।

**सू.—मिदचोऽन्त्यात्परः ॥ १। १। ४६ ॥**

**भा :—किमर्थमिदमुच्यते ?।**

**॥ वा ॥ मिदचोऽन्त्यात्पर इति स्थानपरप्रत्ययापवादः ॥**

**भा :—मिदचोऽन्त्यात्पर इत्युच्यते स्थानेयोगत्वस्य प्रत्ययपरत्वस्य वापवादः। स्थानेयोगत्वस्य तावत्—कुण्डानि, वनानि, पयांसि, यशांसि। प्रत्ययपरत्वस्य— भिनत्ति छिनत्ति। भवेदिदं युक्तमुदाहरणम्—कुण्डानि वनानि यत्र नास्ति संभवो यदयमचोऽन्त्यात्परश्च स्यात्, स्थाने चेति। इदं त्वयुक्तम्—पयांसि यशांसीति। अस्ति हि संभवो यदयमचोऽन्त्यात्परश्च स्यात्, स्थाने**

**चेति। एतदपि युक्तम्। कथम्?। नैवेश्वर आज्ञापयति, नापि धर्मसूत्रकाराः पठन्ति—अपवादैरुत्सर्गा बाध्यन्तामिति। किं तर्हि?। लौकिकोऽयं दृष्टान्तः। लोके हि सत्यपि सम्भवे बाधनं भवति। तद्यथा-'दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्याय' इति। सत्यपि संभवे दधिदानस्य तक्रदानं निवर्तकं भवति। एवमिहापि सत्यपि संभवे अचामन्त्यात्परत्वं षष्ठीस्थानेयोगत्वं बाधिष्यते।**

प्र:—मिद्चोऽन्त्यात्परः। **किमर्थमिति।** किमनेन व्यावर्त्यत इति प्रश्नः। **स्थानेति।** परस्य सतः प्रत्ययस्यापवादस्तेन सामर्थ्यादयमर्थः 'प्रत्ययपरत्वस्यापवाद' इति। **कुण्डानीति।** 'नपुंसकस्य झलच' इत्यत्र झलज्भ्यां नपुंसकस्य तदन्तविधिरिति अस्ति स्थानेयोगत्वस्य प्रसङ्गः। [१]मित्त्वात्त्वस्मिन्नुपस्थिते नपुंसकस्याङ्गस्येत्यवयवषष्ठी संपद्यते। **स्थाने चेति।** ततश्च सकारस्य स्थाने नुम् भवत्वित्यर्थः। **दृष्टान्त इति।** निश्चय इत्यर्थः। तत्र वृद्धव्यवहारादीदृश्येव वाक्यार्थे व्युत्पत्तिर्यत्सामान्यविहितो विशेषविहितेन बाध्यते, न समुच्चीयते, नापि विकल्प्यते।

उ:—प्रयोजनप्रश्ने व्यावर्त्याभिधानमसङ्गतम्; अत आह—**किमिति।** व्यावर्त्यत्वेन प्रयोजनं किमस्येति किमर्थमिति भाष्यार्थः। श्रमः प्रत्ययत्वाङ्गीकारात्परत्वमात्रस्यापवादो न प्रत्ययत्वस्येत्यभिप्रेत्य भाष्ये प्रत्ययपरत्वस्येत्युक्तम्। तमर्थं वार्तिकारूढं करोति—**परस्य सत इति।** परेति विशेषणसामर्थ्यात् विशेषणप्रधानो निर्देशः। अन्यथा स्थानप्रत्ययापवाद इत्येवावक्ष्यदित्यर्थः। ननु नपुंसकेति नुम्विधानेऽवयवषष्ठीत्वेन स्थानेयोगत्वस्याप्राप्तया कथं तदपवादत्वमित्याशङ्क्य सूत्रार्थकथनपूर्वकं निराह—**नपुंसकस्येति। तदन्तेति;** विशेष्यसंनिधानात् पक्षद्वयेऽपि तदन्तविधिरेवेत्यर्थः। **स्थान इति।** एतदनुपस्थितिदशायामित्यर्थः। **तस्मिन्निति;** मित्त्वलिङ्गेनेत्यादिः। **नपुंसकस्येति।** झलन्तस्याजन्तस्य च नपुंसकस्यावयवो योऽन्त्योऽच् ततः पर इत्यर्थलाभादित्यर्थः। भाष्ये **नास्ति संभव इति।** अलोऽन्त्यस्येत्यन्त्यस्याच एव स्थानित्वम्। तथा च नुमस्तत्स्थानिकत्व ततः परत्वं च न संभवतीत्यर्थः। संभवमुपपादयति—**ततश्चेति।** अलोऽन्त्यपरिभाषयेत्यादिः। भाष्ये **ईश्वरो**

(१) तस्मिन्नु इत्युद्द्योतनपाठः

राजा। **धर्मसूत्रकाराः;** धर्मशास्त्रकाराः। राजाद्यधीनत्वे तदिच्छयाऽसंभवस्थल एवापवादस्य बाधकत्वं न तु संभवस्थलेऽपीति संकोचः सिद्ध इति भावः। लोके हीत्यस्य तात्पर्यमाह—**तत्रेति।** ईदृश्येवेत्यस्य विवरणम्—**यदिति।**

**॥ वा ॥ अन्त्यात्पूर्वो मस्जेर्मिदनुषङ्गसंयोगादिलोपार्थम् ॥**

**भा :—अन्त्याऽपूर्वो मस्जेर्मिद्वक्तव्यः। किं प्रयोजनम्? अनुषङ्गसंयोगादिलोपार्थम्—मङ्क्त्वा, मङ्क्तुम्, मङ्क्तव्यम्।**

**॥ वा ॥ भर्जिमर्च्योश्च ॥**

**भा :—भर्जिमर्च्योश्चान्त्यात्पूर्वो मिद्वक्तव्यः। भरूजा मरीचय इति। स तर्हि वक्तव्यः। न वक्तव्यः, निपातनात् सिद्धम्। किं निपातनम्? भरूजाशब्दोऽङ्गुल्यादिषु पठ्यते। मरीचिशब्दो बाह्वादिषु।**

प्र :—**भर्जिमर्च्योश्चेति।** भृजी भर्जन इत्यस्यौणादिकेऽचि कृते गुणे रपरत्वे च जकारात्पूर्वं ऊमागमः। मर्च शब्दार्थ इत्यस्य चौरादिकस्य णिचि 'अच' इति इप्रत्यये णिलोपे चकारात्पूर्वं ईमागमः।

उ :—भाष्ये **मग्न इति।** मस्जेर्निष्ठायां मस्जिनशोरिति जात्पूर्वं नुमि अनिदितामिति नलोपे, स्कोः संयोगाद्योरिति सलोपे, 'चोः कुः' इति कुत्वे, 'ओदितश्च' इति निष्ठानत्वे च रूपम्। यद्यप्यन्त्यादचः' परेऽपि नुमि अविशेषेण संयोगसंज्ञायां सलोपः सिध्यति तथाऽपि तस्यासिद्धत्वेन नकारस्योपधात्वाभावान्नलोपो न स्यादित्यन्त्यात्पूर्वत्वमुक्तम्। भाष्ये **अनुषङ्गो** नकारः। भाष्ये **मङ्क्त्वा;** तृचि पूर्ववदेव सलोपे कुत्वे चर्त्वे नकारस्यानुस्वारे परसवर्णे च रूपम्; एवं तु मुमि मङ्क्तुम्। ऊमीमावौणादिकौ।

**भा :—किं पुनरयं पूर्वान्तः, आहोस्वित् परादिः, आहोस्विदभक्तः? कथं वाऽय पूर्वान्तः स्यात्? कथं वा परादिः? कथं वाऽभक्तः?। यद्यन्त इति वर्तते ततः पूर्वान्तः। अथादिरिति वर्तते ततः परादिः। अथोभयं निवृत्तं ततोऽभक्तः। कश्चात्र विशेषः?**

॥ वा ॥ अभक्ते दीर्घनलोपस्वरणत्वानुस्वारशीभावाः ॥

भा :—यद्यभक्तो दीर्घत्वं न प्राप्नोति। कुण्डानि, वनानि। "नोपधायाः सर्वनामस्थाने चासंबुद्धौ" इति दीर्घत्वं न प्राप्नोति ॥ दीर्घ ॥ नलोप—नलोपश्च न सिध्यति। "अग्ने त्री ते वाजिना त्री षधस्था ता ता पिण्डानाम्" 'नलोपः प्रातिपदिकान्तस्य' इति नलोपो न प्राप्नोति ॥ नलोप ॥ स्वर—स्वरश्च न सिध्यति। 'सर्वाणि ज्योतींषि' "सर्वस्य सुपि" इत्याद्युदात्तत्वं न प्राप्नोति ॥ स्वर ॥ णत्व—णत्वं च न सिध्यति। माषवापाणि व्रीहिवापाणि। पूर्वान्ते प्रातिपदिकान्तनकारस्येति सिद्धम्, परादौ विभक्तिनकारस्येति। अभक्ते नुमो ग्रहणं कर्तव्यम्। न कर्तव्यम्। क्रियते एतन्न्यास एव—"प्रातिपदिकान्तनुम्विभक्तिषु च" इति ॥ णत्व ॥ अनुस्वार—अनुस्वारश्च न सिध्यति। द्विषंतपः परंतपः। "मोऽनुस्वारो हलि" इत्यनुस्वारो न प्राप्नोति। मा भूदेवम्। "नश्चापदान्तस्य झलि" इत्यनुस्वारो भविष्यति। यस्तर्हि न झलपरः—वहंलिहो गौः, अभ्रंलिहो वायुः ॥ अनुस्वार ॥ शीभाव—शीभावश्च न सिध्यति। त्रपुणी, जतुनी, तुम्बुरुणी। नपुंसकादुत्तरस्यौङः शीभावो भवतीति शीभावो न प्राप्नोति। शीभाव ॥

प्र :—**पूर्वान्त इति।** संघातस्य पूर्वस्य भक्तो न तदेकदेशस्य। **अथादिरिति।** न हि संभवोऽस्ति यदचोऽन्त्यात्परश्च स्यात्पूर्वस्य चादिरिति सामर्थ्यात्परादित्वं विज्ञायते। **कुण्डानीति।** नान्तमङ्गं न भवतीति दीर्घत्वाप्राप्तिः। ननु 'तदादिवचनं स्यादिनुमर्थम्' इत्युक्तम्। एवं तर्हि तत्स्मर्तव्यं भवतीति गौरवापत्तिः। **सर्वाणीति।** नुमा सुपो व्यवधानात् स्वरो न सिध्यति। **क्रियते एतन्न्यास एवेति।** उत्तरपदस्य प्रातिपदिकस्यान्तः तत्र नकारो गृह्यते गर्गाणां भगिनी गर्गभगिनीत्यत्र णत्वं मा भूदित्यवश्यं कर्तव्यं नुमो ग्रहणम्। स हि समुदायभक्तत्वादुत्तरपदस्यान्तो न भवतीति। **द्विषन्तप इति।** प्रसङ्गोच्चारितमेतत्। अत्र

हि 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यत' इति मुमो द्विषद्ग्रहणेन ग्रहणमस्ति। **त्रपुणी इति।** नित्यत्वात् परत्वाच्च नुमि कृते व्यवधानमिति भावः।

उः—नन्वचः परत्वमजवयवत्वं च विरुद्धम्; अत आह—**संघातस्येति। भक्तः;** अवयवः। **एकदेशस्य;** अन्त्यस्याचः। नन्वन्त्याजपेक्षयैवादित्वं किं न स्याद्; अत आह—**न हीति।** पूर्वस्याचः नुमि कृते उपधात्वसंगत्त्या दीर्घः कुतो न स्यात्; अत आह—**नान्तमिति।** अङ्गस्येत्यधिकारान्नान्तमङ्गं तत्र गृह्यत इति भावः। अभक्तत्वेऽपि दीर्घसिद्धिं शङ्कते—**नन्विति। तदिति;** यस्मात्प्रत्ययविधिरिति सूत्र इत्यादिः। **गौरवेति;** प्रतिपत्तीत्यादिः। भाष्ये **वाजिनेति।** वाजिनानि तानि। अत्र 'शे च्छन्दसि बहुलम्' इति शेर्लुकि नलोपो न स्यात्, प्रातिपदिकान्तत्वाभावादित्यर्थः। **नुमेति।** 'स्वरविधौ व्यञ्जनमविद्यमानवद्' इति च स्वरस्य स्वरप्राप्तौ सत्यामत्र व्यवधानेन प्राप्तिरेव नास्तीति भावः। भाष्येऽभिनवं न कर्तव्यमित्युक्तम्। तथाऽपि पक्षान्तरेऽनपेक्षितमस्मिन् पक्षे कर्तव्यमिति गौरवमेवेत्याशङ्क्य पक्षान्तरेऽपि नुम्ग्रहणं कर्तव्यमित्यभिप्रेत्याह—**उत्तरपदस्येति।** उत्तरपदान्तस्येत्यर्थः। इनेर्नकारस्तद्धितान्तत्वात् प्रातिपदिकान्तः। तत्रोत्तरपदान्तस्येत्यनुक्तौ णत्वप्रसङ्गः। तदुक्तावीकार उत्तरपदान्तो न नकार इति णत्वाप्रसङ्गः। माषवापाणीत्यत्र नकारस्योत्तरपदान्तत्वं नास्तीत्याह—**स हीति;** नुमित्यर्थः। अङ्गाधिकारादङ्गभक्तो नुम्, नोत्तरपदभक्त इत्यर्थः। माषवापिणावित्यादौ नकारस्योत्तरपदान्तत्वं प्रातिपदिकान्तत्वं चास्तीति न विषयासंभवः। एवमपि परादित्वपक्षे नुम्ग्रहणं न कर्तव्यमिति मन्तव्यम्। **द्विषन्तप इति।** 'द्विषत्परयोस्तापेः' इति खच्। खचि ह्रस्वः, 'अरुर्द्विषदजन्तस्य मुम्'। तत्र द्विषन्तप इति नोदाहरणीयमित्याह—**प्रसङ्गेति।** द्विषद्ग्रहणेन ग्रहणे सति तकारस्य संयोगान्तलोपे मकारः पदान्त इति मोऽनुस्वारः सिद्ध इत्यर्थः। भाष्ये **वहंलिह इति।** 'वहाभ्रे लिहः' इति खश्। अरुर्द्विषदिति मुमागमः। ननु पूर्वं शाभावः पश्चान्नुम् किं न स्याद्; अत आह—**नित्यत्वादिति।**

**भा:—एवं तर्हि परादिः करिष्यते।**

**॥ वा ॥ परादौ गुणवृद्ध्यौत्वदीर्घनलोपानुस्वारशीभावेनकारप्रतिषेधाः ॥**

**भा:—यदि परादिर्गुणः प्रतिषेध्यः—त्रपुणे, जतुने, तुम्बुरुणे। "घेर्ङिति" इति गुणः प्राप्नोति ॥ गुण ॥ वृद्धि—वृद्धिः प्रति-**

षेध्या—अतिसखीनि ब्राह्मणकुलानि। "सख्युरसम्बुद्धौ" इति णित्वे "अचो ञ्णितीति" इति वृद्धिः प्राप्नोति॥ वृद्धि॥ औत्त्व—औत्त्वं च प्रतिषेध्यम्। त्रपुणि, जतुनि, तुम्बुरुणि। "इदुद्भ्यामौदच्च घेः' इत्यौत्त्वं प्राप्नोति॥ कुण्डानि वनानि। "नोपधायाः सर्वनामस्थाने चासंबुद्धौ' इति दीर्घत्वं न प्राप्नोति। मा भूदेवम्। "अतो दीर्घो यञि सुपि च" इत्येवं भविष्यति। इह तर्हि—अस्थीनि दधीनि प्रियसखीनि ब्राह्मणकुलानि॥ दीर्घ॥ नलोप—नलोपश्च न सिध्यति। 'अग्ने त्री ते वाजिना त्री षधस्था ता ता पिण्डानाम्, "नलोपः प्रातिपदिकान्तस्य" इति नलोपो न प्राप्नोति॥ नलोप॥ अनुस्वार—अनुस्वारश्च न सिध्यति द्विषन्तपः परन्तपः। "मोऽनुस्वारो हलि" इत्यनुस्वारो न प्राप्नोति। मा भूदेवम्। "नश्चापदान्तस्य झलि" इत्यनुस्वारो भविष्यति। यस्तर्हि न झल्परः—वहंलिहो गौः, अभ्रंलिहो वायुः॥ अनुस्वार॥ शीभावे नकारप्रतिषेधः—शीभावे नकारस्य प्रतिषेधो वक्तव्यः। त्रपुणी, जतुनी, तुम्बुरुणी। सनुम्कस्य शीभावः प्राप्नोति। नैष दोषः, "निर्दिश्यमानस्यादेशा भवन्ति" इत्येवं न भविष्यति। यस्तर्हि निर्दिश्यते तस्य न प्राप्नोति। कस्मात्?। नुमा व्यवहितत्वात्।

प्र :—**अतिसखीनीति ;** बहुव्रीहिः। **द्विषन्तप इति ;** परादिपक्षे तकारस्य मकारो भक्तस्तकारश्च पदान्त इति मकारोऽपि तद्भक्तत्वात् पदान्त इति सिद्धोऽनुस्वार इत्याहुः। अन्ये तु तद्भक्तत्वात्तकारग्रहणेनास्य ग्रहणं भवतु न तु पदान्तत्वम्। न हि द्वयोर्मकारतकारयोः पदान्तत्वमुपपद्यत इत्याहुः। **शीभावे नकारप्रतिषेध इति।** शीभावे विधीयमाने नकारस्य स्थानित्वप्रतिषेधो वक्तव्य इत्यर्थः। **निर्दिश्यमानस्येति।** यथा 'पादः पद्' इति पद्भावः पाच्छब्दस्यैव भवति, न तदन्तस्य। **यस्तर्हीति।** यो निर्दिश्यते तस्य न प्राप्नोति। श्रुतिसन्निपाति यद्रूपमौ इति तन्नकारेण भक्तेनापि तत्त्वतो व्यवहितमित्यर्थः।

उ :—टजभावाय नपुंसकत्वाय च—**बहुव्रीहिरिति ;** द्विषन्तप इत्येतद् दूषयति—**परादीति। सिद्ध इति ;** तकारलोपे सतीत्यादिः। **परेषां समाधान-**

माह—**अन्ये त्विति । न हीति ;** तकारे विद्यमाने मकारो न पदान्तः । तलोपेऽपि न पदान्तः पदावयवावयवत्वेन पदावयवत्वाभावात् । अतोऽनुस्वारो न स्यादित्यर्थः । अन्ये तु तकारावयवत्वान्नकारस्य निरन्तरहल्द्वयाभावेन संयोगसंज्ञाया अभावात् संयोगान्तलोपो नास्तीति भाव इत्याहुः । तच्चिन्त्यम् । प्रत्यक्षसिद्धहल्द्वयस्य दुरपह्नवत्वात् संयोगसंज्ञायामनवयवत्वे सतीति विशेषणाभावात् , द्वयोरिति प्रदीपस्वरस्याच्च । **शीभाव इति ।** एतेन वार्तिके अनुस्वारान्तं लुप्तसप्तमीकं पृथक्पदम् । गुणादावनुस्वारान्ते दोष इत्यर्थः । शीभाव इत्यादि तु वाक्यान्तरमिति सूचितम् । अन्ये तु शीभावे दोष इति सामान्येनोक्त्वा शीभावे दोषविशेषपर्यवसानाय नकारप्रतिषेध इत्युक्तम् । यद्वा नकारप्रतिषेध इति संबन्धसामान्यषष्ठीसमासः । प्रतिषेधो निवर्तनमभावश्च । तथा च नुम्रूपनकारे सति गुणादेर्निवर्तनं कर्तव्यम् । स्थानिनो नकारस्याभावश्च स्यादित्यर्थ इत्याहुः । **यथेति ।** संख्यासुपूर्वस्य पाच्छब्दस्य पदादेशो निर्दिश्यमानस्यैव भवति न संख्यादिसहितस्येत्यर्थः । न हि स्वाङ्गमिति न्यायेन तदवयवेन नुमा कथं व्यवधानम् ; अत आह—**श्रुतीति । तत्त्वत इति ।** क्लीबात्परस्यौकारस्य शीभावे [1]तदवयवस्य नकारस्य व्यवधायकत्वमेव । अत एवोक्तम्—**श्रुतीति ।**

**भा :—एवं तर्हि पूर्वान्तः करिष्यते ।**

**॥ वा ॥ पूर्वान्ते नपुंसकोपसर्जनह्रस्वत्वं द्विगुस्वरश्च ॥**

**भा :—यदि पूर्वान्तः क्रियते नपुंसकोपसर्जनह्रस्वत्वं द्विगुस्वरश्च न सिध्यति । नपुंसकोपसर्जनह्रस्वत्वं—आराशस्त्रिणी, धानाशष्कुलिनी, निष्कौशाम्बिनी, निर्वाराणसिनी । द्विगुस्वर—पञ्चारत्निनी दशारत्निनी । नुमि कृते अनजन्तत्वादेते विधयो न प्राप्नुवन्ति ।**

**॥ वा ॥ न वा बहिरङ्गलक्षणत्वात् ॥**

**भा :—न वा एष दोषः । किं कारणम् ? बहिरङ्गलक्षणत्वात् । बहिरङ्गो नुम् , अन्तरङ्गा एते विधयः । ‘ असिद्धं बहिरङ्गमन्तरङ्गे ’ । द्विगुस्वरे भूयान् परिहारः—संघातभक्तोऽसौ नोत्स-**

---

(१) क. विधीयमाने इत्यधिकम्

**हतेऽवयवस्येगन्ततां विहन्तुमिति कृत्वा द्विगुस्वरो भविष्यति।**

**मिदचोऽन्त्यात्परः ॥ ४६ ॥**

प्र :—**धानाशष्कुलिनी इति ;** नित्यत्वात्पूर्वं नुमं मन्यते। तत्र कृतेऽनजन्तत्वात् ह्रस्वाप्राप्तिः। **निष्कौशाम्बिनी इति ;** नपुंसकह्रस्वत्वमुपसर्जनह्रस्वत्वेन परत्वाद्बाध्यते, तदपि नुमि कृते तथैव न प्राप्नोति। **न वेति।** नित्यादप्यन्तरङ्गो बलीयानिति ह्रस्वौ च विभक्तिनिरपेक्षत्वादन्तरङ्गौ। तदत्र निर्दोषत्वात्पूर्वान्तपक्षः स्थितः।

उ :—धानाश्च शष्कुल्यश्चेति समाहारद्वन्द्वे द्वित्वविवक्षायां धानाशष्कुलिनी इति द्विवचनम्। एतमन्यतादि। ननु ह्रस्वानन्तरं नुमि नास्ति दोषः ; अत आह—**नित्यत्वादिति।** परशब्दस्येष्टवाचित्वात् ह्रस्वत्वमेव पूर्वं किं न स्यादिति परो वेदितः परत्वादिति नोक्तम्। वार्तिके नपुंसकह्रस्वत्वमुपसर्जनह्रस्वत्वं चेत्यर्थः। नुमनन्तरमेव ह्रस्वोऽस्तु ; अत आह—**तत्रेति।** नुमीत्यर्थः। ह्रस्वश्रुत्या 'अचश्च' इत्युपस्थिते च तेन प्रातिपदिकस्य विशेषणादजन्तस्य ह्रस्वेन भवितव्यमिति भावः। नन्वत्रापि नपुंसकह्रस्वत्वबाधकमुपसर्जनह्रस्वत्वस्य नोपग्रहणम् ; अत आह—**नपुंसकेति। तथैवेति ;** नुमि सति न स्त्रीप्रत्ययान्तं नाप्यजन्तमिति भावः। भाष्ये **द्विगुस्वर इति ;** "इगन्तकालकपालभगालशरावेषु द्विगौ" इति पूर्वपदप्रकृतिस्वरः। पञ्चारत्नयः प्रमाणमस्येति मात्रचो 'प्रमाणे लो द्विगोर्नित्यम्' इति लुक्, समाहारद्विगुर्वा। **नित्याद्विति।** तथा चाहुः—परनित्यान्तरङ्गापवादानां पूर्वपूर्वबलीयस्त्वमिति। एतच्च युगपत्प्राप्तिमङ्गीकृत्योक्तम्। वस्तुतो विभक्तेः प्रागेव ह्रस्वादीति न युगपत्प्राप्तिरित्यवज्ञेयम्। यद्यपि भाष्ये असिद्धपरिभाषोक्ता तथाऽप्यग्रे भूयानिति प्रयोगात्पूर्वत्राऽपि समाधानबहुत्वं सूचितम्। तन्नित्यादीत्यनेनोक्तमिति मन्तव्यम्। पूर्वं नुमि सत्यपि स्वरसिद्धिमाह—भाष्ये **द्विगुस्वर इति।** असिद्धपरिभाषा, अन्तरङ्गस्य नित्यबाधकत्वं चोभयत्र समानम्। स्वरे विधानभक्तत्वमिति अधिकमित्यभिप्रेत्य भाष्ये भूयानिति बहुशब्दादातिशायनिकः प्रयुक्तः।

सू.—एच इग्घ्रस्वादेशे ॥ १। १। ४७ ॥

**भा :—किमर्थमिदमुच्यते।**

**॥ वा ॥ एच इग्वचनं सवर्णाकारनिवृत्त्यर्थम् ॥**

**भा :—एच इग्भवतीत्युच्यते। सवर्णनिवृत्त्यर्थमकारनिवृत्त्यर्थं च। सवर्णनिवृत्त्यर्थं तावत्—एङो ह्रस्वादेशशासनेषु अर्धं एकारोऽर्धं ओकारो वा मा भूदिति। अकारनिवृत्त्यर्थं च—इमावैचौ समाहारवर्णौं मात्राऽवर्णस्य, मात्रेवर्णोवर्णयोः। तयोर्ह्रस्वशासनेषु कदाचिदवर्णः स्यात् कदाचिदिवर्णोवर्णौ। मा कदाचिदवर्णं भूदित्येवमर्थमिदमुच्यते।**

प्र :—एच इग्घ्रस्वादेशे। **किमर्थमिति।** विनापि सूत्रेणेष्टसिद्धिरिति प्रश्नः। **एङ इति।** एङः प्रश्लिष्टवर्णत्वात् प्रश्लिष्टावर्णावर्धैकारौकारौ प्राप्नुतः। न तु विश्लिष्टावर्णयोरैचोरिति भावः। **समाहारवर्णाविति।** समाह्रियमाणावयवत्वात्। **मात्रावर्णस्येति।** अष्टादशभेदभिन्नस्यावर्णस्य मात्रावयव इति भेदसद्भावात् षष्ठ्या निर्देशः।

उ :—किंशब्दस्याक्षेपार्थत्वमाह—**विनेति।** एच इति वक्तव्ये एङ इत्युक्तेस्तात्पर्यमाह—**एङ इति।** समाहारशब्दः कर्मसाधनोऽवर्णशब्दस्तदवयवपरः, बहुव्रीहिसमास इत्यभिप्रेत्याह—**समाह्रियमाण इति।** बहुव्रीहिरयम्। **भेदभिन्नस्यावर्णस्य मात्रा ;** मात्राकालपरिच्छिन्नः।

**भा :—अस्ति प्रयोजनमेतत्। किं तर्हीति।**

**॥ वा ॥ दीर्घप्रसङ्गस्तु ॥**

**भा :—दीर्घास्त्विकः प्राप्नुवन्ति। किं कारणम्?। स्थानेऽन्तरतमो भवतीति। ननु च ह्रस्वादेश इत्युच्यते तेन दीर्घा न भविष्यन्ति। विषयार्थमेतत् स्यात्—एचो ह्रस्वप्रसङ्गे इग्भवतीति।**

**॥ वा ॥ दीर्घाप्रसङ्गस्तु निवर्तकत्वात् ॥**

**भा :—दीर्घाणां त्विकामप्रसङ्गः। किं कारणम्?। निवर्तकत्वात्। नानेनेको निर्वर्त्यन्ते। किं तर्हि? अनिको निवर्त्यन्ते। सिद्धा यत्र ह्रस्वा इकश्चानिकश्च। तत्रानेनानिको निवर्त्यन्ते।**

प्र :—**दीर्घास्त्विति।** स्वतन्त्रमिदं निर्वर्तकमिति भावः। भाव्यमानस्यापि सवर्णग्रहणं दृश्यते अमुभ्यामित्यादाविति दोषोपन्यासः। **ननु चेति ;** अयं हि वाक्यार्थः, एचो ह्रस्वप्रसङ्गे इगेव ह्रस्व इति। **विषयार्थमिति।** यत्र

ह्रस्वो विधीयते तत्रैवास्योपस्थानं यथा स्यात्। देवदत्तेति प्लुतादिविधावुपस्थानं मा भूत्। अस्मिंश्चोपस्थिते वाक्यभेदेनैच इको विधीयमाना अन्तरतमा दीर्घा एव प्राप्नुवन्ति। ह्रस्वस्य बाधितत्वाद्दीर्घेषु कृतेषु पुनर्ह्रस्वाप्रसङ्गः। **निवर्तकत्वादिति।** एकवाक्यभावेनैच इगेव ह्रस्वो भवति नान्य इत्येवमनिको व्यावर्त्यन्ते। यदि तर्ह्येक-वाक्यता एज्व्यतिरेकेणान्यस्य ह्रस्वो न प्राप्नोति। नैषः दोषः। पूर्वं ह्रस्वश्रुत्या अच उपस्थानात् ह्रस्वत्वं क्रियते। तत्रैचोऽप्यन्तर्भावात् ह्रस्वे क्रियमाणे एच इगित्यस्योप-स्थानम्।

उ:—नन्वस्य ह्रस्वविधिनैकवाक्यत्वात् कथं दीर्घप्रसङ्गः; अत आह—**स्वतन्त्र-मिति। अमूभ्यामिति;** अत्रापि दीर्घस्थाने दीर्घस्यैव प्रसङ्ग इत्यर्थः। **अयमिति।** ह्रस्वविधिनैकवाक्यत्वमित्याशयः। **दे ३ वदत्तेति।** गुरोरनृत इति प्लुतः। आदिनोदात्ता-दिग्रहः। **अस्मिन्निति।** ह्रस्वविधिस्थले एतस्मिन्नुपस्थिते सतीत्यर्थः। ननु दीर्घानन्तरं पुनर्ह्रस्वः किं न स्याद्; अत आह—**ह्रस्वस्येति।** दीर्घेणेत्यादिः। एकवाक्यभावो नाम एच इगित्यस्य ह्रस्वविशेषणत्वं न त्वन्योन्यवियोगाभावः। अत एव निवर्तकत्व-मुपपद्यते। एतदजानानश्शङ्कते—**यदीति।** ह्रस्वविधौ स्थानिनिर्देशार्थमेच इत्य-स्यान्वयावश्यकत्वादन्यत्राप्रसङ्ग इत्यर्थः। परिभाषाद्वयानुग्रहाय क्रमेण द्वाभ्यामन्वया-दिष्टसिद्धिरिति परिहरति—**नैष इति।** [1]**तत इति;** इगित्यस्य ह्रस्वविशेषणत्वे ह्रस्वश्रुतेरिग्विषय इति संकोचमात्रं न कस्यचिदपि बाधक इति भावः।

**भा:—सवर्णनिवृत्त्यर्थेन तावन्नार्थः।**

**॥ वा ॥ सिद्धमेङः सस्थानत्वात् ॥**

**भा:—सिद्धमेतत्। कथम्?। एङः सस्थानत्वाद् इकारो-कारौ भविष्यतः? अर्ध एकारोऽर्ध ओकारो वा न भविष्यति। ननु च एङः सस्थानतरावर्धैकारार्धौकारौ। न तौ स्तः। यदि हि तौ स्यातां तावेवायमुपदिशेत्। ननु च भोश्छन्दोगानां सात्य-मुग्रिराणायनीया अर्धमेकारमर्धमोकारं चाधीयते—'सुजाते एश्व-सूनृते' 'अध्वर्यो ओद्रिभिः सुतम्' 'शुक्रन्ते एन्यद्' 'यजतं ते**

(१) मु. पु. तत्र

एन्यत्' इति। पार्षदकृतिरेषा तत्रभवताम्। नैव लोके नान्यस्मिन्वेदे—अर्ध एकारः, अर्ध ओकारो वास्ति। अकारनिवृत्त्यर्थेनापि नार्थः।

॥ वा ॥ ऐचोश्चोत्तरभूयस्त्वात् ॥

भाः—ऐचोश्चोत्तरभूयस्त्वादवर्णो न भविष्यति। भूयसी मात्रेवर्णोवर्णयोः, अल्पीयस्यवर्णस्य। भूयस एव ग्रहणानि भविष्यन्ति। तद्यथा "ब्राह्मणग्राम आनीयताम्" इत्युच्यते। तत्र चावरतः पञ्चकारुकी भवति। एच इग्घ्रस्वादेशे ॥ ४७ ॥

प्र :—**सिद्धमेङ इति।** एकारस्य तालव्यस्य तालव्य इकार ओकारस्यौष्ठ्यस्योकार ओष्ठ्यो भविष्यतीत्यर्थः। **ऐचोश्चेति।** ऐकारः कण्ठ्यतालव्य औकारः कण्ठ्योष्ठ्यः। न च तथाविधो ह्रस्वोऽस्तीति अवयवान्तरतमेन भाव्यम्। भूयसा चावयवेन व्यपदेशो भवति। तदात्मक इव हि समुदायो लक्ष्यते इतीदूतावेव भविष्यतः। **ब्राह्मणग्राम इति।** ब्राह्मणानां वास्तव्यत्वे उदाहरणम्। न तु स्वामित्वे।

उ :—**एकारस्येति।** एकारः केवलतालव्यः ओकारश्च केवलौष्ठ्य इति मतानुसारेणेदम्। केचित्तु एङः स्थानद्वयमतेऽपि पौर्वापर्ये पूर्वदौर्बल्यमिति न्यायेन परान्तरतमेन पूर्वान्तरतमबाधात् इष्टसिद्धिरित्याहुः। अत्रेदं चिन्त्यम्। प्रतिद्वन्द्वपच्छेदोद्धात्रपच्छेदयोः क्रमेणोत्पत्तौ स न्यायः। यौगपद्ये तु विप्रतिषेधाद्विकल्पः स्यादिति तत्पूर्वन्यायेन तत्रापि विकल्प एव। तत्राखण्डवर्णस्य युगपदुत्पत्तेरुत्पत्तिद्वयाभावेन विकल्पस्यैवोचितत्वात्। अत एव भाष्ये "कदाचिदवर्णं कदाचिदिवर्णोवर्णे" इत्युक्तम्। ऐचोऽपि इदमेव समाधानमित्युत्तरभूयस्त्वोपादानवैयर्थ्याच्च। न च परिहारान्तरत्वं न्यायाप्रवृत्तेरुक्तत्वात्। न चैङः स्थानद्वयमते कथमकारनिरास इति वाच्यम्। सूत्रप्रत्याख्यानपक्षे एङोऽपि उत्तरस्य किञ्चिदाधिक्यस्याङ्गीकार्यत्वात्। भाष्ये **तावेवेति ;** प्रत्याहारसूत्र इत्यादिः। भाष्ये **ब्राह्मणग्राम** इति सप्तमी। आनयनकर्म च गवादिकम्। यद्वा प्रथमान्तम्। **आनीयतां ;** प्राप्यताम्। एकब्राह्मणस्वामिकस्य शूद्रग्रामस्य ब्राह्मणग्रामत्वात् दृष्टान्ततानुपपत्तिः ; अत आह—**वास्तव्य इति।** स्वामिनोऽस्वामिनो वा यत्र बहवो ब्राह्मणाः सन्ति तद्विषयप्रयोग उदाहरणमित्यर्थः। 'वसेस्तव्यत्कर्तरि णिच्च' इति कर्तरि व्युत्पादितो वास्तव्यशब्दः। भाष्ये **तत्र ;** ग्रामे। **अवरतः** अतिन्यूनत्वे। **पञ्चकारुकी ;** तक्षायस्काररजकनापितचर्मकाराः।

सू.—षष्ठी स्थानेयोगा ॥ १। १। ४८ ॥

**भा :—किमिदम्—स्थानेयोगेति ?। स्थाने योगोऽस्याः सेयं स्थानेयोगा। सप्तम्यलोपो निपातनात्। तृतीयाया वा एत्वम्। स्थानेन योगोऽस्याः सेयं स्थानेयोगेति।**

प्र :—षष्ठी स्थानेयोगा। **किमिदमिति।** समासे विभक्तिश्रवणाप्रसङ्गः। असमासेऽपि युक्तिरिति प्राप्नोति, न तु योगेति प्रश्नः। **स्थाने योगोऽस्या इति।** स्थाननिमित्तसंबन्धेत्यर्थः। **तृतीयाया वेति।** निपातनादिति योज्यम्। यथा देवदत्तस्य यज्ञदत्त इति पुत्रत्वादिद्वारकः संबन्धोऽवगम्यते, एवम् 'अस्तेर्भूः' इत्यत्रापि अस्यां परिभाषायां सत्यां स्थाननिमित्तः संबन्धोऽवसीयते। स्थानमर्थ इति केचिदाहुः। तिष्ठन्त्यस्मिन् शब्दा इति स्थानम्। अर्थे च शब्दास्तिष्ठन्ति। तेनास्तेरर्थे भूरित्यर्थः। अन्ये त्वाहुः—'अस्जो रोपधयो रमन्यतरस्याम्' इत्यादौ रोपधादीनामानर्थक्याद्भावसाधनः प्रसङ्गवाची स्थानशब्द आश्रीयते। तेनास्तेः प्रसङ्गे अस्तेः प्राप्तौ भूः प्रयुज्यत इत्यर्थः संपद्यते। स्वाभाविकोऽस्तेरप्रयोग आर्धधातुके भूशब्दस्य च प्रयोगोऽनेन प्रकारेणान्वाख्यायते।

उ :—**विभक्तेरिति।** पूर्वपद इत्यादिः। **युक्तिरिति।** षष्ठीत्यनेन सामानाधिकरण्याय स्त्रीत्वविशिष्टकर्मणि घञोऽपवादः क्तिन् स्यादित्यर्थः। सप्तम्यर्थमाह—**स्थाननिमित्तेति;** बहुव्रीहिः। **योज्यम्;** अनुषञ्जनीयम्। तथा च तृतीयायाः सुपो धात्विति लुकि अकारस्य चैत्वं निपातनादित्यर्थः। लोके प्रकरणादिवशात् संबन्धविशेषनिर्णयः, अत्र सूत्रादित्याह—**यथेति। स्थाननिमित्त इति;** स्थानं संबन्धनिमित्तं, संबन्धस्तु श्रुतानामस्त्यादीनामिति ज्ञेयम्। स्थानशब्दार्थमाह—**अर्थ इति। अर्थे चेति;** प्रतिपाद्यप्रतिपादकभावसंबन्धेनेति यावत्। तेन स्थान्यर्थाभिधानसमर्थ एवादेशो भवतीति सिद्धम्। **अस्तेरिति;** आर्धधातुके आस्तेरर्थे भूः [१]प्रयुज्यते इत्यर्थः। निरर्थकसंग्रहाय मतान्तरमाह—**अन्ये त्विति।** अयमर्थः शब्दनित्यत्वानुकूल इत्याह—**स्वाभाविक इति।** प्रयोग इत्यत्राप्येतदनुषञ्जनीयम्।

**भा :—किमर्थं पुनरिदमुच्यते ?।**

---

(१) ग. प्रयोज्यः

॥ वा ॥ षष्ठ्याः स्थानेयोगवचनं नियमार्थम् ॥

भा :—नियमार्थोऽयमारम्भः। एकशतं षष्ठ्यर्थाः, यावन्तो वा सन्ति ते सर्वे षष्ठ्यामुच्चरितायां प्राप्नुवन्ति। इष्यते च—व्याकरणे या षष्ठी सा स्थानेयोगैव स्यादिति। तच्चान्तरेण यत्नं न सिध्यतीति षष्ठ्याः स्थानेयोगवचनं नियमार्थम्। एवमर्थमिदमुच्यते।

प्र :—**किमर्थमिति।** विनापि सूत्रेणेष्टं सिध्यति, आरब्धे चातिप्रसङ्ग इति प्रश्नः। **एकशतमिति।** षष्ठीदण्डकपाठाश्रयेणैतदुक्तम्। **यावन्तो वेति।** शब्दे यावतां संभव इत्यर्थः।

उ :—**अतिप्रसङ्गः;** अवयवषष्ठ्यादौ। **षष्ठीदण्डकः** ग्रन्थविशेषः। यावन्तो वेत्यस्य पूर्वेण गतार्थत्वं निराह—**शब्द इति।** निर्णयाभिधानानन्तरं सन्दिग्धाभिधानमयुक्तम्; अतो वा आह—**शब्द इति।**

भा :—अस्ति प्रयोजनमेतत्। किं तर्हीति।

॥ वा ॥ अवयवषष्ठ्यादिष्वतिप्रसङ्गः शासो गोह इति ॥

भा :—अवयवषष्ठ्यादयस्तु न सिध्यन्ति। तत्र को दोषः?। "शास इदङ्हलोः" इति शासेश्चान्त्यस्य स्यादुपधामात्रस्य च।

॥ वा ॥ अवयवषष्ठ्यादीनां चाऽप्राप्तिर्योगस्याऽसंदिग्धत्वात् ॥

भा :—अवयवषष्ठ्यादीनां च नियमस्याप्राप्तिः। किं कारणम्?। योगस्यासंदिग्धत्वात्। संदेहे नियमः। न चावयवषष्ठ्यादिषु संदेहः। किं वक्तव्यमेतत्?। न हि। कथमनुच्यमानं गंस्यते?। लौकिकोऽयं दृष्टान्तः। तद्यथा लोके कश्चित् कंचित् पृच्छति—ग्रामान्तरं गमिष्यामि पन्थानं मे भवानुपदिशत्विति। स तस्मायाचष्टे—अमुष्मिन्नवकाशे हस्तदक्षिणो ग्रहीतव्यः, अमुष्मिन्नवकाशे हस्तवाम इति। यस्तत्र तिर्यक्पथो भवति, न तस्मिन् संदेह इति कृत्वा नासावुपदिश्यते। एवमिहापि संदेहे नियमः। न चावयवषष्ठ्यादिषु संदेहः। अथवा स्थाने अयोगा स्थानेऽयोगा। किमिदमयोगेति। अव्यक्तयोगा

**अयोगा। अथवा—योगवती योगा। का पुनर्योगवती?। यस्या बहवो योगाः। कुत एतत्?। भूम्नि हि मतुब् भवति।**

**॥ वा ॥ विशिष्टा वा षष्ठी स्थानेयोगा ॥**

**भा:—अथवा किंचिल्लिङ्गमासज्य वक्ष्यामि—इत्थंलिङ्गा षष्ठी स्थानेयोगा भवतीति। न च तल्लिङ्गमवयवषष्ठ्यादिषु करिष्यते।**

प्र:—**अवयवेति।** नियमेन संबन्धान्तराणां निवर्तनादिति भावः। **उपधामात्रस्य चेति।** शासिना संबन्धाभावात् पचादिसंबन्धिनोऽपीत्यर्थः। तत्र ह्यनिदितामित्यत उपधाया इत्यनुवर्तते। **असन्दिग्धत्वादिति।** अनियमप्रसङ्गे हि नियमः क्रियते, न तु प्रागेवावस्थिते नियमे। **हस्तदक्षिण इति।** हस्तो दक्षिणो यस्येति बहुव्रीहिः। भाष्यकारवचनात्सर्वनाम्नोऽपि परनिपातः। **अयोगेति।** योगमन्तरेण षष्ठ्या एवाभावाद्विशिष्टो योगो यस्या नास्तीति सामर्थ्यात्प्रतीयते। **योगवतीति।** षष्ठ्या अवश्यंभावी योग इति भूम्नि सामर्थ्यात् मत्वर्थीयोऽकारः। **किंचिल्लिङ्गमिति;** कलादिकम्।

उ:—**नियमेन;** 'षष्ठी स्थानेयोगा' इत्यनेन। **शासिनेति;** शास इति षष्ठ्या अन्तेऽल्युपसंहृतत्वेनोपधान्वयाभावेन योग्यतया धातुमात्रस्योपधा प्राप्नोतीत्यर्थः। अवयवषष्ठ्यादीनामिष्टानां निवर्तनाय नियमस्याप्राप्तिरिति वार्तिकार्थः। **सर्वनाम्नोऽपीति।** 'बहुव्रीहौ सर्वनामसंख्ययोः पूर्वनिपातः' इत्येतद्बाधनेनेत्यर्थः। अयोगशब्दस्याव्यक्तयोगार्थकत्वमानयति—**योगमिति।** सामान्यवाचिनो योगशब्दस्य तद्विशेषलक्षकस्य नञ्समास इत्यर्थः। भूम्नि मतुबपि सामर्थ्यलभ्य इत्याह—**षष्ठ्या इति।** मतुबित्यस्य तात्पर्यमाह—**मत्वर्थीय इति। अकार इति;** अर्श आदेराकृतिगणत्वाद्योगशब्दादच्प्रत्यय इत्यर्थः।

**भा:—यद्येवं "शास इदङ्हलोः" "शा हौ" शासिग्रहणं कर्तव्यम्—स्थानेयोगार्थं लिङ्गमासंक्ष्यामीति। न कर्तव्यम्। यदेवादः पुरस्तादवयवषष्ठ्यर्थं प्रकृतम् एतदुत्तरत्रानुवृत्तं सत् स्थानेयोगार्थं भविष्यति। कथम्?। अधिकारो नाम त्रिप्रकारः। कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति। यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माभिज्वलयति। अपरोऽधिकारो यथा रज्वा**

उ :—भाष्ये **यद्येवमिति।** इग्यणावयवषष्ठीत्वेन स्थानषष्ठीलिङ्गाभावात् तदर्थं शाविषौ शास इति पुनर्वक्तव्यमित्यर्थः। ननु चानुकृष्टं स्वरितयुक्तं चाधिकारद्वयमेव, त्रित्वं त्वयुक्तम्; अत आह—**पारार्थ्येति।** सुप्तिङित्यादिवल्लाक्षणिकोऽधिकारशब्द इति भावः। **अविशेषेणेति।** सहस्य स इति पूर्वसूत्रे यादृशं स्थानषष्ठीत्युक्तं निर्दिष्टं तादृशमेवोत्तरत्रानुकृष्यत इत्यर्थः। एतेन यत्र चकारस्तत्र स्वरितत्वयुक्तस्यापि तादृशस्यैवानुवृत्तिः न शब्दमात्रस्य। अन्यथा चकारवैयर्थ्यापत्तेरित्युक्तं भवति। भाष्ये—**एतदुत्तरत्रेति।** सूत्रान्तरे तत्सदृशशब्दान्तरस्यानुमितत्वादर्थान्तरपरत्वं युक्तमिति भावः। नन्वनुच्चरितस्य संप्रत्ययायोगात् तदङ्गीकृत्यानुच्चारणोक्तिरयुक्ता; अत आह—**स्वरितत्वेति।** अन्यत्रकृतलिङ्गस्यान्यत्र कार्यकरत्वेऽतिप्रसङ्गः; अत आह—**तत्संबन्धिन इति।** भाष्ये **अङ्गस्येति;** 'हलः' इति सूत्रस्यायमर्थः। अङ्गावयवाद्धल परं यदण्रूपं संप्रसारणं तदन्तस्याङ्गस्य दीर्घः स्यादिति। संवीतः। हल. किम्? उतम्। अङ्गावयवात् किम्? निरुतम्। तदन्तस्य किम्? विद्धम्। अणः किम्? तृतीयः। अत्र यद्यपि अङ्गस्येति हलो विशेषणम्। अण्रूपं संप्रसारणमङ्गस्य तथापि स्थानषष्ठ्या अन्त्येऽप्युपसंहारे सत्यङ्गान्त्यस्याणः संप्रसारणस्यैवं वस्तुतोऽङ्गस्येत्यवयवषष्ठ्यन्तस्याण्संप्रसारणविशेषणत्वमपि संभवतीत्यभिप्रेत्य भाष्ये अणपीत्याद्युक्तम्। [१]तद्ग्रहणाननुवृत्तावपि द्वितीयतृतीयेति निपातनाद्दीर्घाभाव इति वक्ष्यते। तथाप्यनुवृत्तिपक्षमाश्रित्याणपीत्युक्तम्। **स्थानषष्ठीत्वादिति।** नियमेनावयवषष्ठीत्वस्याबर्तनात्। अत एवाङ्गस्येत्यस्यानुवृत्तावपि अवयवषष्ठी न लभ्यत इति भावः। ननु देवदत्तस्य गुरु इति सम्बन्धमात्रबोधकत्वात् षष्ठ्याः कथमवयवावयविस्वस्वामिभावबोधकत्वम्; अत आह—**संबन्धेति।** सामान्यस्य सर्वविशेषैः संबन्धोपपत्तेरित्यर्थः। भाष्येऽर्थनिमित्ताः स्वस्वामिभावादयः, योनिनिमित्ताः पितापुत्रत्वादयः, मुखनिमित्ता गुरुशिष्यत्वादयः, स्रुवनिमित्ता ऋत्विग्यजमानत्वादयः। व्याख्यानेऽपि हेतुमाह—**अन्तरङ्गत्वादिति।** स्थानशब्दस्यार्थवाचित्वे तस्य शब्दप्रयोगहेतुत्वेनादौ बुद्धिसन्निधानादन्तरङ्गत्वम्, प्रसङ्गवाचित्वेऽपि प्रसक्तस्यैवानन्तर्यादिसंबन्धादादौ बुद्धिस्थत्वम्। मुख्ययुक्तिमाह—**लक्ष्येति।**

**भा :—न तर्हीदानीमयं योगो वक्तव्यः। वक्तव्यश्च। किं योजनम्? षष्ठ्यन्तं स्थानेन यथा युज्येत। यतः षष्ठ्युच्चारिता।**

---

(१) ग. अणग्रहणा.

**किं कृतं भवति ?। 'निर्दिश्यमानस्यादेशा भवन्ति' इत्येषा परिभाषा न कर्तव्या भवति ॥ षष्ठी स्थानेयोगा ॥**

प्र :—**यतः षष्ठीति ।** तेन 'पादः पद्' इत्यस्यायमर्थः । पादन्तस्याङ्गस्य योऽवयवः पाच्छब्दः सूत्रे षष्ठ्या निर्दिष्टस्तस्य शब्दस्य पच्छब्द आदेशो भवति न तु प्रतीयमानस्य पदान्तस्य । अस्यैव सूत्रस्य निर्दिश्यमानस्यादेशा भवन्तीत्ययमर्थः । षष्ठीति षष्ठ्यन्तं गृह्यते । तेन षष्ठ्यन्तमेव निर्दिश्यमानं स्थानेन युज्यते, न प्रतीयमानमित्यर्थः । अलोऽन्त्यस्यादेः परस्येत्येतत्तु वचनसामर्थ्यान्न बाध्यते ।

उ :—ननु पादन्तस्याङ्गस्य स्थानित्वात्कथं तन्मात्रस्य स्थानित्वलाभः ; अत आह—**तेनेति ।** पाद इत्यावर्तते । एकमङ्गविशेषणार्थमितरत् स्थानिनिर्देशार्थम् । अङ्गस्येति चावयवषष्ठीति भावः । ननु सूत्रात्परिभाषाऽप्रनीतेर्न कर्तव्येत्ययुक्तम् ; अत आह—**अस्यैवेति ।** ननु 'निर्दिश्यमानस्यादेशा भवन्ति' इति परिभाषयैव सिद्धं, किमनेनेत्यत आह—**अस्यैवेति** केचित् । तच्चिन्त्यम् । न कर्तव्येति भाष्यानन्तरं शङ्कानुत्थानात् । **स्थानेन ;** प्रसङ्गेन, लक्षणया, आदेशेन वा । एवं सति 'आदेः परस्य' 'अलोऽन्त्यस्य' इति च निर्विषयं स्याद् ; अत आह—**अल इति ।** परत्वादनवकाशत्वाच्च नाभ्यामेतदेव बाध्यत इत्याहुः

सू.—स्थानेऽन्तरतमः ॥ १। १। ४९ ॥

**भा :—किमुदाहरणम् ?। "इको यणचि" दध्यत्र मध्वत्र । तालुस्थानस्य तालुस्थानः, ओष्ठस्थानस्य ओष्ठस्थानो यथा स्यादिति । नैतदस्ति । संख्यातानुदेशेनाप्येतत्सिद्धम् । इदं तर्हि "तस्थस्थमिपां तांतंतामः" इति । एकार्थस्यैकार्थः, द्व्यर्थस्य द्व्यर्थो, बह्वर्थस्य बह्वर्थो, यथा स्यादिति । ननु च एतदपि संख्यातानुदेशेनैव सिद्धम् । इदं तर्हि—"अकः सवर्णे दीर्घः" इति दण्डाग्रम्, क्षुपाग्रम्, दधीन्द्रः, मधूष्ट्रः । कण्ठस्थानयोः कण्ठस्थानस्तालुस्थानयोस्तालुस्थान ओष्ठस्थानयोरोष्ठस्थानो यथा स्यात् ।**

प्र:—स्थानेऽन्तरतमः । **किमुदाहरणमिति ;** क्वचित् लक्षणान्तरेणेष्टं सिद्धमिति प्रश्नः । **इको यणचि, दध्यत्रेति;** अस्य सूत्रस्य लक्षणमप्युदाहरणं, प्रयोगोऽपीत्युभयो-

पन्यासः। इको ह्रस्वादिभेदात् षट्षष्टिर्यणस्तु सप्तेति वैषम्यात्संख्यातानुदेशो न सिध्यतीत्यर्थः। [1]नैतदस्तीति। प्रत्याहारपाठे शब्दतः साम्यमस्तीति भावः। घस्लादेश इत्यादौ लकारोऽपि लकारस्यादेशो दृश्यत इति लकारस्य स्थानित्वाभावो नाशङ्कनीयः। **एकार्थस्येति**। सादृश्यहेतुधर्मोपलक्षणमेतत्। तेन प्रत्यक्त्वादयोऽपि धर्मा गृह्यन्ते।

उ:—**कश्चिदिति**। उदाहरणासंभवाभिप्रायेण न प्रश्नः। किं तु 'इको यणचि' इत्याद्युदाहरणं ये मन्यन्ते तन्निरासार्थमित्यर्थः। ननु लक्षणमस्य नोदाहरणं किं तु प्रयोग एव; अत आह—**अस्येति**। यथासंख्यसूत्रस्य तु लक्षणमेव विषयः, कर्मणीत्यादेः प्रयोग एव, अस्य द्वयमप्युदाहरणम्। इको यणचीत्यत्रैव स्थित्वा इकारस्य यकारो भवतीत्यादेः ज्ञातुमशक्यत्वात् प्रयोगे त्विकारस्थानिको यकार इति प्रतीयत एवेति। संख्यातानुदेशोऽत्र न संभवतीत्याह—**इक इति**; त्रयाणामष्टादश भेदाः। लृवर्णस्य दीर्घाभावात् द्वादशेति षट्षष्टिः सानुनासिकनिरनुनासिकत्वेन यवला द्विविधाः। रेफस्यानुनासिकाभावाद्यणः सप्त। **संख्यातानुदेशः**; क्रमेणान्वयः। **यत्नः**; सूत्रारम्भः। **शब्दत इति**। प्रत्याय्यानां विषमसंख्यत्वेऽपि प्रत्यायकानां समसंख्यत्वादिति भावः। ननु क्लृपिव्यतिरिक्ते लृकाराभावात् तत्र च यणोऽप्रसङ्गात् स्थानित्रयमादेशचतुष्टयमिति न संख्यातानुदेशः; अत आह—**घस्लादेश इति**। तत्स्थानापत्त्या तदर्थत्वं नादेशानां, किं तु शब्दार्थसंबन्धानां नित्यत्वात्स्वभावत एव इत्यभिप्रेत्य **एकार्थस्येति** भाष्यम्। तत्र तंसस्तमपि प्राप्नोति थसस्तामपि; अत आह—**सादृश्येति**। अन्तरतमत्वेनेत्यर्थः। उत्तमपुरुषेण प्रत्यक्त्वं, मध्यमेन पराक्त्वमाभिमुख्यं वा प्रतीयते। प्रथमेन त्वनियतम्। बहुवचनेन युष्मदस्मत्सामानाधिकरण्ययोग्यत्वग्रहः।

**भा:—अथ स्थान इति वर्तमाने पुनः स्थानग्रहणं किमर्थम्। यत्रानेकमान्तर्यं तत्र स्थानत एवान्तर्यं बलीयो यथा स्यात्। किं पुनस्तत्? चेता स्तोता। प्रमाणतोऽकारो गुणः प्राप्नोति, स्थानत एकारौकारौ। पुनः स्थानग्रहणादेकारौकारौ भवतः।**

प्र:—**यत्रानेकमिति**; स्थानग्रहणेऽनुवर्तमाने वाक्यभेदः क्रियते। स्थानेऽन्तरतमो भवति, यत्र चानेकमान्तर्यमस्ति तत्र स्थानकृतमेवान्तर्यमाश्रीयत इति।

(१) सिध्यतीति यत्न इत्युद्योतनपाठः

वाक्यभेदस्य च तमग्रहणमेव लिङ्गम्। स्थानकृत एव हि सादृश्ये गृह्यमाणे सादृश्यान्तरपरित्यागात्तमग्रहणमनर्थकमेव स्यात्।

उ:—भाष्ये **प्रमाणत इति;** मात्राकालस्य मात्राकालः, ह्रस्वस्य ह्रस्व इति यावत्। **वाक्यभेद इति।** अनुवर्तमानेन प्रसङ्गवाचिना स्थानग्रहणेनैकं वाक्यम्। अत्रत्येन नादवादिवाचिना द्वितीयम्। द्वितीयवाक्ये तृतीयाया व्यत्ययेन सप्तमी स्थानेनान्तरतम इत्यर्थः। नियमार्थमिदम्। तेनानियमप्रसङ्गे नियम इति सामर्थ्यात् यत्रानेकमान्तरतम्यमिति लभ्यमिति ज्ञेयम्। नन्विकः प्रसङ्गे स्थानेनान्तरतमो यण् भवतीत्येवमेकवाक्यत्वसंभवे वाक्यभेदोऽसाधकः, तथाचोक्तनियमो न सिध्येत्; अत आह—**वाक्येति।** लिङ्गत्वमेवाह—**स्थानकृत इति।** एकवाक्यत्वपक्षे सादृश्यान्तराप्रसक्तेस्तमब् व्यर्थः। [1]वाग्घरतीत्यादौ चतुर्थस्य स्थानकृतातिशयाभावेन तमपापि द्वितीयतृतीयनिवृत्तिर्न स्यात्। वाक्यभेदे तु पूर्वेण सदृशमात्रस्य प्राप्तौ द्वितीयेन नियम उपपद्यते। हकारस्यापि नियमेन द्वितीयाद्यनिवृत्तावपि पूर्ववाक्येन तमप्सहितेन तन्निवृत्तिरुपपन्नेति भावः।

**भा:—अथ तमग्रहणं किमर्थम्। "झयो होऽन्यतरस्याम्" इत्यत्र सोष्मणः सोष्माण इति द्वितीयाः प्रसक्ताः नादवतो नादवन्त इति तृतीयाः प्रसक्ताः। तमग्रहणाद्ये सोष्माणो नादवन्तश्च ते भवन्ति चतुर्थाः—वाग्घसति त्रिष्टुब्भसति।**

प्र: **सोष्मण इति।** ऊष्मत्वगुणयुक्तस्येत्यर्थः। **तमग्रहणादिति।** ईषत्सदृशेऽपि लोके सदृशशब्दव्यवहारदर्शनादिह तमग्रहणं कृतम्।

उ:—सदृशशब्दप्रयोगोपपत्तये भावप्रधान ऊष्मशब्द इत्याह—**ऊष्मत्वेति।** ननु सुसदृशस्यैव सदृशान्तरादिशब्दवाच्यत्वात्तमपो वैयर्थ्यम्; अत आह—**ईषदिति।**

**भा:—किमर्थं पुनरिदमुच्यते?।**

**॥ वा ॥ स्थानिन एकत्वनिर्देशादनेकादेशनिर्देशाच्च सर्वसप्रसङ्गस्तस्मात् स्थानेऽन्तरतमवचनं नियमार्थम् ॥**

**भा:—स्थान्येकत्वेन निर्दिश्यते—अक इति। अनेकश्च पुनरादेशः प्रतिनिर्दिश्यते—दीर्घ इति। स्थानिन एकत्वनिर्देशा-**

---

(१) ग. घ.-

दनेकादेशनिर्देशाच्च। सर्वप्रसङ्गः सर्वे सर्वत्र प्राप्नुवन्ति। इष्यते चान्तरतमा एव स्युरिति। तच्चान्तरेण यत्नं न सिध्यति। तस्मात् स्थानेऽन्तरतमवचनं नियमार्थम्। एवमर्थमिदमुच्यते। अस्ति प्रयोजनमेतत्। किं तर्हीति।

प्र :—**किमर्थमिति ;** यदीदं नोच्येत तदा किं स्यादिति प्रश्नः। **स्थानिन इति।** यद्यपि एक इत्यनेन स्थानिनो बहव उपात्तास्तथापि प्रयोगे एकैकः स्थानी, तस्य पर्यायेण बहवो दीर्घा आदेशाः प्राप्नुवन्तीत्यर्थः।

उ :—ननु सूत्रस्य प्रथमसिद्धप्रयोजनकथनात् प्रश्नानुपपत्तिः ; अत आह—**यदीति।** उक्तमेव वार्तिककारूढं कर्तुं पुनः प्रश्न इति भावः। यद्यप्येतद्वार्तिकव्याख्यानानन्तरमेव किमुदाहरणमिति भाष्ये युक्तम्। तथाऽप्युदाहरणकथनानन्तरं वार्तिकं सुबोधमिति इदं पश्चात्कृतमिति ज्ञेयम्। भाष्ये **एकत्वेनेति।** स्थानिनां प्रत्येकमेकत्वाद्दीर्घाणामष्टत्वादुदात्तादिभेदेनाष्टचत्वारिंशत्त्वाद्वा बहुत्वमित्यभिसन्धायाह—**यद्यपीति।** सर्वदीर्घाणां युगपदेकेनोच्चारणमशक्यम् ; अतः **पर्यायेणेति।**

**भा : —यथा पुनरियमन्तरतमनिर्वृत्तिः; सा किं प्रकृतितो भवति—स्थानिन्यन्तरतमे षष्ठीति। आहोस्विदादेशतः—स्थाने प्राप्यमाणानामन्तरतम आदेशो भवतीति। कुतः पुनरियं विचारणा? उभयथा हि तुल्या संहिता "स्थानेऽन्तरतम उरण् रपरः" इति। किं चातः?। यदि प्रकृतितः "इको यणचि" इति यणां येऽन्तरतमा इकस्तत्र षष्ठी, यत्र षष्ठी तत्रादेशा भवन्तीतीहैव स्याद्—दध्यत्र, मध्वत्र। कुमार्यर्थं ब्रह्मबन्ध्वर्थमित्यत्र न स्यात्। आदेशतः पुनरन्तरतमनिर्वृत्तौ सत्यां सर्वत्र षष्ठी। यत्र षष्ठी तत्रादेशा भवन्तीति सर्वत्र सिद्धं भवतीति। तथा "इको गुणवृद्धी" गुणवृद्ध्योर्येऽन्तरतमा इकस्तत्र षष्ठी, यत्र षष्ठी तत्रादेशा भवन्तीतीहैव स्याद्—नेता लविता नायको लावकः। चेता स्तोता चायकः स्तावक इत्यत्र न स्यात्। आदेशतः पुनरन्तरतमनिर्वृत्तौ सत्यां सर्वत्र षष्ठी। यत्र षष्ठी तत्रादेशा भवन्तीति सर्वत्र सिद्धं भवतीति। तथा—ऋवर्णस्य गुणवृद्धिप्रसङ्गे—गुणवृद्ध्योर्यदन्तरतममृवर्णं तत्र षष्ठी।**

**यत्र षष्ठी तत्रादेशा भवन्तीतीहैव स्यात्—कर्ता हर्ता आस्तारकः [1]निवारक इति। आस्तरिता निपरिता कारको हारक इत्यत्र न स्यात्। आदेशतः पुनरन्तरतमनिर्वृत्तौ सत्यां सर्वत्र षष्ठी। यत्र षष्ठी तत्रादेशा भवन्तीति सर्वत्र सिद्धं भवतीति।**

प्र :—**यथा पुनरिति।** येन प्रकारेण संहितापाठलक्षणेनेत्यर्थः। प्रतिसूत्रं तु विच्छिद्य पाठे संशयाभावः। पदप्रकृतिः संहितेति संहिताया एव नित्यत्वाद्यतः पदापोद्धारे क्रियमाणेऽन्तरतमशब्दः किं सप्तम्यन्तोऽपोद्ध्रियते, अथ प्रथमान्त इति प्रश्नः। तत्र सप्तम्यन्तपक्षे षष्ठीति वर्तते अन्तरतमो य आदेशस्य स्थानी तत्रैव षष्ठी यत्रैव षष्ठी तत्रादेश इति प्रकृतिर्नियम्यते। प्रथमान्तपक्षे तु अन्तरतम आदेशो भवतीत्यादेशो नियम्यते। **इहैवेति।** यणामर्धमात्रिकाणां सदृशा इको मात्रिका न तु दूरविप्रकृष्टा दीर्घा इति भावः। आदेशनियमपक्षे चैतदुदाहरणत्वेन दूषितम्। प्रकृतिनियमपक्षे तु भवत्यवैतदुदाहरणम्। **चायक इति।** 'अचो ञ्णिति' इत्यत्रापि अयमेव दोष इत्युपन्यासः। **ऋवर्णस्येति।** ऋकारस्य ह्रस्वस्यैव गुणः स्यात् दीर्घस्यैव च वृद्धिः इति विशेषप्रदर्शनाय ऋवर्णस्य पृथगुपन्यासः।

उ :—यथा सेत्यनयोरनन्वयादाह—**येनेति।** यथाशब्दो लक्षणया संहितापाठपरः। तथा च संहितापाठेनान्तरतमशब्दनिष्पत्तिः कर्तव्येति [2]भाष्यार्थः। संहितापाठस्य संशयहेतुत्वं व्यतिरेकमुखेनाह—**विच्छिद्येति।** तर्हि विच्छिद्यैव पाठोऽस्तु; अत आह—**पदेति।** संहिताया विशेषणमिदम्। षष्ठीसमासो बहुव्रीहिर्वा। स्वरूपकथनमेतत्। **नित्यत्वात्;** प्रवाहानादित्वात्। पाणिनिना संहितयैव सूत्राणां पाठादिति यावत्। अत एव वृद्धिरादैच् अदेङ् गुण इत्याद्युपपन्नमिति भावः। सा किमिति भाष्याभिप्रेतं संशयस्वरूपमाह—**पदेति।** उक्तसंशयस्य फलभूतसंशयपर्यवसन्नतया भाष्यं योजयति—**तत्रेति।** भाष्ये **सा;** अन्तरतमता। **प्रकृतितः;** प्रकृतेः स्थानिनः विशेषणं भवति। **आदेशतः;** आदेशस्य वेतिविवक्षितम्। तदुभयोपादानं स्थानिन्यन्तरतमे, स्थाने प्राप्यमाणानामिति च ज्ञेयम्। इहैवेत्येतदुपपादयति—**यणामिति।** पूर्वं दूषितस्येदानीमुदाहरणत्वेनोपादानमयुक्तम्; अत आह—**आदेशेति। भवतीति;** यथासंख्यमित्यादेशनियमार्थस्य स्थानिनियमस्थले अप्रवृत्तेरिति भावः। भाष्ये **नेतेति;** दीर्घस्य गुणस्य दीर्घ इगन्तरतमः स्थानी न ह्रस्व इत्यर्थः। ननु 'इको गुणवृद्धी' इत्युक्त्वा [3]नायक इत्युदाहरणमयुक्तम्।

---

(१) मु. पु. निपारकः (२) ग. यथेतीत्यधिकम्
(३) ग. चायक

'अचो ञ्णिति' इत्यत्र निर्दिष्टस्थानिकत्वेनैकपरिभाषानुपस्थानात्; अत आह—**अच इति।** ननु ऋवर्णस्याजिकोरन्तर्भावात् पुनरुपन्यासो व्यर्थः; अत आह—**ऋकारस्येति।** भाष्ये **आस्तारकः निवारक इति।** स्तॄञ् आच्छादने वृञ् वरण इति ऋकारान्तौ क्र्यादिषु (स्वादि ?)।

**भा :—अथादेशतोऽन्तरतमनिर्वृत्तौ सत्यामयं दोषः—'वान्तो यि प्रत्यये' स्थानिनिर्देशः कर्तव्यः—ओकारौकारयोरिति वक्तव्यम्। एकारैकारयोर्मा भूदिति। प्रकृतितः पुनरन्तरतमनिर्वृत्तौ सत्यां वान्तादेशस्य एक्षु यान्तरतमा प्रकृतिस्तत्र षष्ठी। यत्र षष्ठी तत्रादेशा भवन्तीत्यन्तरेण स्थानिनिर्देशं सिद्धं भवति। आदेशतोऽप्यन्तरतमनिर्वृत्तौ सत्यां न दोषः। कथम्?। वान्तग्रहणं न करिष्यते—"यि प्रत्यये" एचोऽयादयो भवन्तीत्येव। यदि न क्रियते, चेयं जेयमित्यत्रापि प्राप्नोति। "क्षय्यजय्यौ शक्यार्थे" इत्येतन्नियमार्थं भविष्यति-क्षिज्योरेवैच इति। तयोस्तर्हि शक्यार्थादन्यत्रापि प्राप्नोति। क्षेयं पापं जेयो वृषलः। उभयतो नियमो विज्ञास्यते-क्षिज्योरेवैवः, तयोश्च शक्यार्थ एवेति। इहापि तर्हि नियमान्न प्राप्नोति—लव्यं पव्यम्। अवश्यलाव्यम् अवश्यपाव्यमिति। तुल्यजातीयस्य नियमः। कश्च तुल्यजातीयः?। यज्जातीयकः क्षिज्योरेच्?। कथंजातीयकः क्षिज्योरेच्। एकारः। एवमपि रायमिच्छति रैयतीत्यत्र प्राप्नोति। रायिश्छान्दसः। दृष्टानुविधिश्छन्दसि भवति।**

प्र०—**वान्तो यीति;** एच इत्यनुवर्तनात् सर्वेषां वान्तादेशप्रसङ्गः। यद्वा त्वेवं व्याख्यायते यादृशो वान्त आदेशः पूर्वं दृष्टस्तादृशो यि प्रत्यये भवति। आकारस्थानिकोऽवादेशो दृष्ट औकारस्थानिकश्चावादेश इति तदा न दोषः। **उभयत इति।** योगविभागेनेति भावः। **इहापीति।** सामान्येन नियम इति प्रश्नः। **तुल्यजातीयस्येति।** कण्ठतालव्यस्येत्यर्थः। **रायमिच्छतीति।** एकारस्यैव नियमेन व्यावृत्तिः कृता न त्वैकारस्येति प्रश्नः। **छान्दस इति।** कथञ्चनास्य रैशब्दस्य भाषायां नास्ति प्रयोगः। अन्यत्र तु विग्रह एवेति व्याचष्टे। क्यच्

रैकारान्तान्नास्ति गोसमानाक्षरनान्तादिति वचनात्। अन्ये तु भाषायां रैशब्दस्य प्रयोग एव नास्तीत्याहुः।

उ :—यदेति। यद्यपि सूत्रे एतावन्नास्ति तथापि सूचनात् सूत्रमिति सूत्रेऽपेक्षितपूरणं युक्तमिति भावः। सूत्रान्तरेषु तथा। अत्र तु भाष्यवार्तिककारैरेव यदुच्यते सूत्रानारूढं तदेव ग्राह्यमित्याहुः। **योगविभागेनेति।** तत्र लिङ्गं [1]शक्यार्थविशेषणोपादानमेव। **सामान्येनेति।** एङ्मात्रस्येत्यर्थः। सामान्येन नियमे यि प्रत्यये इति विधिवैयर्थ्यप्रसङ्गात् तुल्यजातीयस्य नियम इत्युक्तं भाष्ये। तत्र तुल्यजातीयत्वमेकारत्वेन चेदैकारस्यायादेशप्रसङ्गः; अत आह—**कण्ठेति।** भाष्ये **एकार इति।** कण्ठतालव्योपलक्षणमित्याशयः। ननु कण्ठतालव्यनियमेनैकारस्यापि निवृत्तत्वादेवमपीत्ययुक्तम्; अत आह—**एकारस्यैवेति।** अत्यन्तसजातीयत्वेन तस्यैव नियमेन निवृत्तिर्युक्तेति भावः। अत्र क्यजेव छान्दसः। रैशब्दस्तु लोकेऽपि प्रत्ययान्तरे साधुरित्याह—**क्यजन्तस्येति।** भाषायां क्यजभावे हेतुमाह—**क्यच् त्विति। गवीति।** एभ्य एव क्यच् नान्यस्मादित्यर्थः। अक्ते ह्रस्वा दीर्घाश्च समानाक्षराणि दश। तत्र लृवर्णान्तस्य ऋकारान्तस्य च प्रातिपदिकस्याभावात् सप्तावशिष्यन्ते। अन्ये [2]नाव्यतीत्यादिसिद्धिप्रदर्शनार्थमिदं मतान्तरप्रदर्शनमात्रं न भाष्यकृतोऽभिप्रेतमिति वदन्ति। तथा चैकारान्तादपि क्यचि न बाधकमतः प्रकृतेरेव छान्दसत्वमाह—**अन्य इति।**

**भा : "ऊदुपधाया गोहः" आदेशतोऽनन्तरतमनिर्वृत्तौ सत्यामुपधाग्रहणं कर्तव्यम्। प्रकृतितः पुनरन्तरतमनिर्वृत्तौ सत्यामूकारस्य गोहो यान्तरतमा प्रकृतिः तत्र षष्ठी। यत्र षष्ठी तत्रादेशा भवन्तीति अन्तरेणोपधाग्रहणं सिद्धं भवति। आदेशतोऽप्यन्तरतमनिर्वृत्तौ सत्यां न दोषः। क्रियते एतन्न्यास एव। "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" आदेशतोऽनन्तरतमनिर्वृत्तौ सत्यां तकारग्रहणं कर्तव्यम्। प्रकृतितः पुनरन्तरतमनिर्वृत्तौ सत्यां नकारस्य निष्ठायां यान्तरतमा प्रकृतिस्तत्र षष्ठी। यत्र षष्ठी तत्रादेशा भवन्तीत्यन्तरेणापि तकारग्रहणं सिद्धं भवति। आदेशतोऽप्यन्तरतमनिर्वृत्तौ सत्यां न दोषः। क्रियत एतन्न्यास एव।**

---

(१) ग. शक्यार्थ इत्यर्थविशेषोपादानमेव

(२) ग. वाच्यति

प्र :—**गोह इति ;** एतत्परिभाषोपस्थाने सति गोहः इति षष्ठ्यन्तरतमे स्थानिन्युपसंह्रियते। **न्यास एवेति ;** अन्यथा परत्वाद् ' अलोऽन्त्यस्य ' इत्यनेन गोह इति षष्ठ्यन्तेऽप्युपसंह्रियेतेति भावः। **रदाभ्यामिति।** चरितमित्यादौ व्यवधानान्न भवति। निष्ठाया इति षष्ठ्यास्तकार एवोपसंहारात्तस्यैवानन्तर्येण नत्वविधानात्। **क्रियते एतन्न्यास एवेति ;** अन्यथा हि भिन्नवद्भ्यामित्यत्र दकारस्य नत्वं स्यात्। स हि नकारस्य सुसदृशः ' यथा तृतीयास्तथा पञ्चमा ' इति वचनात्।

उ :—ननु गोह इति षष्ठ्या अन्त्येऽप्युपसंहारनिरासायोपधाया इति वक्तव्यमेव ; अत आह—**एतत्परिभाषेति।** ' पुमः खय्यम्परे ' इत्यादौ सावकाशस्य ' अलोऽन्त्यस्य ' इदं बाधकमिति भावः। ननु गौरवे चोदिते क्रियत इत्ययुक्तम् ; अत आह—**अन्यथेति।** ' वान्तो यि प्रत्यये ' इत्यादौ तस्या अपि सावकाशत्वात् परया बाधप्रसङ्गादुपधाया इति उभाभ्यां वक्तव्यमित्यर्थः। यथोद्देशपक्षे एतदुक्तम्। कार्यकालपक्षे पर्यायोऽप्रतिपत्तिर्वा स्यादिति ज्ञेयम्। ननु त इत्यनुच्यमाने रदाभ्यामिति निष्ठा विशेष्यते। तथा च चरितमित्यादावपि नत्वप्रसङ्गः, अत आह—**चरितमिति।** व्यवधानमेवाह—**निष्ठाया इति। आनन्तर्येण ;** रदाभ्यामित्यादिः। न च गौरवं, तवापि तुल्यत्वादित्याह—**अन्यथेति।** यद्यपि दकारस्य न धातुदकारेणानन्तर्यम्, तथापि निष्ठाया इति षष्ठ्याः सुसदृशे दकारे उपसंहारात् निष्ठाद्वारकमेवानन्तर्यमत्र ग्राह्यमिति भावः।

**भा :—किं पुनरिदं निर्वर्तकम्—अन्तरतमा अनेन निर्वर्त्यन्ते। आहोस्वित् प्रतिपादकम्—अन्येन निर्वृत्तानामनेन प्रतिपत्तिः ? ॥ कश्चात्र विशेषः ? ।**

**॥ वा ॥ स्थानेऽन्तरतमे निर्वर्तके सर्वस्थानिनिवृत्तिः ॥**

**भा :—स्थानेऽन्तरतमे निर्वर्तके सर्वस्थानिनां निवृत्तिः प्राप्नोति। अस्यापि प्राप्नोति—दधि मधु। अस्तु, न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते। तत्रान्तर्यतो दधिशब्दस्य दधिशब्द एव, मधुशब्दस्य मधुशब्द एवादेशो भविष्यति। यदि चैवं, क्वचिद्वैरूप्यं तत्र दोषः स्यात्—बिसं मुसलमिति " इणकोरादेशप्रत्यययोः " इति षत्वं प्राप्नोति। अपि च—इष्टा**

व्यवस्था न प्रकल्प्येत। तद्यथा—तप्ते भ्राष्ट्रे तिलाः प्रक्षिप्ता मुहूर्तमपि नावतिष्ठन्ते। एवमिमे वर्णा मुहूर्तमपि नावतिष्ठेरन्। अस्तु तर्हि प्रतिपादकम्। अन्येन निर्वृत्तानामनेन प्रतिपत्तिः।

॥ वा ॥ निर्वृत्तप्रतिपत्तौ निर्वृत्तिः ॥

भा :—निर्वृत्तप्रतिपत्तौ निर्वृत्तिर्न सिध्यति। सर्वे सर्वत्र प्राप्नुवन्ति। किं तर्ह्युच्यते—निर्वृत्तिर्न सिध्यतीति। न साधीयो निर्वृत्तिः सिद्धा भवति। न ब्रूमो-निर्वृत्तिर्न सिध्यतीति। किं तर्हि?। इष्टा व्यवस्था न प्रकल्प्येत। न सर्वे सर्वत्रेष्यन्ते। इदमिदानीं किमर्थं स्यात्?।

॥ वा ॥ अनर्थकं च ॥

भा :—अनर्थकमेतत् स्यात्। यो हि भुक्तवन्तं ब्रूयाद् 'मा भुक्थाः' इति, किं तेन कृतं स्यात्।

॥ वा ॥ उक्तं वा ॥

भा :—किमुक्तम्?। 'सिद्धं तु षष्ठ्यधिकारे वचनात्' इति। षष्ठ्यधिकारेऽयं योगः कर्तव्यः "स्थानेऽन्तरतमः षष्ठीनिर्दिष्टस्य" इति।

प्र :—**किं पुनरिति।** किं स्वतन्त्रमिदं लक्षणं, आहोस्विल्लक्षणान्तरेणाभिनिर्वृत्तानामनेन नियमः क्रियते अथ लक्षणान्तरशेषभूतमिति प्रश्नः। **स्थानिनिवृत्तिरिति ;** दधिशब्दस्य यदि दधिशब्द आदेशः क्रियते तदा प्रयोजनाभावः। भिन्नरूपस्त्वादेशस्तदर्थस्याऽप्रत्यायक इति शब्दव्यवहारोत्साद एवेति भावः। **अस्त्विति ;** वचनसामर्थ्याच्छब्दव्यवहारस्य चानादित्वादिति भावः। **क्वचिद्वैरूप्यमिति ;** यदा बिसशब्दस्य बिसशब्द आदेशस्तदा षत्वं नास्ति, न हि तदा सकार आदेशः। यदा तु सकारस्य सकार आदेशस्तदा षत्वप्रसङ्ग इति वैरूप्यप्राप्तिः। 'अस्तेर्भूः' इत्यादयस्तु' विशेषविहितत्वादस्य बाधकाः। **अपि चेति।** पुनरन्येनान्येनादेशेन भवितव्यमिति भावः। प्रयोजनमन्तरेण प्रवृत्तौ सत्यामसकृदपि प्रवृत्तिः स्यात्। ततश्च सर्वस्य निवृत्त्यभिमुखत्वात् साधुत्वस्य व्यवस्था नोपपद्यते। **अस्तु तर्हीति।** निर्वृत्तेषु लक्षणान्तरेणादेशेषु नियमोऽनेन क्रियते। तत्रान्तरतमः साधुर्नान्य इत्यर्थः।

**निर्वृत्तिरिति।** अभिमतस्य शब्दस्येत्यर्थः। **इष्टा व्यवस्थेति।** 'अकः सवर्णे दीर्घ' इत्यनेन लक्षणेन यदा सर्वे दीर्घाः कृताः तदा तेषां साधुत्वं विज्ञातम् न चाऽनेन तेषामेवासाधुत्वं शक्यं प्रतिपादयितुमिति भावः। **उक्तं वेति।** 'इको गुणवृद्धी' इत्यत्र। यत्र षष्ठी तत्रेदमुपतिष्ठते। तेनैकवाक्यतानेन सूत्रेण विधिवाक्यानामिति विधानकाल एवान्तरतम आदेशो विधीयते।

उ:—पक्षद्वयव्याख्यानपूर्वकं तदुपलक्षितं तृतीयं पक्षमाह—**स्वतन्त्रमिति;** यद्यपि लक्षणान्तरसापेक्षत्वं द्वितीयतृतीययोस्तुल्यम्, तथापि वाक्यभेदाभेदाभ्यां द्वैविध्यं ज्ञेयम्। स्थानिनिवृत्तिमुपपादयति—**यदीति।** **भिन्नरूपस्त्विति;** यद्यपि पर्यायो भिन्नरूपस्तदर्थश्च तथाऽपि तयोः स्थान्यादेशभावे विनिगमकाभावेन क्रमेण द्वयोः स्थानित्वमादेशत्वं च वक्तव्यम्। तथा च सूत्रमनारब्धसमं स्यादिति भावः। शास्त्रप्रवृत्तौ हेतुः—**वचनेति।** सदृशादेशे हेतुः—**शब्देति।** प्रत्येकं वर्णानां वर्णा आदेशा इति पक्षे .षत्वप्रसङ्गो न तु समुदायस्य समुदाय आदेश इति पक्षे इत्याह—**यदेति।** **अस्य;** स्थानेऽन्तरतम इति विधेः। [1]**पुनः पुनरिति;** प्रयोगार्ह-शब्दस्य प्रयोजनं विनाप्यादेशाङ्गीकारे अप्रामाणिकक्षणिकादेशपरम्पराप्रसङ्ग इति भावः। पौनः-पुन्ये हेतुः; **प्रयोजनेति।** इष्टा व्यवस्थेति भाष्यार्थमाह—**ततश्चेति।** आदेश एव साधुर्न स्थानी। क्षणिकादेशपरम्परापक्षे सर्वस्यापि स्थानित्वात् न साधुत्वव्यवस्था स्यादित्यर्थः। अन्येन विनिर्वृत्तानां मध्ये अनेनान्तरतमस्यैव साधुत्वप्रतिपत्तिः क्रियत इति भाष्यार्थं सूचयन्नाह—**निर्वृत्तेष्विति।** **अभिमतस्येति;** दण्डाग्रमि-त्यादिरूपस्येत्यर्थः। ननु 'अकः सवर्णे दीर्घः' इत्यनेनेष्टसिद्धावपि स्थानेऽन्तरतम इत्यनेन सेत्स्यति; अत आह—**अक इति।** लक्षणान्तरेण सर्वेषां दीर्घाणां साधुत्वप्रमितावनेन निवर्तनमशक्यम्। तस्याप्रामाण्यापत्तेरित्यर्थः। तृतीयकल्पः सिद्धान्त इत्याशयेनाह—**तेनेति।**

**॥ वा ॥ प्रत्यात्मवचनं च ॥**

**भा:—प्रत्यात्ममिति च वक्तव्यम्। किं प्रयोजनम्? यो यस्यान्तरतमः स तस्य स्थाने यथा स्यात्। अन्यस्यान्तरतमो-ऽन्यस्य स्थाने मा भूदिति।**

---

(१) मु. पु. पुनः इति नास्ति.

॥ वा ॥ प्रत्यात्मवचनमशिष्यं स्वभावसिद्धत्वात् ।

भा :—प्रत्यात्मवचनमशिष्यम् । किं कारणम्? स्वभावसिद्धत्वात् । स्वभावत एतत्सिद्धम् । तद्यथा—समाजेषु समाशेषु समवायेषु चाऽऽस्यतामित्युक्ते न चोच्यते 'प्रत्यात्मम्' इति प्रत्यात्मं चासते ।

प्र :—प्रत्यात्ममिति । आत्मानमात्मानं प्रतीति समासः । स्थान्यात्मनोऽन्तरतम इत्यर्थः । स्वभावसिद्धत्वादिति । तुल्यन्यायतया सूत्रप्रत्याख्यानायैतदुक्तम्, न तु संबन्धिशब्दत्वादिति । समाजेष्विति । समाज ; उत्सवेषु संघातः । समाशः, सहभोजनम् । समवायः ; कस्यांचित् क्रियायां मेलनम् ।

उ :—नन्वात्मानं प्रतीत्यर्थे प्रत्यात्मं कथम् ; अत आह—आत्मानमिति ; वीप्सार्थेऽव्ययीभावः । 'अनश्च' इति टच् । सर्वस्यापि कस्यचिदन्तरतमत्वादाह—स्थानीति । नन्वन्तरतमशब्दस्य सादृश्यातिशयवाचित्वेन संबन्धिशब्दत्वादिति नोक्तम् ; अत आह—तुल्येति । कस्यांचित् ; धर्मनिर्णयादिक्रियायाम् । निमित्तसप्तमी ;

॥ वा ॥ अन्तरतमवचनं च ॥

भा :—अन्तरतमवचनं चाशिष्यम् । योगश्चाप्ययमशिष्यः । कुतः? । स्वभावसिद्धत्वादेव । तद्यथा—समाजेषु समाशेषु समवायेषु चास्यतामित्युक्ते नैव कृशाः कृशैः सहासते, न पाण्डवः पाण्डुभिः । येषामेव किंचिदर्थकृतमान्तर्यं तैरेव सहासते । तथा गावो दिवसं चरितवत्यो यो यस्याः प्रसवो भवति, तेन सह शेरते । तथा यान्येतानि गोयुक्तकानि संघुष्टकानि भवन्ति तान्यन्योन्यमपश्यन्ति शब्दं कुर्वन्ति । एवं तावच्चेतनावत्सु । अचेतनेष्वपि । तद्यथा—लोष्टः क्षिप्तो बाहुवेगं गत्वा नैव तिर्यग्गच्छति नोर्ध्वमारोहति पृथिवीविकारः पृथिवीमेव गच्छत्यान्तर्यतः । तथा—या एता आन्तरिक्ष्यः सूक्ष्मा आपस्तासां विकारो धूमः । स धूम आकाशे निवाते नैव तिर्यग्गच्छति नार्वागवरोहति । अब्विकारोऽप एव गच्छत्यान्तर्यतः । तथा ज्योतिषो विकारोऽर्चिराकाशदेशे निवाते सुप्रज्वलितं नैव तिर्यग्-

**च्छति नार्वागवरोहति। ज्योतिषो विकारो ज्योतिरेव गच्छत्यान्तर्यतः।**

प्र:—**नैव कृशा इति।** गुणप्रमाणकृतसादृश्यपरिहारेण विद्याद्यर्थकृतमान्तर्यं लोक आश्रीयत इत्यर्थः। एवमिहापि यदीयमर्थं यः शक्नोति वक्तुं तस्य स्थाने स एव भवति। **गाव इति।** तिरश्चामप्ययं व्यवहारः संकीर्णानामसंकरलक्षणः। एवं चोदनायां संकीर्णा अप्यादेशा असंकरेण प्रवर्त्स्यन्ति। **तथा यानीति।** यथा तत्र सादृश्याद्वर्गीभवनं विच्छिन्नसाहचर्याणामपि भवति तथा स्थान्यादेशानां स्थानादिना सादृश्येन वर्गीभवनमित्यर्थः। **अचेतनेष्वपीति।** न्यायस्य व्याप्तिप्रतिपादनमेतत्। **अब्विकार इति।** अन्तरिक्षे सूक्ष्मः समुद्रोऽस्तीति तद्विकारः सर्वा आप इति काष्ठादिस्थानामपामग्निसंयोगात् धूमो विकारः। सूर्यविकारोऽर्चिः सूर्यमेव गच्छति।

उ:—अर्थादिकृतसादृश्ये सति तदेव प्रयोजकमिति वक्तुमाद्यमुदाहरणमित्याह—**गुणेति।** दार्ष्टान्तिकेऽपीष्टसिद्धिमाह—**एवमिति।** दृष्टान्तान्तरस्य प्रयोजनमाह—**तिरश्चामिति।** तत्र विवक्षितार्थमाह—**संकीर्णानामिति।** भाष्ये **प्रसवः**; वत्सः। यत्रानेकविधमान्तर्यं तत्र स्थानत एवान्तर्यं बलीय इत्यत्र दृष्टान्तमाह—भाष्ये **तथा यानीति।** तद्व्याचष्टे—**यथेति।** भाष्ये **युक्तकशब्दः** संघातस्य वक्ता। **संघुष्टकशब्दो** मिलितत्वस्य। यद्यपि चेतनेषूक्तन्यायेनापि व्यवस्था सिध्यति, तथाऽप्यत्यन्तसदृशदृष्टान्तार्थमचेतनेष्वपि इति भाष्यमित्याशयेनाह—**न्यायस्येति।** आन्तरतम्यं संबन्धनियामकमिति न्यायस्येत्यर्थः। **अन्तरिक्ष इति।** अत एव ग्रीष्मकाले निश्यङ्गणे शयानानां शैत्योपलम्भः। यद्यप्यार्द्रेन्धनादेव धूमोत्पत्तेरब्विकारत्वं तथापि समुद्रगमनहेतुतया अन्तरिक्षाब्विकारत्वं भाष्योक्तं परम्परयेति वक्तुं सर्वासां तद्विकारत्वोक्तिरिति ज्ञेयम्। ज्योतिर्विकार इत्यत्र ज्योतिःशब्दार्थमाह—**सूर्येति।** अत्रागमोऽन्वेषणीयः। दवाग्नेर्मध्याह्ने सूर्यकिरणसंपर्कात् क्रौर्यातिशयदर्शनात् तद्विकारत्वनिश्चय इति केचित्। तच्चिन्त्यम्। उष्णद्रव्यद्वयमेलने तत्संभवात्।

**॥ वा ॥ व्यञ्जनस्वरव्यतिक्रमे च तत्कालप्रसङ्गः ॥**

**भा:—व्यञ्जनव्यतिक्रमे स्वरव्यतिक्रमे च तत्कालता प्राप्नोति। व्यञ्जनव्यतिक्रमे—इष्टम् उप्तम्। आन्तर्यतोऽर्ध-**

**मात्रिकस्य व्यञ्जनस्याऽर्धमात्रिक इक् प्राप्नोति। नैव लोके नैव वेदेऽर्धमात्रिक इगस्ति। कस्तर्हि? मात्रिकः। योऽस्ति स भविष्यति। स्वरव्यतिक्रमे—दध्यत्र मध्वत्र कुमार्यर्थं ब्रह्मबन्ध्वर्थम्। आन्तर्यतो मात्रिकस्य द्विमात्रिकस्येको मात्रिको द्विमात्रिको यण् प्राप्नोति। नैव लोके नैव वेदे मात्रिको द्विमात्रिको वा यणस्ति। कस्तर्हि?। अर्धमात्रिकः। योऽस्ति स भविष्यति।**

**॥ वा ॥ अक्षु चानेकवर्णादेशेषु ॥**

**भा :—अक्षु चानेकवर्णादेशेषु तत्कालता प्राप्नोति। "इदम इश्" आन्तर्यतोऽर्धतृतीयमात्रिकस्येदमः स्थानेऽर्धतृतीयमात्रमिवर्णं प्राप्नोति। नैष दोषः। 'भाव्यमानेन सवर्णानां ग्रहणं न' इत्येवं न भविष्यति।**

प्र :—लोकव्यवहाराश्रयणेन प्रत्याख्याते सूत्रे तदनाश्रयेण योगारम्भे दोषमाह—**व्यञ्जनेति। व्यतिक्रमः;** स्थानित्वेन निवृत्तिः। इदमेव शास्त्रं निवर्तकमिति भावः। **नैव लोक इति।** कुक्कुटादिषु द्वे व्यञ्जने न त्वेकं मात्रिकमिति भावः। **अर्धतृतीयमात्रमिति।** अत्वैकादेशयोः कृतयोरिश्भाव इति यदा प्रक्रियेति भावः। **भाव्यमानेनेति।** नैव लोक इति इत्ययं परिहारो नोक्तः। यदा विशेषविहितत्वादत्वमिश्भावेन बाध्यते इति न्यायस्तदा त्रिमात्रस्य त्रिमात्रसंभवात्स्यादेव प्लुतः। प्लुताप्लुतप्रसङ्गे च 'प्लुतश्च विषये स्मृतः' इत्युच्यते। अत्र तु प्लुतस्यैव प्राप्तिः।

उ :—**तदनाश्रयेण;** मन्दबुद्धिप्रतिपत्त्यर्थमिति भावः। व्यतिक्रमशब्दस्य प्रकृतोपयुक्तमर्थमाह—**स्थानित्वेनेति।** ननु नियामकपक्षे नायं प्रसङ्गः; अत आह—**इदमेवेति।** अर्धमात्रिकेगभावाद्वा नायं प्रसङ्गः; अत आह—**इदमेवेति।** इदमेवेत्युक्तं निराह—**नित्या इति।** ननु कुक्कुटादौ मात्रिकव्यञ्जनदर्शनाद्यणपि तथा स्याद्; अत आह—**कुक्कुटेति।** नन्विदमः त्रिमात्रत्वादर्धतृतीयेत्ययुक्तम्; अत आह—**अत्वेति;** परत्वादत्वे परत्वान्तरङ्गत्वाभ्यामेकादेश इति भावः। नन्वत्रापि नैव लोक इत्येव कुतो नोक्तम्; अत आह—**नैवेति। विशेषेति।** अन्तरङ्गादपि प्रतिपदविधेर्बलीयस्त्वात्। 'प्लुतश्च विषये स्मृतः;' इति प्लुतो न भविष्यति; अत आह—**प्लुतेति।**

॥ वा ॥ गुणवृद्ध्येज्भावेषु च ॥

भा:—गुणवृद्ध्योरेज्भावेषु च तत्कालना प्राप्नोति। खट्वा इन्द्रः खट्वेन्द्रः। खट्वा उदकम् खट्वोदकम्। खट्वा ईषा खट्वेषा। खट्वा ऊढा खट्वोढा। खट्वा एलका खट्वैलका। खट्वा ओदनः खट्वौदनः। खट्वा ऐतिकायनः खट्वैतिकायनः। खट्वा औपगवः खट्वौपगव इति। आन्तर्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्र-चतुर्मात्रा आदेशाः प्राप्नुवन्ति। नैष दोषः। तपरे गुणवृद्धी। ननु च तः परो यस्मात्सोऽयं तपरः। नेत्याह। तादपि परस्तपर इति। यदि तादपि परस्तपरः, "ऋदोरप्" इतीहैव स्यात्—यवः स्तवः। लवः पव इत्यत्र न स्यात्। नैष तकारः। कस्तर्हि? दकारः। किं दकारे प्रयोजनम्? अथ किं तकारे। यद्यसंदेहार्थस्तकारः, दकारोऽपि अथ मुखसुखार्थस्तकारः, दकारोऽपि। एज्भावे—कुर्वाते कुर्वाथे। आन्तर्यतोऽर्धतृतीयमात्रस्य टिसंज्ञकस्यार्धतृतीयमात्र एच् प्राप्नोति? नैव लोके न च वेदेऽर्ध-तृतीयमात्र एजस्ति।

प्र:—**खट्वेन्द्र इति;** संज्ञयाऽत्र गुणवृद्ध्योर्भावनं, संज्ञा च भिन्नकाला-नामपि स्यादिति भाव्यमानेनेति परिहारस्यात्रासंभवः। **एज्भाव इति।** प्रत्याहारः 'पूतक्रतोरै च' 'मनोरौ वा' इत्यादिसंग्रहार्थः। तत्र हि मात्रिक ऐकार औकारश्च स्यात्।

उ:—भाव्यमानेनेति समाधाने सति गुणेति वार्तिकानुत्थानमाशङ्क्याह—**संज्ञयेति। संज्ञा चेति;** संज्ञाविधौ संज्ञिनोऽभाव्यमानत्वादिति भावः। गुणवृद्धित्वेनैवैच्प्राप्तेः पुनस्तद्ग्रहणमयुक्तम्[1]; अत आह—**एज्भाव इति।** आदिना 'दिव औत्' इत्यादिग्रहः। **मात्रिक इति।** न च भाव्यमानेनेति परिहारोऽत्र संभवतीति वाच्यम्। अमूभ्यामित्यादिवदुपपत्तेः। वस्तुतो वार्तिकसंग-मनमात्रमेतत् नैव लोके इति परिहारस्य दुरुद्धरत्वात्।

॥ वा ॥ ऋवर्णस्य गुणवृद्धिप्रसङ्गे सर्वप्रसङ्गोऽविशेषात् ॥

भा:—ऋवर्णस्य गुणवृद्धिप्रसङ्गे सर्वप्रसङ्गः सर्वगुणवृद्धि-प्रसङ्गः, सर्वे गुणवृद्धिसंज्ञका ऋवर्णस्य स्थाने प्राप्नुवन्ति। किं

(१) ग-णं व्यर्थमत

कारणम्? अविशेषात्। न हि कश्चिद्विशेष उपादीयते—एवंजातीयको गुणवृद्धिसंज्ञक ऋवर्णस्य स्थाने भवतीति। अनुपादीयमाने विशेषे सर्वप्रसङ्गः।

॥ वा ॥ न वा ऋवर्णस्य स्थाने रपरप्रसङ्गादवर्णस्यान्तर्यम् ॥

भा:—न वा एष दोषः। किं कारणम्?। ऋवर्णस्य स्थाने रपरप्रसङ्गात्। उः स्थाने अण् प्रसज्यमान एव रपरो भवतीत्युच्यते। तत्र ऋवर्णस्याऽन्तर्यतो रेफवतो रेफवानकार एवान्तरतमो भवति।

॥ वा ॥ सर्वादेशप्रसङ्गस्त्वनेकाल्त्वात् ॥

भा:—सर्वादेशस्तु गुणवृद्धिसंज्ञक ऋवर्णस्य प्राप्नोति। किं कारणम्?। अनेकाल्त्वात्। "अनेकाल्शित्सर्वस्य" इति।

॥ वा ॥ न वाऽनेकाल्त्वस्य तदाश्रयत्वादवर्णादेशस्याविघातः ॥

भा:—न वा एष दोषः। किं कारणम्?। अनेकाल्त्वस्य तदाश्रयत्वात्। यदाऽयमुः स्थानेऽण् तदायमनेकाल्। अनेकाल्त्वस्य तदाश्रयत्वादवर्णादेशस्य विघातो न भविष्यति। अथवाऽनान्तर्यमेवैतयोरान्तर्यम्। एकस्यान्तरतमा प्रकृतिर्नास्ति, अपरस्यान्तरतम आदेशो नास्ति, एतदेवैतयोरान्तर्यम्।

॥ वा ॥ संप्रयोगो वा नष्टाश्वदग्धरथवत् ॥

भा:—अथवा नष्टाश्वदग्धरथवत्सह संप्रयोगो भवति। तद्यथा 'तवाश्वो नष्टो ममापि रथो दग्धः, उभौ संप्रयुज्यावहै इति। एवमिहापि—'तवाप्यन्तरतमा प्रकृतिर्नास्ति, ममाप्यन्तरतम आदेशो नास्ति, अस्तु नौ संप्रयोगः' इति। विषम उपन्यासः। चेतनावत्स्वर्थात् प्रकरणाद्वा लोके संप्रयोगो भवति। वर्णाश्च पुनरचेतनाः। तत्र किंकृतः संप्रयोगः? यद्यपि वर्णा अचेतनाः। यस्त्वसौ प्रयुङ्क्ते स चेतनावान्।

प्र:—**ऋवर्णस्येति**; अत्र ह्रस्वस्याकार एव गुणः स्यात्म चेष्यत एव। दीर्घस्य त्वेङौ स्याताम्; तुल्यप्रमाणत्वात्। तथा ह्रस्वस्य दीर्घस्य च सर्वे वृद्धिसंज्ञकाः प्राप्नुवन्ति। समुदायापेक्षया तु सर्वप्रसङ्ग इत्युच्यते। **न वेति**। 'उरण् रपर'

इत्यनेन गुणवृद्धिशास्त्रस्यैकवाक्यतायां विधीयमान एवाण् रपरो भवतीति रश्रुतेरुः स्थानेऽरारौ क्रियमाणौ गुणवृद्धी भवत इत्यर्थः। **सर्वादेश इति।** ऋवर्णस्य स्थानेऽरारौ क्रियमाणौ 'अलोऽन्त्यस्य' इत्येतद्बाधेनानेकाल्त्वात्सर्वादेशौ प्राप्नुतः। **नवेति।** अङ्गस्येति षष्ठी पूर्वमेवान्त्यमिकमुपसंह्रियते। ततश्च ऋवर्णस्य स्थानित्वे विज्ञाते रपरत्वमानुपूर्व्या सिद्धत्वात् पूर्वप्रवृत्तमलोऽन्त्यस्येत्यस्युपसंहारं न बाधते इत्यर्थः। **अथ वेति।** निर्वृत्तस्याणो रपरत्वविधानेऽपि न दोष इत्यर्थः। **अनान्तर्यमेवेति।** न हि स्थानार्थगुणप्रमाणकृतमेवान्तर्यं परिभाषितं रूपान्तरेणापि साहश्यसंभवात्परिग्रहाच्चेति भावः। ऋवर्णस्य मात्रिकोऽकारो गुणोऽन्तरतमोऽस्त्येवेति चेत्, तदर्थस्य यत्नस्याकरणाददोष एव। दीर्घस्य तुल्यप्रमाणत्वादेकारौकारावन्तरतमौ स्त इति चेत्, मेवेदेतद्यदा भेदापेक्षा क्रियते। ऋवर्णमात्रस्य ह्रस्वाद्यवान्तरभेदानपेक्षायां स्थानकृतमान्तर्यं न केनचिदस्तीत्यनान्तर्यमेवेत्याद्युक्तम्। **संप्रयोगो वेति।** यदा 'स्थानेऽन्तरतम' इत्येतत्प्रत्याख्यातमित्यर्थः।

उ:—नैकैकत्र सर्वप्रसङ्गः किंतु व्यवस्थयेत्याह—**तत्रेति।** **अकार एव;** तुल्यप्रमाणत्वात्। तथा च ह्रस्वस्य गुणविधौ न किञ्चिदनिष्टमिति भावः। **समुदायापेक्षयेति।** ऋवर्णस्य ह्रस्वादिसमुदायापेक्षयेत्यर्थः। नन्वादेशानन्तरभाविना रपरत्वेन कथं व्यवस्थेत्याशङ्कानिरासायाण् प्रसज्यमान एवेति भाष्यम्। तस्य तात्पर्यमाह—**उरणिति।** **गुणेति;** प्रतिलक्ष्यं लक्षणभेदात् ऋवर्णविषयगुणवृद्धिशास्त्रस्येत्यर्थः। रश्रुतेरित्यनेन रेफवत्त्वनान्तर्यमित्युक्तम्। **सर्वादेश इति।** ऋवर्णान्तस्येति यावत्। समाधानतात्पर्यमाह—**अङ्गस्येति।** **पूर्वमेवेति;** ऋस्थानिकत्वाभावे रपरत्वाभावेनानेकाल्त्वाभावात्, 'अनेकाल्शित्' इत्यपवादस्य तदानीमभावादिति भावः। [1]**अनुसंह्रियन्ते;** उपसंह्रियन्ते। **आनुपूर्व्या;** अलोऽन्त्यस्येत्येतत्प्रवृत्त्यनन्तरम्। तदुपजीव्येति यावत्। न च समुदायादेशत्वेऽपि तदन्तर्गतऋकारादेशत्वेन रपरत्वं संभवतीति वाच्यम्। बाधकाभावेनालोऽन्त्यपरिभाषया समुदायस्थानित्वस्यासंभवादिति भावः। रश्रुतित्वेनान्तर्यस्योक्तत्वादनान्तर्यमित्ययुक्तम्; अत आह—**निर्वृत्तस्येति।** नन्वनान्तर्यमान्तर्यमिति काप्यप्रसिद्धम्; अत आह—**न हीति।** **स्थानं** कण्ठादि। **अर्थो**ऽभिधेयः। **गुणो;** घोषवत्त्वादिः। **प्रमाणं;** ह्रस्वत्वादिः। स्थानकृतमान्तर्यं बलवदिति द्वितीयवाक्ये उक्तं न प्रथम-

(१) मु. पु. उपसंह्रियन्ते.

वाक्येऽपीति भावः। **परिग्रहाच्चेति।** उपसरज इत्यादौ व्यञ्जनस्यार्धमात्रिकस्य मात्रिकोऽकारो दीर्घापेक्षयान्तरतमो भविष्यतीति भाष्यकृतोक्तत्वादिति भावः। प्रमाणत आन्तर्यस्य संभवादनान्तर्यासिद्धिं शङ्कते—**ऋवर्णस्येति। तदर्थस्येति;** ऋवर्णैकदेशह्रस्वाद्यपेक्षया नान्तर्यमिति परिहारो नोच्यत इत्यर्थः। **यत्नस्य;** परिहारान्तररूपस्य। **दीर्घस्येति;** यद्यप्येकग्रन्थेनैव शङ्काद्वयं युक्तम् दीर्घेऽपि तदर्थस्येत्यस्यैव समाधानत्वात्, तथापि पूर्वत्रेष्टसिद्धेः दीर्घेऽनिष्टप्रसङ्ग इति सूचयितुं भेदेन शङ्काद्वयम्। स्त इति चेदित्यस्यानन्तरं तदर्थस्येति समाधानमनुषञ्जनीयमिति सूचयन् तदेव विवृणोति—**भवेदिति।** सूत्रारम्भाङ्गीकारेणानान्तर्यमिति परिहारः। अयं तु तदनङ्गीकारेणेति न पौनरुक्त्यमित्याह—**यदेति।** वार्तिके **नष्टाश्वदग्धरथवदिति;** बहुव्रीहिः।

॥ वा ॥ **एजवर्णयोरादेशोऽवर्णं स्थानिनोऽवर्णप्रधानत्वात् ॥**

**भा :—एजवर्णयोरादेशोऽवर्णं प्राप्नोति। खट्वैलका मालौषगवः। किं कारणम्?। स्थानिनोऽवर्णप्रधानत्वात्, स्थानी ह्यत्रावर्णप्रधानः।**

॥ वा ॥ **सिद्धं तूभयान्तर्यात् ॥**

**भा :—सिद्धमेतत्। कथम्?। उभयोर्योऽन्तरतमस्तेन भवितव्यम्। न चावर्णमुभयोरन्तरतमम् ॥ स्थानेऽन्तरतमः ॥**

प्र :—**अवर्णप्रधानत्वादिति।** इममेव हि न्यायमाश्रित्योक्तमैचोश्चोत्तरभूयस्त्वादिति। **उभयान्तर्यादिति;** ह्रस्वशासने ह्यैचः समुदायान्तरतमाभावादैचोश्चेत्युक्तम्। इह तु संभवत्येव स्थानेन समुदायान्तरतम इत्यर्थः ॥ ५० ॥

उ :—प्रधानत्वं भूयस्त्वमभिप्रेतमित्याह—**इदमिति।** खट्वैलकेत्यत्र दीर्घस्य मात्राद्वयम्, एकारे चावर्णा मात्रेति मात्रात्रयमवर्णस्य, इवर्णस्य त्वेका मात्रेति अवर्णभूयस्त्वम्। एवं मालौपगव इत्यत्रापि ज्ञेयम्। तर्हि भूयस्त्वन्यायः क; अत आह—**ह्रस्वेति।**

सू.—उरण् रपरः ॥ १। १। ४९ ॥

**भा :—किमिदमुरण्रपरवचनमन्यनिवृत्त्यर्थम् "उः स्थाने अणेव भवति रपरश्च" इति। आहोस्विद्रपरत्वमात्रमनेन**

**विधीयते—'उः स्थाने अण् च अनण् च। अण् तु रपर इति?। कश्चात्र विशेषः?।**

**॥ वा ॥ उरण्रपरवचनमन्यनिवृत्त्यर्थं चेदुदात्तादिषु दोषः ॥**

**भा :—उरण्रपरवचनमन्यनिवृत्त्यर्थं चेदुदात्तादिषु दोषो भवति। के पुनरुदात्तादयः। उदात्तानुदात्तस्वरितानुनासिकाः। कृतिः हृतिः, कृतं हृतम्, प्रकृतं प्रहृतम्, नॄँः पाहि। अस्तु तर्ह्युः स्थाने अण् चानण् च, अण् तु रपर इति।**

**॥ वा ॥ य उः स्थाने अण् स रपर इति चेद् गुणवृद्ध्योरवर्णाप्रतिपत्तिः ॥**

**भा :—य उः स्थाने अण् स रपर इति चेद् गुणवृद्ध्योरवर्णस्याप्रतिपत्तिः। कर्ता हर्ता वार्षगण्यः। किं हि साधीयः—ऋवर्णस्यासवर्णे यदवर्णं स्यात्, न पुनरेङैचौ? पूर्वस्मिन्नपि पक्षे एष दोषः। किं हि साधीयस्तत्रापि ऋवर्णस्यासवर्णे यदवर्णं स्यात् न पुनरिकारोकारौ।**

प्र :—उरण्। **किमिदमिति।** षष्ठीप्रकरणाद्यत्र षष्ठी तत्रेदमुपतिष्ठते। तत्र किमादेशान्तमणां बाधकमणं निर्वर्तयति तस्य च वाक्यभेदेन रपरत्वम्। आहोस्विद्रपरत्वमात्रमनेन क्रियते, उः स्थाने लक्षणान्तरेण निष्पन्नो योऽण् स रपर इति प्रश्नः। तत्र केषाञ्चित्पाठोऽण् भवति रपरश्चेति। तत्रापूर्वोऽण् विधीयमानः आदेशान्तराणां बाधकः। अन्येषां तु पाठोऽणेव भवतीति। तत्र सामर्थ्याच्चान्यनिवृत्तिः। सैवैवकारेण प्रदर्श्यते। **उदात्तादिष्विति।** अन्तरतमस्य बाधकोऽण् प्रसज्यत इति भावः। स चोदात्तादिगुणो न भवति सर्वथा दोषः। **नॄँः पाहीति;** यद्यप्यस्मिन् पक्षे पूर्वसवर्ण ऋकारो न लभ्यते तथापि 'नॄन् पे' इति निपातनाद्भवति। नकारस्य तु रुत्वे कृतेऽनुनासिको विधीयमानोऽणेव स्यान्न तु ऋकार इति दोषः। प्रतिपदविहितैरित्वोत्वादिभिरियं हि बाध्यत इति तेषां रपरत्वं न स्यात्। **गुणवृद्ध्योरिति।** भूतस्य चेदणो रपरत्वं क्रियते तदा तु गुणवृद्धिविधावणेव दुर्लभ इति दोषः। **किं हि**

**साधीय इति।** किं साधुतरं कारणमित्यर्थः। **न पुनरिति।** ततश्चावर्णस्यैव नियमेनाऽप्रतिपत्तिरिति व्याख्येयम्।

उः—नन्वन्यनिवृत्त्यर्थमित्यत्रान्यशब्देन स्थान्यभिधीयते अन्यद्वा। नाद्यः, आदेशस्य स्थानिनिवर्तकत्वस्याभाव्येनावक्तव्यत्वात्। न द्वितीयः, उरणित्येतावन्मात्रस्यान्यनिवृत्तावसामर्थ्याद्; अत आह—**षष्ठीति;** यत्र षष्ठ्या ऋवर्णस्यादेशप्रसक्तिः तत्रेत्यर्थः। 'इको गुणवृद्धी' इति सूत्रे 'उरण्रपरत्वे च' इति स्वतन्त्रविधायकत्वं निरस्तम्। अत्रान्यनिवर्तकत्वं निरस्यत इति न पौनरुक्त्यमिति सूचयितुं भाष्येऽन्यनिवृत्त्यर्थमित्युक्तम्। तदुपपादयति—**तत्रेति।** उः स्थाने अण्विधौ अर्थादितरनिवृत्तिर्भाष्याभिप्रेतेत्यर्थः। एकस्मिन् वाक्ये विधेयद्वयासंभवादाह—**वाक्यभेदेनेति।** क्रियते इत्येतदेव विवृणोति—**उः स्थान इति।** एवकाररहितभाष्यपाठे अस्य निवृत्तिपरत्वमुपपादयति—**तत्रेति।** एवकारसहितपाठेऽप्येवकारोऽनुवादः। एतस्यैव सर्वत्राण्विधायकत्वेन मुख्यनियमत्वासंभवादाह—**अन्येषामिति। सामर्थ्यादिति;** युगपज्जननयोरेकस्यासंभवादित्यर्थः। नन्वान्तरतम्यादकारस्थाने उदात्तादिः ऋकार एव स्यादिति नानिष्टम्; अत आह—**अन्तरतमस्येति।** ननु तस्यैवोदात्तत्वादिसंभवात् कथमुदात्तादिषु दोषः; अत आह—**स चेति।** तत्राण्प्रसङ्ग एवानेनोच्यत इत्यर्थः। न वेत्यनास्थावादः। पूर्वं पश्चाद्वाऽपि स्वरप्रवृत्तेरावश्यकत्वात्। भाष्ये कृतिरित्यत्र 'ञ्नित्यादिर्नित्यम्' इति ऋकारस्योदात्तत्वम्। कृतमित्यत्र प्रत्ययस्वरेणान्तोदात्तत्वे शेषनिघातेनानुदात्तत्वम्। प्रकृतमित्यत्र 'गतिरनन्तर' इति पूर्वपदप्रकृतिस्वरत्वे शेषनिघातेनास्यैवानुदात्तत्वादिसंभवात् तस्यैवानुदात्तस्य स्वरितत्वम्। एवं हृतिर्हृत प्रहृतमित्यत्रापि 'उच्चैरुदात्तः' इत्यादावच इत्यनुवृत्तिपक्षेऽपि 'ञ्नित्यादिर्नित्यम्' इत्यादावच इत्युपस्थानात् षष्ठीसद्भावेनोरणित्यस्योपस्थानं ज्ञेयम्। नॄः पाहीत्यत्र प्रथमयोः पूर्वसवर्णदीर्घमाक्षिप्य समाधत्ते—**यद्यपीति। अनुनासिकः;** 'अत्रानुनासिक' इति विहितः। वक्ष्यमाणदोषमत्राप्याह—**प्रतिपदेति।** 'ॠत इद्धातोः' 'उदोष्ठ्यपूर्वस्य' आदिना 'उरद्' इत्यादिग्रहः। **रपरत्वमिति।** अनेन योऽण् विधीयते तस्यैव रपरत्वविधानादित्यर्थः। **अणेवेति;** प्रसज्यमानस्यैव रपरत्वे रश्रुतिर्नियामिका। पश्चाद्भावे तु न नियमः संभवतीति भावः। भाष्ये [1]**भर्तेति** ॠकारान्तस्य भॄ भृतावित्यस्य क्र्यादिस्थस्य रूपम्। ह्रस्वस्य तु प्रमाणत अकारस्यैव

(१) मु. पु. हर्ता.

संभवात्। कर्तेत्यपि कृ विक्षेप इत्याद्युपलक्षणम्। किमित्यस्य विशेष्यमाह—**कारणमिति।** अनियमेन कदाचिदवर्णेऽपि प्रसक्तेरवर्णाप्रतिपत्तेरिति वार्तिकानुपपत्तिः; अत आह—**ततश्चेति।** तत्र वार्तिकेऽप्ययं दोषो लगतीत्याह भाष्ये—**पूर्वस्मिन्नपीति।**

**भा:—अथ मतमेतत् ऋः स्थाने अणश्चानणश्च प्रसङ्गे अणेव भवति रपरश्चेति। सिद्धा पूर्वस्मिन् पक्षेऽवर्णस्य प्रतिपत्तिः। यत्तु तदुक्तम्—"उदात्तादिषु दोषः" इति, स इह दोषो जायते न जायते। जायते स दोषः। कथम्? उदात्त इत्यनेनाणोऽपि प्रतिनिर्दिश्यन्ते, अनणोऽपि। यद्यपि—अणोऽपि प्रतिनिर्दिश्यन्ते, न तु प्राप्नुवन्ति। किं कारणम्? स्थानेऽन्तरतमो भवतीति। कुतो नु खल्वेतत्—द्वयोः परिभाषयोः सावकाशयोः समवस्थितयोः "स्थानेऽन्तरतमः" इति, 'उरण् रपर' इति च, 'स्थानेऽन्तरतमः' इत्यनया परिभाषया व्यवस्था भविष्यति। न पुनर् "उरण् रपरः" इति? अतः किम्? अत एव दोषो जायते 'उदात्तादिषु दोषः' इति। ये चाप्येते ऋवर्णस्य स्थाने प्रतिपदमादेशा उच्यन्ते, तेषु रपरत्वं न प्राप्नोति—"ऋत इद्धातोः" "उदोष्ठ्यपूर्वस्य" इति।**

**॥ वा ॥ सिद्धं तु प्रसङ्गे रपरत्वात् ॥**

**भा:—सिद्धमेतत्। कथम्? प्रसङ्गे रपरत्वात्। ऋः स्थाने अण् प्रसज्यमान एव रपरो भवति। किं वक्तव्यमेतत्? न हि। कथमनुच्यमानं गंस्यते? स्थान इति वर्तते। स्थानशब्दश्च प्रसङ्गवाची। यद्येवमादेशोऽविशेषितो भवति। आदेशश्च विशेषितः। कथम्?। द्वितीयं स्थानग्रहणं प्रकृतमनुवर्तते। तत्रैवमभिसंबन्धः करिष्यते—ऋः स्थाने, अण् स्थान इति। ऋः प्रसङ्गे अण् प्रसज्यमान एव रपरो भवति।**

प्र:—**अथ मतमिति।** स एव पक्षाक्षेपवाद्याह।

ऽपूर्वोऽण् विधीयते। किन्त्वणनणोः प्रसङ्गेऽणेव भवतीति नियमः

न च गुणवृद्धिप्रसङ्गे इकारोकारप्रसङ्गः। **यत्तु तदुक्तमिति।** किं भवान् मन्यत इति विचारयति। स एव युक्तियुक्तं पक्षं गृह्णाति—**जायत इति। कुतो नु खल्विति।** अन्तरतमपरिभाषाया अवकाशः 'अकः सवर्णे दीर्घः' 'झयो होऽन्यतरस्याम्' इति। 'उरण् रपर' इत्यस्यावकाशः कर्ता हर्तेति। इहोभयं प्राप्नोति—कृतिरिति। परत्वादियमेव प्राप्नोतीति दोषः। **ये चाप्येत इति।** यत्र ह्यनियमप्रसङ्गः तत्रानेन नियमः क्रियते तत्र तच्छेषभूतं रपरत्वं भवति न त्वन्यत्र प्रतिपदविधाविति दोषः। **सिद्धं त्विति।** विधिवाक्यैरस्यैकवाक्यतायां विधानकाल एवाणो रपरत्वं क्रियत इत्यर्थः। **यद्येवमिति।** न ह्यनेनोः स्थानेऽण् विधीयते, अपि तु लक्षणान्तरेण। तत्र विध्यङ्गभूता 'षष्ठी स्थानेयोगा' इति परिभाषा नोपतिष्ठते। तथा च 'उदीचामातः स्थाने' इत्यत्र स्थानग्रहणं कृतम्। ततः उः समीपे योऽण् तस्यापि रपरत्वप्रसङ्ग इति स्थानग्रहणानुवृत्त्या उः स्थाने य आदेशोऽणित्येतावल्लभ्यते न तु प्रसज्यमान इति। **आदेश इति।** प्रसज्यमानत्वेनेत्यर्थः। अथवा स्थानग्रहणानुवृत्त्या प्रसज्यमान इत्येषोऽर्थो लभ्यते न तूः स्थान इति। ततश्चाण आदेशरूपता नियमेन न लभ्यत इति सामीप्यलक्षणोऽपि संबन्धोऽवगम्येतेत्यर्थः। **द्वितीयमिति।** तच्चार्थात्प्रथमान्तं संपद्यते। अथवा सप्तम्यन्त एव, तस्मिन्नयमर्थो भवति प्रसङ्ग एवात्राण् रपरो भवतीति। इदानीमुदात्तादिषु दोषो नास्ति। स्थानेऽन्तरतम इत्यनया परिभाषया कृतिरित्यादावृकारस्य ऋकार एव प्रवर्तते इत्यणः प्रसङ्ग एव नास्ति। गुणवृद्धौ च ऋकारस्य विधीयमाने अरारावेवान्तरतम्याद्भवत इत्यवर्णप्रतिपत्तिरप्यस्ति।

उ :—**स एव;** पूर्वपक्ष्येव सिद्धान्तिनं पृच्छतीत्यर्थः। उक्तदोषपरिहारायान्यनिवृत्त्यर्थमिति वदतः नियमो यद्यभिप्रेत इत्यथेति भाष्यार्थः। तदेव विशदयति **नानेनेति; स चेति;** पूर्ववद्वाक्यभेदेनेत्यर्थः। सिद्धेतिभाष्यतात्पर्यमाह—**न चेति।** एतेन पूर्वस्मिन्नपि पक्ष इति भाष्यस्य गुणवृद्ध्योरनियम इति पक्ष इति व्याख्या सूचिता। पूर्वस्मिन् पक्ष एष दोष इत्युक्तस्य तु नोद्धारः। इवर्णोवर्णयोरप्यण्त्वेनाणेवेति नियमेन तन्निवृत्तेरसंभवादिति ध्येयम्। **भवान्;** नियमवादी। **विचारयति;** विमृशति। **स एव;** पक्षाक्षेप्तैवेत्येव। तमव्ग्रहणसहितस्याप्यवकाशमाह—**झय इति ।कर्तेति;** ऋवर्णस्य गुणवृद्धिविधौ 'स्थानेऽन्तरतमः' इति परिभाषा नोपतिष्ठते ऋवर्णसमुदायस्यान्तरतमगुणवृद्ध्यभावादिति भावः। भाष्ये कार्यकालपक्षाश्रयेण विनिगमकाभाव उक्तः। तर्हि उभयप्राप्तेरुदात्तादिषु दोषो नास्तीति शङ्के

भाष्ये—**अतः किमिति।** यथोद्देशपक्षेण परिहरति भाष्ये—**अत इति।** तदभिप्रायमाह—**परत्वादिति।** कार्यकालपक्षाश्रयणेन भाष्ये विनिगमकाभाव उक्तः। यथोद्देशाश्रयणेन प्रदीपे परत्वादित्युक्तमित्यविरोध इति केचित्। तच्चिन्त्यम्। अत एव इति भाष्योक्तस्यैव परत्वस्य स्पष्टीकरणेन विरोधशङ्कानवकाशात्। ननु वाक्यभेदेन रपरत्वं विधीयमानं सर्वत्र स्यात्; अत आह—**यत्रेति। तच्छेषभूतं;** नियमशेषभूतम्। आनन्तर्यात्तत्रैव परत्वविधानादिति भावः। **विधीति।** ऋवर्णविषयैरित्यर्थः। यद्येवमिति भाष्येणानुवर्तमानस्थानशब्देन उः स्थानित्वं लभ्यते; न तु प्रसज्यमानत्वेनादेशः; एकस्योभयविशेषणत्वासंभवादित्युक्तम्। तदयुक्तम्। 'षष्ठी स्थानेयोगा' इत्यनेनोः स्थानित्वलाभेनानुवर्तमानस्यादेशविशेषणत्वोपपत्तेः; अत आह—**न हीति। तत्र;** 'उरण् रपरः' इत्यत्रानुवादे। उः स्थाने य आदेशः सोऽणेवेति नियमे उरित्यनुवाद्यत्वात्। अनुवादे परिभाषाऽनुपस्थाने लिङ्गमाह—**तथा चेति।** आत इति षष्ठ्यैव स्थाने इति लब्धे स्थानग्रहणं अनुवादे तदनुपस्थानं ज्ञापयतीत्यर्थः। परिभाषानुपस्थानेऽनुवर्तमानस्थानग्रहणस्यादेशविशेषणत्वे उरित्यस्याविशेषणादतिप्रसङ्गः स्यादित्याह—**तत इति।** तथा च कुम्भकारः ऋश्नभीयतीत्यत्रापि रपरत्वप्रसङ्गः इति भावः। आदेशोऽविशेषितो भवेदिति भाष्यं प्रतीकतयाऽऽदाय व्याचष्टे—**आदेश इति।** अनुवर्तमानस्थानशब्दस्यादेशविशेषणत्वे प्रसज्यमानत्वलाभेऽप्युः स्थानिकत्वेनाविशेषितो भवतीत्येवं व्याचष्टे—**अथवेति।** अण् प्रसज्यमान इति भाष्यानुसारादाह—**तत्रेति।** प्रसज्यमान इति भाष्यं तात्पर्यकथनपरम्, नाक्षरार्थपरमित्याशयेनाह—**अथवेति।** अस्मिन् पक्षे प्रागुक्तदोषद्वयं नास्तीत्याह—**इदानीमिति।** अत्राकारादीनां परस्परविकल्पस्याष्टदोषदुष्टस्य प्रसङ्गान्नान्यबाधकोऽण्विधिः। नापि नियमः, प्रत्याहारग्रहणवैयर्थ्यात् गुणवृद्ध्योरेवानणां [1]प्रसङ्गादकारग्रहणमात्रेण तन्निवृत्तेः। नापि विहितस्य रपरत्वं गुणवृद्ध्योरवर्णाप्रतिपत्तेरनुद्धारात्। तस्माच्चतुर्थ एव पक्षः स्थितः।

**भा:—अथाण्ग्रहणं किमर्थम्, न ऊ रपरो भवतीत्येवोच्येत? ऊ रपर इतीयत्युच्यमाने क इदानीं रपरः स्यात्? यः स्थाने भवति। कश्च स्थाने भवति? आदेशः।**

**॥ वा ॥ आदेशो रपर इति चेद्रीरिविधिषु रपरप्रतिषेधः ॥**

---

(१) ग. वाप्रस

भा :—आदेशो रपर इति चेद्रीरिविधिषु रपरत्वस्य प्रतिषेधो वक्तव्यः। के पुना रीरिविधयः?। अकङ्लोपाऽऽनङनङ्रीङ्रिङादेशाः। अकङ्—सौधातकिः। अकङ्। लोप—पैतृष्वसेयः। लोप। आनङ्—होतापोतारौ। आनङ्। अनङ्—कर्ता हर्ता। अनङ्। रीङ्—मात्रीयति पित्रीयति। रीङ्। रिङ्—क्रियते ह्रियते। रिङ्।

॥ वा ॥ उदात्तादिषु च ॥

भा :—उदात्तादिषु च। किम्? रपरत्वस्य प्रतीषेधो वक्तव्यः। कृतिः हृतिः। कृतं हृतम्। प्रकृतम् प्रहृतम्। नॄः पाहि। तस्मादण्ग्रहणं कर्तव्यम्।

प्र :—रीरिविधिष्विति। बहुवचननिर्देशात् रीरिशब्दावुपलक्षणमिति पृच्छति—के पुनरिति। पैतृष्वसेय इति। लोपवचनं तु सर्वादेशार्थं स्यात्। होतापोताराविति। रेफस्य संयोगान्तलोपे कृते तस्यासिद्धत्वान्नलोपो न स्यात्।

उ :—ननु वार्तिके विशेषस्यैव प्रतीतेः तस्योपलक्षणत्वायोगात् के पुनरिति प्रश्नायोगः; अत आह—बहुवचनेति। सौधातकिरिति; भाष्ये 'सुधातुरकङ् च' इत्यकङादेशश्च। पैतृष्वसेय इति; 'ढकि लोप' इति लोपविधानात् ढक्। ननु लोपस्य रपरत्वे लोपाभावे यद्रूपं तदेव रूपमिति लोपविधिवैयर्थ्यप्रसङ्गः; अत आह—लोपेति। सर्वेति; वैयर्थ्यपरिहारायालोऽन्त्यपरिभाषां बाधित्वा सर्वादेश एव स्यादित्यर्थः। अत्र रपरत्वाभिधानमुखेन सर्वादेशत्वमेव विवक्षितम्, न तु रपरत्वम्। तेन यदि सर्वादेशो लोपस्तदा उः स्थाने न भवतीति कथं रपरः स्यादिति न शङ्कनीयम्। समुदायस्थानिकत्वेऽप्युः स्थानिकत्वमप्यस्तीति रपरत्वप्रसङ्गोऽपि वा। होतेत्यादौ रेफस्य श्रवणं नापाद्यं किं तु नकारस्येत्याह—रेफस्येति। 'आनङ् ऋतो द्वन्द्वे' 'ऋदुशनस्पुरुदंसोऽनेहसां च' 'रीङृतः' 'रिङ्शयग्लिङ्क्षु' इत्यानङादीनां विषयः समुदायस्येति इतरेतरयोगेऽयं द्वन्द्वः। स च समुदायरूप इति भावः।

॥ वा ॥ एकादेशस्योपसंख्यानम् ॥

भा :—एकादेशस्योपसंख्यानं कर्तव्यम्। खट्वर्श्यः मालर्श्यः। किं पुनः कारणं न सिध्यति? उः स्थाने अण् प्रसज्यमान एव रपरो भवतीत्युच्यते। न चायमुरेव स्थानेऽण् शिष्यते किं तर्हि? उश्चान्यस्य च।

॥ वा ॥ अवयवग्रहणात्सिद्धम् ॥

भा :—यदत्र ऋवर्णं तदाश्रयं रपरत्वं भविष्यति। तद्यथा—"माषा न भोक्तव्याः" इत्युक्ते मिश्रा अपि न भुज्यन्ते।

॥ वा ॥ अवयवग्रहणात्सिद्धमिति चेदादेशे रान्तप्रतिषेधः ॥

भा :—अवयवग्रहणात्सिद्धमिति चेदादेशे रान्तस्य प्रतिषेधो वक्तव्यः। होतापोतारौ। यथैवोश्चान्यस्य च स्थानेऽण् रपरो भवतीति एवं य उः स्थानेऽण् चानण् च सोऽपि रपरः स्यात्। यदि पुनर्ऋवर्णान्तस्य स्थानिनो रपरत्वमुच्येत—खट्वर्श्यः मालर्श्यः। नैवं शक्यम्। इह न प्रसज्येत—कर्ता हर्ता किरति गिरति। ऋवर्णान्तस्येत्युच्यते, न चैतदृवर्णान्तम्, ननु चैतदपि व्यपदेशिवद्भावेन ऋवर्णान्तम्। अर्थवता व्यपदेशिवद्भावः। न चैषोऽर्थवान्। तस्मान्नैवं शक्यम्। न चेदेवम्। उपसंख्यानं कर्तव्यम्। इह च रपरत्वस्य प्रतिषेधो वक्तव्यः 'मातुः, पितुः' इति।

प्र :—**एकादेशस्येति**। पूर्वपरयोरिति समुदायस्य स्थानित्वेन चोदितत्वात् तस्य च ऋवर्णरूपत्वाभावादिति भावः। **अवयवग्रहणादिति**। पूर्वपरयोरित्यनेनोद्भूतावयवभेदः समुदायो निर्दिश्यते। अवयवादेव चापेक्षितपरस्परौ समुदाय इति भवत्ययमृवर्णस्य स्थान इति भावः। **रान्तप्रतिषेध इति**। आनङि विधीयमाने आकारस्याणो भावादित्यर्थः। तस्मादवयवग्रहणादित्यस्यातिव्यापकत्वाद्यत्र साक्षादृवर्णस्याण् विधीयते तत्रैवेदमुपतिष्ठत इत्येकादेशस्योपसंख्यानं कर्तव्यमेव। **यदि पुनरिति**। उरिति वर्णग्रहणाद् 'वर्णग्रहणं च सर्वत्र तदन्तविधिं प्रयोजयति' इति न्यायादृवर्णान्तस्य ग्रहणम्। खट्वर्श्य इत्यत्र च समुदाय ऋवर्णान्तो भवतीति सिद्धं रपरत्वम्। **कर्तेति**। अङ्गस्येति षष्ठी अन्त्यमलमुपसंहृत्येति ऋवर्णस्य गुणेन भाव्यम्। न च ऋवर्णं ऋवर्णान्तो भवतीति

दोषः। न चेह तदन्तविधिरस्ति उरणिति भूतानुवादात्। न च प्रदेशेषु तदन्तस्य कार्यम्। अन्त्यस्यैवानुसंहारेण स्थानित्वप्रतिपादनादिति भावः। **अर्थव-तेति।** यथैवेयायेत्यत्रैकाच्त्वम्, अर्थस्य हि त्यागोपादानाभ्यां वर्णरूपता धातु-रूपता च व्यवस्थाप्यते। **इह चेति।** उपसंख्यानस्यातिव्याप्तधेत्यर्थः। **मातुरिति।** रपरत्वे कृते विभक्तिसकारस्य रुत्वं। पूर्वस्य 'रो रि' इति लोपः। 'ढ्रलोपे' इति दीर्घत्वम्। तत्र मातूरिति प्राप्नोतीति भावः।

उ:—समुदायस्य ऋवर्णत्वाभावात् कथमवयवस्य स्थानित्वम्; अत आह—**पूर्वेति। उद्भूतेति;** विवक्षितेति यावत्। अत एव द्विवचनमिति भावः। समुदायश्च न समुदायिभिन्न इत्याह—**अवयवाविति;** अगृहीताभिप्रायस्यावयव-ग्रहणादिति चेदिति चोद्यम्। तस्यार्थमाह—**आनङीति।** चोद्यस्यैकादेश उप-संख्यानमित्यत्रैव पर्यवसानमाह—**तस्मादिति;** ननूरित्यत्र ऋवर्णान्तस्य इति कथं लाभः; अत आह—**वर्णग्रहणं चेति।** नन्विकाङ्क्षे विशेष्यमाणे तदन्तविधेः ऋवर्णान्तस्य गुणेन भाव्यम्; अत आह—**अङ्गस्येति।** ननु ऋवर्णस्यापि ऋवर्णान्तत्वमन्तवद्भावेन स्याद्; अत आह—**न चेति।** न केवलमव्याप्तिर्दोषः, किं तु मूले कुठारं निदधाति—**न चेति;** अनुवादे आद्यन्तवदिति परिभाषाऽनुपस्था-नादित्यर्थः। यत्र साक्षादर्थाद्वा समानविभक्त्यन्तं विशेष्यमुपादीयते तत्रैव वर्णग्रहणे तदन्तविधिः। न चेह तथेति न तदन्तविधिरित्याहुः। नन्विह तदन्तविध्यभावेऽपि प्रदेशेषु ऋवर्णान्तस्य षष्ठीनिर्देशेन स्थानित्वं स्यात्। तदनुरोधेनानुवादेऽपि ऋवर्णान्तं गृह्येत; अत आह—**न चेति।** अर्थवता व्यपदेशिवद्भावमुदाहरति—**यथेति।** तदुपपादयति—**अर्थस्येति।** एकः अच् यस्येति बहुव्रीहिः। तत्रेकारमात्रस्य भेदाभावेनान्यपदार्थत्वासंभवात् अर्थसहितधातुरन्यपदार्थस्तदेकदेशो धातुरिति व्यपदेशिव-द्भाव इत्यर्थः। एकादेशस्योपसंख्यानपक्षे प्रतिषेधोऽपि वक्तव्यो नान्यथेत्याह—**उप-संख्यानस्येति।** भाष्ये **इह चेति;** चस्त्वर्थः। प्रतिषेधाभावे अनिष्टमाह—**रपरत्व इति।**

**भा:—उभयं न वक्तव्यम्। कथम्?। यो द्वयोः षष्ठी-निर्दिष्टयोः प्रसङ्गे भवति लभतेऽसावन्यतरतो व्यपदेशम्। तद्यथा—देवदत्तस्य पुत्रः देवदत्तायाः पुत्र इति। कथं मातुः पितुरिति?। अस्त्वत्र रपरत्वम्। का रूपसिद्धिः? 'रात्सस्य' इति सकारस्य लोपः। रेफस्य विसर्जनीयः। नैवं शक्यम्। इह हि—मातुः**

**करोति पितुः करोतीति, 'अप्रत्ययविसर्जनीयस्य' इति षत्वं प्राप्नोति। अप्रत्ययविसर्जनीयस्येत्युच्यते, प्रत्ययविसर्जनीयश्चायम्। लुप्यतेऽत्र प्रत्ययो "रात्सस्य" इति। एवं तर्हि—**

**॥ वा ॥ भ्रातृष्पुत्रग्रहणं ज्ञापकमेकादेशनिमित्तात् षत्वप्रतिषेधस्य ॥**

**भा:—यदयं कस्कादिषु भ्रातृष्पुत्रशब्दं पठति, तज्ज्ञापयत्याचार्यः—नैकादेशनिमित्तात् षत्वं भवतीति।**

प्र:—**द्वयोरिति।** अवयवावेवात्रापेक्षितपरस्परौ स्थानिनौ। अत एवैकग्रहणं स्थानिभेदादादेशभेदनिवृत्त्यर्थं कृतम्। **अन्यतरत इति।** तृतीयान्तादाद्यादित्वात्तसिः। **तद्यथेति।** एकः पुत्र उभाभ्यामपि यथा व्यपदिश्यते तथेहापि पूर्वपराभ्यां तत्स्थानिकत्वेनादेशस्य व्यपदेशः। अकङादेस्तु समुदायस्यादेशत्वं नाण इति रपरत्वाभावः। **अप्रत्ययेति;** असित्ययं समुदायः प्रत्ययो न त्वकार इति तदादेशोऽप्यप्रत्यय इति भावः। **प्रत्ययेति।** प्रत्ययावयवत्वादकारोऽपि प्रत्ययः। अतस्तदादेशोऽपि प्रत्यय इति भावः। **लुप्यत इति।** सकारसन्निधिकालेऽकारेण नैव लब्धा प्रत्ययसंज्ञा समुदायसन्निवेशिनीत्वात् तस्या इति कुतस्तदादेशस्तां लप्स्यते। उत्वे च कृतेऽवशिष्टः सकार एव प्रत्ययसंज्ञः। स च लुप्त इति भावः। **एकादेशनिमित्तादिति।** एकादेशशास्त्रं निमित्तं यस्य तस्मात्परस्येत्यर्थः।

उ:—समुदाय आनुषङ्गिकः। द्वयोरेव स्थानित्वमित्यत्र नियामकमाह—**अत एवेति।** षष्ठीनिर्दिष्टयोरित्यत्र न दृष्टान्तः। किन्तूभयसंबन्धिनोऽन्यतरेण व्यपदेशमात्र इत्याह—**एक इति। समुदायस्येति;** प्रत्येकवर्णानामादेशत्वमानकमिति भावः। ननु जसोऽकारादेशस्योकारस्य प्रत्ययादेशत्वादप्रत्ययस्येति प्रतिषेधः स्याद्; अत आह—**असिति। अकारोऽपीति;** यथा तव सकार इति भावः। नन्वकारादेशस्योकारस्य प्रत्ययत्वाल्लुप्यतेऽत्र प्रत्यय इत्ययुक्तम्; अत आह—**सकारेति। तस्याः;** प्रत्ययसंज्ञायाः। **तां;** प्रत्ययसंज्ञाम्। सकारस्य तु प्रत्ययत्वं संभवतीत्याह—**उत्वे चेति। स च लुप्त इति;** 'रात्सस्य' इत्यनेन। एवं च सलोपे कर्तव्ये रुत्वस्यासिद्धत्वात् न मातुरिति रूपप्रसङ्गः इति भावः। निमित्तग्रहणार्थवत्त्वाय पूर्वपदे लक्षणाङ्गीकारेण बहुव्रीहिमाह—**एकादेशेति। तस्मात्;** एकादेशादेवेत्यर्थः। एकादेशरूपं यत्षत्वनिमित्तमुकाररूपं तस्मादित्यर्थे कर्मधारयोऽपि साधुरित्याहुः।

**भाः**—किं पुनरयं पूर्वान्तः, आहोस्वित्परादिः, आहोस्विदभक्तः? कथं वाऽयं पूर्वान्तः स्यात्? कथं वा परादिः? कथं वा अभक्तः? यद्यन्त इति वर्तते, ततः पूर्वान्तः; अथादिरिति वर्तते, ततः परादिः। अथोभयं निवृत्तम्, ततोऽभक्तः।

प्र:—**यद्यन्त इति।** यद्यपि रपर इत्यत्रान्यपदार्थस्य प्राधान्यं तथापि रेफस्य विधेयतया प्राधान्यात् तस्यैवान्तत्वं विशेषणमिति भावः। यद्यपि प्रसज्यमान एवाण् रपरो विधीयते; तथाप्यानङ इव साक्षादत्र अर् आर् इत्येवमविधानात्तात्पर्यपर्यालोचनन्यायेन केवलावस्थानात् पक्षत्रयविमर्शः।

उ:—**यद्यपीति।** तथा चान्तत्वादिकमण एव विशेषणं युक्तमिति भावः। **प्राधान्यादिति।** रपरशब्दतात्पर्यविषयत्वादित्यर्थः। नन्वरारोरेव विधानात् कथमभक्तत्वपरादित्वपक्षसंभवः; अत आह—**यद्यपीति।** **अविधानात्**; सूत्रेऽनुच्चारणात्। **तात्पर्येति**; प्राप्ताप्राप्तविवेकेनेत्यर्थः। **केवलेति**; रेफमात्रविधावेव सूत्रस्योपस्थानाच्चरितार्थत्वादित्यर्थः।

**भाः**—कश्चात्र विशेषः?।

**॥ वा ॥ अभक्ते दीर्घलत्वयगभ्यस्तस्वरहलादिशेषविसर्जनीयप्रतिषेधः प्रत्ययाव्यवस्था च ॥**

**भाः**—यद्यभक्तः दीर्घत्वं न प्राप्नोति गीः पूः, रेफवकारान्तस्य धातोरिति दीर्घत्वं न प्राप्नोति। किं पुनः कारणं रेफवकाराभ्यां धातुर्विशेष्यते, न पुनः पदं विशेष्यते—रेफवकारान्तस्य पदस्येति? नैवं शक्यम्। इहापि प्रसज्येत—अग्निर्वायुरिति। एवं तर्हि रेफवकाराभ्यां पदं विशेषयिष्यामो धातुनेकम्। रेफवकारान्तस्य पदस्येको धातोरिति। एवमपि—प्रियं ग्रामणिकुलमस्य प्रियग्रामणिः प्रियसेनानिः अत्रापि प्राप्नोति। तस्मात् धातुरेव विशेष्यते। धातौ च विशेष्यमाणे इह दीर्घत्वं न प्राप्नोति। गीः पूः ॥ दीर्घ ॥ लत्व—लत्वं च न सिध्यति। निजेगिल्यते। "ग्रो यङि" इति लत्वं न प्राप्नोति। नैष दोषः। ग्र इत्यनन्तरयोगैषा षष्ठी। एवमपि स्वर्जेगिल्यत इत्यत्रापि प्राप्नोति। एवं तर्हि यङा आनन्तर्यं विशेषयिष्यामः। अथवा ग्र इति पञ्चमी ॥ लत्व ॥ यकुस्वर—याकुस्वरश्च न सिध्यति। गीर्यते स्वयमेव,

पूर्यते स्वयमेव। "अचः कर्तृयकि" इत्येष स्वरो न प्राप्नोति रेफेण व्यवहितत्वात्। नैष दोषः। 'स्वरविधौ व्यञ्जनमविद्यमानवद्भवति" इति नास्ति व्यवधानम्॥ यकृस्वर ॥ अभ्यस्तस्वर—अभ्यस्तस्वरश्च न सिध्यति। मा हि स्म ते पिपरुः। मा हि स्म ते बिभरुः। 'अभ्यस्तानामादिरुदात्तो भवति अजादौ लसार्वधातुके' इत्येष स्वरो न प्राप्नोति रेफेण व्यवहितत्वात्। नैष दोषः। 'स्वरविधौ व्यञ्जनमविद्यमानवद्भवति' इति नास्ति व्यवधानम्॥ अभ्यस्तस्वर॥ हलादिशेष—हलादिशेषश्च न सिध्यति। वव्रृते वव्रृधे। अभ्यासस्येति हलादिशेषो न प्राप्नोति॥ हलादिशेष॥ विसर्जनीय [प्रतिषेध]—विसर्जनीयस्य प्रतिषेधो वक्तव्यः। नार्कुटो नार्पत्यः। "खरवसानयोर्विसर्जनीयः" इति विसर्जनीयः प्राप्नोति॥ विसर्जनीय [प्रतिषेधः]॥ प्रत्ययाव्यवस्था च—प्रत्यये च व्यवस्था न प्रकल्पते—किरतः गिरतः। रेफोऽप्यभक्तः, प्रत्ययोऽपि। तत्र व्यवस्था न प्रकल्पते।

प्र :—**लत्वं चेति।** ग्र इत्यवयवषष्ठीति चोद्यम्। **पिपरुरिति।** पॄ लङ् झि शप् श्लुर्द्विवचनम् 'अर्तिपिपर्त्योश्च' इतीत्त्वं 'सिजभ्यस्त' इति जुस्, 'जुसि च' इति गुणः। **ववृत इति।** अभ्यासावयवस्यानादेर्हलो निवृत्त्या भाव्यमिति रेफस्य निवृत्त्यसिद्धिः। **नार्कुट इति;** यस्मात्सुप्तिङ्विधिस्तदादि सुबन्तं तिङन्तं चेति रेफान्तस्य पदत्वाद्विसर्जनीयप्रसङ्गः। **किरत इति।** एकवचने किरतीति नित्यत्वात् पूर्वं विकरणः। आङ्ग तु कार्यमनित्यम्, अकृते हि विकरणे गुणः प्राप्नोति, कृते त्वित्वमिति। द्विवचने तु द्वयोरपि नित्यत्वात्परत्वादित्वम्, तत्र रेफोऽभक्तत्वान्न धात्ववयव इति विकरणो न स्यात्। स हि धातोः परो विधीयते। अथ विकरणात्परो रेफस्तदाऽप्यणः परो न स्यादिति व्यवस्था द्वयोर्न प्रकल्पते। अथ व्यवहितेऽपि परशब्दस्य प्रवृत्तिस्तथापि समीहिता व्यवस्था न प्रकल्पत इति प्रत्ययाव्यवस्थोक्ता।

उ :—**भाष्ये गीरिति।** गॄ निगरणे, पॄ पालनादौ। 'क्विप् च' इति क्विप्। 'ॠत इद्धातोः', 'उदोष्ठ्यपूर्वस्य'। भाष्ये ग्रामणीत्यस्य नपुंसकत्वार्थं कुलमिति विशेष्योपादानम्। ननु गॄसंबधिनो रेफस्य लत्वविधाने नोक्तदोषः आनन्तर्यादिसंबन्धस्याभक्तत्वेऽपि संभवात्; अत आह—**अवयवेति।** भाष्ये **निजेगिल्यते।** गॄ यङ्, 'ॠत इद्धातो': इतित्त्वं, रपरत्वं 'सन्यङोः' इति द्वित्वं

'कुहोश्चुः' इत्यभ्यासस्य श्चुत्वं, 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणः। **भाष्ये यङेति।** अोऽनन्तरो यङश्चानन्तरो यस्तस्य रेफस्य लत्वम्। स्वर्जेगिल्यते इत्यत्र रेफो न यङोऽनन्तर इत्यर्थः। भाष्ये **अथवेति।** अः परस्य यङः पूर्वस्य च लाभः। भाष्ये **अच इति;** उपदेशेऽजन्तानां कर्तृयक्याद्युदात्तत्वं वा स्यादिति सूत्रार्थः। भाष्ये **स्वरविधाविति।** यद्यपि यत्र स्वरविधिः प्राप्नोति तत्र स न्यायः, अत्र व्यवधानात्स एव न प्राप्नोति; तथापि स्वरविधावविवक्षित एव स न्याय इति भावः। भाष्ये उदात्तत्वेनान्यथासिद्धिपरिहाराय माङ्प्रयोगः। तावन्मात्रे 'तिङ्ङतिङ' इत्याष्टमिकसर्वानुदात्तत्वेनैतस्य बाधः स्यादतः हीत्युक्तम्। 'हि च' इति सूत्रेण हिना युक्ते ऽनुदात्तत्वनिषेधादेष स्वरस्सिध्यति। स्मशब्दो लङ्बोधनाय। भाष्ये **वव्रृते;** वृतेर्लिटि द्वित्त्वम्, उरत्। तस्यैव रेफस्यालोपमुपपादयति—**अभ्यासेति।** नृकुटिशब्दात् भवाद्यर्थे अण् नार्कुटः। नृपतिशब्दात् दित्यदित्येति तस्मिन्नेवार्थे ण्यः। नार्पत्यः। ननु रेफान्तान्न सुब्विहित इति कथं प्रत्ययलक्षणेन तदन्तस्य पदसंज्ञा; अत आह—**यस्मादिति।** 'न लुमताङ्गस्य' इति सूत्रे भाष्यकृद्वचनमिदम्। एकवचनत्यागे हेतुमाह—**द्विवचन इति। नित्यत्वादिति।** यद्यपि धातोः परः कर्तृवाचिनि सार्वधातुकेऽनन्तरे विकरणो विधेयः। न चाभक्ते रेफे सति तथा विकरणः संभवतीति सोऽप्यनित्यः, तथापि सार्वधातुके अभिधेयत्वेन स्थिते कर्तरि इति व्याख्यायमाने, सार्वधातुक इति विषयसप्तम्यां, कृतेऽप्याङ्गे धातोः परो विकरणः प्राप्नोति। स एव नित्य इति भावः। **द्वयोरपीति।** असत्यपि विकरणे तसो ङित्वादित्वप्रवृत्तेरित्यर्थः। **अथेति।** यद्यप्यणः परो विधीयमानः विकरणात्परो न लभ्यते, तथापि परशब्दस्याव्यवहितवाचित्वे विकरणो न स्यादित्येवं दूषणम्। भाष्यस्याव्यवस्थोपपादनायाथेत्याद्युक्तम्। यदि व्यवहितेऽपि परशब्दस्तदा कदाचिद्रेफात्परो विकरण इति, कदाचित् विकरणात्परो रेफ इत्यपि संभवाद्रेफात्पर एव विकरण इतीष्टव्यवस्था न सिध्येदिति तात्पर्यनिष्कर्षः।

**भा:—एवं तर्हि पूर्वान्तः करिष्यते।**

**॥ वा ॥ पूर्वान्ते वेवधारणं विसर्जनीयप्रतिषेधो यक्स्वरश्च ॥**

**भा:—यदि पूर्वान्तः रोरवधारणं कर्तव्यम्—"रोः सुपि" रोरेव सुपि नान्यस्य। सर्पिष्षु धनुष्षु। इह मा भूत्—गीर्षु पूर्षु। परादावपि सत्यवधारणं कर्तव्यम्—चतुर्ष्वित्येवमर्थम्। ॥ वेवधारणम् ॥ विसर्जनीयप्रतिषेधः—विसर्जनीयस्य च प्रतिषेधो**

**वक्तव्यः। नार्कुटः नार्पत्यः। "खरवसानयोर्विसर्जनीयः" इति विसर्जनीयः प्राप्नोति। परादावपि विसर्जनीयस्य प्रतिषेधो वक्तव्यः नार्कलिपरित्येवमर्थम्। कल्पिपदसंघातभक्तोऽसौ नोत्सहतेऽवयवस्य पदान्ततां विहन्तुमिति विसर्जनीयः प्राप्नोति॥ विसर्जनीयप्रतिषेधः॥ यक्स्वरः—यक्स्वरश्च न सिध्यति। गीर्यते स्वयमेव। "अचः कर्तृयकि" इत्येष स्वरो न प्राप्नोति। नैष दोषः। उपदेश इति वर्तते॥ यक्स्वरः॥**

प्र:—**गीर्ष्विति।** परादौ सुब्ग्रहणेन गृह्यत इति न पदान्तत्वमिति भावः। अभक्तपक्षेऽपि तदादिवचनात्प्राप्तिरिति कर्तव्यमवधारणम्। **कल्पिपदेति;** नृकल्पशब्दादिञि वृद्धौ च रेफः प्रत्ययसमुदायस्य कल्पिशब्दस्य भक्तत्वादवयवो न तु कल्पशब्दस्य। ततश्च नृशब्दस्य कल्पशब्दे परतः पदसंज्ञा विधीयमाना तदादीत्यधिकाराद्रेफान्तस्य भवतीति विसर्जनीयप्रसङ्गः। पदशब्देन च पद्यतेऽनेनार्थ इति प्रत्यय उच्यते। तेन प्रत्ययसमुदायभक्तो रेफः कल्पिशब्दे परतो व्यवस्थितो न कल्पशब्दस्यावयव इति तयोः पौर्वापर्यमस्त्येवेति अवयवस्यात्मन एव पदान्ततां विहन्तुं नोत्सहत इत्यर्थः। क्वचित्तु कल्पपदसंघातभक्त इति पाठः। तत्रायमर्थः—कल्पशब्दस्य संबन्धि यत्पदं नार्कलिपरिति तस्य पदस्य योऽवयवः प्रत्ययसंघातः कल्पिशब्दस्तद्भक्त इत्यर्थ।

उ:—वैवधारणं परादित्वे न कर्तव्यम्। अभक्तत्वेऽपि कर्तव्यमित्याह—**परादाविति। तदादीति;** यस्मात्सुप्तिङ्विधिरिति वचनादित्यर्थः। **नृकल्पेति।** ईषदूनो ना नृकल्पः, तच्छब्दादित्यर्थः। समुदायस्थरेफस्य वृद्ध्यनन्तरभावित्वात् वृद्धेश्चेञधीनत्वात् समुदायभक्तत्वम्। **न त्विति।** तथा च कल्पग्रहणे न स गृह्यत इत्यर्थः। **पदसंज्ञा;** स्वादिष्वित्यनेन। कल्पपदेत्ययुक्तं प्रत्ययस्य पदत्वाभावाद्; अत आह—**पदशब्देनेति।** स्वावयवस्य स्वेन पौर्वापर्यासंभवात् कथं रेफान्तस्य पदसंज्ञा; अत आह—**तेनेति। तयोः;** कल्पशब्दरेफयोः। तथा च कल्पे परतो रेफान्तस्य पदसंज्ञा भवतीति भावः। रेफः समुदायावयवस्यात्मनः स्वस्य पदान्ततां विहन्तुं नोत्सहत एवेत्यन्वयः। पदस्य संघातः पदसंघातः, कल्पिश्चासौ पदसंघातश्चेति भाष्ये विग्रहः। भाष्ये **उपदेश इति;** तास्यनुदात्तेदित्यतः। तथा चोपदेशेऽजन्तत्वात् स्वरसिद्धिरित्यर्थः। 'अतो लोप' इत्यत्र 'अनुदात्तोपदेश' इत्यतः उपदेशानुवृत्तिः।

भा :—अथवा पुनरस्तु परादिः ।

॥ वा ॥ पराश्वकारलोपौत्वपुक्प्रतिषेधश्चङ्युपधाह्रस्वत्वमिटो व्यवस्थाऽभ्यासलोपोऽभ्यस्ततादिस्वरो दीर्घत्वं च ॥

भा :—यदि परादिः अकारलोपः प्रतिषेध्यः । कर्ता हर्ता । 'अतो लोप आर्धधातुके' इत्यकारलोपः प्राप्नोति । नैष दोषः, उपदेश इति वर्तते । ग्रह्युपदेश इति वर्तते, 'धिनुतः, कृणुतः' अत्र लोपो न प्राप्नोति । नोपदेशग्रहणेन प्रकृतिरभिसंबध्यते—किं तर्हि? आर्धधातुकमभिसंबध्यते—आर्धधातुकोपदेशे यदकारान्तमिति ॥ अकारलोप ॥ औत्व—औत्वं च प्रतिषेध्यम् । चकार जहार । "आत औ णलः" इत्यौत्वं प्राप्नोति । नैष दोषः । 'निर्दिश्यमानस्यादेशा भवन्ति' इत्येवं न भविष्यति । यत्तर्हि निर्दिश्यते तस्य कस्मान्न भवति? रेफेण व्यवहितत्वात् ॥ औत्व ॥ पुक्प्रतिषेधः—पुक् च प्रतिषेध्यः । कारयति हारयति । 'आतां पुक्' इति पुक् प्राप्नोति ॥ पुक्प्रतिषेधः ॥ चङ्युपधाह्रस्वत्वम्—चङ्युपधाह्रस्वत्वं च न सिध्यति । अचीकरत् अजीहरत् । "णौ चङ्युपधाया ह्रस्वः" इति ह्रस्वत्वं न प्राप्नोति ॥ चङ्युपदाह्रस्वत्वम् ॥ इटो व्यवस्था—इटश्च व्यवस्था न कल्पते । आस्तरिता निपरिता । इडपि परादी रेफोऽपि । तत्र व्यवस्था न प्रकल्पते ॥ इटो व्यवस्था ॥ अभ्यासलोपः—अभ्यासलोपश्च वक्तव्यः । वव्रृते ववृधे । "अभ्यासस्य" इति हलादिशेषो न प्राप्नोति ॥ अभ्यासलोपः ॥ अभ्यस्तस्वरः—अभ्यस्तस्वरश्च न सिध्यति । मा हि स्म ते पिपरुः, मा हि स्म ते बिभरुः । 'अभ्यस्तानामादिरुदात्तो भवत्यजादौ लसार्वधातुके' इत्येष स्वरो न प्राप्नोति ॥ अभ्यस्तस्वर ॥ तादिस्वरः—तादिस्वरश्च न सिध्यति । [1]प्रकर्ता प्रकर्तुं । "तादौ च निति कृत्यतौ" इत्येष स्वरो न प्राप्नोति । नैष दोषः । उक्तमेतत् "कृदुपदेशे वा ताद्यर्थमिडर्थम्" इति । तादिस्वरः । दीर्घः—दीर्घत्वं न सिध्यति ।

(१) प्रकर्ता, प्रहर्ता इत्युद्योतनपाठः ।

**गीः पूः । इति "रेफवकारान्तस्य धातोः" इति दीर्घत्वं न प्राप्नोति ॥ दीर्घः ॥ उरण्रपरः ॥**

प्रः—**धिनुत इति;** एकवचने असत्यप्यकारलोपे आद्गुणेन वा, विकरणस्य वा गुणे पररूपेण धिनोतीति सिध्यतीति द्विवचनं समुदाहृतम् । **आर्धधातुकोपदेश इति;** सन्नियोगेन चाकारस्य विधानादार्धधातुकप्रतिपत्तिकालेऽकारान्तप्रतिपत्त्या सिद्धो लोपः । **निर्दिश्यमानस्येति ।** ननु 'आदेः परस्य' इति रेफस्यौत्वेन भाव्यम्, नैष दोषः, णल इत्यनेन यत्प्रत्यायितं प्रयोगविषयमकारमात्रं तस्याकारान्तादङ्गादुत्तरस्यादेशः प्रवर्तते, स रेफस्य त्वनुमीयमानत्वादादेशाभावः । प्रत्याय्यप्रत्यायकाभेदविवक्षया षष्ठीनिर्दिष्टस्यादेशा इत्युच्यते । **रेफेणेति ।** यद्रूपं षष्ठीनिर्दिष्टमकारमात्रं तद्व्यवहितमित्यर्थः । यदि तु प्रत्ययस्येत्युच्यते लिट इति च तदा व्यवधानाभावात् स्यादेवादेशः । **आस्तरितेति ।** नित्यत्वात् गुणे रपरत्वे वा कृते 'नेड्वशि कृति' इति प्रतिषेधादप्रवृत्तिलक्षणेटोऽव्यवस्था । प्रवृत्तौ वा रेफात् पूर्वमिडिति अनिष्टा व्यवस्था प्राप्नोति । **गीरिति ।** अन्तरङ्गत्वाद्विलोपे कृते इत्वे रपरत्वे च सुपोऽयमादी रेफ इति कल्पनायां 'रात्सस्य' इति सलोपे कृते दीर्घत्वं न स्यादिति पूर्वान्तपक्षोऽत्र स्थितः ।

उ-—**धिनुत इति ।** 'धिन्विकृण्व्योर च' इत्युप्रत्ययसन्नियोगेनाकारान्तादेशो विधीयते तस्योपदेशकालेऽभावादुप्रत्यये परतो लोपो न स्यादिति भाष्यार्थः । तत्रैकवचनानुदाहृतौ हेतुमाह—**एकवचन इति ।** परत्वाद्वार्णादाङ्गं बलीय इति च सार्वधातुकगुणेन भाव्यमित्याशयेनाह—**विकरणस्य वेति । पररूपेण;** 'अतो गुणे' इत्यनेन । भाष्ये उपदेशग्रहणं प्रकृतिविशेषणं मत्वा धिनुत इति चोद्यम् । आर्धधातुकोपदेशकालेऽकारान्तत्वमुपपादयति—**सन्नियोगेनेति ।** निर्दिश्यमानपरिभाषा नेह प्रवर्तेत इति शङ्कते—**नन्विति;** परत्वादित्यर्थः । **णल इत्यनेन;** सूत्रस्थेन । **प्रत्यायितमिति ।** चकारेति प्रयोगस्थाकारप्रत्यायकत्वादेतस्येत्यर्थः । **प्रवर्तते;** प्रत्यक्षकृतत्वादित्यर्थः । **सरेफस्येति;** णलो रेफसाहित्यमानुमानिकं न तु सूत्रे साक्षाच्छ्रुतमिति 'आदेः परस्य' इति न प्रवर्तेत इत्यर्थः । नन्वेवमपि निर्दिश्यमानस्येत्यनुपपन्नम् । सूत्रे यस्य षष्ठ्या निर्देशो न तस्यादेशः, किं तु तेन प्रत्यायितस्य प्रयोगस्थस्य; अत आह—**प्रत्याय्येति ।** एतच्च निर्दिष्टस्योच्चारितस्येत्यर्थमङ्गीकृत्योक्तम् । प्रतिपादितस्येत्यर्थे नानुपपत्तिरिति ज्ञेयम् ।

णल इत्युक्तेरयं भाष्योक्तः परिहारः। प्रत्ययस्य लिट इति चोक्तौ नायं परिहारः। स्थानिनो मात्रिकत्वेनानाश्रयणादित्याह—**यदि त्विति।** व्यतिरेकमुखेन भाष्यसमर्थनार्थमिदमुक्तम्। न त्वेवं सूत्रे निर्देशोऽस्ति। तथापि णल्ग्रहणाभावे प्रत्ययमात्रस्य लिण्मात्रस्य वा औत्वप्रसङ्गात्। भाष्ये **अचीकरदिति;** कारि चङ् इति स्थिते रेफस्य णिभक्तत्वेनाकारस्योपधात्वाभावाद्ध्रस्वाप्राप्तिरित्यर्थः। वार्तिके इटोऽव्यवस्थेत्यत्राकारप्रश्लेषेण भाष्यकृनेटमङ्गीकृत्य तत्र व्यवस्था न प्रकल्पत इति व्याख्यातम्। इटोऽप्राप्तेस्तदयुक्तमिति मत्वा यथाश्रुतवार्तिकं स्वयं व्याख्याति—**नित्यत्वादिति।** रेफस्य परादित्वेन वशादित्वादिनिषेधः। भाष्यमपि संगमयति—**प्रवृत्तौ वेति;** इट इत्यादिः। 'एकाच उपदेश' इत्यत्र नेड्वशीत्यनुवृत्त्या उपदेशे वशादेरिट्प्रतिषेधादत्रेट् प्रवर्तत एवेति भाष्याभिप्रायोऽनेनोक्तः। भाष्ये **अजादाविति।** रेफस्य परादित्वे अजादित्वासंभवादित्यर्थः। भाष्ये **प्रकर्ता प्रहर्ता।** तृन्। तुवर्जिते तादौ निति कृत्यनन्तरो गतिः प्रकृतिस्वरः इति सूत्रार्थः। **कृदिति;** पूर्वं कृद्ग्रहणस्याप्रयोजनत्वमुक्त्वा प्रयोजनमनेन कथ्यते। कृदुपदेशकाले यस्तादिरित्येवं प्रतिपत्त्यर्थं कृद्ग्रहणम्। किं प्रयोजनम्? इडर्थमिति तादाविति सूत्रस्थवार्तिकार्थः। तत्र यथा प्रलविता प्रलवितुमित्यत्र एष स्वरः तथा प्रकर्तेत्यादौ रेफादावप्येष स्वरः सिध्यतीति भाष्यार्थः। ननु रेफस्य परादित्वे अपृक्तत्वाभावाद्धिलोपो न प्राप्नोतीति किं नोच्यते। न च हल्ङ्यादिलोपे संयोगान्तलोपेन तन्निवृत्तिः 'रात्सस्य' इति नियमात्; अत आह—**अन्तरङ्गत्वादिति।** विमात्राश्रयत्वात् प्रकृतिप्रत्ययानपेक्षतया अन्तरङ्गत्वम्। लोपविधेर्बलवत्त्वाच्च पूर्वं विलोपः पश्चादित्वं रेफस्याविति रेफः सोरादिः। **रात्सस्य इति;** हल्ङ्याभ्य इत्यत्र हलन्तात्सोर्लोप इति। तेनात्र लोपो न प्रवर्तत इति भावः। **पूर्वान्तेति;** नार्कुट इत्यादावन्तरङ्गे विसर्जनीये कर्तव्ये बहिरङ्गाया वृद्धेरसिद्धत्वात् विसर्गाप्रसङ्गः। दोषान्तरं च भाष्य एव परिहृतमिति भावः॥

## सू.—आलोऽन्त्यस्य ॥ १। १। ५१ ॥

**भा:—किमिदमल्ग्रहणमन्त्यविशेषणम्, आहोस्विद् आदेशविशेषणम्? किं चातः? यद्यन्त्यविशेषणम् आदेशोऽविशेषितो भवति। तत्र को दोषः? अनेकाल्प्यादेशोऽन्त्यस्य प्रसज्येत। यदि पुनर् "अलन्त्यस्य" इत्युच्यते तत्रायमप्यर्थः "अनेकाल्शित्सर्वस्य" इत्येतन्न वक्तव्यं भवति। इदं नियमार्थं**

**भविष्यति—'अलेवान्त्यस्य भवति, नान्य' इति। एवमप्यन्त्योऽविशेषितो भवति। तत्र को दोषः? वाक्यस्यापि पदस्याप्यन्त्यस्य प्रसज्येत। यदि खल्वप्येषोऽभिप्रायस्तन्न क्रियेतेति, अन्त्यविशेषणेऽपि सति तन्न करिष्यते। कथम्? "ङिच्च, अलोन्त्यस्य" इत्येतन्नियमार्थं भविष्यति—ङिदेवानेकालन्त्यस्य भवति नान्य इति।**

प्रः—अलोऽन्त्यस्य ॥ **किमिदमिति।** षष्ठीप्रथमयोर्निर्देशस्य साम्यात्प्रश्नः। **यदि पुनरिति।** प्रथमाबहुवचनम् अल इति यदि व्याख्यायेतेत्यर्थः। अस्मिंश्च पक्षे 'रङोरजसां लोपश्च' इति लोपः सर्वादेशः प्राप्नोति विरजीकरोतीति। **इदं नियमार्थमिति।** अन्त्यस्यादेशा भवन्तीत्यलोऽप्याक्षेपादल्ग्रहणमनल्व्यावृत्त्यर्थमिति भावः। **वाक्यस्यापीति।** दोषपरत्वादेवमुक्तम्। न तु वाक्यं षष्ठीनिर्दिष्टमस्ति। पदस्य तु परमानडुद्भ्यामित्यत्रानडुच्छब्दस्यान्त्यस्य सर्वस्य दत्वं प्राप्नोति। **यदि खल्वपीति।** अवश्यकर्तव्योऽसौ योगोऽपवादविप्रतिषेधार्थः। अथ लाघवमात्रे आदरस्तत्राप्युच्यते—**अन्त्यविशेषणेऽपीति।**

उः—नन्वल इति षष्ठी न प्रथमाबहुवचनं बहुत्वानुपयोगात्। तथा च संशयायोगः; अत आह—**षष्ठीन्ति।** बहुत्वस्यादेशभेदाभिप्रायत्वसंभवादिति भावः। भाष्ये प्रसज्येतेत्यनन्तरं तन्निवृत्तये 'अनेकाल्' इति कर्तव्यं स्यादिति शेषः। षष्ठ्यन्तत्वे अलन्त्यस्येत्ययुक्तम्, सूत्रभेदश्च कृतः स्यात्; अत आह—**प्रथमेति।** अत्र स्वयं दोषान्तरमाह—**अस्मिन्निति।** अलेवान्त्यस्येत्युक्ते लोपस्यानल्त्वेन सर्वादेशत्वप्रसङ्ग इत्यर्थः। अयं पक्षो भाष्यकृतो अनभिप्रेतः इति द्योतयितुं भाष्यव्याख्यानात् पूर्वमेव दोषोपन्यासः। भाष्ये **अर्थः**; प्रयोजनम्। विरजीकरोतीत्यत्र सर्वादेशः प्राप्नोतीत्यन्वयः। इदमा सूत्रं न परामृश्यते तस्य विध्यर्थत्वात्, किन्तु अल्पदमिति दर्शयन् तस्य नियमार्थतामुपपादयति—**अन्त्यस्येति।** अन्यतः प्राप्ते नियम इति प्राप्तिमाह—**अल इति**; अलात्मकस्यादेशस्यापीत्यर्थः। **आक्षेपादिति**; अत्र वाक्यभेदः। अन्त्यस्येति स्थानषष्ठ्या आक्षिप्ता अलनलात्मका आदेशा अन्त्यस्य भवन्ति। तत्रालात्मक एवादेशोऽन्त्यस्य भवति इति। **दोषेति।** दोषप्रतिपादनपरत्वादतिप्रसङ्गकथनाय वाक्यस्येत्युक्तं न तु परमार्थतयेत्यर्थः। **न त्विति।** षष्ठीस्थान इतीहानुवर्तते। यः स्थानषष्ठ्या बोधितस्तदन्तस्येति न च वाच्यम्। तथा तेन वाक्यस्य टेरित्यादौ षष्ठीनिर्देशे-

ऽपि न दोष इति भावः । **पदस्य त्विति ।** अन्त्यस्येत्यनेन सामानाधिकरण्येन संबध्यते । आष्टमिकस्य पदस्येत्यस्य 'अपदान्तस्य मूर्धन्यः' इत्येतत्पर्यन्तमधिकृतत्वात् पदस्य वस्वादिभिर्विशेषणात् वस्वन्तस्य पदस्येतरेषां पदरूपाणां निर्देशात् अन्त्यस्यानड्डुत्पदस्य दत्वं प्राप्नोति । एवं परमविद्वद्भ्यामित्यादावपीत्यर्थः । यदि खल्वित्यनेन स्वाभिप्रायोऽन्यथा सूचितः, तमाह— **अवश्येति । अपवादेति ;** 'अलोऽन्त्यस्य' इत्यस्य 'आदेः परस्य' 'अनेकाल्शित्सर्वस्य' इत्यपवादौ । तत्र 'अतो भिस ऐस्' इत्यादौ अनेकाल् इत्येव परत्वाद् भवति । तत्सूत्रे अनेकाल्ग्रहणाभावे 'आदेः परस्य' इत्येतदेव निर्बाधं प्रवर्तत इति अनेकाल् इति अवश्यं कर्तव्यमित्यर्थः । नन्ववश्यकर्तव्ये अन्त्यविशेषणेऽपि इत्युक्तिरयुक्ता ; अत आह—**अथेति ।** भिसादौ शित्करणेनैवापवादविप्रतिषेधोपपत्तेरनेकाल्ग्रहणं न कर्तव्यमिति लाघवं कथञ्चित् वक्तुं शक्यमिति भावः ।

**भा :—किमर्थं पुनरिदमुच्यते ?**

**॥ वा ॥ अलोन्त्यस्येति स्थाने विज्ञातस्यानुसंहारः ॥**

**भा :—अलोन्त्यस्येत्युच्यते, स्थाने विज्ञातस्यानुसंहारः क्रियते—स्थाने प्रसक्तस्येति ।**

**॥ वा ॥ इतरथा ह्यनिष्टप्रसङ्गः ॥**

**भा :—इतरथा ह्यनिष्टं प्रसज्येत । टित्किन्मितोऽप्यन्त्यस्य स्युः । यदि पुनरयं योगशेषो विज्ञायेत ।**

**॥ वा ॥ योगशेषे च ॥**

**भा :—योगशेषे च । किम् ? अनिष्टं प्रसज्येत टित्किन्मितोऽप्यन्त्यस्य स्युः । तस्मात्सुष्ठूच्यते अलोऽन्त्यस्येति स्थाने विज्ञातस्यानुसंहार इतरथा ह्यनिष्टप्रसङ्ग इति ॥ अलोऽन्त्यस्य ॥**

प्र :—**स्थाने विज्ञातस्येति ;** 'षष्ठी स्थानेयोगा' इत्यनुवर्तते । तेन या षष्ठी स्थानेयोगत्वेन विज्ञाता साऽन्त्यमलमनुसंह्रियते । आदेशो वा यो निश्चितः सोऽन्त्यस्यालः स्थाने इत्यनुसंह्रियते । **इतरथेति ।** यदि षष्ठीमात्रमनुसंह्रियेतेत्यर्थः । तत्र लवितेति तृचः ऋकारात्पूर्वमिट् प्राप्नोतीति दोषः । दापयतीति पुगाकारस्य स्यात् ।

ततश्च यदुक्तम् 'अर्थवतो ह्यागम' इति, तन्न युज्यते। **यदि पुनरिति।** 'षष्ठी स्थाने-योगा' इत्यनेनास्यैकवाक्यता। अत्र तु प्रकरणे करणं 'ङिच्च' इत्यादेः सम्बन्धार्थं, तत्रायमर्थो भवति—शास्त्रे या षष्ठी सान्त्येऽलि सा च स्थानेयोगैवेति, न तु स्थाने विज्ञातस्य पश्चादनुसंहारः प्रतिपत्तिगौरवप्रसङ्गादिति भावः। **अनिष्टमिति।** 'आद्यन्तौ टकितौ' 'मिदचोऽन्त्यात्परः' इत्येताभ्यां स्थानेयोगत्वमेव बाध्यते तुल्यजातीयत्वात् संबन्धस्य संबन्धान्तरेण बाधोपपत्त्या। षष्ठ्यास्तु यद्रूपं तदन्त्य एवाल्यवस्थितमिति पूर्ववद्दोषप्रसङ्गः। अनुसंहारः पुनरनुसंहारान्तरेण 'आदेः परस्यानेकाल्शित्सर्वस्य' इत्यनेन बाध्यते॥

उ:—स्थाने विज्ञातस्य कस्येत्यपेक्षायामाह—**षष्ठीति।** तर्हि वार्तिके विज्ञताया इति निर्देशः स्यात्; अत आह—**आदेशो वेति।** षष्ठीमात्रमित्युपल-क्षणम्। षष्ठ्युच्चारणेन विधीयमानमात्रमपीति ज्ञेयम्। आगमेषु प्रवृत्तावनिष्टमाह—**तत्रेति।** आर्धधातुकस्येति षष्ठ्या अन्त्येऽल्युपसंहारादित्यर्थः। भवत्वाकारस्यै-वागमः; अत आह—**तत्रश्चेति।** 'दाधा घ्वदाप्' इति सूत्रे प्रणिधापयतीत्यत्र [1]पुगन्तस्य घुसंज्ञाया अभावात् नेर्णत्वं न प्राप्नोतीत्यशङ्क्य न वा अर्थवतो ह्यागमस्त-द्ग्रहणेन गृह्यत इति धाग्रहणेन ग्रहणमुक्तम्। आकारागमत्वे घुसंज्ञाया अभावाण्णत्वं न स्यादित्यर्थः। किं योगशेषत्वम्; अत आह—**षष्ठीति।** तर्हि तदनन्तरमेवेदं सूत्रं किमिति न कृतमित्यत आह—**अत्रेति। संबन्धार्थमिति।** 'ङिच्च' इत्यत्रान्त्यस्य अल इति संबन्धः। उत्तरसूत्रद्वय चापवादत्वेनेत्यर्थः। योगशेषत्वे निष्पन्नमर्थमाह—**तत्रेति। स्थानेयोगत्वमेव;** न त्वन्तेऽल्युपसंहारः। योगत्वस्यैव बाधे हेतुमाह—**तुल्येत्याद्युपपत्त्यत्यन्तेन।** सामीप्यसंबन्धेन स्थानसंबन्धस्य बाधः। न तु तुल्यजातीयत्वाद्युक्त इत्यर्थः। अन्त्येऽल्यनुसंहारस्तु विजातीयत्वान्न बाध्यत इत्याह—**षष्ठ्यास्त्विति।** तुल्यजातीयत्वादनुसंहारोऽनु-संहारान्तरेण बाध्यत इत्याह—**अनुसंहार इति;** अन्त्येऽलीत्यादिः।

**सू.—ङिच्च॥ १। १। ५२॥**

**भा:—तातङन्त्यस्य स्थाने कस्मान्न भवति। "ङिच्चालो-न्त्यस्य" इति प्राप्नोति?**

---

(१) ग. पुगन्तस्य

**॥ वा ॥ तातङि ङित्करणस्य सावकाशत्वाद्विप्रतिषे-धात् सर्वादेशः ॥**

**भा :—तातङि ङित्करणं सावकाशम्। कोऽवकाशः? गुण-वृद्धिप्रतिषेधार्थो ङकारः। तातङि ङित्करणस्य सावकाशत्वाद्वि-प्रतिषेधात्सर्वादेशो भविष्यति। प्रयोजनं नाम तद् वक्तव्यं, यन्नियोगतः स्यात्। यदि चायं नियोगतः सर्वादेशः स्यात्, तत एतत्प्रयोजनं स्यात्। कुतो नु खल्वेतत्—ङित्करणादयं सर्वादेशो भविष्यति, न पुनरन्त्यस्य स्यादिति। एवं तर्ह्येतदेव ज्ञापयति—न तातङन्त्यस्य स्थाने भवतीति, यदेतं ङितं करोति। इतरथा हि लोट एरुप्रकरण एव ब्रूयात्—"तिह्योस्ता-दाशिष्यन्यतरस्याम्" इति ॥ ङिच्च ॥**

प्र :—**विप्रतिषेधादिति।** नन्वयमपवादः, 'अनेकाल्शित्' इत्युत्सर्गः। उत्सर्गापवादयोश्चायुक्तो विप्रतिषेधः। [1]नैतदस्ति। ङित्त्वस्यान्यार्थत्वसंभवे सति दौर्बल्यात् सन्दिग्धोपस्थानोऽयं योग इत्यपवादत्वमेवात्र विषयेऽस्य नास्ति। **प्रयोजनं नामेति।** सति सर्वादेशत्वे ङित्करणं गुणवृद्धिप्रतिषेधार्थं स्यात्। तदेव तु सर्वा-देशत्वमलभ्यं ङित्त्वादन्त्यस्यैव प्रसङ्गादिति भावः। **ङित्करणादिति।** गुणवृद्धि-प्रतिषेधार्थादिति भावः। **एवं तर्हीति।** अन्तरेणापि ङित्त्वम् 'एरुः' इत्यत्र प्रकरणे ताति विधीयमानेऽन्त्यादेशत्वं सिद्धमिति ङित्त्वादेव गुणवृद्धिप्रतिषेधार्थं ङित्वमिति विज्ञायते ॥

उ :—विप्रतिषेधमाक्षिपति—**नन्विति। नैष इति;** अनन्यथासिद्ध-ङित्करणेन अस्यानेकाल्त्वित्यपवादता। तातङि ङित्करणमन्यथासिद्धमिति तद्विषये त्वस्या-पवादत्वाभावात् विप्रतिषेधोपपत्तिरित्यर्थः। **दौर्बल्यात्;** अपवादत्वापादनसामर्थ्या-भावात्। प्रयोजनमिति शङ्काभाष्यतात्पर्यमाह—**सर्वादेश इति। ङित्वादिति;** नानन्यथासिद्धङित्करणेनास्यापवादत्वम्, किन्तु येन नाप्राप्तिन्यायेन। अनेकाल् इति प्राप्ते-ऽस्यारम्भादिति भावः। ङित्वमात्रं न सर्वादेशप्रयोजकम्; अत आह—**गुणेति।**

**सू.—आदेः परस्य ॥ १। १। ५२ ॥**

(१) नैष इत्युद्द्योतनपाठः

॥ वा ॥ अलोऽन्त्यस्यादेः परस्यानेकाल्शित्सर्वस्ये-
त्यपवादविप्रतिषेधात्सर्वादेशः ॥

भा :—"अलोऽन्त्यस्य" इत्युत्सर्गः। तस्य "आदेः परस्य" "अनेकाल्शित्सर्वस्य" इत्यपवादौ। अपवादविप्रतिषेधात् सर्वादेशो भविष्यति। "आदेः परस्य" इत्यस्यावकाशः "द्व्यन्तरुपसर्गेभ्योऽप ईत्" द्वीपम् अन्तरीपम्। "अनेकाल् सर्वस्य" इत्यस्याऽवकाशः "अस्तेर्भूः" भविता भवितुम्। इहोभयं प्राप्नोति—"अतो भिस ऐस्"। "अनेकाल् सर्वस्य" इत्येतद्भवति विप्रतिषेधेन। "शित्सर्वस्य" इत्यस्याऽवकाशः—"इदम इश्" इतः इह। "आदेः परस्य" इत्यस्यावकाशः—स एव। इहोभयं प्राप्नोति—"अष्टाभ्य औश्"। "शित्सर्वस्य" इत्येतद्भवति विप्रतिषेधेन॥ आदेः परस्य॥

सू.—अनेकाल्शित्सर्वस्य ॥ १। १। ५४ ॥

भा :—शित्सर्वस्येति किमुदाहरणम्? "इदम इश्" इतः इह। नैतदस्ति प्रयोजनम्। शित्करणादेवात्र सर्वादेशो भवष्यति। इदं तर्हि—"अष्टाभ्य औश्"। ननु चात्रापि शित्करणादेव सर्वादेशो भविष्यति। इदं तर्हि—"जसः शी" "जश्शसोः शिः"। ननु चात्रापि शित्करणादेव सर्वादेशो भविष्यति। अस्त्यन्यच्छित्करणे प्रयोजनम्। किम्? विशेषणार्थः शकारः। क्व विशेषणार्थेनार्थः? "शि सर्वनामस्थानम्" "विभाषा ङिश्योः" इति। शित्सर्वस्येति शक्यमकर्तुम्। कथम्? अन्त्यस्यायं स्थाने भवन्न प्रत्ययः स्यात्। असत्यां प्रत्ययसंज्ञायामित्संज्ञा न स्यात्। असत्यामित्संज्ञायां लोपो न स्यात्। असति लोपे अनेकाल्। यदा अनेकाल् तदा सर्वादेशः। यदा सर्वादेशः, तदा प्रत्ययः। यदा प्रत्ययस्तदेत्संज्ञा। यदेत्संज्ञा तदा लोपः। एवं तर्हि सिद्धे सति यच्छित्सर्वस्येत्याह—तज्ज्ञापयत्याचार्यः,—अस्त्येषा परिभाषा "नानुबन्धकृतमनेकाल्त्वं भवति" इति। किमेतस्य ज्ञापने प्रयोजनम्? तत्राऽसरूपसर्वादेश-

**दाप्प्रतिषेधेषु पृथग्निर्देशोऽनाकारान्तत्वाद् इत्युक्तम्, तन्न वक्तव्यं भवति ॥ अनेकाल् ॥**

**इति श्रीमद्भगवत्पतञ्जलिविरचिते महाभाष्ये प्रथमाध्यायस्य प्रथमे पादे सप्तममाह्निकम् ।**

प्र:—अनेकाल् । **शित्करणादेवेति;** सति शकारेऽनेकल्त्वादिति भावः । अनेकाल्त्वसंपादनेन च कृतार्थः शाकर इतीत्संज्ञकत्वाल्लुप्यत एव । **अष्टाभ्य औशिति** । 'आदेः परस्य' इत्यादेः प्राप्त इति भावः । **अन्त्यस्यायमिति** । ननु सर्वनाम्नो नपुंसकादिति च पञ्चमीनिर्देशात् 'आदेः परस्य' इत्यादेर्भाव्यं तत्किमुच्यते अन्त्यस्यायं भवन् इति । एवं तर्हि 'सर्वनाम्न' इति षष्ठी मन्यते । नपुंसकात् इति च विङिन्विशेषणमिति ज्ञापकत्वमेव शित्करणस्य । अथवा असत्यपीह शिद्ग्रहणे अनेकाल्त्वाद् 'आदेः परस्य' इति बाधित्वा सर्वादेशो भविष्यतीति किं शिद्ग्रहणेनेति पुनरपि ज्ञापकमेव शिद्ग्रहणम् । अनेकान्तेषु चानुबन्धेषु नास्त्येव 'नानुबन्धकृतमनेकाल्त्वम्' इति । एकान्तेषु च तेषु ज्ञापकेन प्रयोजनम् ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमाध्यायस्य प्रथमे पादे सप्तममाह्निकम् ॥

उ:—ननु सूत्रे शित्करणाभावे शित्करणादेव सर्वादेश इति कथमुच्यते; अत आह—**सतीति**; तर्हि शकारादिति वक्तव्यम्; किमिद्ग्रहणेन; अत आह—**अनेकेति** । इत्कार्यान्तराभावेऽपि शकारोच्चारणस्य सप्रयोजनत्वात् लोप एवेत्कार्यमिति शकारस्येत्संज्ञा स्यादेवेति सूचयितुमिद्ग्रहणमिति भावः । इशपेक्षयैतस्य वैलक्षण्यमाह—**आदेरिति** । ननु चात्रापीति भाष्यमपवादविप्रतिषेधाभिप्रायम् । भाष्ये **अस्त्यन्यदिति** । यदि शकारस्यान्यत् प्रयोजनं न स्यात् तदा शकारस्य लोपेत्संज्ञे सर्वादेशत्वं प्रतीक्षेयाताम् । अत्रान्यदेव शकारस्य प्रयोजनमस्तीति प्रागेवान्तरङ्गत्वात् लोपेत्संज्ञे इति सर्वादेशत्वं न लभ्यत इति भावः । यदि सर्वादेशत्वात् प्रागेव लोपेत्संज्ञयोः प्राप्तिः स्यात् तदा अन्त्यादेशता स्यात् । न तु प्राप्तिरस्तीति प्रतिपादयितुमन्त्यस्यायमित्यादिभाष्यम् । तदाक्षिपति—**नन्विति** । 'जसः शी' इत्यत्र सर्वनाम्नः, 'जश्शसोः शिः' इत्यत्र नपुंसकादिति विवेकः । ततश्च सर्वादेशत्वा-

भावेऽपि शकारस्य प्रत्ययादित्वात् 'लशक्वतद्धिते' इति इत्संज्ञापि लभ्यत एवेत्यर्थः। **विहितेति;** नपुंसकाद्विहितयोः जश्शसोश्शिरित्यर्थः। परमार्थसमाधानमाह—**असतीति।** सूत्रे शिद्ग्रहणे असत्यपीत्यर्थः। शिश्यौ यावन्नादेशौ तावन्नेत्संज्ञालोपौ। आदेशौ च परत्वात् सर्वस्यैवेति भावः। अनुबन्धा एकान्ताः, अनेकान्ता वेति विकल्पद्वयम्। तत्रैकान्तत्वपक्षे ज्ञापकाश्रयणं नेतरस्मिन्नित्याह—**अनेकान्तेष्विति।** तत्रानुबन्धानामेकान्तत्वपक्षे असरूपविधौ कविषये णोऽपि प्राप्नोतीति दोषः। सर्वादेशे च 'पथिमथ्यृभुक्षामात्' इत्यादयः सर्वादेशाः स्युरिति दोषः। अदाबिति दाप्प्रतिषेधे दैपो भेदेन निर्देशः कर्तव्यः। अत्र हेतुः पकारस्य सन्निधौ दै इत्यस्याकारान्तत्वाभावादिति भाष्ये उदाहृतस्य 'तस्य लोपः' इति सूत्रस्थवार्तिकस्यार्थः।

इति श्रीमहोपाध्यायाद्वैतविद्याचार्यराघवसोमयाजिकुलावतंसश्रीति-
रुमलाचार्यवर्यस्य सूनोः अन्नंभट्टस्य कृतौ महाभाष्य-
प्रदीपोद्द्योतने प्रथमस्याध्यायस्य प्रथमे
पादे सप्तममाह्निकम् ॥

---

# अष्टममाह्निकम्

सू.—स्थानिवदादेशोऽनल्विधौ ॥

**भा :—वत्करणं किमर्थम्? स्थान्यादेशोऽनल्विधौ इतीयत्युच्यमाने संज्ञाधिकारोऽयम्, तत्र स्थानी आदेशस्य संज्ञा स्यात्। तत्र को दोषः? "आङो यमहनः" आत्मनेपदं भवतीति वधेरेव स्याद् हन्तेर्न स्यात्। वत्करणे पुनः क्रियमाणे न दोषो भवति। स्थानिकार्यमादेशे अतिदिश्यते 'गुरुवद् गुरुपुत्रे' इति यथा।**

प्र :—स्थानिवदादेशोऽनल्विधौ। **वत्करणमिति।** विनापि वतिना तदर्थलाभो यथा ङित्किदिति भावः। न च स्थान्यादेश इत्युच्यमाने स्थानिरूपमादेशः प्रतिपद्यते इति कल्पनाश्रयितुं युक्ता। 'अस्तेर्भूः' इत्यादेशविधानवैयर्थ्यप्रसङ्गात्। न च वचनद्वयप्रामाण्याद्विकल्पः। 'वा लिटि' इति विकल्पारम्भात्। **संज्ञाधिकार इति।** संज्ञाप्रस्ताव इत्यर्थः। **तत्र को दोष इति।** आदेशे कार्यसिद्ध्यर्थोऽतिदेशः। तच्चादेशे कार्यं संज्ञासंज्ञिसंबन्धेनापि सिध्यतीति प्रश्नः। **वधेरेवेति।** संज्ञा हि प्रदेशेषु संज्ञिप्रत्यायनार्था संज्ञिनं प्रत्याय्य निवर्तते, न तु स्वतः कार्यं प्रतिपद्यत इति भावः। बहुगणेत्यत्र तु संख्येत्यन्वर्थताश्रयणात् लौकिकार्थग्रहणाद्विनापि वतिनातिदेशपक्ष उपन्यस्तः। वत्करणात्त्विहातिदेशेन स्थानिकार्याण्यादेशे क्रियन्ते, न तु स्थानिनि निवर्त्यन्त इत्यदोषः। ङित्किदिति तु संज्ञा न भवति, 'न क्त्वा सेट्' इति प्रतिषेधात्। न हि क्त्वः कित्संज्ञा विहिता या प्रतिषिध्येत। 'किकिनौ लिट् च' इत्यत्र तु संज्ञाप्रकरणाभावात् तद्वदतिदेशः। स्थानिकार्यमित्यनेन कार्याऽतिदेशोऽयमिति प्रदर्शयति। शास्त्राद्यतिदेशापेक्षया कार्यातिदेशस्य प्राधान्यदितरेषां कार्यार्थत्वादिति भावः।

उ :—वत्यर्थलाभाय वत्करणमावश्यकमिति प्रश्नायोगमाशङ्क्याह—**विनापीति।** तत्र दृष्टान्तमाह—**यथेति।** आदेशस्य स्थानिरूपत्वबोधकत्वमस्य सूत्रस्य मा भूदि-

स्यैतदर्थं वत्करणमिति शङ्कां निरस्यति—**न चेति । वा लिटीति ;** 'लिटयन्यतरस्याम्' इति घस्लृविकल्पसूत्रमर्थतः पठितम् । न तु ख्याञ्विकल्पसूत्रम् । तेन 'चक्षिङः ख्याञ्' इत्यनेन सर्वत्रार्धधातुके विकल्पसिद्धौ लिट्येव विकल्प इति नियमार्थं तत्सूत्रं स्यादिति वचनद्वयप्रामाण्यात् विकल्पो न भविष्यतीति अस्य न ज्ञापकं स्यादिति शङ्का निरस्ता । एतेन ज्ञापकद्विगियम् । 'विभाषा लुङ्लृङोः' इति तु ज्ञापकमिति प्राचां व्याख्या चिन्त्या । नन्वधिकारो नाम स्वरितलिङ्गेनानुवृत्तिः । न चात्र संज्ञायाः तत्संभवः ; अत आह—**प्रस्ताव इति ।** प्रकरणं बुद्धौ संनिधिरिति यावत् । **तच्चेति ;** यत्र स्थान्युच्चारणेन कार्यं तत्र तत्प्रत्यायितादेशस्य कार्यं भवतीत्यर्थः । हन इत्युक्तौ कथं वधेरेव ; अत आह—**संज्ञा हीति ।** ननु संज्ञाधिकारे यदि [1]वदित्यन्तरेणातिदेशो न गम्यते तर्हि बहुगणेत्यत्र कथमतिदेश उक्तः ; अत आह—**बह्विति ।** तत्र टिघुभादिवत् एकाक्षरसंज्ञां विहाय संख्येति महासंज्ञाकरणमन्वर्थत्वलाभाय । तथा च प्रसिद्धार्थसंख्याग्रहणसामर्थ्यात् वत्यर्थलाभ इत्युक्तम् । न चात्र तादृशं वत्यर्थज्ञापकमस्तीति संज्ञानिवृत्तये वत्करणमावश्यकमिति भावः । **न त्विति ;** तत्सत्त्वे मुख्यसत्त्वादतिदेशो न भवतीति भावः । **न हीति ।** किद्ग्रहणमनुवर्तमानं संज्ञापरं चेत् संज्ञा प्रतिषेध्या । न च सा क्त्वो विहितेत्यर्थः । न च मृडमृदेत्यत्र सा विहिता । तस्या निषेधे तद्विधानवैयर्थ्यात् विधिप्रतिषेधाभ्यां विकल्पाङ्गीकारे च मृडेत्यत्रैव वाग्रहणं लाघवात् कुर्यात् । संज्ञानिषेधपक्षे 'निष्ठाशीङ्' इति निषेधोऽसंबद्धः निष्ठायाः कित्संज्ञाया अविधानात् । तस्मात् किद्वदित्यतिदेशः तत्साहचर्यात् ङिद्वदित्यप्यतिदेशः । ग्रहिज्या इत्यत्र ङिति चेति ङिद्ग्रहणेन संज्ञापक्षे तत्संज्ञाग्रहणं स्यात् । तच्च न संभवति । गाङादिभ्यः परस्यैव प्रत्ययस्य संज्ञाविधानात् । न च तत्र कृत्रिमस्य बाधादकृत्रिमस्य ङितो ग्रहणमिति वाच्यम्, तथा सति 'क्ङिति च' इत्यादौ कृत्रिमस्यैव ग्रहणप्रसङ्गादिति भावः । **क्किनाविति ;** अन्यथा लाघवाय क्किनौ लिट इत्येव ब्रूयादिति भावः ।

**भा :—अथादेशग्रहणं किमर्थम्? 'स्थानिवदनल्विधौ' इतीयत्युच्यमाने क इदानीं स्थानिवत्स्यात्? यः स्थाने भवति। कश्च स्थाने भवति? आदेशः। इदं तर्हि प्रयोजनम्—आदेशमात्रं स्थानिवद्यथा स्यात्। एकदेशविकृतस्योपसंख्यानं चोदयिष्यति, तन्न वक्तव्यं भवति।**

---

(१) ग. वतिमन्तरेण.

प्रः—**आदेशग्रहणमिति।** स्थानिशब्दस्य सम्बन्धिशब्दत्वादादेशो लभ्यत एव। यथा पितृवदधीत इत्युक्ते पुत्र इति गम्यत इति भावः। **क इदानीमिति।** द्विविध आदेशः प्रत्यक्षश्च 'अस्तेर्भूः' इत्यादिः; आनुमानिकश्च 'एरुः' इत्यादिः। अत्र हि इकारेणोकारान्तः स्थान्यनुमीयते। उकारेणोकारान्तश्चादेशः। ततस्तेस्तुरिति संपद्यते। तत्र प्रत्यक्षस्यैव ग्रहणं स्यात् नानुमानिकस्येति। **आदेशमात्रमिति।** प्रत्यक्षमनुमितं चेत्यर्थः। 'एरुः' इत्यत्र प्रत्यक्षमुकारस्यादेशत्वमिकारस्य च स्थानित्वम्। न च किञ्चिदिकारस्य कार्यमस्ति यदुकारेऽतिदिश्येत। तिशब्दकार्यं तु तुशब्दस्यातिदिश्यत इति पदत्वसिद्धिः।

उः—यः स्थाने इति भाष्यदर्शनात् स्थान इत्यनुवृत्त्या आदेशलाभ इति भ्रमं निराह—**स्थानीति।** नन्वादेश इति निश्चयात् क इति प्रश्नानुपपत्तिः; अत आह—**द्विविध इति। अत्र हीति;** एकदेशविकारे नित्यत्वानुपपत्तेरेवं वक्ष्यत इत्यर्थः। **इति भाव इति;** क इदानीमितिसिद्धान्तवाक्यस्य गूढो भाव इत्यर्थः। एवं च यः स्थाने भवतीत्यादिना आशयमविद्वानाक्षेप्ता वैयर्थ्यमापादयति इदं तर्हीत्यादिना। सिद्धान्ती स्वाशयमुद्घाटयतीति भाष्ययोजना ज्ञेया। ननु 'एरुः' इत्यत्रापि प्रत्यक्षादेशस्यैव स्थानिवद्भावोऽस्तु; अत आह—**एरुरिति।** आनुमानिकस्य तु प्रयोजनमस्तीत्याह–**तिशब्देति।**

**भाः—अथ विधिग्रहणं किमर्थम्? सर्वविभक्त्यन्तः समासो यथा विज्ञायेत—अलः परस्य विधिः—अल्विधिः। अलो विधिः–अल्विधिः। अलि विधिः–अल्विधिः। अलाविधिः–अल्विधिरिति। नैतदस्ति प्रयोजनम्। प्रातिपदिकनिर्देशोऽयम्। प्रातिपदिकनिर्देशाश्चार्थतन्त्रा भवन्ति, न कांचित्प्राधान्येन विभक्तिमाश्रयन्ति। तत्र प्रातिपदिकार्थे निर्दिष्टे यां यां विभक्तिमाश्रयितुं बुद्धिरुपजायते सा सा आश्रयितव्या। इदं तर्हि प्रयोजनम्—उत्तरपदलोपो यथा विज्ञायेत—अलमाश्रयते अलाश्रयः; अलाश्रयो विधिः अल्विधिरिति। यत्र प्राधान्येनालाश्रीयते, तत्रैव प्रतिषेधः स्याद्। यत्र विशेषणत्वेनाऽलाश्रीयते, तत्र प्रतिषेधो न स्यात्। किं प्रयोजनम्? प्रदीव्य प्रसीव्येति। वलादिलक्षण इण् मा भूदिति॥**

प्रः—**सर्वविभक्त्यन्त इति;** सर्वविभक्त्यन्तो ऽवयवोऽस्यास्तीति मत्वर्थीयोऽकारः। बहुत्वप्रतिपादनपरमेतत्। न ह्यत्र सप्त विभक्तयः संभवन्ति। तत्र संबन्धमात्रे षष्ठ्युपादानेऽनेकविभक्त्यर्थान्तर्भावात् फलतः सर्वविभक्त्यन्तता संभवति। अथवा अल्विधिशब्दवाच्योऽल्विधिरिति विशिष्टप्रवृत्तिनिमित्तानाश्रयणात् सर्वविभक्त्यन्तत्वम्।

सति च विधिशब्दे समासभावादेतद्वस्तुलाभः। केवलस्त्वल्शब्द उपादीयमानो यद्वि-भक्तिरुच्चार्येत तदर्थोपक्षय एव स्यात्। तत्राल: परस्य विधिः, द्यौः पन्थाः स इति। हल्ङ्यादिसुलोपो न भवति। अलि परतो विधिः, क इष्टः स इष्टः। 'हशि च' इत्युत्वं न भवति। अलो विधिः, द्युकाम इति। 'लोपो व्योर्वलि' इति लोपो न भवतीति। उत्वं त्ववलि सावकाशं स्यादहर्विमलद्यु इति। अला विधिः, महोरस्केनेति। अयोगवा-हानामट्सूपदेशात् णत्वं न भवतीति। **प्रातिपदिकनिर्देशाश्चेति**। अनलि-त्येतावदेवोच्यताम्। अत्र शब्दसंस्काराय केवलं प्रथमाविभक्तिरुपादीयते न तु तदर्थो विवक्ष्यते। यथा भाव इत्यत्र लिङ्गसंख्ये इति भावः। **उत्तरपदलोप इति**। अनलित्युच्यमाने यत्र कार्ये स्वातन्त्र्येणालाश्रीयते तत्रैव निषेधः स्यात् 'क इष्टः, स इष्टः' इत्यादौ। प्रदीव्येत्यादौ इटः प्रतिषेधो न स्यात्। न ह्यीड्विधौ वलः स्वातन्त्र्येणा-श्रयणं वलादेरित्यन्यपदार्थस्य प्राधान्याद् गुणभावाद्वलः। उत्तरपदलोपे त्वलाश्रयत्वा-दिड्विधेः प्रतिषेधसिद्धिः। **अलमाश्रयत इति**। अर्थप्रदर्शनमेतत्। एवं ह्यलाश्रय इति स्यात्। तस्मादाश्रीयत इत्याश्रयः। 'एरच्'। अलाश्रयो यस्येति अलाश्रयो विधिरल्विधिः। अलाश्रयत्वाद्विधिरेवाल्वित्युच्यते इति गतार्थत्वादप्रयोग एवोत्त-रपदस्य लोपः।

उ:—ननु समासादुत्पन्नसप्तम्येकवचनस्य सर्वविभक्तित्वाभावात् सर्वविभक्त्यन्तः समास इत्ययुक्तम्। अलो विधिरित्यादिना उक्तविभक्तीनां समासादुत्पन्नत्वाभावेन व्या-ख्यानासङ्गतेश्च; अत आह—**सर्वेति**। यदि सर्वविभक्त्यन्तत्वं तदा अलात्मक-विधेरपि स्थानिवद्भावप्रतिषेधः स्यात्। तथा च चकार इत्यादौ तिबादेशस्य णलः स्थानिवत्त्वाभावात् पदत्वं न स्यात्; अत आह—**बहुत्वेति**। **न हीति;** द्वितीयाचतुर्थ्योरसंभवः। प्रथमायां तु दोष इति भावः। ननु समासे सकृच्छ्रुतस्य अल्पदस्य कथमनेकविभक्त्यन्तत्वम्; अत आह—**तत्रेति**। विधिशब्देन कार्य-साधनेन कार्यमभिधीयते। तथा चाल्संबन्धिनि कार्ये स्थानिवत्त्वाभाव इति सर्वेष्टसिद्धि-रिति भावः। **अथवेति;** अल्विधिशब्देन लक्षणयाल्विधिशब्द उच्यते। तेन च तद्वाच्योऽर्थो लक्ष्यत इत्यर्थः। अल्विधिशब्दवाच्यत्वं च सर्वविभक्त्यन्तसमासार्थ-स्यास्तीति इष्टसिद्धिः। एतदपेक्षयोक्तषष्ठीसमास एव श्रेयानिति ज्ञेयम्। **विशेष्येति**। तच्छब्दवाच्ये समासविशेषानाश्रयणादित्यर्थः। नन्वनलित्येवोच्यतां किं विधिशब्देन; अत आह—**सतीति**। **एतद्वस्तु;** अल: अलीऽयोर्यर्थलाभ इत्यर्थः। **द्यौरिति;**

'दिव औत्' 'पथिमथ्यृभुक्षामात्' 'त्यदादीनामः' इति। अत्र स्थानिवत्त्वनिषेधात् हल्ङ्याभ्य इति सुलोपो न। **इष्ट इति**; यजे रूपम्। दिवि कामोऽस्येति द्युकामः। 'दिव उत्' इत्युकारस्य लोपो न भवतीत्यर्थः। ननुत्वविधानसामर्थ्यादेवात्र लोपो न भविष्यति; अत आह—**उत्वं त्विति। उपदेशाद्**; विसर्जनीयग्रहणेन ग्रहणादड्व्यवाय इति णत्वं प्रसक्तमनल्विधावित्युक्तेन भवतीत्यर्थः। विसर्जनीयजिह्वामूलीयोपध्मानीयानुनासिकानुस्वारयमा अयोगवाहाः। अनलित्युक्ते आदेशस्याक्षेपात् अल् आदेशः न स्थानिवत् इति एतावन्मात्रं लभ्यते नार्थान्तरमिति प्रातिपदिकेत्युक्तम्। तदयुक्तम्। तन्मात्रस्य प्रयोगाभावात्; अत आह—**अत्रेति। यथेति**; 'तस्य भाव' इत्यत्र लिङ्गसंख्ये न विवक्ष्येते, तत्वं तत्ते तत्वानीति दर्शनात्। भाव इति सप्तम्यन्तं वा। तत्र सप्तम्यर्थो विवक्षित एव। अन्यथा तत्रापि प्रथमाप्रसङ्गात्। अविवक्षाप्रयोजनं पाकौ पाकाः भूतिरित्यादिसिद्धिः। **स्वातन्त्र्येण**; प्राधान्येन। प्रधानाप्रधानसंभवे प्रधानग्रहणस्य न्याय्यत्वात् इति भावः। **क इष्ट इति**; तत्र हशित्यलः प्राधान्येनाश्रयणात्। विशेष्यासंनिधानेन तदादिविधेस्तत्राभावादित्यर्थ। नन्वलित्युक्ते आदेशेन सामानाधिकरण्यात् अलात्मको विधिर्न स्थानिवदित्यर्थः स्यात्, तत्रोक्तदोष इति चेन्न 'अदो जग्धिर्ल्यप्ति किति' इति ल्यब्ग्रहणेनादेशसामानाधिकरण्याभावनिश्चयात्। अन्यथा ल्यबादेशस्यानेकाल्त्वेन स्थानिवत्त्वात् ति कितीत्येव सिद्धेः ल्यब्ग्रहणं व्यर्थं स्यात्। **अलाश्रयत्वादिति**; कर्मण्यणा पचाद्यचो बाधादिति भावः। उत्तरपदलोपे शब्दानित्यत्वं स्यात्; अत आह—**अलाश्रयत्वादिति। विधिरेव**; विधिमात्रमेव। सकलविधिग्रहणार्थाद्विधिशब्दान्न प्रधानन्यायबाधेन गुणभूताल्विधावपि प्रतिषेधसिद्धिरिति समुदायतात्पर्यम्।

**भा :—किमर्थं पुनरिदमुच्यते ?**

**॥ वा ॥ स्थान्यादेशपृथक्त्वादादेशे स्थानिवदनुदेशो गुरुवत् गुरुपुत्र इति यथा ॥**

**भा :—अन्यः स्थानी, अन्य आदेशः। स्थान्यादेशपृथक्त्वादेतस्मात्कारणात् स्थानिकार्यमादेशो न प्राप्नोति। तत्र को दोषः? "आङो यमहनः" आत्मनेपदं भवतीति हन्तेरेव स्याद्, वधेर्न स्याद्। इष्यते च—वधेरपि स्यादिति। तच्चान्तरेण यत्नं न सिध्यतीति तस्मात्स्थानिवदनुदेशः। एवमर्थमिदमुच्यते।**

गुरुवद् गुरुपुत्र इति यथा। तद्यथा—"गुरुवद् गुरुपुत्रे वर्तितव्यम्" इति गुरौ यत्कार्यं तद् गुरुपुत्रे अतिदिश्यते। एवमिहापि स्थानिकार्यमादेशे अतिदिश्यते। नैतदस्ति प्रयोजनम्। लोकत एतत् सिद्धम्। तद्यथा। लोके यो यस्य प्रसङ्गे भवति, लभतेऽसौ तत्कार्याणि। तद्यथा—उपाध्यायस्य शिष्यो याज्यकुलानि गत्वा अग्रासनादीनि लभते। यद्यपि तावल्लोक एष दृष्टान्तः। दृष्टान्तस्यापि तु पुरुषारम्भो निवर्तको भवति। अस्ति चेह कश्चित्पुरुषारम्भः? अस्तीत्याह। कः? स्वरूपविधिर्नाम। हन्तेरात्मनेपदमुच्यमानं हन्तेरेव स्यात्, वधेर्न स्यात्। एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—स्थानिवदादेशो भवतीति। यदयं "युष्मदस्मदोरनादेशे" इत्यादेशे प्रतिषेधं शास्ति। कथं कृत्वा ज्ञापकम्? युष्मदस्मदोर्विभक्तौ कार्यमुच्यमानं कः प्रसङ्गो यदादेशेऽपि स्यात्। पश्यति त्वाचार्यः—स्थानिवदादेशो भवतीति। अत आदेशे प्रतिषेधं शास्ति। इदं तर्हि प्रयोजनम्। अनल्विधाविति प्रतिषेधं वक्ष्यामीति। इह मा भूत्—द्यौः पन्थाः स इति। एतदपि नास्ति प्रयोजनम्। आचार्यप्रवृत्तिर्ज्ञापयति—अल्विधौ स्थानिवद्भावो न भवतीति, यदयम्—"अदो जग्धिर्ल्यप् ति किति" इति "ति किति" इत्येव सिद्धे ल्यब्ग्रहणं करोति। तस्मान्नार्थोऽनेन योगेन।

प्र:—**किमर्थमिति।** तत्स्थानापत्त्या तद्धर्मलाभात् स्थानिकार्याण्यादेशाः प्राप्स्यन्तीति भावः। **स्थान्यादेशपृथक्त्वादिति।** स्थानिस्वरूपाश्रयं यत्कार्यं तद्भिन्नरूपत्वादादेशे न सिध्यतीति भावः। **लोकत इति।** लोके हि वचनमन्तरेणापि तत्स्थानापत्त्या तद्धर्मलाभो दृष्टः। **उपाध्यायस्येति।** प्रसङ्गापेक्षेयं षष्ठी, न तु शिष्यस्य विशेषणमेतत्, व्यभिचाराभावाद्। **प्रतिषेधं वक्ष्यामीति।** न ह्यप्रदर्शितविषयः प्रतिषेधः शक्यो विधातुमिति भावः। एवं तावल्लिङ्गेनाभिमतोऽर्थः सिद्ध इति प्रदर्शितम्।

उ:—**तत्स्थानेति;** उपाध्यायप्रसङ्गे शिष्यस्याग्रपूजावदिति भावः। ननु पृथक्त्वमङ्गीकृत्यैव स्थानापत्त्या धर्मलाभेऽभिहिते पृथक्त्वादिति हेतुर्विरुद्धः; अत आह—

**स्थानिवद्रूपेति ।** स्वं रूपमिति वचनात् न लौकिको न्यायोऽत्रेत्यर्थः । लोकेऽपि वचनसापेक्षतां वारयति—**लोके हीति ।** ननु भाष्योदाहृते तत्स्थानापत्त्या तद्धर्मलाभो न प्रतीयते ; अत आह—**प्रसङ्गेति ।** कुत एतत् ; अत आह—**न ल्विति ।** यद्यप्याचार्यव्यावर्तनाय विशेषणत्वं संभवति । उपनीय वेदाध्यापक आचार्यः । वृत्त्यर्थं वेदतदङ्गाध्यापकः उपाध्यायः इति तयोर्भेदात् । तथाप्युपेत्याधीयते यस्मादिति केवलयोगाश्रयणेनैतदुक्तम् । आचार्यव्यावर्तनस्य मन्दप्रयोजनत्वात् । **विषयः ;** प्रतिषेधः ।

**भा :—आरभ्यमाणेऽप्येतस्मिन् योगे—**

**॥ वा ॥ अल्विधौ प्रतिषेधेऽसत्यपि, विशेषणेऽप्राप्ति स्तस्यादर्शनात् ॥**

**भा :—अल्विधौ प्रतिषेधेऽसत्यपि, विशेषणे समाश्रियमाणे असति तस्मिन् विशेषणे अप्राप्तिर्विधेः । प्रदीव्य प्रसीव्य । किं कारणम् ? तस्यादर्शनात् । वलादेरित्युच्यते । न चात्र वलादिं पश्यामः । ननु चैवमर्थ एवायं यत्नः क्रियते—अन्यस्य कार्यमुच्यमानमन्यस्य यथा स्यादिति । सत्यम् । एवमर्थः, न तु प्राप्नोति । किं कारणम् ?**

**॥ वा ॥ सामान्यातिदेशे हि विशेषानतिदेशः ॥**

**भाः—सामान्ये ह्यतिदिश्यमाने विशेषो नातिदिष्टो भवति । तद्यथा—'ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यम्' इति सामान्यं यद् ब्राह्मणकार्यं, तत् क्षत्रियेऽतिदिश्यते । यद्विशिष्टं माठरे कौण्डिन्ये वा, न तदतिदिश्यते । एवमिहापि यत्सामान्यं प्रत्ययकार्यं तदतिदिश्यते, यद्विशिष्टं वलादेरिति न तदतिदिश्यते । यद्येवम्, अग्रहीत् "इट ईटि" इति सिचो लोपो न प्राप्नोति । अनल्विधाविति पुनरुच्यमाने इहापि प्रतिषेधो भविष्यति—प्रदीव्य प्रसीव्येति । विशिष्टं ह्येषोऽलमाश्रयते वलं नाम । इह च प्रतिषेधो न भविष्यति अग्रहीदिति । विशिष्टं ह्येषोऽनलमाश्रयते इटं नाम । यदि तर्हि सामान्यमप्यतिदिश्यते, विशेषश्च ।**

**॥ वा ॥ सत्याश्रये विधिरिष्टः ॥**

**भा :—सति च वलादित्वे इटा भवितव्यम्, अरुदितम् अरुदितम् अरुदित। किमतो यत्सति भवितव्यम्?**

**॥ वा ॥ प्रतिषेधस्तु प्राप्नोत्यल्विधित्वात् ॥**

**भा :—प्रतिषेधस्तु प्राप्नोति। किं कारणम्? अल्विधित्वात् अल्विधिरयं भवति। तत्रानल्विधाविति प्रतिषेधः प्राप्नोति।**

**॥ वा ॥ न वानुदेशिकस्य प्रतिषेधादितरेण भावः ॥**

**भा :—न वा एष दोषः। किं कारणम्? आनुदेशिकस्य प्रतिषेधात्। अस्त्वत्राऽऽनुदेशिकस्य वलादित्वस्य प्रतिषेधः। स्वाश्रयमत्र वलादित्वं भविष्यति। नैतद्विवदामहे वलादिर्न वलादिरिति। किं तर्हि? स्थानिवद्भावात् सार्वधातुकत्वमेषितव्यम्। तत्रानल्विधाविति प्रतिषेधः प्राप्नोति।**

प्र :—इदानीं क्रियमाणेऽपि सूत्रेऽनल्विधाविति न कर्तव्यमित्याह— **अल्विधौ प्रतिषेध इति।** प्रदीव्येतीड् न भवति। इड्विधौ वलादेरिति विशेषणमाश्रितम्। तच्च क्त्वो ल्यबिति वस्तुस्थित्या संनिहितमपि वलादित्वं स्थानिन्यविवक्षितत्वादनाश्रितम्। तथा हीडादिरपि क्त्वा भवत्येव, क्त्वा केवलोऽपि, आकारान्तोऽपि, स्नात्वीतीकारान्तोऽपि, दत्त्वायेति च यगन्तोऽपि, इष्ट्वीनमिति मान्तोऽपि। तत्र क्त्वामात्रप्रतिबद्धं यत्कार्यं कृत्त्वप्रत्ययत्वाव्ययत्वादि तदादेशेऽतिदिश्यताम्, न तु वलादित्वमिति ल्यपो न स्वतो नापि स्थानितो वलादित्वमितीडभावः सिद्ध एवेति भावः। **ब्राह्मणवदिति।** सामान्यशब्दोपादानेन यत्र कार्यमतिदिश्यते तत्र हि विशेषस्याशब्दार्थत्वाद्विशेषाश्रयकार्यानतिदेशः। यत्र तु विशेषशब्दोपादानेनातिदेशः, तत्र विशेषातिदेशो भवत्येव। **अग्रहीदिति।** 'ग्रहोऽलिटि दीर्घः' इति दीर्घे कृत इति भावः। दीर्घविधौ ह्यच्परिभाषोपस्थानादच एव स्थानित्वम्। इट् त्वजन्तराणां व्यावर्तक इति इट्कार्यं विशेषकार्यत्वान्न प्राप्नोति। तथा प्रदीव्येति गुणप्रतिषेधो न प्राप्नोति। देवित्वेत्यादावकितोऽपि क्त्वाप्रत्ययस्य संभवात्। कित्वस्यापि वलादित्ववन्न स्यादतिदेशः। तस्माद्विशेषकार्यातिदेशज्ञापनार्थमनल्विधाविति कर्तव्यमिति भावः। अनुबन्धकार्येषु चानल्विधाविति प्रतिषेधो न प्रवर्तते, स्थानिन्यनुबन्धस्यासन्निधानादसन्त एवानुबन्धाः कार्यस्य विशेषका इति सिद्धान्तव्यवस्थापनात्। **विशिष्टं ह्येषोऽनलमिति।** 'इट ईटि' इति सलोपे

समुदायरूपेणाश्रयणात् 'ग्रहोऽलिटि दीर्घः' इत्यत्रापि इट एव स्थानित्वं नाचः । अनियमाप्रसङ्गात् नियमफलाया अच्परिभाषायाः अनुपस्थानात् । **सत्याश्रय इति ।** आश्रीयत इत्याश्रयः ; यथा वलादित्वमिड्विधौ । तत्रेडागमस्यात्विधित्वादनल्विधौ च स्थानिवद्भावविधानादरुदितामिति स्थानिकार्यमिडागमो न प्राप्नोति । **न वेति ।** अतिदेश एवानुदेशः सः प्रयोजनं यस्य तदानुदेशिकम् । तत्र स्वाश्रयं वलादित्वमाश्रित्य स्थान्याश्रयं च सार्वधातुकत्वमितीड् विधास्यते । **तत्रानाल्विधावितीति ।** इडागमार्थमत्र स्थानिवद्भावः प्रार्थ्यते । इट् चाल्विधिरिति अनल्विधाविति प्रतिषेधात् सार्वधातुकत्वस्यापीडर्थत्वादिड् न प्राप्नोतीति ।

उ : — वार्तिके **अविशेषणे ;** प्रदीव्येत्यादौ वलादित्वरूपविशेषणाभाव इत्यर्थः । भाष्ये—**असत्यपीति ;** अल्विधौ प्रतिषेध इति वार्तिकस्य विशेषणमध्याहृतम् । अविशेषण इत्यस्य तात्पर्यमाह—भाष्ये **विशेषण इति ।** इड्विधौ वलादित्वविशेषणे आश्रीयमाणे लक्ष्ये तस्मिन् विशेषणे असतीत्यन्वयः । सामान्यातिदेश इत्यस्य तात्पर्यमाह—**तच्चेति । वस्तुस्थित्या ;** क्त्व इति वलादेरेवोच्चारणेन । अविवक्षितत्वमुपपादयति—**तथा हीति ।** देवित्वेत्यस्य प्रेण समासे इट्सहितस्यापि ल्यबादेश इष्यते प्रदीव्येति । दत्वेत्यत्र वलादेरपि भवति प्रदायेति । तथा च स्थानिनि वलादित्वं न विवक्षितमित्यर्थः । **ईकारान्तोऽपीत्यादि;** अनेकरूपत्वप्रदर्शनार्थमुक्तम् । 'स्नात्वादयश्च' 'क्त्वो यक्' 'इष्ट्वीनमिति च' इति ईकारान्तत्वादिविषयः । **न त्विति ;** स्थानिमात्राप्रतिबद्धत्वादित्यर्थः । **अशब्दार्थत्वादिति ;** शब्दार्थस्य तेन विना अनुपपत्त्यभावाच्चेत्यपि ज्ञेयम् । **यत्रेति ;** माठरवदस्मिन् वर्तितव्यमित्यादिवदित्यर्थः । ननु दीर्घात्पूर्वमेव सिज्लोपः किं न स्यात् ; अत आह—**दीर्घे कृते इति ।** 'ग्रहोऽलिटि दीर्घः' इति दीर्घे कर्तव्ये सिज्लोपस्यासिद्धत्वादिति भावः । यद्येवमिति भाष्यतात्पर्यमाह—**दीर्घविधाविति ।** तर्हि ग्रहणमित्यादावपि दीर्घः स्यात् ; अत आह—**इट् त्विति । इट्कार्यम् ;** 'इट ईटि' इति सिज्लोपरूपम् । इडूपस्याचः स्थानित्वे इटोऽपि स्थानित्वमस्तीति स्थानिवद्भावः स्यादेवेत्युदाहरणान्तरमाह—**तथेति । अकितोऽपीति ;** 'न क्त्वा सेट्' इति कित्वनिषेधादिति भावः । अनल्विधाविति भाष्यं विशेषकार्यातिदेशप्रतिपादनपरतया व्याचष्टे—**तस्मादिति ।** नन्वेवं प्रदीव्येत्यत्र गुणनिषेधो न स्यात् क्ङितिनिषेधस्य [1]ककाराश्रयत्वेन अनल्विधौ इति

(१) ख. इकार

स्थानिवत्त्वनिषेधात्; अत आह—**अनुबन्धेति**। स्थानिना अलो विशेषणात् स्थान्यलाश्रितकार्ये प्रतिषेध इति भावः। **समुदायेति;** इटिति विहितस्वरूपं तत्र गृह्यते, न त्वस्मात्रमित्यर्थः। अग्रहीदित्यत्र विशेषानतिदेशेऽपि दोषो नेत्याह—**ग्रह इति। इट एवेति;** तथा च स्थानिवद्भावेन सिद्धिरिति भावः। आश्रयशब्दस्य भावसाधनत्वे सति वलादित्व इति भाष्यासङ्गतिमाशङ्क्याह—**आश्रीयत इति**। इड्विधौ आश्रय इत्यनुषङ्गः। प्रतिषेधस्त्वित्यादेः तात्पर्यमाह—**तत्रेति। इडागमस्येति;** रुदादिभ्य इत्यत्र वलादेरित्यनुवर्तनादित्यर्थः।—**स्थानीति;** सार्वधातुकत्वाभावादित्यर्थः। **प्रयोजनं;** प्रयोजकः। **यस्य;** वलादित्वस्येत्यर्थः। इतरेण भाव इत्यस्यार्थमाह—**तत्रेति;** सार्वधातुकत्वमाश्रित्येत्यनुषङ्गः। सार्वधातुकसंज्ञाया अल्विधित्वाभावात् तत्रानल्विधाविति कथं प्रतिषेधः; अत आह—**इडागमार्थमिति**।

**भा:—किं पुनरादेशिन्यल्याश्रीयमाणे प्रतिषेधो भवत्याहोस्विदविशेषेण आदेशे, आदेशिनि च? कश्चात्र विशेषः?**

**॥ वा ॥ आदेश्यल्विधिप्रतिषेधे कुरुवधपिबां गुणवृद्धिप्रतिषेधः ॥**

**भा:—आदेश्यल्विधिप्रतिषेधे कुरुवधपिबां गुणवृद्ध्योः प्रतिषेधो वक्तव्यः। कुर्वित्यत्र स्थानिवद्भावादङ्गसंज्ञा, स्वाश्रयं च लघूपधत्वम्, तत्र लघूपधगुणः प्राप्नोति। वधकमित्यत्र स्थानिवद्भावादङ्गसंज्ञा, स्वाश्रयं चादुपधत्वम्, तत्र वृद्धिः प्राप्नोति। पिबेत्यत्र स्थानिवद्भावादङ्गसंज्ञा, स्वाश्रयं च लघूपधत्वम्, तत्र लघूपधगुणः प्राप्नोति। अस्तु तर्ह्यविशेषेण आदेश आदेशिनि च।**

**॥ वा ॥ आदेश्यादेश इति चेत्सुप्तिङ्कृदतिदिष्टेषूपसंख्यानम् ॥**

**भा:—आदेश्यादेश इति चेत्सुप्तिङ्कृदतिदिष्टेषूपसंख्यानं कर्तव्यम्। सुप्—वृक्षाय प्लक्षाय। स्थानिवद्भावात्सुप्संज्ञा, स्वाश्रयं च यञादित्वं, तत्र प्रतिषेधः प्राप्नोति॥ सुप्॥ तिङ्—अरुदिताम्, अरुदितम्, अरुदित। स्थानिवद्भावात्सार्वधातुक-**

**संज्ञा स्थाश्रयं च वलादित्वं, तत्र प्रतिषेधः प्राप्नोति॥ तिङ्॥ कृदतिदिष्टम् कुवनं खुवनं घुवनम्। स्थानिवद्भावात्प्रत्ययसंज्ञा, स्वाश्रयं वलादित्वं, तत्र प्रतिषेधः प्राप्नोति। किं पुनरत्र ज्यायः? आदेशिन्यल्वाश्रीयमाणे प्रतिषेध इत्येतदेव ज्यायः। कुत एतत्? लोके ह्ययं विशिष्टं स्थानिकार्यमादेशोऽतिदिशति— 'गुरुवद् गुरुपुत्रे' इति यथा। तद्यथा—'गुरुवदस्मिन्गुरुपुत्रे वर्तितव्यमन्यत्रोच्छिष्टभोजनात्पादोपसंग्रहणाच्च' इति। यदि च गुरुपुत्रोऽपि गुरुर्भवति, तदपि कर्तव्यं भवति। अस्तु तर्ह्यादेशिन्यल्वाश्रीयमाणे प्रतिषेधः। ननु चोक्तम् 'आदेश्यल्विधिप्रतिषेधे कुरुवधपिबां गुणवृद्धिप्रतिषेधः' इति। नैष दोषः। "करोतौ तपरनिर्देशात् सिद्धम्"। पिबिरदन्तः। वधकमिति नायं ण्वुल् अन्योऽयमकशब्दः किदौणादिकः, रुचक इति यथा।**

प्र:—इदानीं यथात्र प्रतिषेधो न प्रवर्तते तथा विचारपूर्वकं प्रतिपादयितुमाह—**किं पुनरिति।** आदेशोऽस्यास्तीत्यादेशी स्थानी किं स्थान्यलाश्रये कार्ये स्थानिवत्त्वनिषेधोऽथाल्मात्राश्रय इति विचारः। किं प्रत्यासत्तिराश्रीयतेऽथ वा व्याप्तिरिति भावः। **वधक इति।** हन्तेर्ण्वुलि 'बहुलं संज्ञाच्छन्दसोः' इति वक्तव्यम्, अन्नवधकगात्रविचक्षणाजिराद्यर्थम् इति वधादेशः। स च हलन्त इति दोषोऽन्यायः। अदन्तत्वे त्वल्लोपस्य स्थानिवद्भावाद् वृद्ध्यभावः। **सुप्तिङ्कृदतिदिष्टेष्विति।** आदिष्ट एवातिदिष्टो विवक्षितः। उपलक्षणं चैतत्। तद्धितादेशेष्वपि न प्राप्नोति, लैगवायन इति। अत्र हि स्वाश्रयमजादित्वं स्थानिवद्भावात्तद्धितत्वम्। **किं पुनरिति।** न्यायापेक्षः प्रकर्षः। कः पक्षो न्यायोपपन्न इत्यर्थः। **आदेशिनीति।** प्रत्यासत्त्येति भावः। यत् कार्यमादेश स्वतो न प्रतिपद्यते, तस्य तत्र स्यादतिदेशाकाङ्क्षा। तच्छेषश्च प्रतिषेधस्तद्द्वारक एवाल् कार्ये युक्तः। अरुदितामित्यत्र त्वादेशस्य स्वतो वलादित्वान्न तत्रातिदेशाकाङ्क्षा। सार्वधातुकत्वं तस्य स्वतो नास्तीति तदेवातिदेशेन प्राप्यते। यथा गुरुपुत्रो गुरुत्वे सति नातिदेशमपेक्षते तथा वलादित्वं प्रत्यादेशस्य नास्त्यतिदेशापेक्षेत्येतावता दृष्टान्तः। सार्वधातुकत्वं प्रत्ययत्वं वातिदेशापेक्षम्। **करोताविति।** अकारस्य ह्युकारो मात्रिक एव न्याय्य इति शास्त्रान्तरेणापि प्राप्तस्य भिन्नकालस्य निवृत्त्यर्थं तपरत्वमित्यर्थः। **अन्योऽयमिति।** 'हनो वध च' इति क्वुन्प्रत्ययः।

उ:—शङ्कितं दोषमपरिहृत्य विचारान्तरारम्भोऽयुक्त, अत आह—**इदानीमिति। अत्र;** अरुदितामित्यत्र। प्रवर्तत इडित्यर्थः। आदेशिनीति तच्छीरस्यादित्वं न भवतीत्याह—**आदेश इति।** भाष्ये आदेशिन्यलीति व्यधिकरणे सप्तम्याविति सूचयति—**स्थान्यलाश्रय इति।** संशयबीजमाह—**किमिति।** प्रतिषेधस्य प्रतिषेध्यापेक्षत्वात् प्रतिषेध्यं स्थानिवदिति प्रत्यासन्नमिति भावः। बहुलं संज्ञेत्यादि वार्तिकं चाक्षिङः ख्याञ् इति सूत्रस्थम्। वधस्यादन्तत्वात् कथं वृद्धिः; अत आह—**स चेति। स्थानिवद्भावादिति;** 'अचः परस्मिन्' इत्यनेन। ततश्चात उपधात्वाभावादिति भावः। नन्वतिदिष्टशब्देनातिदेशविषयोक्तौ सुप्संज्ञादेरतिदिष्टस्य न किञ्चित् तत्स्थानिकं कार्यमिति उपादानवैयर्थ्यम्; अत आह—**आदिष्ट एवेति।** तथा च सुप्तिङ्कृतामादेशेष्वित्यर्थः। **स्थानिवद्भावादिति;** भसंज्ञानिमित्ते तद्धिते परे ओर्गुणो विधीयते। अन्यथा मृद्वित्यादावपि गुणप्रसङ्गादिति भावः; पक्षद्वयस्यापि पक्षान्तरदोषस्य पक्षान्तरे अभावेन प्रशस्तत्वेऽपि पक्षद्वयस्यापि प्रकर्षासंभवेनातिशायनिकोऽनुपपन्नः; अत आह—**न्यायेति।** उभयोर्न्यायोपपन्नत्वाभावादेकस्य तदुक्तस्य प्रकर्षो युक्त इत्यर्थः। व्याप्तिन्याये ऽपि सति प्रत्यासत्तेरेव ग्रहे किं नियामकम्; अत आह—**यत् कार्यमिति। तच्छेषः;** अतिदेशशेषः। **तद्वारकः;** अतिदेशद्वारकः। **कार्यं इति** व्यपदेशोऽपि। तेनाल्लाश्रयं कार्यम् अलाश्रयो व्यपदेशो वा स्थानिवद्भावेन न भवतीत्युक्तं भवति। एवं च प्रतिषेध्यसमर्पकत्वेनोपस्थितस्थानिनोऽल्विशेषणत्वं युक्तमिति प्रत्यासत्तिन्यायग्रहे हेतुरुक्तः। यद्वा अरुदितामित्यादौ निषेधाप्रवृत्त्यर्थं निषेध्यस्वरूपं यत् कार्यमित्यादिना दर्शितम्। प्रकृते च यो व्यपदेशोऽलाश्रयः नासौ स्थानिवद्भावेन। यच्च स्थानिवद्भावेन नामावलाश्रय इति इष्टसिद्धिरित्याह—**अरुदितामिति। तदेवेति;** न च तदलाश्रयमेवेति भावः। एतेन सार्वधातुकत्वस्यापि इडर्थत्वात् तस्य चालाश्रयत्वात् निषेधः स्यादेवेति यदुक्तं तन्निरस्तम्। यदंशेऽतिदेशापेक्षा तस्यालाश्रयत्वे निषेधस्योक्तत्वात्। तेन कार्यकालपक्षे इड्विधिसमय एव संज्ञाप्रवर्तनात् संज्ञाया अपि निषेधः स्यादिति शङ्कानवकाश इति ज्ञेयम्। विशेषांशे दृष्टान्तो न तु सर्वथातिदेशानपेक्षायामित्याह—**गुरुपुत्र इति।** भाष्ये **अस्तु तर्हीति;** यथादेशिनोति पक्ष एव न्यायोपेतस्तर्हि स एव सिद्धान्तोऽस्त्वित्यर्थः। भाष्ये **तपरेति;** 'अत उत्सार्वधातुके' इत्यत्र। भाव्यमानस्य सवर्णग्राहकत्वेऽपि तपरत्वं विनापि ह्रस्वस्य ह्रस्व एव भविष्यतीत्याह—**अकारस्येति।** औणादिकमेवाह—**हनो वध** इति।

॥ वा ॥ एकदेशविकृतस्योपसंख्यानम् ॥

भा :—एकदेशविकृतस्योपसंख्यानं कर्तव्यम् । किं प्रयोजनम्? पचतु पचन्तु । तिङ्ग्रहणेन ग्रहणं यथा स्यात् ।

॥ वा ॥ एकदेशविकृतस्यानन्यत्वात्सिद्धम् ॥

भा :—'एकदेशविकृतमनन्यवद्भवति' इति तिङ्ग्रहणेन ग्रहणं भविष्यति । तद्यथा-श्वा कर्णे पुच्छे वा छिन्ने श्वैव भवति, नाश्वो न गर्दभ इति ।

॥ वा ॥ अनित्यविज्ञानं तु तस्मादुपसंख्यानम् ॥

भा :—अनित्यविज्ञानं तु भवति । नित्याः शब्दाः । नित्येषु नाम शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः । तत्र स एवायं विकृतश्चेत्येतन्नित्येषु शब्देषु नोपपद्यते । तस्मादुपसंख्यानं कर्तव्यम् । भारद्वाजीयाः पठन्ति—

॥ वा ॥ एकदेशविकृतेषूपसंख्यानम् ॥

भा :—एकदेशविकृतेषूपसंख्यानं कर्तव्यम् । किं प्रयोजनम्? पचतु पचन्तु । तिङ्ग्रहणेन ग्रहणं यथा स्यात् । किं च कारणं न स्यात्?

॥ वा ॥ अनादेशत्वात् ॥

भा :—आदेशः स्थानिवदित्युच्यते । न चेमे आदेशाः ।

॥ वा ॥ रूपान्यत्वाच्च ॥

भा :—अन्यत्खल्वपि रूपं पचतीति अन्यत् पचत्विति ।

प्र :—**एकदेशविकृतस्येति ।** एकदेशेन विकृत इति तृतीयासमासः । **तद्यथेति ।** छिन्नेऽपि पुच्छे शिष्टावयवसन्निवेशः श्वत्वजातेरभिव्यञ्जकः । एवं पचत्वितीकारस्य विकारेऽपि तकारस्तिङ्त्वस्य व्यञ्जकः । तथा चेकारलोपेऽप्यपचदिति तकारमात्रस्य तिङ्त्वमर्थप्रतीतिहेतुत्वं चास्ति । **नाश्व इति ।** अवयवापगमेऽपि न तस्य

जात्यन्तरेण योगः। किं तर्हि? श्वत्वेनैव व्यवहारः। **अनित्यविज्ञानमिति।** अवस्थिते तकारे इकारस्य उकार इत्यनित्यत्वं शुन इव प्राप्नोतीति भावः। उपसंख्याने तु क्रियमाणे नास्त्यनित्यत्वम्। 'एरुः' इति स्थान्यादेशाभ्यां तिशब्दतुशब्दयोरनुमीयमानत्वात्तेः प्रसङ्गे तोर्विधानात्। तत्रादेशग्रहणादुपसंख्यानाद्वा आनुमानिकस्याप्यादेशस्य स्थानिवद्भावः सिद्धः। **न चेम इति।** तुशब्दादयः। 'एरुः' इत्यत्र साक्षात्समुदायानुपादानात्। **रूपान्यत्वाच्चेति।** यद्ययमवयवादेशो रूपं न भिन्द्यात्स्यादेव प्रत्यभिज्ञानात्तिङ्त्वम्। यतस्तु भेदको रूपस्य तस्मान्नास्ति तिङ्त्वमिति भावः।

उ:—बहुव्रीहौ निष्ठायाः पूर्वनिपातप्रसङ्गः; अत आह—**तृतीयेति।** अवयववियोगेऽपि प्रत्ययप्रयोगावुपपादयति—**छिन्नेति।** तकारमात्रस्य तिङ्त्वव्यञ्जकत्वमस्तीत्याह—**तथा चेति।** अर्थेति दृष्टान्तार्थम्। ननु सङ्केतादिनाश्वो भवत्येव; अत आह—**अवयवेति।** एकदेशविकारेऽनित्यत्वमुपपादयति—**अवस्थित इति।** नन्वेकदेशविकारमङ्गीकृत्योपसंख्यानेऽपि न [1]निर्वाहः; अत आह—**उपसंख्यान इति।** एकदेशविकारो यत्र श्रूयते तत्रानुमानिकादेशस्यापि स्थानिवद्भाव उपसंख्येय इति तस्मादुपसंख्यानमितिवार्तिकार्थ इत्यर्थः। नास्त्यनित्यत्वं तेः प्रसङ्गे तोर्विधानादित्यन्वयः। तत्र हेतु—**एरुरिति।** तत्र तेस्तोर्विधाने सति आदेशग्रहणादिति भाष्यानुसारेण कात्यायनीय उपसंख्याने हेत्वनभिधानात् भाष्ये भारद्वाजीयोपन्यासः। न चेम इति प्रत्यक्षादेशत्वनिरास इत्याह—**साक्षादिति।** अवयवविकारेऽपि क्वचिदतिदेशं विनापि तिङ्त्वं भविष्यतीत्याशङ्कानिरासाय **रूपान्यत्वाच्चेति।** तदुपपादयति—**यदीति।** 'इदमो मः' इत्यादिवदिति भावः।

**भा:—इमेऽप्यादेशाः। कथम्? आदिश्यते यः स आदेशः। इमे चाप्यादिश्यन्ते।**

**॥ वा ॥ आदेशः स्थानिवदिति चेन्नानाश्रितत्वात् ॥**

**भा:—आदेशः स्थानिवदिति चेत्। तन्न। किं कारणम्? अनाश्रितत्वात्। योऽत्रादेशो नासावाश्रीयते। यश्चाश्रीयते नासावादेशः। नैतन्मन्तव्यम्—'समुदाये आश्रीयमाणेऽवयवो नाश्रीयते' इति। अभ्यन्तरो हि समुदायस्यावयवः। तद्यथा—वृक्षः प्रचलन्सहावयवैः प्रचलति।**

(१) ग. निखत्वनिर्वाहः

॥ वा ॥ आश्रय इति चेदल्विधिप्रसङ्गः ॥

भा :—आश्रय इति चेदल्विधिरयं भवति। तत्रानल्विधाविति प्रतिषेधः प्राप्नोति। नैष दोषः। नैवं सति कश्चिदनल्विधिः स्यात्। उच्यते चेदनल्विधाविति। तत्र प्रकर्षगतिर्विज्ञास्यते—साधीयो योऽल्विधिरिति। कथं साधीयः? यत्र प्राधान्येनालाश्रीयते। यत्र नान्तरीयकोऽलाश्रीयते नासावल्विधिरिति। अथवोक्तमादेशग्रहणस्य प्रयोजनम्—आदेशमात्रं स्थानिवद्यथा स्यादिति।

प्र:—**योऽत्रादेश इति**। इकारस्य उकारः। **नासावाश्रीयते;** पदसंज्ञायाम्। सा हि तिशब्दनिबन्धना नावयवनिबन्धना। **यश्चेति।** तुशब्दः साक्षादविधानान्नादेशः। पदसंज्ञानिमित्तभावेन चाश्रीयत इत्यर्थः। तत्रोत्तरमाह—**नैतदिति।** तिप् तस् झि इति तिप्सन्निवेशे इकारतकारावपि सन्निविष्टावितीकारस्य तिङ्त्वात् तदादेशस्याप्युकारस्य तिङ्त्वमिति सिद्धा पदसंज्ञा। **अल्विधिप्रसङ्ग इति।** इकारस्य पदसंज्ञानिमित्तत्वादल्विधिः पदसंज्ञा स्यादित्यर्थः। **यत्र प्राधान्येनेति;** यत्र साक्षादल् निर्दिष्टः तत्र प्रतिषेधो नानुमीयमाने संभवमात्रेणालीत्यर्थः। प्राधान्यग्रहणं प्रत्यक्षोपलक्षणम्। **आदेशमात्रमिति।** आनुमानिकमपीत्यर्थः।

उ :—यद्यप्यनादेशत्वादित्यनेन प्रत्यक्षादेशत्वं तोर्निरस्तं तथापि उकारमात्रस्यादेशत्वं निरस्तमिति मत्वाह भाष्ये—**इमेऽपीति।** प्रश्नपूर्वकं तदुपपादयति—भाष्ये **कथमिति।** ननु यथा णलादेः पदसंज्ञायामनाश्रीयमाणस्यापि स्थानिवद्भावात् पदसंज्ञाहेतुत्वं तथोकारस्यापि; अत आह—**सा हीति। न त्विति;** तथा चोकारः स्थानिवद्भावेनापि न पदसंज्ञाहेतुत्वेनाश्रित इत्यर्थः। समुदायाश्रयणमाह—**तिबिति।** भाष्ये—**आश्रय इति** चेदित्यत्र आश्रयत इत्याश्रयः आश्रयिष्यत इति चेदिति यावत्। ननु यत्र प्राधान्येन अलाश्रीयते तत्रानल्विधौ इति प्रतिषेधश्चेत् प्रपठ्य इत्यादौ इट्प्रतिषेधो न स्यात्। तत्र वल आर्धधातुकविशेषणत्वेन प्राधान्याभावात्; अत आह—**यत्रेति।** ननु समुदायसंनिधौ यद्यवयवस्यापि पृथङ्निमित्तत्वं तथा पचतीत्यत्र तावयेरपि पदसंज्ञायां जश्त्वं स्यात्; अतो—भाष्ये **अथवेति।**

॥ वा ॥ अनुपपन्नं स्थान्यादेशत्वं नित्यत्वात् ॥

भा :—स्थानी आदेश इत्येतन्नित्येषु शब्देषु नोपपद्यते। किं कारणम्? नित्यत्वात्। स्थानी हि नाम—यो भूत्वा न

भवति। आदेशो हि नाम—योऽभूत्वा भवति। एतच्च नित्येषु शब्देषु नोपपद्यते—यत्सतो नाम विनाशः स्यात्, असतो वा प्रादुर्भाव इति।

॥ वा ॥ सिद्धं तु यथा लौकिकवैदिकेष्वभूतपूर्वेऽपि स्थानशब्दप्रयोगात्।

भा:—सिद्धमेतत्। कथम्? यथा लौकिकवैदिकेषु कृतान्तेषु अभूतपूर्वेऽपि स्थानशब्दप्रयोगो वर्तते। लोके तावद्—'उपाध्यायस्य स्थाने शिष्यः' इत्युच्यते, न च तत्र उपाध्यायो भूतपूर्वो भवति। वेदेऽपि—'सोमस्य स्थाने पूतीकतृणान्यभिषुणुयाद्' इत्युच्यते। न च तत्र सोमो भूतपूर्वो भवति।

॥ वा ॥ कार्यविपरिणामाद्वा सिद्धम् ॥

भा:—अथ वा कार्यविपरिणामात्सिद्धमेतत्। किमिदं कार्यविपरिणामादिति? कार्या बुद्धिः सा विपरिणम्यते। ननु च कार्याविपरिणामादिति भवितव्यम्। :सन्ति चैव ह्यौत्तरपदिकानि ह्रस्वत्वानि। अपि च बुद्धिः संप्रत्यय इत्यनर्थान्तरम्। कार्या बुद्धिः। कार्यः संप्रत्ययः। कार्यस्य संप्रत्ययस्य विपरिणामः कार्यविपरिणामः कार्यविपरिणामादिति। परिहारान्तरमेवेदं मत्वा पठितम्। कथं चेदं परिहारान्तरं स्याद्? यदि भूतपूर्वे स्थानशब्दो वर्तते। भूतपूर्वे चापि स्थानशब्दो वर्तते। कथम्? बुद्ध्या। तद्यथा कश्चित्कस्मैचिदुपदिशति—प्राचीनं ग्रामादाम्रा इति। तस्य सर्वत्राम्रबुद्धिः प्रसक्ता। ततः पश्चादाह—ये क्षीरिणोऽवरोहवन्तः पृथुपर्णास्ते न्यग्रोधा इति। स तत्राम्रबुद्ध्या न्यग्रोधबुद्धिं प्रतिपद्यते। स ततः पश्यति बुद्ध्या आम्रांश्चापकृष्यमाणान् न्यग्रोधांश्चोपधीयमानान्। नित्या एव च स्वस्मिन्विषये आम्राः, नित्याश्च न्यग्रोधाः। बुद्धिस्त्वस्य विपरिणम्यते। एवमिहाप्यस्तिरस्मायविशेषेणोपदिष्टः। तस्य सर्वत्रास्तिबुद्धिः प्रसक्ता। सः "अस्तेर्भूः" इत्यनेनास्तिबुद्ध्या भवति-

**बुद्धिं प्रतिपद्यते। स ततः पश्यति—बुद्ध्या अस्तिं चापकृष्यमाणं भवति चोपधीयमानम्, नित्य एव च स्वस्मिन्विषयेऽस्तिर्नित्यो भवतिश्च। बुद्धिस्त्वस्य विपरिणम्यते।**

प्र :—**अनुपपन्नमिति।** एकदेशविकारेऽपि यत्र नित्यत्वहानिस्तत्र सर्वविकारे कुतो नित्यत्वम्। यत्रान्वयोऽपि कस्यचिन्नास्तीत्यर्थः। **सोमस्येति।** सोमस्तृणविशेषः। तदसन्निधौ पूतीकतृणानि प्रतिनिधीयन्ते। **कार्या बुद्धिरिति।** अन्यस्यात्र विपरिणामासम्भवात्सामर्थ्यात्कार्यत्वेन बुद्धिर्गृह्यते न तु कार्यशब्दो बुद्धिपर्यायः। **सन्तीति।** ङ्यापोरित्यत्र बहुलग्रहणात्। **भूतपूर्वे चापीति।** न च नित्यत्वविरोधः। बुद्धिधर्माः केवलमर्थेषु प्रतिपत्तृवशादारोप्यन्ते। न तु तद्वशादर्थानां तथावस्थानम्। **प्राचीनमिति।** प्राचि देशे प्राक्। ततो 'विभाषाञ्चेरदिक्स्त्रियाम्' इति स्वार्थे खः। तत्र सप्तम्यर्थस्याभिहितत्वात्त[१]दन्तर्भूतत्वाच्च प्रथमैव कृता। **आम्रबुध्या इति।** अस्या अनन्तरमित्यर्थः।

उ :—**यत्र;** यस्मिन् मते। **सर्वविकारे;** 'अस्तेर्भूः' इत्यादौ। चन्द्रत्वभ्रमं वारयति—**तृणेति।** दर्भाणां स्थाने शरा इतिवत् न भवतीत्याह—**तदसंनिधाविति।** कार्या बुद्धिरिति भाष्यं सङ्गमयति—**अन्यस्येति।** अत्र प्रकृते शब्दस्य नित्यत्वात् तद्बुद्धेरेव विपरिणामो युक्त इत्यर्थः। कार्यशब्दो बुद्धिशब्दश्च पर्यायाविति केषाञ्चिद् भ्रमं निराह—**न त्विति।** न छान्दसं ह्रस्वत्वमित्याह—**बहुलेति।** भूतपूर्वे स्थानशब्दो निवृत्तिवचनः। तथा च शब्दनित्यत्वविरोधः; अत आह—**न चेति।** न त्वाम्राणामधिकरणत्वेन प्राचीन इति सप्तम्या भाष्यम्; अत आह—**प्रागुदेश इति।** 'दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः' इति प्राच्यामित्यर्थे अस्तातिः। तस्य 'अञ्चेर्लुक्' इति लुक्। प्राग्देश इत्यर्थे प्रागिति भवति। **विभाषेति।** अञ्चत्यन्तात् स्वार्थे खः स्यात्, न तु दिक्स्त्रियामिति सूत्रार्थः। सप्तम्यर्थस्याभिहितत्वात् मा भूत् सप्तमी, प्रथमा कुतः; अत आह—**तदिति;** प्रातिपदिकान्तर्भूतत्वादित्यर्थः। बुद्ध्येति तृतीयान्तत्वे न्यग्रोधबुद्धेस्तया प्रतिपाद्यत्वासंभवः। षष्ठ्यन्तत्वे न्यग्रोधबुद्धेस्तद्विषयत्वासंभवः प्रकृतानुपयोगश्च; अत आह—**अस्या इति।**

**॥ वा ॥ अपवादप्रसङ्गस्तु स्थानिवत्त्वात् ॥**

---

(१) मु. पु. तदिति नास्ति।

**भा :—अपवादे उत्सर्गकृतं प्राप्नोति। "कर्मण्यण्"। "आतोनुपसर्गे कः" इति केपि अणि कृतं प्राप्नोति। किं कारणम्? स्थानिवत्त्वात्।**

**॥ वा ॥ उक्तं वा ॥**

**भा :—किमुक्तम्? विषयेण तु नानालिङ्गकरणात् सिद्धम् इति। अथवा—**

**॥ वा ॥ सिद्धं तु षष्ठीनिर्दिष्टस्य स्थानिवद्वचनात् ॥**

**भा :—सिद्धमेतत्। कथम्? षष्ठीनिर्दिष्टस्यादेशः स्थानिवदिति वक्तव्यम्। तर्हि षष्ठीनिर्दिष्टग्रहणं कर्तव्यम्। न कर्तव्यम्। प्रकृतमनुवर्तते। क्व प्रकृतम्? "षष्ठी स्थानेयोगा" इति। अथवा आचार्यप्रवृत्तिर्ज्ञापयति—नापवादे उत्सर्गकृतं भवतीति। यदयं श्यन्नादीत् कांश्चिच्छितः करोति श्यन् श्नम् श्ना शः श्नुरिति।**

प्र :—**अपवादप्रसङ्गस्त्विति।** बुद्धिविपरिणाममात्रं यदि स्थान्यादेशभाव इति भावः। 'कर्मण्यण्' इति। सर्वत्राणबुद्धिः प्रसक्ता 'आतोनुपसर्गे कः' इति कबुद्ध्या निवर्त्यत इति केऽप्यण्कृतप्रसङ्गः। **विषयेण त्विति।** तुशब्दः पुनरर्थे। यदयं गापोष्टगिति कापवादस्य टकः कित्त्वं शास्ति तज्ज्ञापयति 'नोत्सर्गकृतमपवादे भवति' इति। **षष्ठीनिर्दिष्टस्येति।** न चाऽपवादः षष्ठीनिर्दिष्टस्य स्थाने विधीयते। 'नाभि नभं च' इत्यादौ षष्ठ्याः स्थाने प्रथमाया विधानादस्ति षष्ठी। विश्रवणारवणेति तु शब्दान्तरं प्रत्ययविषयं विज्ञेयम्। यथोक्तम्, 'बालवायो विदूरं च प्रकृत्यन्तरमेव वा' इति। विश्रवश्शब्दात्त्वनभिधानात् प्रत्ययाभावः। **यदयमिति।** न च पित्वनिवृत्त्यर्थम् नियमार्थं शित्त्वम्। श्यनो नित्त्वाज् ज्ञापकात् पित्त्वनिवृत्तेः सिद्धत्वात्। न ह्यत्र पित्त्वस्य नित्त्वस्य वा विशेषोऽस्तीति केचिदाहुः। तदयुक्तम्। ताच्छील्यादौ विषये चानशि श्यनो नित्त्वं प्रकृतेराद्युदात्तार्थं स्यात्। तस्मादिष्टसिद्धये सामान्येन ज्ञापकं शित्त्वमाश्रीयते अपवादे उत्सर्गकृतं न भवतीति।

उ :—नन्वपवादस्योत्सर्गादेशत्वाभावात कथमुत्सर्गकृतप्रसङ्गः; अत आह—**बुद्धीति। अणकृतेति;** ण्यङ्ङीपोरपि प्रसङ्ग इत्यर्थः। विषयशब्देनापवाद

उक्तः, तृतीया च व्यत्ययेन षष्ठ्यर्थ इत्यभिप्रेत्याह—**यदयमिति।** अनेनोत्सर्गापवादव्यावृत्तिरित्याह—**न चेति।** नाभेरिति षष्ठ्यभावान्नभादेशस्य स्थानिवत्त्वं न स्यात्। तदभावे भसंज्ञाया अभावात् यस्येति लोपो न स्यात्; अत आह—**नाभीति। षष्ठ्या इति**; व्यत्ययेनेति भावः। यत्र तर्हि योग्यः स्थान्यनुमीयते तत्र कथं षष्ठ्यश्रवणात्; अत आह—**विश्रवणेति;** विश्रवश्शब्दस्य नेमावादेशौ, किंतु शिवाद्यण्प्रत्ययस्यैतौ स्वतन्त्रप्रकृती इत्यर्थः। प्रकृत्यन्तरत्वे संमतिमाह—**यथेति।** वैडूर्यशब्दस्य वालवायादुत्पत्तिरङ्गीक्रियते। तत्र वालवायशब्दस्य विदूरशब्दो नादेशः। किं तु 'विदूराञ्ञ्यः' इति ञ्यप्रत्ययस्य विदूरशब्द एव प्रकृतिरिति यथा तथा विश्रवणरवणयोरेवाण्प्रकृतित्वमित्यर्थः। नन्वेवं विश्रवश्शब्दादप्यण् स्यात्; अत आह—**विश्रवश्शब्दादिति।** स्थानिवद्भावेन पित्वस्यापि प्राप्तौ तन्निवृत्त्यर्थं ञित्वं न ज्ञापकमित्यशङ्क्य निराकरोति—**न चेति।** ज्ञापकत्वमेवाह—**न हीति।** दीव्यन्तीत्यादौ लसर्वधातुकस्वरेण तिङोऽनुदात्तत्वात् श्यनोऽपि पित्वेनानुदात्तत्वात् धातुस्वरेणैवाद्युदात्तत्वसिद्धेः निरकरणं व्यर्थं सत् पित्वाभावं ज्ञापयति इत्यर्थः। एतद् दूषयति—**तदयुक्तमिति। चानशीति;** दीव्यमान इत्यत्र चानशः सार्वधातुकत्वाभावेनानुदात्तत्वाभावात् चित्स्वरेणान्तोदात्तत्वं स्यात्। नित्वे तु परत्वात् सति शिष्टत्वाच्च चित्स्वरं बाधित्वा "ञ्नित्यादिर्नित्यम्" इत्याद्युदात्तत्वं भवतीत्यर्थः। तर्हि पित्वनिवृत्त्यर्थं ञित्वं न ज्ञापकमित्यस्य कः परिहारः; अत आह—**तस्मादिति।** यस्माञ्ञित्वं न पित्वनिवृत्त्यर्थं तस्मादित्यर्थः। **इष्टेति;** इष्टसिद्ध्यर्थं ज्ञापकत्वमेवाश्रीयते न नियमार्थत्वमनुपयोगात् इत्यर्थः। **सामान्येन;** न विकरणमात्रविषयमित्यर्थः।

**॥ वा ॥ तस्य दोषस्तयादेश उभयप्रतिषेधः ॥**

**भा :—तस्यैतस्य लक्षणस्य दोषः। तयादेश उभयप्रतिषेधो वक्तव्यः। उभये देवमनुष्याः। तयपो ग्रहणेन ग्रहणाद् जसि विभाषा प्राप्नोति। नैष दोषः। अयच् प्रत्ययान्तरम्। यदि प्रत्ययान्तरम्, उभयीनि ईकारो न प्राप्नोति। मा भूदेवम्। मात्रच इत्येवं भविष्यति। कथम्? मात्रजिति नेदं प्रत्ययग्रहणम्। किं तर्हि? प्रत्याहारग्रहणम्। क संनिविष्टानां प्रत्याहारः? मात्रशब्दात्प्रभृति आ अयचश्चकारात्। यदि प्रत्याहारग्रहणम्, कति तिष्ठन्ति। अत्रापि प्राप्नोति। अत इति वर्तते। एवमपि "तैलमात्रा घृतमात्रा" अत्रापि प्राप्नोति। सदृशस्याप्यसंनिविष्टस्य न भवति प्रत्याहारग्रहणेन ग्रहणम्।**

॥ वा ॥ जात्याख्यायां वचनादेशे स्थानिवद्भावप्रतिषेधः ॥

भा :—जात्याख्यायां वचनादेशे स्थानिवद्भावस्य प्रतिषेधो वक्तव्यः। व्रीहिभ्य आगत इत्यत्र "घेर्ङिति" इति गुणः प्राप्नोति। नैष दोषः। उक्तमेतत् 'अर्थातिदेशात्सिद्धम्' इति।

॥ वा ॥ ङ्याब्ग्रहणेऽदीर्घः ॥

भा :—ङ्याब्ग्रहणेऽदीर्घ आदेशो स्थानिवदिति वक्तव्यम्। किं प्रयोजनम्? निष्कौशाम्बिः, अतिखट्वः। ङ्याब्ग्रहणेन ग्रहणात्सुलोपो मा भूदिति। ननु च दीर्घादित्युच्यते। तन्न वक्तव्यं भवति। किं पुनरत्र ज्यायः? स्थानिवद्भावप्रतिषेध एव ज्यायान्। इदमपि सिद्धं भवति—अतिखट्वाय अतिमालाय। "याडापः" इति याड् न भवति। अथेदानीमसत्यपि स्थानिवद्भावे दीर्घत्वे कृते पिचासौ भूतपूर्व इति कृत्वा याट् कस्मान्न भवति? लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति। ननु चेदानीं सत्यपि स्थानिवद्भावे एतया परिभाषया शक्यमिहोपस्थातुम्। नेत्याह। न तर्हीदानीं क्वचिदपि स्थानिवद्भावः स्यात्। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। प्रश्लिष्टनिर्देशात्सिद्धम्। प्रश्लिष्टनिर्देशोऽयम्—ङी ई ईकारान्तात्, आ आप् आकारान्तादिति।

॥ वा ॥ आहिभुवोरीट्प्रतिषेधः।

भा :—आहिभुवोरीट्प्रतिषेधो वक्तव्यः। आत्थ अभूत्। अस्तिब्रूग्रहणेन ग्रहणादीट् प्राप्नोति। आहेस्तावन्न वक्तव्यः। आचार्यप्रवृत्तिर्ज्ञापयति 'नाहेरीड् भवति' इति। यदयम्—"आहस्थः" इति झलादिप्रकरणे थत्वं शास्ति। नैतदस्ति ज्ञापकम्। अस्ति ह्यन्यदेतस्य वचने प्रयोजनम्। किम्? भूतपूर्वगतिर्यथा विज्ञायेत झलादिर्यो भूतपूर्व इति। यद्येवं थवचनमनर्थकं स्यात्। आथिमेवायमुच्चारयेत्—"ब्रुवः पञ्चानामादित

**आथो ब्रुवः" इति। भवतेश्चापि न वक्तव्यः। "अस्ति सिचोऽपृक्ते" इति द्विसकारको निर्देशः अस्तेः सकारान्तादिति।**

प्र:—**कति तिष्ठन्तीति।** परिहारान्तरसद्भावात् 'न षट्स्वस्रादिभ्यः' इति प्रतिषेधोऽत्र नोक्तः। **तैलमात्रेति।** चकारस्य प्रत्याहारार्थस्योपादानात्तस्याविशेषकत्वाद् मात्रशब्दमात्रग्रहणप्रसङ्गः। **सदृशस्येति।** प्रत्ययानुकरणं मात्रशब्द इति प्रातिपदिकस्याग्रहणमित्यर्थः। **जात्याख्यायमिति।** एकस्मिन् यत् प्राप्तमेकवचनं तस्य प्रसङ्गे बहुवचनमादेश इति कल्पनाऽऽश्रयेण दोषोपन्यासः। **भूतपूर्व इति।** अनुबन्धकार्ये सर्वत्र भूतपूर्वगत्याश्रयणाद्। आ इति च रूपसद्भावात्। **लक्षणेति।** अत्र चान्तरा ह्रस्वे कृते स एवायमिति बुद्धेर्विच्छेदः। **झलादिरिति।** णलादिषु थलेव भूतपूर्वो झलादिरिति भावः। **आश्रिमिति।** तिबादयो हि सर्वे झलादय इति णलादयो भूतपूर्वा झलादय इति भावः।

उ:—कतीत्यत्र 'न षट्स्वस्रादिभ्यः' इति निषेधान्न ङीबिति परिहारः कथं नोक्तः; अत आह—**परिहारान्तरेति।** मात्रजिति प्रत्ययग्रहणे प्रातिपदिकस्य न प्रसङ्गः; अत आह—**चकारस्येति।** सर्वमात्रशब्दानुकरणसंभवात् कथं सदृशव्यावृत्तिः; अत आह—**प्रत्ययेति।** अन्यथा प्रत्याहारासंभवादिति भावः। नन्वेकस्मिन् बहुवचनमित्युच्यते, न त्वेकवचनस्येति। अतः कथं स्थानिवद्भावः; अत आह—**एकस्मिन्निति।** आपो ह्रस्वत्वेन बाधितत्वात् ह्रस्वादेशस्य दीर्घस्य कथमाप्त्वं पकाराभावात्; अत आह—**अनुबन्धेति।** उच्चारणानन्तरमेवानुबन्धानां लोपात् सर्वत्र भूतपूर्वगतिरेव। ह्रस्वस्य स्थानिवद्भावेनाप्त्वे तत्स्थानिकस्याप्याप्त्वमस्तीति भावः। **आ इतीति।** तथा च दीर्घग्रहणेऽपि याट्प्रसङ्ग इति भावः। उक्तरीत्या आप्त्वसत्त्वात् कथं लाक्षणिकत्वम्; अत आह—**अत्र चेति।** तथा चाप्त्वं नास्तीत्यर्थः। भूतपूर्वाश्रयणेऽतिप्रसङ्गो नास्तीत्याह—**णलादिष्विति।** तत्संनियोगेनाहादेशस्य विधानादन्यत्र प्रसङ्गाभावः। नन्वेवं णलादावप्याथादेशः स्यात्; अत आह—**तिबादय इति।** भूतपूर्वाश्रयणे थलेवेति नियमाभावेन सर्वत्र प्रसङ्गादाथ इत्युक्तेऽपि सर्वत्र सिद्धेः 'आहस्थः' इत्यत्र भूतपूर्वानाश्रयणादीडभाव इति ज्ञापकत्वं सिद्धमिति भावः।

**॥ वा ॥ वध्यादेशे वृद्धितत्त्वप्रतिषेधः ॥**

भा :—वध्यादेशे वृद्धितत्वयोः प्रतिषेधो वक्तव्यः। वधकं पुष्करमिति। स्थानिवद्भावाद् वृद्धितत्त्वे प्राप्नुतः। नैष दोषः। उक्तमेतत्—'नायं ण्वुल्, किं तु अन्योऽयमकशब्दः किदौणादिको रुचक इति यथा।

॥ वा ॥ इड्विधिश्च ॥

भा :—इड् विधेयः। आवधिषीष्ट "एकाच उपदेशेऽनुदात्तात्" इतीट्प्रतिषेधः प्राप्नोति। नैष दोषः। आद्युदात्तनिपातनं करिष्यते। स निपातनस्वरः प्रकृतिस्वरस्य बाधको भविष्यति। एवमप्युपदेशिवद्भावो वक्तव्यः। यथैव हि निपातनस्वरः प्रकृतिस्वरं बाधते एवं प्रत्ययस्वरमपि बाधेत—आवधिषीष्टेति। नैष दोषः। आर्धधातुकीयाः सामान्येन भवन्ति अनवस्थितेषु प्रत्ययेषु। तत्रार्धधातुकसामान्ये वधिभावे कृते सति शिष्टत्वात् प्रत्ययस्वरो भविष्यति।

॥ वा ॥ आकारान्तान्नुक्षुक्प्रतिषेधः ॥

भा :—आकारान्तान्नुक्षुकोः प्रतिषेधो वक्तव्यः। विलापयति, भापयते। लीभीग्रहणेन ग्रहणाल्लुक्षुकौ प्राप्नुतः। [नैष दोषः] लीभियोः प्रश्लिष्टनिर्देशात्सिद्धम्। लीभियोः प्रश्लिष्टनिर्देशोऽयम्—ली ई ईकारान्तस्येति, भी ई ईकारान्तस्येति।

॥ वा ॥ लोडादेशे शाभावजभावधित्वहिलोपैत्वप्रतिषेधः ॥

भा :—एषां लोडादेशे प्रतिषेधो वक्तव्यः। शिष्टात्। हतात्। भिन्तात्, कुरुतात्। स्नात्। लोडादेशे कृते शाभावो जभावो धित्वं हिलोप एत्वमित्येते विधयः प्राप्नुवन्ति। नैष दोषः। इदमिह संप्रधार्यम्—लोडादेशः क्रियताम्, एते विधय इति। किमत्र कर्तव्यम्? परत्वाल्लोडादेशः। अथेदानीं लोडादेशे कृते पुनःप्रसङ्गविज्ञानात् कस्मादेते विधयो न भवन्ति? सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव" इति कृत्वा।

॥ वा ॥ त्रयादेशे स्रन्तप्रतिषेधः ॥

भा :—त्रयादेशे स्रन्तस्य प्रतिषेधो वक्तव्यः। 'तिसृणाम्' तिसृभावे कृते "त्रेस्त्रयः" इति त्रयादेशः प्राप्नोति। नैष दोषः। इदमिह सम्प्रधार्यम्—तिसृभावः क्रियताम्, त्रयादेश इति। किमत्र कर्तव्यम्? परत्वात्तिसृभावः; अथेदानीं तिसृभावे कृते पुनःप्रसङ्गविज्ञानात् त्रयादेशः कस्मान्न भवति? सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति।

॥ वा ॥ आम्विधौ च ॥

भा :—आम्विधौ स्रन्तस्य प्रतिषेधो वक्तव्यः। चतस्रस्तिष्ठन्ति। चतसृभावे कृते "चतुरनडुहोरामुदात्तः" इत्याम् प्राप्नोति। नैष दोषः। इदमिह संप्रधार्यम्—चतसृभावः क्रियताम्, "चतुरनडुहोरामुदात्तः" इत्यामिति। किमत्र कर्तव्यम्? परत्वाच्चतसृभावः। अतेदानीं चतसृभावे कृते पुनःप्रसङ्गविज्ञानाद् आम् कस्मान्न भवति। सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति।

प्र :—**आवधिषीष्टेति**। यदा यच्छब्दप्रयोगः यदावधिषीष्टेति यावता 'तिङ्ङतिङ' इति निघातः प्राप्तः 'निपातैर्यद्यदि' इति प्रतिषिद्धस्तदैतदुदाहरणम्। क्वचित्तु यदावधिषीष्टेति पाठः।

उ :—नन्वावधिषीष्टेति कथं प्रत्ययस्वरः यावता तिङ्ङतिङ इति निघातेन भाव्यम्; अत आह—**यदेति**।

॥ वा ॥ स्वरे वस्वादेशे ॥

भा :—स्वरे वस्वादेशे प्रतिषेधो वक्तव्यः। विदुषः पश्य। "शतुरनुमो नद्यजादी" अन्तोदात्तादित्येष स्वरः प्राप्नोति। नैष दोषः। 'अनुमः' इति प्रतिषेधो भविष्यति। अनुम इत्युच्यते, न चात्र नुमं पश्यामः। अनुम इति नेदमागमग्रहणम्। किं तर्हि? प्रत्याहारग्रहणम्। क सन्निविष्टानां प्रत्याहारः? उकारात्प्रभृत्या नुमो मकारात्। यदि प्रत्याहारग्रहणं 'लुनता पुनता' अत्रापि प्राप्नोति। अनुम्ग्रहणेन न शत्रन्तं विशे-

ष्यते। किं तर्हि? शतैव विशेष्यते—शता योऽनुम्क इति। अवश्यं चैतदेवं विज्ञेयम्। आगमग्रहणे हि सतीह प्रसज्येत—मुञ्चता मुञ्चत इति।

॥ वा ॥ गोः पूर्वणित्त्वात्वस्वरेषु ॥

भा :—गोः पूर्वणित्त्वात्वस्वरेषु प्रतिषेधो वक्तव्यः। चित्रग्वग्रम् शबलग्वग्रम्। "सर्वत्र विभाषा गोः" इति विभाषा पूर्वत्वं प्राप्नोति। नैष दोषः। एङ इति वर्तते। तत्रानल्विधाविति प्रतिषेधो भविष्यति। एवमपि 'हे चित्रगो अग्रम्' अत्र प्राप्नोति। णित्वम्—चित्रगुः चित्रगू चित्रगवः। "गोतो णित्" इति णित्वं प्राप्नोति। आत्वम्—चित्रगुं पश्य शबलगुं पश्य। "आ गोतः—" इत्यात्वं प्राप्नोति। नैष दोषः—तपरकरणात्सिद्धम्। तपरकरणसामर्थ्यात् णित्त्वात्वे न भविष्यतः। स्वर—बहुपुमान्। "न गोश्वन्साववर्ण—" इति प्रतिषेधः प्राप्नोति।

॥ वा ॥ करोतिपिबत्योः प्रतिषेधः ॥

भा :—करोतिपिबत्योः प्रतिषेधो वक्तव्यः। कुरु पिबेति। स्थानिवद्भावाल्लघूपधगुणः प्राप्नोति।

॥ वा ॥ उक्तं वा ॥

भा :—किमुक्तम्? "करोतौ तपरकरणनिर्देशात्सिद्धम्"। पिबिरदन्त इति ॥ स्थानिवदादेशोऽनल्विधौ ॥

प्र :—**उकारात् प्रभृतीति;** 'तनादिकृञ्भ्य उः' इत्यतः। तत्र च वसुरन्तर्भूतः। **यदीति**। श्नाप्रत्ययस्य प्रत्याहारान्तर्भावात्। **शता य इति**। न चात्र श्ना शतुः कृत इत्यनुमेव शता। **मुञ्चतेति**। शत्रन्तस्य सनुम्कत्वादिति भावः। तस्मादागमग्रहणेऽपि शतैव विशेषणीय इति प्रत्याहारग्रहणेऽपि स एव विशेष्यत इत्यदोषः। **सर्वत्रेति**। प्रकृतिभावोऽनेन विधीयते, न तु पूर्वत्वम्। तस्मात् 'एङः पदा न्तादति' इति पूर्वत्वं प्राप्नोतीति वाच्यम्। यदा त्वप्रकृतिभावस्तदायं प्रसङ्ग उक्तः। उत्तरं त्वल्विधित्वात्स्थानिवत्वाभावः।

उ :—भाष्ये—**विदुष इति** । 'विदेश्शतुर्वसुः' अनुम् यश्शता तदन्तादन्तोदात्तात् परा नदी असर्वनामस्थानाजादिविभक्तिश्चोदात्तेति सूत्रार्थः । **तनादीति** । उप्रत्ययमारभ्य 'इदितो नुम् धातोः' इति नुम्पर्यन्तं प्रत्याहारः । सूत्रे अनुम इति उग्रहितस्येत्यर्थः । विदुषः पश्येत्यत्र अनुम इति प्रतिषेधः प्रत्याहारग्रहणे सिद्ध इत्याह—**तत्रेति** । उम्प्रत्याहार इत्यर्थः । भाष्ये 'सर्वत्र विभाषा गोः' इत्यत्र 'एङः पदान्तादति' इति पठनीयमित्याह—**प्रकृतीति** । यथाश्रुतभाष्यमप्येतदभिप्रायतया सङ्गमयति—**यदेति** । विभाषा प्रकृतिभावः । तदभावपक्षे पूर्वं प्राप्नोतीति भाष्यार्थः । भाष्ये—**एवमपीति** । स्वाश्रयमेवैङ्त्वं न स्थानिवद्भावेन प्रार्थ्यमित्यनल्विधाविति प्रतिषेधाभावात् पाक्षिकं पूर्वत्वं प्राप्नोतीति शङ्कार्थः । सर्वत्रेत्यत्रानुवर्तमानमेङ्ग्रहणं श्रूयमाणविशेषणमित्यभिप्रायः । गोशब्दस्यैव विशेषणमित्युत्तरं स्पष्टत्वान्नोक्तम् । भाष्ये—**तपरेति** । तपरत्वस्य प्रयोजनान्तराभावादोकारान्तादेव गोशब्दात् परस्य सर्वनामस्थानस्य णित्वम्, ओकारान्तस्यैवाकारोऽन्तादेश इत्येतदर्थं तपरत्वमित्यर्थः । [(२)भाष्ये—**न गोश्वन्निति** । 'न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः' । गो श्वन् प्रथमैकवचने यदवर्णान्तम् राट् अन् क्रुङ् कृत् इत्येतेभ्यो यदुक्तं तन्न भवति । गो—गवा गोभ्यां 'सावेकाचस्तृतीयादिर्विभक्तिः' इति प्राप्तः प्रतिषिध्यते । सुगुना सुगुभ्याम् 'अन्तोदात्तादुत्तरपदात्' इति प्राप्तः प्रतिषिध्यते । श्वन्—शुना श्वभ्यां परमशुना परमशुने परमश्वभ्याम् । पूर्ववत् प्राप्तिः । साववर्ण—तेभ्यः केभ्यः । राट्—राजिति क्विप्रत्ययान्तः । राजा परमराजा । अन्—अञ्चतिः क्विन्नन्तः । तस्य सनकारस्य ग्रहणं विषयविशेषावधारणार्थम् । यत्र नकारलोपो नास्ति तत्र प्रतिषेधो यथा स्यात् । नाञ्चेः पूजायामिति नलोपः प्रतिषिध्यते । प्राञ्चा प्राङ्भ्याम् । नलोपविषये तु भवत्येव विभक्तेरुदात्तत्वं प्राचा प्राचे ।

## सू.—अचः परस्मिन् पूर्वविधौ ॥ १ । १ । ५६ ॥

प्र :—अचः परस्मिन् ॥ अल्विध्यर्थमिदम् । तथाहि । वव्रश्चेति उरदत्वे कृते 'न संप्रसारणे संप्रसारणम्' इति वकारस्य संप्रसारणनिषेधः स्थान्यलाश्रयः ।

(२) ग. कोष्ठकान्तर्गतो भागो नास्ति ।

एवमचितीकः सुचितीकः बहुचितीक इति 'चितेः कपि' इति दीर्घे कृते ह्रस्वान्तेऽन्त्यात्पूर्वमिति स्थान्यलाश्रयः स्वरोऽस्माद्वचनाद्भवति ।

उ :—नन्वजादेशस्यापि स्थानिवद्भावः पूर्वेणैव सिद्धः ; अत आह—**अल्विध्यर्थमिति । उरदत्व इति ;** 'लिट्यभ्यासस्योभयेषाम्' इत्युभयेषांग्रहणसामर्थ्यात् हलादिशेषात् प्राक् संप्रसारणे कृते परत्वान्नित्यत्वाच्च निषेधात् प्राक् उरदत्वमिति भावः । अङ्गाधिकारादङ्गत्वस्य प्रत्ययपरत्वसापेक्षत्वादभ्यासत्वस्य परसापेक्षत्वाद्वा अत्वस्य परनिमित्तत्वं ज्ञेयम् । संप्रसारणभाविनि यण्येव परतः संप्रसारणनिषेधे नैतत् प्रयोजनम् ; अत आह—**एवमिति । दीर्घ इति ;** नित्यत्वात् परत्वाच्चेति भावः । **ह्रस्वान्त इति ।** ह्रस्वान्त उत्तरपदे बहुव्रीहौ नञ्सुभ्यामुत्तरं कप्यन्तात् पूर्वमुदात्तमिति सूत्रार्थः । यद्यपि नञ्सुभ्यामित्येवात्रानुवर्तते तथापि बहोर्नञ्वदिति वचनात् बहुचितीक इत्युदाहृतम् ।

**भा :—अच इति किमर्थम्? प्रश्नो विश्नः । द्यूत्वा स्यूत्वा । आक्राष्टाम् । आगत्य । प्रश्नो विश्न इत्यत्र छकारस्य शकारः परनिमित्तकस्तस्य स्थानिवद्भावात् "छे च" इति तुक् प्राप्नोति । अच इति वचनान्न भवति । नैतदस्ति प्रयोजनम् । क्रियमाणेऽपि वाज्ग्रहणे अवश्यमत्र तुगभावे यत्नः कर्तव्यः । अन्तरङ्गत्वाद्धि तुक् प्राप्नोति । इदं तर्हि प्रयोजनम्—द्यूत्वा स्यूत्वा । वकारस्य ऊठ् परनिमित्तकः । तस्य स्थानिवद्भावादचीति यणादेशो न प्राप्नोति । अच इति वचनाद्भवति । एतदपि नास्ति प्रयोजनम् । स्वाश्रयमत्राचूत्वं भविष्यति । अथवा योऽत्रादेशो नासावाश्रीयते, यश्चाश्रीयते नासावादेशः । इदं तर्हि प्रयोजनम्—आक्राष्टाम् । सिचो लोपः परनिमित्तकः । तस्य स्थानिवद्भावात् "षढोः कः सि" इति कत्वं प्राप्नोति । अच इति वचनान्न भवति । एतदपि नास्ति प्रयोजनम् । वक्ष्यत्येतत्—पूर्वत्रासिद्धे न स्थानिवदिति । इदं तर्हि प्रयोजनम्—आगत्य । अभिगत्य । अनुनासिकलोपः परनिमित्तकः, तस्य स्थानिवद्भावाद् ह्रस्वस्येति तुङ् न प्राप्नोति । अच इति वचनाद्भवति ।**

प्र :—वार्तानि प्रत्युदाहरणानि कानिचिच्छक्यप्रतिविधानानीति प्रश्नः—**अच इति किमिति। अन्तरङ्गत्वादिति।** अत एव युगपत्प्राप्त्यभावाद्वार्णादाङ्गं बलीय इत्येतदत्र नास्ति। यत्र हि युगपदाङ्गवार्णयोः प्राप्तिर्यथा कारकमिति वृद्धि-यणादेशयोः, यथा च किरतः किरन्तीति यणित्त्वयोस्तत्रैतदुपतिष्ठते। तत्रायं यत्नः। च्छ्वोः शूडिति चकारछकारयोः समुदायनिर्देशसामर्थ्याच्च 'अलोऽन्त्यस्य' इत्यस्यानुपस्थानमनर्थ-कत्वात्। एवं च नङो ङित्करणं विश्न इत्यत्र गुणनिषेधार्थमर्थवद्भवति। **स्वाश्रय-मिति।** न ह्यतिदेशेन स्वाश्रया धर्मा निवर्त्यन्ते। यथा ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यमिति क्षत्रियस्य क्षत्रियधर्माः। वाय्वोरित्यादौ तु सत्यपि स्वाश्रये वल्त्वे बहिरङ्गत्वाद्यणोऽसिद्धत्वाद्वलि लोपाभावः। द्यूत्वेत्यत्र तु नाजानन्तर्ये इति असिद्धत्व-निषेधाद् यण् प्रवर्तते। ऊठः स्थानिवत्त्वाद्यलोपः कथं नाशङ्कित इति चेत्, योऽना-दिष्टादच इत्येवमर्थस्याऽज्ग्रहणस्य स्थापयिष्यमाणत्वात्। **योऽत्रादेश इति।** समुदायरूप ऊठ्। **यश्चाश्रीयत इति।** यण्विधावच्। **नासावादेश इति।** समुदायस्यादेशत्वात्। न चादेशस्यावयव आदेशो गृह्यते। मुख्यसंभवे गौणग्रहणस्यायुक्तत्वात्। ख्याञादीनां तर्ह्यनुबन्धवियुक्तानां धातुसंज्ञा आदेशावयव-त्वान्न प्राप्नोति। घस्लादेशस्य लृदित्वादङर्थाज्ज्ञापकाद्धातुकार्याणि भविष्यन्तीत्यदोषः।

उ :—वार्तानि असाराणि। वार्तत्वे हेतुः—**शक्येति।** भाष्ये शकारः च्छ्वोश्शूडिति विधीयमानः। **अत एव;** अन्तरङ्गत्वादेव। प्रत्ययोत्पत्तिनिरपेक्ष-तया तुक् प्राक् प्रवर्तत इत्यर्थः। वार्णादित्यस्य विषयमाह—**यत्रेति।** ननु परत्वात् यणः प्राक् वृद्धेरेव प्रवर्तनात् तयोर्न युगपत् प्राप्तिः; अत आह—**यथा चेति।** यद्यपि अत्रापि परत्वादित्वमेव प्राक् प्रवर्तत इति वक्तुं शक्यम्; तथापि परशब्दस्येष्ट-वाचित्वात् यणोऽपीष्टत्वसंभवात् आङ्गबलीयस्त्वमेवात्र नियामकम्। अन्यथा वार्णा-दाङ्गस्य सर्वस्य परत्वावश्यकत्वादेतन्न्यायस्य निर्विषयतैव स्यादिति भावः। **चका-रेति;** तुकश्चुत्वेन संपन्नचकारेत्यर्थः। ननु अलोऽन्त्यस्य इति तुकः शो न स्यात्; अत आह—**समुदायेति। अनर्थकत्वादिति;** 'नानर्थकेऽलोऽन्त्यविधिः' इति वचनादिति भावः। सतुक्छकारस्य निर्देशे लिङ्गमाह—**एवं चेति।** तुकः शादेशाभावे इकारस्योपधात्वाभावेनैव गुणप्राप्तेर्नङो ङित्करणमनर्थकं स्यादित्यर्थः। **न हीति;** अत एव वल्करणमिति भावः। स्वाश्रयस्यानिवर्तने वाय्वोरित्यत्र 'लोपो व्योर्वलि' इति यकारलोपः स्यात्; अत आह—**वाय्वोरिति।** ऊ त्वा इति स्थिते

ऊठोऽपि बहिरङ्गत्वेनासिद्धत्वात् यण् न स्यात्; अत आह—**यूत्वेति। असिद्धत्वेति;** ऊठ इत्यादि। यणादेशे अचोरानन्तर्यस्याश्रयणात् 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषा अत्र न प्रवर्तत इत्यर्थः। **यलोप इति;** ऊठो विधानसामर्थ्यान्न लोप इति भावः। **यो अनादिष्टादिति।** यद्यप्यच्ग्रहणमिदानीं न पुरस्कृतं तथापि स्थान्यपेक्षया पूर्वमात्रे तात्पर्यम्। एकान्ता अनुबन्धा इति पक्षाश्रयेण भाष्यं योजयति—**समुदायेति। आदेशो गृह्यते;** स्थानिवदादेश इत्यत्रादेशशब्देन। **न प्राप्नोति;** स्थानिवद्भावेनेत्यादिः। **घस्लिति;** 'लुङ्सनोर्घस्लृ' इति विहितस्य। भाष्ये—**अक्राष्टामिति;** कृषेर्लुङ् 'अनुदात्तस्य चर्दुपधस्य' इत्यम्, यण्, वृद्धिः, 'झलो झलि' इति सिचो लोपः।

**भा:—अथ परस्मिन्निति किमर्थम्? युवजानिः वधूजानिः, द्विपदिका, वैयाघ्रपद्यः, आदीध्ये। युवजानिः वधूजानिरिति "जायाया निङ्" न परनिमित्तकः। यस्य स्थानिवद्भावाद् 'वलि' इति यलोपो न प्राप्नोति। परस्मिन्निति वचनाद्भवति। नैतदस्ति प्रयोजनम्। स्वाश्रयमत्र वलत्वं भविष्यति। अथवा योऽत्रादेशो नासावाश्रीयते। यश्चाश्रीयते नासावादेशः। इदं तर्हि प्रयोजनम्। द्विपदिका। त्रिपदिका। पादस्य लोपोऽपरनिमित्तकः, तस्य स्थानिवद्भावात्पद्भावो न प्राप्नोति। परस्मिन्निति वचनाद्भवति। एतदपि नास्ति प्रयोजनम्। पुनर्लोपवचनसामर्थ्यात् स्थानिवद्भावो न भविष्यति। इदं तर्हि प्रयोजनम्—वैयाघ्रपद्यः। ननु चात्रापि पुनर्वचनसामर्थ्यादेव न भविष्यति। अस्ति ह्यन्यत्पुनर्लोपवचने प्रयोजनम्। किम्? यत्र भसंज्ञा न—व्याघ्रपात् श्येनपादिति। इदं चाप्युदाहरणम्—आदीध्ये आवेव्ये। इकारस्यैकारो न परनिमित्तकः। तस्य स्थानिवद्भावाद् 'यीवर्णयोर्दीधीवेव्योः" इति लोपः प्राप्नोति। परस्मिन्निति वचनान्न भवति।**

प्र:—**युवजानिरिति।** अव्युत्पन्नत्वादुणादीनां जाशब्दस्याकारलोपो न भवति। अन्यथाऽऽकारस्य निङि कृते यलोपे च निङः स्थानिवद्भावात्प्रत्ययत्वादाकारलोपः स्यात्। न च 'असिद्धवदत्राभात्' इत्याकारलोपे कर्तव्येऽसिद्धत्वमात्वस्य, व्याश्रय-

त्वात् । **पुनरिति ।** यस्येतिलोपे सिद्धे पादशतस्येत्यत्र पुनर्लोपवचनं स्थानिवत्त्व-निषेधार्थम् । पुनर्लोपवचने सति लुप्यत एवाकारः । कार्यं नाश्रीयते इत्यर्थः । **ननु चाऽत्रापीति ।** यस्येतिलोपे सिद्धे 'पादस्य लोप' इति पुनर्लोपवचनादित्यर्थः । **आदीध्य इति ।** इट एत्वे कृते लोपः प्राप्नोति विकरणश्च । तत्र नित्यत्वाद्विकरण-स्तस्य लुक् तस्य स्थानिवद्भावेन 'एरनेकाच' इति यण् न प्रवर्तते । 'क्विलुगुपधात्व-चङ्परनिर्ह्रासकुत्वेषु' इति स्थानिवत्त्वनिषेधात् ।

उ:—**लोपः ;** 'आनो लोपः' इत्यनेन । व्युत्पत्तिपक्षे तु लोपः स्यात् इत्याह—**अन्यथेति । आकारस्य ;** जायाशब्दाकारस्य । **निङि ;** 'जायाया निङ्' इत्यनेन । **यलोपे ;** 'लोपो व्योर्वलि' इत्यनेन । **स्थानिवद्भावा-दिति ;** जनेरौणादिके 'जनेर्यक्' इति यक्प्रत्यये, 'ये विभाषा' इत्यात्वेऽपि च, तस्य पूर्वेणैकादेशे पूर्वान्तवद्भावेनार्धधातुकान्तर्भावे सति पश्चान्निङादेशे यलोपे च निङः स्थानिवद्भावेनार्धधातुकत्वाजादित्वयोरेकदेशविकृतन्यायेन सत्वात् 'आतो लोप इटि च' इत्याकारलोपप्रसङ्ग इत्यर्थ । **आत्वस्य ;** 'ये विभाषा' इत्यात्वस्य । **व्या-श्रयत्वादिति ;** भिन्नाश्रयत्वादित्यर्थः । 'असिद्धवदत्राभात्' इत्यत्रात्रग्रहणं कार्य-द्वयस्य समानाश्रयत्वलाभार्थम् । तेन वपुषः इत्यादौ वसोः संप्रसारणमाल्लोपे नासिद्धम्, विभक्तौ संप्रसारणं वसावाल्लोप इति भिन्नाश्रयत्वात् । अत्रापि य आत्वं निङि लोप इति भिन्नाश्रयत्वमिति भावः । भाष्ये **द्विपदिकेति ;** द्वौ द्वौ पादाविति विगृह्य तद्धि-तार्थेति समासे पादशतस्य संख्यादेरिति वुन्लोपौ । तस्य पुनर्लोपत्वमुपपादयति—**यस्येतीति ।** ननु परनिमित्तग्रहणे सत्येतस्यापरनिमित्तत्वान्न स्थानिवत्त्वमिति सिध्यति, तदभावे स्थानिवत्त्वं स्यादेव ; अत आह—**स्थानिवत्त्वेति ।** भाष्ये **वैयाघ्रपद्य इति ।** व्याघ्रस्येव पादावस्येति बहुव्रीहौ 'पादस्य लोपोऽहस्त्या-दिभ्यः' इति लोपे गर्गादित्वाद्यञि पद्भावे ऐजागमे च रूपम् । ननु स्थानिवद्भावादित्य-युक्तम्, तेन विनापि एत्वात्पूर्वं परत्वात् लोपप्राप्तेः ; अत आह—**इट इति ।** एत्वं नित्यम् । लोपस्तु एत्वात् पूर्वमनन्तरं तु स्थानिवद्भावेनेति प्रापकशास्त्रभेदा-दनित्यः । 'टित आत्मनेपदानाम्' इत्युत्तमपुरुषैकवचनस्यैत्वे कृत इत्यर्थः । **लोपः ;** अन्त्यस्य लोपः । **विकरणश्चेति ;** सार्वधातुके परतो लोपसमये विकरणश्च शप् प्राप्नो-तीत्यर्थः । **नित्यत्वादिति ;** लोपे कृते अकृते च प्राप्नोति । लोपस्तु विकरणे कृते तेन व्यवधानान्न प्राप्नोतीत्यनित्यः । **लुक् ;** 'अदिप्रभृतिभ्य' इत्यनेन । शब्लुकः स्थानिवद्भावाद्यण् कुतो न स्याद् ; अत आह—**एरिति ।**

भा:—अथ पूर्वविधाविति किमर्थम्? हे गौः, बाभ्रवीयाः, नैधेयः। हे गौरित्यौकारः परनिमित्तकः। तस्य स्थानिवद्भावाद् "एङ्ह्रस्वात्संबुद्धेः" इति लोपः प्राप्नोति। पूर्वविधाविति वचनान्न भवति। नैतदस्ति प्रयोजनम्। आचार्यप्रवृत्तिर्ज्ञापयति—'न संबुद्धिलोपे स्थानिवद्भावो भवति' इति, यदयम् "एङ्ह्रस्वात्संबुद्धेः" इत्येङ्ग्रहणं करोति। नैतदस्ति ज्ञापकम्। गोऽर्थमेतत् स्यात्। यत्तर्हि प्रत्याहारग्रहणं करोति, इतरथा हि 'ओह्रस्वाद्' इत्येव ब्रूयात्। इदं तर्हि प्रयोजनम्—बाभ्रवीयाः [1]माण्डव्याः। वान्तादेशः परनिमित्तकः, तस्य स्थानिवद्भावाद् "हलस्तद्धितस्य" इति यलोपो न प्राप्नोति। पूर्वविधाविति वचनाद्भवति। एतदपि नास्ति प्रयोजनम्। स्वाश्रयमत्र हल्त्वं भविष्यति। अथवा योऽत्रादेशो नासावाश्रीयते, यश्चाश्रीयते नाऽसावादेशः। इदं तर्हि प्रयोजनम्—नैधेयः। आकारलोपः परनिमिकः। तस्य स्थानिवद्भावाद् द्व्यज्लक्षणो ढग् न प्राप्नोति। पूर्वविधाविति वचनाद्भवति।

प्र:—**यदयमिति**। अग्ने वायो इति स्थानिवत्त्वात् ह्रस्वादित्येव लोपः सिद्धः। खट्वे माले इत्यादौ। **हलङ्याभ्य इति**। नयत्यादीनां विजन्तानां विचि गुणे ने लो इति कथं संबुद्धिलोप इति चेन्नैतेभ्यो विच् दृश्यते। **बाभ्रवीया इति**। सन्निपातपरिभाषाया अनित्यत्वाद्यशब्दसन्निपातनिमित्तो वान्तादेशो यलोपनिमित्ततां प्रतिपद्यते। **योऽत्रादेश इति**। वान्तः समुदायः। **यश्चेति**। लोपं प्रति निमित्तत्वेन वकारः। **नैधेय इति**। स्थानिवद्भावाद् अच्त्वव्यपदेशे सति विरोधात्। स्वाश्रयं द्व्यच्त्वं न लभ्यते। यदविरुद्धं स्वाश्रयं तदतिदेशेन न बाध्यते। विरुद्धं तु बाध्यत एव। संख्याकृतस्तु व्यपदेशः परस्परपरिहारेण लोके स्थितः। न हि त्रिपुत्रो द्विपुत्रव्यपदेशं लभते।

उ:—नन्वग्ने इत्यादौ संबुद्धिलोपार्थमेङ्ग्रहणम्; अत आह—**अग्न इति**। यत्र स्थानिवद्भावेन न ह्रस्वान्तता तत्र कथम्; अत आह—**खट्वे इति**। 'हलङ्या-

(१) मु. पु. माधवीया:

ब्भ्य' इति लोपः सिद्ध इत्यनुषङ्गः। **ने लो पो इति।** णीञ् प्रापणे, लूञ् छेदने, पूञ् पवने। तत्र स्थानिवद्भावेन ह्रस्वान्तत्वं नास्तीति एङ्ग्रहणं कर्तव्यमित्यर्थः। **नैतेभ्य इति।** अनभिधानात्। तत्रेदमेव भाष्यं लिङ्गमिति भावः। बभ्रुशब्दान्म-धुबभ्र्वोरिति यञ्, आदिवृद्धिः, 'ओर्गुणः' वान्तादेशः 'वृद्धाच्छः' यस्येति लोपः आपत्यस्येति यलोपः। बाभ्रवीयाः। माण्डव्यशब्दो गर्गादियञन्तः। भाष्ये **हल इति।** तस्मिन्ननुवर्तमाने आपत्यस्येत्यनेनेत्यर्थः। यकारसन्निपातनिमित्तवान्ता-देशस्य तद्विघातकयलोपनिमित्तत्वाभावात् स्थानिवत्त्वाभावेऽपि कथमत्र यलोपः; अत आह—**सन्निपातेति।** निपूर्वाद्धाञः 'उपसर्गे घोः किः' 'आतो लोप इटि च' कुगति इति समासः, द्व्यच इत्यनुवृत्तौ 'इतश्चानिञः' इति ढक्, नैधेयः। ननु स्वाश्रयमत्र द्व्यच्त्वं स्यात्; अत आह—**स्थानिवत्त्वादिति।** स्वाश्रयमित्यस्य विषयमाह—**यदिति।**

**भा :—अथ विधिग्रहणं किमर्थम्? सर्वविभक्त्यन्तः समासो यथा विज्ञायेत—पूर्वस्य विधिः पूर्वविधिः, पूर्वस्माद्विधिः पूर्व-विधिरिति। कानि पुनः पूर्वस्माद्विधौ स्थानिवद्भावस्य प्रयोज-नानि? बेभिदिता चेच्छिदिता, माथितिकः अपीपचन्। बेभि-दिता, चेच्छिदितेति अकारलोपे कृते एकाज्लक्षण इट्प्रतिषेधः प्राप्नोति। स्थानिवद्भावान्न भवति। माथितिक इत्यकारलोपे कृते "—तान्तात्कः" इति कादेशः प्राप्नोति। स्थानिवद्भावान्न भवति। अपीपचन्नित्येकादेशे कृते 'अभ्यस्ताज्झेर्जुस् भवति' इति जुस्भावः प्राप्नोति। स्थानिवद्भावान्न भवति। नैतानि सन्ति प्रयोजनानि। प्रातिपदिकनिर्देशोऽयम्। प्रातिपदिकनिर्दे-शाश्चार्थतन्त्रा भवन्ति, न कांचित्प्राधान्येन विभक्तिमाश्रयन्ति। तत्र प्रातिपदिकार्थे निर्दिष्टे यां यां विभक्तिमाश्रयितुं बुद्धिरुप-जायते, सा साऽऽश्रयितव्या। इदं तर्हि प्रयोजनम्। विधिमात्रे स्थानिवद्भावो यथा स्यात्। अनाश्रीयमाणायामपि प्रकृतौ—वाय्वोरध्वर्यवोः, "लोपो व्योर्वलि" इति यलोपो मा भूदिति। अस्ति प्रयोजनमेतत्। किं तर्हीति।**

प्र :—**अथेति।** 'अचः परस्मिन् पूर्वस्य' इत्येवं षष्ठ्या विध्यर्थ आक्षिप्तः पूर्वस्य कार्ये कर्तव्य इति। कार्यश्च विधिरिति प्रश्नः। **बेभिदितेति।** बेभिद-

शब्दात्तृच् । नित्यत्वादल्लोपयलोपौ । तत एकाच इतीट्प्रतिषेधः प्राप्नोति । उपदेशग्रहणं द्वयोरपि विशेषणम्, उपदेश एकाच उपदेशेऽनुदात्तादिति । द्विः प्रयोगश्च द्विर्वचनम् । अल्लोपस्य तु स्थानिवत्त्वे व्यवधानादिट्प्रतिषेधाभावः । **माथितिक इति ।** यदा 'ठस्येक' इति संघातग्रहणं तदा स्थानिवद्भावादिकस्य कादेशः प्राप्नोति [स्थान्यादेशयोः] वर्णनिर्देशे त्वलिवधित्वात् कादेशस्याप्रसङ्गः । सन्निपातपरिभाषां चानाश्रित्यैतदुक्तम् । **अपीपचन्निति ।** झेरितश्चेतीकारलोपे कृते 'एकदेशविकृतमनन्यवद्भवति' इति झिरेवायम् । तत्रान्तादेशे कृते चङकारस्य च पररूपे कृते तस्यादिवद्भावाज्जुस् प्राप्नोति । स्थानिवद्भावे तु णिलोपस्य पररूपस्य च व्यवधानात् न भवति । ननु पूर्वस्मादपि विधौ स्थानिवद्भावे कथं हे गौरित्यादि सिध्यति । उच्यते । अचो यः पूर्वस्तस्मान्निमित्तत्वेनाश्रितादित्याश्रयणात् । तथाहि । गोशब्दे ओकारात् पूर्वो गकारो, न च तस्माद्विधिरस्ति । **विधिमात्र इति ।** 'अचः परस्मिन् पूर्वस्य' इत्यनेन स्थानिवद्भावे विहिते पुनर्विधाविति वचनं नियमार्थं स्थानिवदेव यथा स्यात् मा भूत् स्वाश्रयमित्यर्थः । **अनाश्रीयमाणायामिति ।** कार्ये निमित्तत्वेनेत्यर्थः ।

उ०—ननु कर्मव्युत्पन्नविधिशब्दाभावे पूर्वस्य कार्ये कर्तव्ये इति कथं लभ्यते ; अत आह—**अच इति ;** 'अचः परस्मिन् पूर्वस्य' इति सूत्रं कर्तव्यमित्यर्थः । आक्षेपमेवाह—**पूर्वस्येति ।** स्थानिवद्भावस्य कार्यार्थत्वात् पूर्वसंबन्धिकार्यस्य विधीयमानत्वात् विधिरिति लभ्यत इत्यर्थः । भाष्ये—**सर्वविभक्त्यन्तः ;** अनेकविभक्त्यन्तपूर्वपदयुक्तः । संबन्धसामान्ये षष्ठीसमास इति तात्पर्यम् । ननु परत्वात् अतो लोपात् पूर्वमिट् स्यात् ; अत आह—**नित्यत्वादिति ।** अकारलोपे निषेधादिटोऽप्रवृत्तेस्तस्यानित्यत्वम् । ननु कृतद्विर्वचनस्यानेकाच्त्वात् कथं निषेधप्रसक्तिः ; अत आह—**उपदेशेति ।** ननु द्विरुक्तस्यादेशस्यानुदात्तोपदेशत्वाभावात् कथमिट्प्रतिषेधः ; अत आह—**द्विः प्रयोग इति ।** भिद् इत्यस्यानुदात्तस्यैव द्विः प्रयोगादनुदात्तत्वमस्तीत्यर्थः । स्थानिवद्भावस्य प्रयोजनमाह—**अल्लोपस्येति । माथितिक इति ;** मथितं पण्यमस्येति ठक् । पाक्षिकमेतत् प्रयोजनमित्याह—**यदेति ।** इकादेशानन्तरमकारलोपप्रसङ्गः । स च स्थानिवद्भावनिबन्धनः । स च समुदायादेशत्वे नान्यथेति भावः । नन्विकारसन्निपातनिमित्तकस्याकारलोपस्य कथं तद्विघातककारनिमित्तत्वम् ; अत आह—**संनिपातेति ।** नन्वन्तादेशो झकारमात्रस्य । तथा च तस्य स्थानिवद्भावेनापि झित्वाभावात् कथं जुस्प्रसङ्गः ; अत आह—**झेरिति ।**

यद्यप्यन्तादेशः परस्तथापि अङ्गाधिकारेणाङ्गसापेक्षत्वात् प्रत्ययमात्रापेक्ष इकारलोपोऽन्तरङ्ग इति भावः। **पररूपे;** अन्ताकारस्य चङकारेण सहेत्यर्थः। तस्य चङकारस्यादिवद्भावात् झिग्रहणेन ग्रहणादित्यर्थः। **कथमिति;** गकारादुत्तरस्यौकारस्य वृद्धिविधेः स्थानिवद्भावे सति संबुद्धिलोपः स्यादित्यर्थः। **निमित्तत्वेनेति।** अचः पूर्वस्य निमित्तत्वाश्रयणेन यो विधिस्तत्र स्थानिवद्भावः। संबुद्धिलोपस्तु न तथेत्यर्थः। नन्वतिदेशेनः स्वाश्रयानिवर्तनात् कथं वाय्वोरित्यादौ यलोपनिवृत्तिः; अत आह—**अच इति।** अचः परस्मिन् पूर्वेति लुप्तषष्ठीकः एको योगः। विधावित्यपरः। स च स्थानिवद्वेति नियमार्थः। **कार्य इति;** न त्वादेशे। प्रकृत्यनपेक्षादेशासंभवादिति भावः।

**॥ वा ॥ अपरविधाविति तु ॥**

**भा :—अपरविधाविति तु वक्तव्यम्। किं प्रयोजनम्। स्वविधावपि स्थानिवद्भावो यथा स्यात्। कानि पुनः स्वविधौ स्थानिवद्भावस्य प्रयोजनानि? आयन्, आसन्। धिन्वन्ति, कृण्वन्ति। दध्यत्र, मध्वत्र। चक्रतुः, चक्रुः। इह तावदायन्नासन्निति, इणस्त्योर्यण्लोपयोः कृतयोरनजादित्वाद् "आडजादीनाम्" इत्याण् न प्राप्नोति। स्थानिवद्भावाद् भवति। धिन्वन्ति कृण्वन्तीति, यणादेशे कृते वलादिलक्षण इट् प्राप्नोति। स्थानिवद्भावान्न भवति। दध्यत्र मध्वत्रेति, यणादेशे कृते "संयोगान्तस्य लोपः" प्राप्नोति। स्थानिवद्भावान्न भवति। चक्रतुः, चक्रुः। यणादेशे कृते अनच्कत्वाद् द्विर्वचनं न प्राप्नोति। स्थानिवद्भावाद् भवति। यदि तर्हि स्वविधावपि स्थानिवद्भावो भवति, द्वाभ्याम्, देयम्, लवनम्। अत्रापि प्राप्नोति। द्वाभ्यामित्यत्रात्वस्य स्थानिवद्भावाद् दीर्घत्वं न प्राप्नोति। देयमित्यत्रेत्वस्य स्थानिवद्भावाद् गुणो न प्राप्नोति। लवनमित्यत्र गुणस्य स्थानिवद्भावादवादेशो न प्राप्नोति। नैष दोषः। स्वाश्रया अत्रैते विधयो भविष्यन्ति।**

प्रः—**आयन्निति।** अजादेराड्विधानात्स्वविधिराट्। **दध्यत्रेति।** 'पूर्वत्रासिद्धे न स्थानिवद्' इत्येतदत्र नास्ति। 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इत्यत्र संयोगादिलोपस्य संयोगोपलक्षितलोपोपलक्षणार्थत्वात्। पदान्तविधिं प्रति नेत्ययमपि

प्रतिषेधोऽत्र नास्ति। पदान्ते विधातव्ये स प्रतिषेधः। न च लोपोऽभावात्मकत्वात्तदान्तः। **चक्रतुरिति।** अत्र साच्कस्य द्विर्वचनमिति स्वविधिर्भवति। ततश्च 'द्विर्वचनेऽचि' इत्येतन्न वक्तव्यं भवति। नन्वपरविधावित्युच्यमाने कथं बेभिदितेत्यादयः संगृह्यन्ते। उच्यते। निमित्तापेक्षपरत्वविज्ञानात्। तथाहि। बेभिदितेत्यत्राकारलोपस्य निमित्तमार्धधातुकम्। न च तस्मात्परस्य विधिः। किं तर्हि? तस्यैवेति सिद्धः स्थानिवद्भावः। एवं माथितिकः, अपीपचन्नित्यत्र बोद्धव्यम्। हे गौरित्यत्र तु स्थानिवद्भावः प्राप्तः, एङिति प्रत्याहारग्रहणान्न भवति। बाभ्रवीया इत्यत्र योऽत्रादेशो नासावाश्रीयते इति परिहारः। नैधेय इत्यत्र तु निमित्तात्परस्य ढको विधिरिति स्थानिवत्त्वाभावः। **स्वाश्रया इति।** विधिग्रहणं स्वाश्रयनिवृत्त्यर्थं व्याख्यातमिति स्वाश्रया इत्यन्यथा व्याख्यायते। शब्दानां स्वं लक्षणम्। तेन ज्ञापकाश्रया इत्यर्थः। 'द्व्येकस्य डतरच्' 'देयमृणे' 'किरतौ लवने' इत्यादि ज्ञापकमादेशाश्रयकार्यभावस्यानिमित्तमिति।

उ:—भाष्ये स्वशब्देन स्थानी आदेशश्चोच्यते। **अजादेरिति**; विशिष्टस्यागमित्वे विशेषणस्याप्यागमित्वादिति भावः। भाष्ये—**यण्लोपयोः**; 'इणो यण्', 'श्नसोरल्लोपः' इत्यनयोः। भाष्ये—**धिन्वन्ति**; उप्रत्ययस्यार्धधातुकत्वात् यणादेशे वलादित्वादिट्प्रसङ्गः। **संयोगोपलक्षितेति**; तथा च संयोगान्तलोपेऽपि 'पूर्वत्रासिद्धीये न स्थानिवद्' इति न प्रवर्तत इत्यर्थः। **पदान्त इति**; तत्र विधिशब्दो भावसाधन इति भावः। **साच्कस्येति**; विशिष्टस्य कार्यत्वे विशेषणस्यापि तथेति भावः। **ततश्चेति**; अनेनैव सिद्धत्वादित्यर्थः। स्थान्यादेशयोरन्यतरापेक्षया परत्वमाश्रित्य शङ्कते—**नन्विति।** इडागमस्याचः परस्य तृचो विधेयत्वात् तत्र स्थानिवत्त्वाभावे इण्निषेधः स्यादित्यर्थः। निमित्तापेक्षया परत्वेन परिहरति—**उच्यत इति। विधिः**; इड्विधिः। माथितिक इत्यत्राकारलोप इको निमित्तम्, तस्यैव तादेशो न तु तस्मात् परस्य। अपीपचन् इत्यत्रैकादेशे अन्तो निमित्तम्, तस्यैव जुस् न तस्मात् परस्येति स्थानिवद्भावसिद्धिरित्याह—**एवमिति। हे गौरिति**; सौ परतो वृद्धिः, सोरेव लोपः न तस्मात् परस्येति स्थानिवद्भावः प्राप्तः। ओद्ग्रस्त्वादिति वक्तव्ये एङिति प्रत्याहारग्रहणान्न भवतीत्यर्थः। बाभ्रवीया इत्यत्र अवादेशे यकारो निमित्तम्। तस्यैव लोपे कर्तव्ये वकारमात्रमाश्रीयते, नासावादेशः; यश्चादेशो वान्तः नासावाश्रीयत इति स्थानिवत्त्वाभावः। स्वाश्रयं तु हल्त्वं न निमित्तं विधावित्यस्य नियमार्थत्वात् इत्याह—

**योऽत्रेति । निमित्तादिति ;** क्विप्रत्यय आकारलोपनिमित्तम् । इदन्ताच्च ढग्विधिरिति निमित्तात्परत्वम् ।

**भा :—तत्तर्हि वक्तव्यम्—अपरविधाविति । न वक्तव्यम् । पूर्वविधावित्येव सिद्धम् । कथम्? न पूर्वग्रहणेनादेशोऽभिसंबध्यते—अजादेशः परनिमित्तकः पूर्वस्य विधिं प्रति स्थानिवद् भवति । कुतः पूर्वस्य? आदेशादिति । किं तर्हि? निमित्तमभिसंबध्यते । अजादेशः परनिमित्तकः पूर्वस्य विधिं प्रति स्थानिवद् भवति । कुतः पूर्वस्य? निमित्तादिति । अथ निमित्तेऽभिसंबध्यमाने यत्तदस्य योगस्य मूर्द्धाभिषिक्तमुदाहरणं तदपि संगृहीतं भवति । किं पुनस्तत्? पट्व्या मृद्व्येति । बाढं संगृहीतम् । ननु च ईकारयणा व्यवहितत्वान्नासौ निमित्तात् पूर्वो भवति । व्यवहितेऽपि पूर्वशब्दो वर्तते । तद्यथा—पूर्वं मथुरायाः पाटलिपुत्रमिति । अथवा पुनरस्त्वादेश एवाभिसंबध्यते । कथं यानि स्वविधौ स्थानिवद्भावस्य प्रयोजनानि? नैतानि सन्ति । इह तावदायन्, आसन्, धिन्वन्ति, कृण्वन्तीति । अयं विधिशब्दोऽस्त्येव कर्मसाधनो विधीयते विधिरिति । अस्ति च भावसाधनः विधानं विधिरिति । तत्र कर्मसाधनस्य विधिशब्दस्योपादाने न सर्वमिष्टं संगृहीतमिति कृत्वा भावसाधनस्य विधिशब्दस्योपादानं विज्ञास्यते—पूर्वस्य विधानं प्रति पूर्वस्य भावं प्रति पूर्वः स्यादिति स्थानिवद्भवतीति । एवमाड् भविष्यति, इड् च न भविष्यति । दध्यत्र मध्वत्र चक्रतुश्चक्रुरिति परिहारं वक्ष्यति ।**

प्र :—[1]आपन्नित्यादिषु च निमित्तात् पूर्वस्य विधिरिति सिद्धः स्थानिवद्भावः । **मूर्द्धाभिषिक्तमिति ।** सर्ववृत्तिषूदाहृतत्वात । पटु ई आ इति स्थिते परस्रणादेशेनाकारस्य व्यवधानात्प्रश्नः । **व्यवहितेऽपीति ।** पूर्वशब्दस्य साक्षान्निर्देशात् 'तस्मिन्निति निर्दिष्टे' इत्यस्यानुपस्थानादिति भावः । **भावसाधनस्येति ।**

---

(१) मु. पु. आयन्

भावसाधन एव विधिशब्दो व्यापकत्वादाश्रीयते। पूर्वस्येति च षष्ठी सम्बन्धसामान्ये विज्ञायते। **इट् च नेति**। विधिग्रहणं स्वाश्रयनिवारणार्थमितीडभावः।

उ:—**आसन्निति ;** अकारलोपस्य सार्वधातुकं निमित्तम्। ततः पूर्वप्रकृतेरेवाडागम इति स्थानिवद्भावसिद्धिरित्यर्थः। **परेति ;** शब्दपरविप्रतिषेधेन पूर्वं तस्यैव यणित्यर्थः। **अनुपस्थानादिति**। तदनुपस्थाने तदङ्गनिर्दिष्टग्रहणमपि नोपतिष्ठत इति भावः। **संबन्धसामान्य इति ;** तेन पूर्वस्मादित्यपि संगृहीतम्। आयन्नित्यादावादेशात्पूर्वस्याडागमस्य विधाने स्थानिवद्भावादाट्सिद्धिरित्यर्थः। भाष्ये—**वक्ष्यतीति ;** दध्यत्रेत्यत्र 'न वा बहिरङ्गलक्षणत्वात्' इति। चक्रतुरित्यत्र 'द्विर्वचनेऽचि' इति।

**भा :—कानि पुनरस्य योगस्य प्रयोजनानि ?**

**॥ वा ॥ स्नोष्याम्यहं पादिकमौदवाहिं**
**ततः श्वोभूते शातनीं पातनीं च।**
**नेतारावागच्छतं धारणिं रावणिं च**
**ततः पश्चात्स्रंस्यते ध्वंस्यते च ॥**

**भा :—इह तावत् पादिकमौदवाहिं शातनीं पातनीं धारणिं रावणिमिति। अकारलोपे कृते पद्भाव ऊठ् अल्लोपः टिलोप इत्येते विधयः प्राप्नुवन्ति। स्थानिवद्भावान्न भवन्ति। स्रंस्यते, ध्वंस्यते। विलोपे कृते "अनिदितां हल उपधायाः क्ङिति" इति नलोपः प्राप्नोति। स्थानिवद्भावान्न भवति। नैतानि सन्ति प्रयोजनानि। "असिद्धवदत्राभात्" इत्यनेनाप्येतानि सिद्धानि। इदं तर्हि प्रयोजनम्—याज्यते वाप्यते। विलोपे कृते "—यजादीनां किति" इति सम्प्रसारणं प्राप्नोति। स्थानिवद्भावान्न भवति। एतदपि नास्ति प्रयोजनम्। यजादिभिरत्र कितं विशेषयिष्यामः—यजादीनां यः किदिति। कश्च यजादीनां कित्? यजादिभ्यो यो विहित इति। न चाऽयं यजादिभ्यो विहितः। इदं तर्हि प्रयोजनम्—पट्व्या मृद्व्येति। परस्य यणादेशे कृते पूर्वस्य न प्राप्नोति ईकारयणा व्यवहितत्वात्। स्थानिवद्भावाद्भवति। किं पुनः कारणं परस्य तावद्भवति; न**

**पुनः पूर्वस्य? नित्यत्वात्। नित्यः परयणादेशः। कृतेऽपि पूर्वयणादेशो प्राप्नोति, अकृतेऽपि प्राप्नोति। नित्यत्वात्परयणादेशे कृते पूर्वस्य न प्राप्नोति। स्थानिवद्भावाद्भवति। एतदपि नास्ति प्रयोजनम्। 'असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे' इत्यसिद्धत्वाद्बहिरङ्गलक्षणस्य परयणादेशस्यान्तरङ्गलक्षणः पूर्वयणादेशो भविष्यति। अवश्यं चैषा परिभाषा आश्रयितव्या स्वरार्थम्। कर्त्र्या हर्त्र्येति "उदात्तयणो हल्पूर्वात्" इत्येष स्वरो यथा स्यात्।**

प्र:—**स्तोष्यामीति;** कथयिष्यामीत्यर्थः। **पादिकमिति।** पादोऽस्यास्तीति ठन्। दीव्यत्यादिषु वार्थेषु ठक्। चरत्यर्थे तु पदिक इत्येव भवति पर्पादित्वात्। पद्भावे 'इके चरतावुपसंख्यानम्' इति पद्भावः। उदकं वहतीत्यण्। संज्ञायामुदभावः। अपत्ये इञ्। श्वोभूतिर्नाम शिष्यः। तस्यामन्त्रणम्। शातनपातनशब्दाभ्यां गौरादित्वान्ङीष्। **नेताराविति;** शिष्ययोरामन्त्रणम्। नयेते गुरुमुखात् शास्त्रार्थमिति नेतारौ। धारणरावणशब्दाभ्यामिञ्। **असिद्धं बहिरङ्गेति।** 'नित्यादप्यन्तरङ्गं बलीयः' इति न्यायात् प्रथमं पूर्वस्य यण् इति भावः। **अवश्यं चेति।** स्थानिवद्भावाश्रयणेऽपीत्यर्थः। **कर्त्र्येति।** कर्तृ ई आ इति स्थिते यदि नित्यत्वात् पूर्वं परयणादेशः स्यात्तस्य स्थानिवद्भावात् पूर्वस्य यण्, तत उदात्तयणोऽनन्तर आकारो न भवतीत्युदात्तत्वं न स्याद्। यदा त्वन्तरङ्गत्वात् पूर्वं पूर्वस्य यणादेशस्तदा ङीप 'उदात्तयण' इति उदात्तत्वं, तस्यापि यणि कृते आकारस्योदात्तत्वमिति सिद्धमिष्टम्।

उ:—पादाभ्यां चरतीति पदिकः 'पर्पादिभ्यष्ठन्' इत्यत्र 'पादः पच्च' इत्युपसंख्यानात्। **अण्;** 'कर्मण्यण्'। 'उदकस्योदः संज्ञायाम्' इत्युदादेशः। **संज्ञायामिति;** ऊठि सति संज्ञात्वानभिव्यक्तेः इञनन्तरमूठ् न भवति। तथा च नेदं दृढोदाहरणमिति भावः। भाष्ये—**अल्लोपः;** 'अल्लोपोऽनः'। **टिलोपः;** 'नस्तद्धिते' इत्यनेन। णत्वस्यासिद्धत्वात् नान्तत्वमिति भावः। ननु नाजानन्तर्य इति निषेधात् कथमत्र असिद्धपरिभाषा; अत आह—**नित्यादपीति।**

'परं विदुः पूर्वपरोपपत्तौ परस्य नित्यस्य च नित्यमेव।
नित्यान्तरङ्गोपगमेऽन्तरङ्गं तस्माद्विधिः प्रातिपदो बलीयान्'॥

इति वृद्धोक्तेरित्यर्थः। उदात्तस्थानिको यो यण् हल्पूर्वः तस्मात् परा नदी असर्वनामस्थानयजादिविभक्तिश्चोदात्ता स्यादिति भाष्योदाहृतसूत्रार्थः। **इष्टमिति**; नदीविभक्त्योर्द्वयोरप्युदात्तत्वमिष्टम्। तच्च प्रथमं पूर्वयणि सत्येव भवतीत्यर्थः।

**भा :—अनेनापि सिद्धः स्वरः। कथम्?**

**॥ वा ॥ आरभ्यमाणे नित्योऽसौ ॥**

**भा :—आरभ्यमाणे त्वस्मिन् योगे नित्यः पूर्वयणादेशः। कृतेऽपि परयणादेशे प्राप्नोति, अकृतेऽपि। परयणादेशोऽपि नित्यः। कृतेऽपि पूर्वयणादेशे प्राप्नोति, अकृतेऽपि।**

**॥ वा ॥ परश्चासौ व्यवस्थया ॥**

**भा :—व्यवस्थया चासौ परः।**

**॥ वा ॥ युगपत्संभवो नास्ति ॥**

**भा :—न चास्ति यौगपद्येन सम्भवः। कथं च सिध्यति?**

**॥ वा ॥ बहिरङ्गेण सिध्यति ॥**

**भा :—'असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे' इत्यनेन सिध्यति। एवं तर्हि योऽत्रोदात्तयण् तदाश्रयः स्वरो भविष्यति। ईकारयणा व्यवहितत्वात्तु न प्राप्नोति। 'स्वरविधौ व्यञ्जनमविद्यमानवद्भवति' इति नास्ति व्यवधानम्। सा तर्हि एषा परिभाषा कर्तव्या। ननु चेयमपि कर्तव्या 'असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे' इति। बहुप्रयोजनैषा परिभाषा। अवश्यमेवैषा कर्तव्या।**

प्र :—**अनेनापीति**। सति स्थानिवत्त्वे पूर्वयणादेशस्यापि नित्यत्वादित्यर्थः। इतर आह—**परयणादेशोऽपीति**। स एवाह **परश्चासाविति**। शब्दपरविप्रतिषेधात् स एव प्राप्नोति। एकमपि यणलक्षणं पूर्वपरविषयभेदाद्भिद्यते। एकस्य च कार्यित्वनिमित्तत्वयोर्विरोधात् परत्वेन व्यवस्था।

उ :—ननु भवतु द्वयोर्नित्यत्वम्। ततः किम्; अत आह भाष्ये—**परश्चेति व्यवस्थया**; विप्रतिषेधे परमिति नियमेन। नन्वेकस्य यणशास्त्रस्य

कथं पौर्वापर्यम्; अत आह---**एकमपीति।** शास्त्रभेदेऽपि विरोधाभावात् कथं परव्यवस्था; अत आह---**एकस्य चेति।** निवर्तमानस्य स्थानित्वं विद्यमानस्य च निमित्तत्वमिति विरुद्धं युगपदेकस्य न संभवतीत्यर्थः। सूत्रारम्भवादी आह---भाष्ये---**एवं तर्हीति।** भाष्ये---**सा तर्हीति**; 'स्वरविधौ व्यञ्जनमविद्यमानवद्' इत्येषा परिभाषा। प्रत्याख्यानवाद्याह---भाष्ये **ननु चेयमिति।**

**भा:---सा चाप्येषा लोकतः सिद्धा। कथम्? प्रत्यङ्गवर्ती लोको लक्ष्यते। तद्यथा पुरुषोऽयं प्रातरुत्थाय यान्यस्य प्रतिशरीर कार्याणि तानि तावत्करोति, ततः सुहृदाम्, ततः संबन्धिनाम्। प्रातिपदिकं चाप्युपदिष्टं सामान्यभूतेऽर्थे वर्तते। सामान्ये वर्तमानस्य व्यक्तिरुपजायते। व्यक्तस्य सतो लिङ्गसंख्याभ्यामन्वितस्य बाह्येनार्थेन योगो भवति। यथैव चाऽऽनुपूर्व्याऽर्थानां प्रादुर्भावस्तथैव शब्दानामपि। तद्वत्कार्यैरपि भवितव्यम्। इमानि तर्हि प्रयोजनानि---पटयति लघयति। अवधीत् बहुखट्वकः। पटयति लघयतीति णिचि टिलोपे कृते "अत उपधायाः" इति वृद्धिः प्राप्नोति। स्थानिवद्भावान्न भवति। अवधीदित्यकारलोपे कृते 'अतो हलादेर्लघोः' इति विभाषा वृद्धिः प्राप्नोति। स्थानिवद्भावान्न भवति। बहुखट्वक इति "आपोऽन्यतरस्याम्" इति ह्रस्वे कृते "ह्रस्वान्तेऽन्त्यात्पूर्वम्" इत्येष स्वरः प्राप्नोति। स्थानिवद्भावान्न भवति।**

प्र:---**प्रत्यङ्गवर्तीति।** प्रत्यासन्नवाची प्रत्यङ्गशब्दः। अङ्गशब्देन प्रत्यासत्तिर्लक्ष्यते, अङ्गानां प्रत्यासन्नत्वात्। अङ्गमङ्गं प्रति प्रत्यङ्गमित्यव्ययीभावः। **प्रतिशरीरमिति।** शरीरस्य भोगायतनत्वात्। **ततः सुहृदामिति।** सौहार्दस्यासत्तिहेतुत्वात्। **ततः सम्बन्धिनामिति।** अवश्यकर्तव्यत्वात्। **सामान्यभूत इति।** नित्येऽपि शब्दार्थसम्बन्धे अक्रमेऽप्यर्थप्रतिपादने उपायभावेनासत्यमपि क्रमं प्रकल्प्याद्यर्थं चाश्रित्योपेयव्यवस्थापनात्। तत्र 'नागृहीतविशेषणा विशेष्ये बुद्धिरुत्पद्यते' इत्यादौ सामान्यमभिधीयते। ततस्तदनुरक्तद्रव्ये प्रतीतिः। लिङ्गसंख्याशक्तीनां चाश्रयो द्रव्यमिति तत्पूर्वमभिधातव्यम्। ततः संख्यापेक्षया लिङ्गं समासन्नमिति तदभिधीयते। द्व्यादिसंख्या हि वस्त्वन्तरापेक्षोपजायते। एकत्वसंख्यापि वस्त्वन्त-

रापेक्षद्वित्वादिव्यवच्छेदं करोतीति बहिरङ्गा। साऽपि सजातीयपदार्थापेक्षत्वादन्तरङ्गा। कर्मादीनि तु विजातीयक्रियापेक्षणाद्बहिरङ्गाणीति न्यायप्राप्तक्रमः। **बाह्येनेति।** कर्मत्वादिना। तद्धि क्रियापेक्षणात् बाह्यम्।

उ:—नन्वङ्गशब्दस्यावयववाचित्वात् लोकशब्दोऽवयविपरः। न चावयवी प्रत्यवयवपर्याप्तवृत्तिः व्यासज्यवृत्तित्वात्, प्रकृतानुपयोगश्च; अत आह—**प्रत्यासन्नेति।** लक्षणाबीजमाह—**अङ्गानामिति। भोगेति;** तथा चेतरापेक्षया प्रत्यासन्नत्वमित्यर्थः। भाष्ये-**प्रतिशरीरं;** शरीरं प्रति। ननु शब्दार्थसंबन्धानां नित्यत्वात् क्रमेण शब्द-प्रतिपत्तिरयुक्ता। शब्दश्रवणानन्तरं युगपत् सर्वार्थप्रतिपत्तेः तत्क्रमोऽप्ययुक्तः; अत आह—**नित्येति।** भाष्योक्तं प्रतीतिक्रममुपपादयति—**तत्रेति।** घटशब्दात् घटत्वप्रतीत्यनन्तरं तद्विशिष्टद्रव्यप्रतीतिरित्यर्थः। **द्रव्ये;** व्यक्तौ। लिङ्गाद्यपेक्षया व्यक्तेः पूर्वप्रतीतौ प्राधान्ये हेतुमाह—**लिङ्गेति।** शक्तिः कारकम्। **तत्पूर्वम्;** लिङ्गादेः पूर्वम्। लिङ्गस्यासन्नत्वमाह—**द्व्यादीति।** कारकात् संख्यायास्तदाह—**सेति। सजातीयेति;** आश्रयत्वेन सजातीयेत्यर्थः। भाष्ये **ह्रस्वान्त इति;** 'बहोर्नञ्वदुत्तर-पदभूम्नि' इत्यतिदेशात् सर्वत्रेष्यत इत्यर्थः।

**भा:—वैयाकरणः सौवश्व इति य्वोः स्थानिवद्भावादायावौ प्राप्नुतस्तयोः प्रतिषेधो वक्तव्यः।**

**॥ वा ॥ अचः पूर्वविज्ञानादैचोः सिद्धम् ॥**

**भा:—योऽनादिष्टाचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावः। आदिष्टाच्चैषोऽचः पूर्वः। किं वक्तव्यमेतत्? न हि। कथमनुच्यमानं गंस्यते? अच इति पञ्चमी। अचः पूर्वस्य। यद्येवमादेशोऽविशेषितो भवति। आदेशश्च विशेषितः। कथम्? न ब्रूमो—यत् षष्ठीनिर्दिष्टमज्ग्रहणं तत्पञ्चमीनिर्दिष्टं कर्तव्यम्—इति। किं तर्ह्यन्यत्कर्तव्यम्? अन्यच्च न कर्तव्यम्। यदेवादः षष्ठीनिर्दिष्टमज्ग्रहणम्, तस्य दिक्शब्दैर्योगे पञ्चमी भविष्यति—अजादेशः परनिमित्तकः पूर्वस्य विधिं प्रति स्थानिवद्भवति। कुतः पूर्वस्य? अच इति। तद्यथा। आदेशः प्रथमानिर्दिष्टः, तस्य दिक्शब्दैर्योगे पञ्चमी भवति अजादेशः परनिमित्तकः पूर्वस्य विधिं प्रति स्थानिवद्भवति। कुतः पूर्वस्य? आदेशादिति।**

प्र :—**योऽनादिष्टादिति ;** अकृत एवादेशे अचो यः पूर्व इत्यर्थः । अजपेक्षस्य पूर्वत्वस्येहाश्रयणात् । आदेशनमादिष्टं तद् यस्य नास्ति सोऽनादिष्टः । **आदेश इति** । ततश्च हलादेशोऽपि स्थानिवत् स्यात् । **यदेवाद इति** । साहश्यादेवमुक्तं, शब्दान्तरमेव तु पञ्चम्यन्तमपेक्षते । **तद्यथेति** । यथादेशापेक्षया पूर्वत्वे आश्रीयमाणे विभक्तिविपरिणामस्तथा स्थान्यपेक्षयापीत्यर्थः । धिन्वन्तीत्यत्रोकरात् पूर्वं यदङ्गं तस्मान्निमित्तत्वेनाश्रिताद्विधिरिति सिद्धः स्थानिवद्भावः । वैयाकरण इत्यत्र तु तन्न भवति । न हीकारात् पूर्वो यो वकारः स क्वचिन्निमित्तत्वेनाश्रितः ।

उ :— नन्वादेशानन्तरं स्थानिवद्भावादनादिष्टादित्ययुक्तम् ; अत आह— [(१)**अकृत एवेति** । अनादिष्टादिति अनादेशरूपादच इत्यर्थः इत्याह—**आदेशनमिति** । **तद्यस्येति ;** यदेति शेषः । ननु षष्ठ्यन्तपञ्चम्यन्तयोर्भेदाद्यदेवेत्याद्ययुक्तमित्याशङ्क्याह—**साहश्यादिति** । तद्यथेत्यनुपपन्नम् अचा पूर्वत्वं विशेष्यत इति वदता आदेशेन पूर्वत्वस्याविशेषणात् इत्यत आह—**यथेति** । परमतेन दृष्टान्तः—] **अकृत इति** । अनादेशशब्दादेनमर्थमानयति—**अजपेक्षस्येति** । **ततश्चेति ;** तथाच विश्न इत्यादौ नातिप्रसङ्ग इति भावः । ननु षष्ठ्यन्तपञ्चम्यन्तयोर्भेदाद्यदेवेत्ययुक्तम् ; अत आह—**साहश्यादिति** । नन्वनादिष्टादिति आदेशात् पूर्वत्वानङ्गीकारात् तद्यथेत्ययुक्तम् ; अत आह—**यथेति** । आदेशपक्षे दृष्टान्त इत्यर्थः । तथा च यश्चोभयोरिति दोषपरिहारौ समावित्यर्थः । ननु धिन्वन्तीत्यत्राचः पूर्वस्य न विधिः । किन्तु आदेशस्यैवेति स्थानिवद्भावाभावात् इट् स्यात् ; अत आह—**धिन्वन्तीति** । पूर्वस्मादित्याश्रिते, पूर्वस्य निमित्तत्वं च । अङ्गाधिकारादिटोऽङ्गं निमित्तमिति भावः । निमित्तत्वेनेत्यस्य प्रयोजनमाह—**वैयाकरण** इति ।

**॥ वा ॥ तत्रादेशलक्षणप्रतिषेधः ॥**

**भा :—तत्रादेशलक्षणं कार्यं प्राप्नोति तस्य प्रतिषेधो वक्तव्यः । वाय्वोः । अध्वर्य्वोः । "लोपो व्योर्वलि" इति लोपः प्राप्नोति ॥**

**॥ वा ॥ असिद्धवचनात्सिद्धम् ॥**

**भा :—अजादेशः परनिमित्तकः पूर्वस्य विधिं प्रत्यसिद्धो भवतीति वक्तव्यम् ।**

---

(१) ग. कोष्ठकान्तर्गतो भागो नास्ति

॥ वा ॥ असिद्धवचनात्सिद्धमिति चेदुत्सर्गलक्षणानामनुदेशः ॥

भा :—असिद्धवचनात्सिद्धमिति चेदुत्सर्गलक्षणानामनुदेशः कर्तव्यः। पट्वया मृद्व्येति। ननु चैतदप्यसिद्धवचनात्सिद्धम्।

॥ वा ॥असिद्धवचनात्सिद्धमिति चेन्नान्यस्यासिद्ध-
वचनादन्यस्य भावः ॥

भा :—असिद्धवचनात्सिद्धमिति चेत्। तन्न। किं कारणम्? नान्यस्यासिद्धवचनादन्यस्य भावः। न ह्यन्यस्यासिद्धत्वादन्यस्य प्रादुर्भावो भवति। तद्यथा—न हि देवदत्तस्य हन्तरि हते देवदत्तस्य प्रादुर्भावो भवति।

॥ वा ॥ तस्मात्स्थानिवद्वचनमसिद्धत्वं च ॥

भा :—तस्मात्स्थानिवद्भावो वक्तव्यः। असिद्धत्वं च। पट्व्या मृद्व्येति स्थानिवद्भावः। वाय्वोरध्वर्य्वोरित्यत्रासिद्धत्वम्।

॥ वा ॥ उक्तं वा ॥

भा :—किमुक्तम्? स्थानिवद्वचनानर्थक्यं शास्त्रासिद्धत्वाद् इति। विषम उपन्यासः। युक्तं तत्र यदेकादेशशास्त्रं तुक्छास्त्रे असिद्धं स्याद्—अन्यदन्यस्मिन्। इह पुनरयुक्तम्। कथं हि तदेव नाम तस्मिन्नसिद्धं स्यात्? तदेव चापि तस्मिन्नसिद्धं भवति। वक्ष्यति ह्याचार्यः 'चिणो लुकि तग्रहणानर्थक्यं संघातस्याप्रत्ययत्वात्तलोपस्य चासिद्धत्वाद्' इति। चिणो लुक् चिणो लुक्येवासिद्धो भवति।

॥ वा ॥ काममतिदिश्यतां वा सच्चासच्चापि नेह भारोऽस्ति।
कल्प्यो हि वाक्यशेषो वाक्यं वक्तर्यधीनं हि ॥

भा :—अथवा वतिनिर्देशोऽयम्। कामचारश्च वतिनिर्देशे वाक्यशेषं समर्थयितुम्। तद्यथा—"उशीनरवन्मद्रेषु यवाः" सन्ति, न सन्तीति। 'मातृवदस्याः कलाः' सन्ति न सन्तीति। एवमिहापि स्थानिवद्भवति, स्थानिवन्न भवतीति वाक्यशेषं

**समर्थयिष्यामहे। इह तावत्पट्व्या मृद्व्येति यथा स्थानिनि यणादेशो भवति, एवमादेशोऽपि भवति। इहेदानीं वाय्वोरध्वर्य्वोरिति यथा स्थानिनि यलोपो न भवति, एवमादेशोऽपि न भवतीति।**

प्र:—**तत्रेति;** अतिदेशेन पराश्रयं कार्यं प्राप्यते न तु स्वाश्रयं निवर्त्यते। भाष्यकारेण तु विधिग्रहणात् स्वाश्रयकार्याभावः साधितः। **उत्सर्गेति।** उत्सर्गः स्थानी स ह्यादेशेनापवादेनेव निवर्त्यते। नन्वीकारयणोऽसिद्धत्वाद् विभक्तावेव यण् भविष्यति। नैतदस्ति। पूर्वविधावसिद्धत्वमुच्यते न त्वानन्तर्ये लौकिके यथा प्रयोगे इति नास्ति विभक्तेरानन्तर्यम्। **अनुदेश इति।** अतिदेश इत्यर्थः। **ननु चैतदपीति।** शास्त्रासिद्धत्वाश्रयणात्। **नान्यस्येति।** कार्यासिद्धत्वाश्रयमेतत्। **उक्तं वेति।** शास्त्रासिद्धत्वमाश्रयणीयमित्यर्थः। **तदेवेति।** सकृत्पाठापेक्षयैतदुच्यते। विषयभेदात्तु भेदाश्रयणादसिद्धत्वमाश्रीयते। **नेह भारोऽस्तीति।** न ह्यभावातिदेशेऽधिकं सूत्रं पठनीयम्, विधिशब्दं चान्तरेण सिध्यति। **अधीनमिति।** अध्युत्तरपदात् खविधानादव्युत्पन्न आयत्तार्थवृत्तिरधीनशब्दः। **तद्यथेति।** येनोपमाने यवानां सत्ताऽवगता, स सन्तीति वाक्यशेषं प्रकल्पयति। असत्तावगतौ न सन्तीति। एवमस्यापि लक्षणस्य प्रतिलक्ष्यं भेदात् कचिद्भावोऽतिदिश्यते कचिदभावः।

उ:—**भाष्यकारेणेति;** तथा च वार्तिककारस्य प्रतिषेधोपन्यासो युक्त इति भावः। उत्सर्गशब्दस्य स्थानिनि वृत्तौ हेतुमाह—**स हीति।** स्थानिवद्भावोऽपि वक्तव्य इति वार्तिकार्थः। स्थानिवद्भावं विनापि पट्वघेत्यादिरूपसिद्धिं शङ्कते—**नन्विति। विभक्तावेव;** विभक्तौ परत एव। **नैतदिति।** आनन्तर्यस्य लौकिकत्वेन पूर्वविधित्वाभावान्नात्रासिद्धत्वम्। तथा चेकारयणा व्यवहितत्वात् न विभक्तिमादायापि यण्। ईकारयणश्च स्थानिवत्त्वाभावान्नेकारमादायापि यणिति भावः। लौकिक इत्यस्यैव व्याख्यानम्—**यथा प्रयोग इति;** यथा प्रयोगे लौकिके असिद्धत्वं नास्ति एवमानन्तर्येऽपीत्यर्थः। वार्तिकस्थानुदेशोऽतिदेश इत्याह—**अतिदेश इति।** कार्यासिद्धत्वेन स्थानिनो निवर्तनात् कथं यण्; अत आह—**शास्त्रेति।** तथा च पूर्वमीकारे यणशास्त्रं न प्रवर्तते किं त्वकारं परतः उकारस्यैव पूर्वं यणि पश्चादीकारस्येति इष्टसिद्धिरिति भावः। शास्त्रासिद्धत्वेनान्यस्येति वार्तिकांशोपपाद-

ऽयाह—**कार्येति**। कार्यासिद्धत्वपक्षे पट्व्येति रूपं न सिध्यतीति वार्तिकार्थः। **शास्त्रासिद्धत्वमिति;** लक्ष्यानुरोधादिति भावः। भाष्ये—**उक्तमिति;** 'षत्वतुकोरसिद्धः' इत्यत्र। कथमिति भाष्यतात्पर्यमाह—**सकृदिति**। समाधानतात्पर्यमाह—**विषयेति**। भाष्ये **चिणो लुकीति**। चिणो लुकि तग्रहणं न कर्तव्यमित्यनेन वार्तिकेनोच्यते। असति तग्रहणे अपाचितरामित्यत्र तरामित्यस्यापि लोप स्यादिति चेत्। तत्र किं तरांसमुदायस्य वा लोपः, तरामोः प्रत्येकं क्रमेण वा। नाद्यः। संघातस्याप्रत्ययत्वात्। न द्वितीयः। तलोपस्यासिद्धत्वादिति वार्तिकार्थः। यथाश्रुतसूत्रेणापि वाय्वोरित्यादौ यलोपाभावः सिध्यतीत्याह—**काममिति;** भाष्यम्। श्लोके इहशब्दं सूत्रपरमङ्गीकृत्य व्याचष्टे—**न हीति**। न केवलं गौरवाभावमात्रं, किं तु लाघवमपीत्याह—**विधिशब्दमिति**। विधाविल्येतन्नियमार्थं स्थानिवदेव यथा स्यात् स्वाश्रयं मा भूत् इति। तेन वाय्वोरित्यादौ यलोपाभाव इति विधिग्रहणस्य प्रयोजनमुक्तम्। भावातिदेशेनैव यलोपाभावसिद्धिः विधाविति न कर्तव्यमित्यर्थः। **अध्युत्तरेति;** 'अषडक्षाशितंग्वलंकर्मालंपुरुषाध्युत्तरपदात् खः' इत्यनेन। ननु वक्तृतात्पर्याज्ञानात् कथं श्रोत्रा वाक्यद्वयं कल्पनीयम्; अत आह—**येनेति**। नन्वत्रैकस्मिन् सूत्रे उभयोरतिदेशः कथं लभ्यते वाक्यभेदप्रसङ्गात्; अत आह—**प्रतिलक्ष्यमिति**। लक्ष्यानुसाराद्वाक्यशेषकल्पनम्, वाक्यभेदश्चेष्ट इति भावः।

**भा:—किं पुनरनन्तरस्य विधिं प्रति स्थानिवद्भावः, आहोस्वित्पूर्वमात्रस्य? कश्चात्र विशेषः?**

**॥ वा ॥ अनन्तरस्य चेदेकाननुदात्तद्विगुस्वरगतिनिघातेषूपसंख्यानम् ॥**

**भा:—अनन्तरस्येति चेदेकाननुदात्तद्विगुस्वरगतिनिघातेषूपसंख्यानं कर्तव्यम्। एकाननुदात्त—लुनीह्यत्र पुनीह्यत्र। "अनुदात्तं पदमेकवर्जम्" इत्येष स्वरो न प्राप्नोति। द्विगुस्वर—पञ्चारत्न्यः दशारत्न्यः। "इगन्तकाल—" इत्येष स्वरो न प्राप्नोति। गतिनिघात—यत्प्रलुनीह्यत्र। यत्प्रपुनीह्यत्र। "तिङि चोदात्तवति" इत्येष स्वरो न प्राप्नोति। अस्तु तर्हि पूर्वमात्रस्य।**

**॥ वा ॥ पूर्वमात्रस्येति चेदुपधाह्रस्वत्वम् ॥**

भा :—पूर्वमात्रस्येति चेदुपधाह्रस्वत्वं वक्तव्यम्। वादितवन्तं प्रयोजितवान्—अवीवदद्वीणां परिवादकेन। किं पुनः कारणं न सिध्यति? योऽसौ णौ णिर्लुप्यते तस्य स्थानिवद्भावाद् ह्रस्वत्वं न प्राप्नोति।

॥ वा ॥ गुरुसंज्ञा च ॥

भा :—गुरुसंज्ञा च न सिध्यति। श्लोष्म ३ घ्न। पित्त ३ घ्न। द ३ ध्यश्व। म ३ ध्वश्व। "हलोऽनन्तराः संयोगः" इति संयोगसंज्ञा, "संयोगे गुरु" इति गुरुसंज्ञा, "गुरोरनृतः" इति प्लुतो न प्राप्नोति। ननु च यस्याप्यनन्तरस्य विधिं प्रति स्थानिवद्भावः, तस्याप्यनन्तरलक्षणो विधिः संयोगसंज्ञा विधेया।

॥ वा ॥ न वा संयोगस्यापूर्वविधित्वात् ॥

भा :—न वा एष दोषः। किं कारणम्? संयोगस्यापूर्वविधित्वात्। न पूर्वविधिः संयोगः। किं तर्हि? पूर्वपरविधिः संयोगः।

प्र :—**किं पुनरिति**; अमीषां ब्राह्मणानामन्त्यात्पूर्वमानयेत्यत्रानन्तरे पूर्वशब्दो दृष्टः। मथुरायाः पूर्वं पाटलिपुत्रमिति व्यवहित इति प्रश्नः। तत्र यदा विषयभेदाल्लक्षणं भिद्यते तदा यादृशं यत्र पूर्वत्वं संभवति तादृशं तत्राश्रीयते इति व्यवहितस्यापि ग्रहणम्। यदा त्वेकमेव लक्षणं तदा किमित्यव्यवहितसंभवे व्यवहितमाश्रीयत इति अनन्तरस्यैव ग्रहणेन भाव्यम्। **लुनीह्यत्रेति**; हेरपित्त्वादुदात्तत्वम्। तत्र यणादेशे कृते उदात्तस्याभावाद्वर्ज्यमानस्वरो न स्यात्। स्थानिवद्भावात्तु यथा स्थानिनि स्वरो भवति एवमादेशेऽपि सिद्धः स्वरः। **पञ्चारत्न्य इति**। 'जसादिषु छन्दो वावचनं प्राङ् णौ चङ्युपधायाः' इति 'जसि च' इति गुणश्छन्दसि विकल्पितत्वान्न भवतीति यणि कृते इगन्तत्वाभावात् पूर्वपदप्रकृतिस्वराऽप्रसङ्गः। **यत्प्रलुनीह्यत्रेति**। यच्छब्दप्रयोगो निघातप्रतिषेधार्थः। तत्र यणि कृते उदात्तत्वाभावाद्धतिनिघाताप्रसङ्गः। एतच्च सर्वमनाश्रित्यान्तरङ्गबहिरङ्गभावमुक्तम्। **श्लोष्म ३ घ्न इति**। कार्यार्थत्वात्संयोगसंज्ञाया व्यवहितस्यात्र प्लुतविधिरिति पूर्वपक्षः। **ननु चेति**। यथोद्देशपक्षे प्रत्येकं च संयोगसंज्ञेति पक्षे आनन्तर्याश्रयेऽपि दोष इत्यर्थः। नवेतिसमुदायः

संज्ञेति भावः। पूर्वमात्रस्येति पक्षोऽत्र स्थितः। अबीभददिति तु चङ्परनिर्ह्रासे स्थानिवत्त्वनिषेधो वक्ष्यते।

उ:—लौकिकप्रयोगः संशयबीजमित्याह—**अमीषामिति**। नन्वनन्तरे मुख्यो व्यवहिते गौण.। अनेकार्थत्वस्यान्याय्यत्वात् अर्थद्वयपरत्वे वाक्यभेदश्च स्यात्; अत आह—**तत्रेति**। **यादृशमिति**; अन्यथा तद्विषये लक्षणस्यानर्थक्यापत्तेरिति भावः। भाष्ये एकाननुदात्तशब्देन 'अनुदात्तं पदमेकवर्जम्' इति स्वरो विवक्षितः। **लुनीह्यत्रेति**। तत्र स्थानिन आदेशाद्वानन्तरपूर्वस्य हकारस्यानुदात्तत्वं न क्रियते। किन्तु व्यवहितस्यैकारस्योकारस्य वेति स्थानिवद्भावाभावात् वर्ज्यमानस्वरो न स्यादित्येतदुपपादयति—**हेरिति**। **उदात्तत्वम्**; प्रत्ययस्वरेण। **यणादेश इति**। यद्यपि पदसंस्कारपक्षे लुनीहीत्यस्य कृतस्वरस्य पदान्तरसंबन्धेन यणि कृतेऽपि पूर्वं कृतस्वरो न निवर्तते तथापि वाक्यसंस्कारपक्षे शब्दपरविप्रतिषेधेन पूर्वं यणि कृते स्वरासिद्धिरित्यभिप्रायः। पूर्वमात्रविधौ स्थानिवद्भावे तु स्वरसिद्धिरित्याह—**स्थानिवद्भावात्त्विति**। पश्चारत्न्य इत्यस्य छान्दसत्वाज्जोकारेण यणमुपपादयति—**जसादिष्विति**। 'जसि च' इति गुणविधिप्रभृतिष्वित्यर्थः। इगन्ते कालवाचिनि कपालादौ च परतः पूर्वपदप्रकृतिस्वरः स्यात् द्विगुसमास इति इगन्तेतिसूत्रार्थः। **निघातेति**; 'तिङ्ङतिङः' इति प्राप्तस्य निघातस्य 'निपातैर्यद्यदि' इत्यनेन प्रतिषेधादित्यर्थः। उदात्तवति तिङि परे गतिरनुदात्तः स्यादिति 'तिङि च' इति सूत्रार्थः। निघाताप्रसक्तिमुपपादयति—**तत्रेति**। ननूदाहरणत्रयेऽपि बहिरङ्गाद्यणः प्रागेवान्तरङ्गः स्वरो वाक्यसंस्कारपक्षेऽपि स्यादिति नोक्तदोषः; अत आह—**एतच्चेति**। भाष्ये **यासाविति**; वदेर्णिचि उपधावृद्धौ वादीति स्थिते पुनर्णिचि पूर्वस्य लोपे तस्य स्थानिवद्भावादुपधाह्रस्वो न स्यादित्यर्थः। भाष्ये—**श्लेष्मघ्न इति**; 'अमनुष्यकर्तृके च' इति टक्। ननु समुदायस्य संयोगसंज्ञा न तु पूर्वस्य; तन्मात्राश्रयौ च गुरुसंज्ञाप्लुताविति न तत्र स्थानिवत्त्वप्रसङ्गः; अत आह—**कार्येति**। **व्यवहितस्येति**; तथा च प्लुतद्वारा संयोगसंज्ञाया अपि पूर्वविधित्वमिति भावः। **पूर्वपक्षः**; गुरुसंज्ञा चेत्याक्षेपाभिप्राय इत्यर्थः। उक्ताभिप्राये ननु चेत्यादिचोद्यसाम्यापादनायोगम् आशङ्क्याह—**यथोद्देशेति**। तथा च न कार्यद्वारापि व्यवधानम्। **प्रत्येकमिति**। तथा चानन्तरपूर्वविधिः संज्ञेति स्थानिवद्भावात् प्लुतो न स्यादित्यर्थः। **समुदाय इति**; तथा च प्रत्येकसंज्ञामादायोक्तदोषो निरस्तः। यथोद्देशपक्षश्चाश्रितः। तेन प्लुतद्वारापि

न पूर्वविधित्वम्। ननु भाष्यकृता एकस्मिन्नपि पक्षे दोषानुद्धारात् कः पक्षः सिद्धान्तः ; अत आह—**पूर्वमात्रेति।** तथा च प्रतिदीव्नेत्यादिसिद्ध्यै दीर्घविधौ स्थानिवद्भावनिषेधः उपपद्यत इति भावः। नन्वस्मिन् पक्षे अवीवदत् इति कथं सिध्यति ; अत आह—**अवीवददिति।**

**॥ वा ॥ एकादेशस्योपसंख्यानम् ॥**

**भा :—एकादेशस्योपसंख्यानं कर्तव्यम्। आयसौ गोमतौ चातुरौ आनडुहौ पादे उदवाहे। एकादेशे कृते नुमामौ पद्भाव ऊडित्येते विधयः प्राप्नुवन्ति। किं पुनः कारणं न सिध्यन्ति।**

**॥ वा ॥ उभयनिमित्तत्वात् ॥**

**भा :—अजादेशः परनिमित्तक इत्युच्यते। उभयनिमित्तश्चायम्।**

**॥ वा ॥ उभयादेशत्वाच्च ॥**

**भा :—अच आदेश इत्युच्यते। अचोश्चायमादेशः। नैष दोषः। यत्तावदुच्यते उभयनिमित्तत्वाद् इति। इह यस्य ग्रामे नगरे वा अनेकं कार्यं भवति, शक्नोत्यसौ ततोऽन्यतरतो व्यपदेष्टुम्। तद्यथा—"गुरुनिमित्तं वसामः' इति। अध्ययननिमित्तं वसामः" इति। यदप्युच्यते—उभयादेशत्वाच्च इति। इह यो द्वयोः षष्ठीनिर्दिष्टयोः प्रसङ्गे भवति, लभतेऽसावन्यतरतो व्यपदेशम्। तद्यथा—देवदत्तस्य पुत्रः, देवदत्तायाः पुत्र इति।**

प्र :—**एकादेशस्येति ;** परस्मिन्नित्येतदवधारणार्थमुपात्तम् तथा ह्यनुपादीयमानेऽपि परस्मिन्नित्यस्मिन् परनिमित्तकस्य स्थानिवद्भावो लभ्यत एव। तत्रानेन यथा अपरनिमित्तकस्य स्थानिवद्भावो निवार्यते वैयाघ्रपद्यः आदीध्य इति। एवं परस्मिन्नेव य आदेश इत्यवधारणादुभयनिमित्तस्याप्राप्तिरिति भावः। आयसादिभ्योऽणन्तेभ्य औप्रत्यये कृते एकादेशे च तस्यादिवद्भावान्नुमामौ प्राप्नुतः। पादे उदवाह इत्यत्र ङावेकादेशे कृत आदिवत्त्वात् भसंज्ञायां सत्यां पद्भाव ऊठ् च प्राप्नुतः। **अचोश्चेति।** अच इति गुणत्वादेकत्वसंख्यायाः पशुना यजेतेतिवद्विवक्षितत्वात्। **इह यस्येति।**

अन्वयव्यतिरेकाभ्यां निमित्तत्वावधारणाद्भवत्येव परस्य निमित्तता। अयोगव्यवच्छेदेन परस्मिन् य आदेश इति विशेषणात्। **द्वयोरिति**। वर्णनिर्देशे तावज्जातिग्रहणान्नास्ति संख्याविवक्षा, भवतु वा, तथापि न दोष इति भावः।

उ:—ननूभयनिमित्तकत्वेऽपि परनिमित्तकत्वस्य सत्वादेकादेशस्य स्थानिवद्भावः सिध्यत्येव; अत आह—**परस्मिन्निति। लभ्यत एवेति;** सामान्येन स्थानिवद्भावविधेः परनिमित्तकापरनिमित्तकसाधारणत्वादित्यर्थः। **अनेन;** परस्मिन्नित्यनेन। **वैयाघ्रपद्य इति;** गर्गादिः। अत्र 'पादस्य लोपोऽहस्त्यादिभ्यः' इति लोपोऽपरनिमित्तकः। तस्य पद्भावे कार्ये स्थानिवद्भावनिरासाय परस्मिन्नित्युच्यते। **आदीध्य इति;** 'टित आत्मनेपदानाम्' इति टित्वमपरनिमित्तं तस्य स्थानिवद्भावात् 'यीवर्णयोर्दीधीवेव्योः' इति ईकारलोपः प्राप्नोति। परस्मिन्निति वचनान्न भवति। **एवमिति;** परनिमित्तक आदेश इति विशेषणस्येतरव्यावृत्तिपरत्वात् पूर्वनिमित्तकस्यापि व्यावृत्तिरित्यर्थः। आयसावित्यादि भाष्यं व्याचष्टे—**आयसेति।** आयसावित्यत्र देविकाशिंशपेत्यादिना भवाद्यर्थाणि परतः श्रेयस आदेरच आत्वम्। **गुणत्वादिति।** यद्यप्युद्देश्यादेशविशेषणम् अच इति तथापि हलादेशव्यावृत्त्यर्थमच इति विशेषणस्योपात्तत्वात्तद्विशेषणत्वेन संख्या विवक्षिता। तथा च विधिस्पृष्टाज्विशेषणत्वादित्यर्थः। आदेशविशेषणत्वेन गुणत्वमिति तु चिन्त्यं संख्यायास्तद्विशेषणत्वाभावात्। उपसंख्यानवादिना किमुभयनिमित्तकस्य परनिमित्तकत्वं नास्तीत्युच्यते किं वा विशेषणस्य व्यवच्छेदार्थत्वात् परमेव निमित्तमिति विवक्षितमिति विकल्पं मनसि निधाय, नाद्य इत्याह—**अन्वयेति।** न द्वितीय इत्याह—**अयोगेति;** शङ्खः पाण्डर इतिवदयोगव्यवच्छेदेनापि विशेषणत्वं संभवतीत्यर्थः। अच्समुदायस्य स्थानित्वेऽपि न दोष इत्याह—**वर्णेति।** जातेः सर्वव्यक्तिषु एकत्वान्न संख्याविवक्षायाः प्रयोजनम्। व्यक्तिगतैकत्वं तु न शब्दार्थ इति तद्विवक्षाया अप्रसङ्ग एवेति भावः। वस्तुतः अच इति अच्स्थानिक आदेशो निर्दिश्यते। एकादेशस्य च पूर्वपरयोरिति षष्ठीद्विवचनेन प्रत्येकमचोः स्थानित्वमुक्तमिति संख्याविवक्षायामपि न दोष इत्याह—**भवतु वेति;** संख्या विवक्षितेति शेषः।

**भा:—अथ हलचोरादेशः स्थानिवद् भवति, उताहो न। कश्चात्र विशेषः?**

**॥ वा ॥ हलचोरादेशः स्थानिवदिति चेद्विंशतेस्तिलोप एकादेशः ॥**

भा :—हलचोरादेशः स्थानिवदिति चेद्विंशतेस्तिलोपे एकादेशो वक्तव्यः। विंशकं विंशम् शतम् विंशः।

॥ वा ॥ स्थूलादीनां यणादिलोपेऽवादेशः ॥

भा :—स्थूलादीनां यणादिलोपे कृते अवादेशो वक्तव्यः, स्थवीयान् दवीयान्।

॥ वा ॥ केकयमित्रय्वोरियादेश एत्वम् ॥

भा :—केकयमित्रय्वोरियादेशे एत्वं न सिध्यति। कैकेयः। मैत्रेयः। अचीत्येत्वं न सिध्यति।

॥ वा ॥ उत्तरपदलोपे च ॥

भा :—उत्तरपदलोपे च दोषो भवति। दध्युपसिक्ताः सक्तवो दधिसक्तवः। अचीति यणादेशः प्राप्नोति।

॥ वा ॥ यङ्लोपे यणियङुवङः ॥

भा :—यङ्लोपे यणियङुवङो न सिध्यन्ति। चेच्यः नेन्यः। चेक्षियः। चेक्रियः। लोलुवः पोपुवः। अचीति यणियङुवङो न सिध्यन्ति। अस्तु तर्हि न स्थानिवत्।

॥ वा ॥ अस्थानिवत्त्वे यङ्लोपे गुणवृद्धिप्रतिषेधः ॥

भा :—अस्थानिवत्त्वे यङ्लोपे गुणवृद्ध्योः प्रतिषेधो वक्तव्यः। लोलुवः पोपुवः सरीसृपो 'मरीमृज' इति। नैष दोषः। "न धातुलोप आर्धधातुके" इति प्रतिषेधो भविष्यति।

प्र :—**अथ हलचोरिति**। उभयथा शास्त्रे व्यवहारदर्शनात्प्रश्नः। 'उरण् रपरः' इत्यत्राऽणनण्समुदायोऽकङादिरादेशो रपरो न भवति। नाग्लोपीत्यत्र तु अत्यरराजदिति हलचोर्लोपेऽग्लोपित्वाश्रयणादुपधाह्रस्वत्वनिषेधो भवति। अस्ति ह्यत्राको दर्शनमिति। **विंशकमिति**। 'विंशतित्रिंशद्भ्याम्' इति ड्वुन्। **विंशमिति**। 'शदन्तविंशतेश्च' इति डः। **विंश इति**। 'तस्य पूरणे डट्'। **स्थवीयानिति**। गुणलोपयोस्तुल्यकालत्वाद् गुणस्य कथमनादिष्टादचः पूर्वत्वमिति चेत्। स्थानिनोऽना-

दिष्टादचः पूर्वत्वात् तद्द्वारेण गुणस्यापि भविष्यतीत्यदोषः। तत्र स्थानिवद्भावे सति लशब्देन व्यवधानादवादेशाप्रसङ्गः। **कैकेय इति।** नन्वङ्गमात्रे गुणो विधीयते न त्वजादौ। तेन योऽत्राश्रीयते नासावादेशः। यश्चादेशः समुदायो नासावाश्रीयते इति न्यायान्नास्ति दोषः। नैतदस्ति। स्थानिवन्न भवतीत्यभावातिदेशाश्रयणपक्षे दोषः स्यादेव। परिहारान्तरस्याभिधास्यमानत्वाद्वैतन्नाश्रितम्। **दधिसक्तव इति।** 'समानाधिकरणाधिकारे क्तस्तृतीयापूर्वपद उत्तरपदलोपश्च' इति लोपस्य परनिमित्तता। यद्यप्यत्र पदान्तविधौ नेति सिध्यति तथापि परिहारान्तरस्याभिधास्यमानत्वादेतन्नोक्तम्। **चेच्यः नेन्य इति।** 'ऊतोऽचि' इत्येतदनाश्रयणादुपन्यासः। **अस्तु तर्हीति।** अच इत्युपादानात् साक्षादेव यस्याच् स्थानित्वेनोपात्तस्तस्यैव स्थानिवद्भावो, न तु हलजादेशस्येत्यर्थः।

उ:—उभयथा व्यवहारमेवाह—**उरणिति।** यथा अण्ग्रहणे नाज्झल्समुदायस्थोऽण् गृह्यते। अग्ग्रहणेन तु सामुदायस्थोऽप्यक् गृह्यते। तथात्राच इत्यज्झल्समुदायस्थोऽप्यच् गृह्यते न वेति प्रश्न इत्यर्थः। **अत्यरराजदिति;** राजानमतिक्रान्तवानिति 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इति णिच्। इष्ठवत्वाट्टिलोपः। निषेधप्राप्तिमाह—**अस्तीति। अत्र;** टिमध्ये। अवादेशे कार्ये स्थानिवद्भावाप्राप्तिं शङ्कते—**गुणलोपयोरिति। स्थानिन इति।** पूर्वसूत्रेण स्थानिवद्भावादित्यर्थः। न च अनल्विधाविति प्रतिषेधः, पूर्वत्वस्य शास्त्रीयकार्यत्वाभावेन प्रतिषेधाप्रसङ्गादिति भावः। स्थानिवद्भावे सति अवादेशो न प्राप्नोतीत्याह—**तत्रेति।** केकयशब्दात् 'जनपदशब्दात् क्षत्रियादञ्'। 'केकयिमित्रयु' इत्यादिना यादेरियादेशे कैकेय इति रूपम्। तत्रेयादेशस्य स्थानिवद्भावात् गुणो न प्राप्नोतीति भाष्ये उक्तम्। तत्र गुणसिद्धिं शङ्कते—**नन्विति। दोषः;** गुणप्रसक्तिदोषः। **स्थानिवन्न भवतीति;** स्थानिनि यथा कार्यं न भवति तथा आदेशेऽपि न भवतीत्यभावातिदेशविवरणम्। **दोषः स्यादिति;** स्थानिनि यकारे गुणाभावादादेशेऽपि न स्यादित्यर्थः। नन्वभावोऽप्यादेशेऽतिदिश्यते। तथा च तत्रापि योऽत्राश्रीयते नासावादेश इति न्यायादिकारमात्रस्यादेशत्वाभावात् तन्मात्राश्रयो गुणः स्यादेव। किं च वाय्वोरित्यादिसिद्धये कचिदेवाभावातिदेशोऽङ्गीक्रियते न सर्वत्र; अत आह—**परिहारेति।** पक्षान्तरस्येत्यर्थः। लोपस्य परनिमित्तकत्वमुपपादयति—**समानाधिकरणेति। तृतीयापूर्वपदं;** क्तप्रत्ययान्तसुबन्तं समानाधिकरणेन समस्यते, क्तान्तस्य लोपश्च इति वार्तिकार्थः। **लोपस्येति;** सुपेत्यधिकारेण समासस्य परनिमित्तत्वात् संनि-

योगशिष्टस्य लोपस्यापि परनिमित्ततेत्यर्थः। ननु 'यङोऽचि च' इत्यत्र 'ऊतोऽचि' इति वार्तिकेन ऊकारान्ताद्विहितस्य यङोऽच्प्रत्यये लुक् नान्यत्रेति नियमात् 'चेच्य' इत्युदाहरणमयुक्तम्; अत आह—**ऊतोऽचीति। अनाश्रयणादिति**; भाष्यकृते त्यादिः। सनिस्रंस इत्यादावपि लुगङ्गीकारेण भगवता तद्वार्तिकप्रत्याख्यानादित्यर्थः। चिञो यङ्यचि अकृत्सार्वेति दीर्घे द्वित्वे अभ्यासगुणे यङो लुकि एरनेकाच इति यणि चेच्यः। एवं णियो नेन्यः। कृञो यङि 'रीङृत' इति रीङि द्वित्वे अभ्यासगुणे यङो लुकि इयङादेशे चेक्रियः। लूञो यङि द्वित्वेऽभ्यासगुणे यङो लुकि उवङि लोलुवः। 'न धातुलोप' इति सर्वत्र गुणनिषेधः। **अच इत्युपादानादिति।** षष्ठी तावदादेशसंबन्धे। साक्षात् संबन्धसंभवे च परंपरासंबन्धो न ग्राह्यः। तत्राच एव स्थानित्वे साक्षात् संबन्धः। समुदायस्य स्थानित्वे तस्य साक्षात् संबन्धः, तद्द्वारा अचः परम्परया। वाजपेयस्य यूप इत्यत्र तु साक्षात्संबन्धासंभवात् परम्पराश्रयणमिति भावः।

**भा:—किं पुनराश्रीयमाणायां प्रकृतौ स्थानिवद्भवति, आहोस्विदविशेषेण? कश्चात्र विशेषः?**

**॥ वा ॥ अविशेषेण स्थानिवदिति चेल्लोपयणादेशे गुरुविधिः ॥**

**भा:—अविशेषेण स्थानिवदिति चेल्लोपयणादेशयोर्गुरुविधिर्न सिध्यति। श्लेष्म ३ घ्न। पित्त ३ घ्न। द ३ ध्यश्व। म ३ ध्वश्व। "हलोऽनन्तराः संयोगः" इति संयोगसंज्ञा, "संयोगे गुरु" इति गुरुसंज्ञा "गुरोः—" इति प्लुतो न प्राप्नोति।**

**॥ वा ॥ द्विर्वचनादयश्च प्रतिषेधे।**

**भा:—द्विर्वचनादयश्च प्रतिषेधे वक्तव्याः। "द्विर्वचनवरेयलोप" इति।**

**॥ वा ॥ क्सलोपे लुग्वचनम् ॥**

**भा:—क्सलोपे लुग्वक्तव्यः। अदुग्ध अदुग्धाः। "लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये" इति।**

**॥ वा ॥ हन्तेर्घत्वम् ॥**

**भा:—हन्तेर्घत्वं वक्तव्यम्। घ्नन्ति घ्नन्तु अघ्नन्।**

प्र :—**किं पुनरिति।** यत्र कार्ये स्थान्याश्रितः किं तत्रैव स्थानिवद्भाव उत यत्राप्यनाश्रित इति प्रश्नः। **गुरुविधिरिति।** कार्यार्थित्वात् संयोगसंज्ञाया गुरुविधिरित्युच्यते। लोपयणादेशयोः स्थानी संयोगसंज्ञायां नाश्रीयते। **द्विर्वचनादयश्चेति।** द्विर्वचनादावपि स्थानी नाश्रीयते। अनचीति पर्युदासाश्रयणात्तत्सदृशस्य हलो द्विर्वचनादावाश्रयणं न त्वचः। एवं यलोपेऽपि। वरे त्वाकारलोपे विधीयमाने प्रकृतिराश्रितैवाचि क्ङितीति। भाष्ये तु वरेशब्दोऽपि पठितः। तत्रायं भावः। यङ एव समुदायस्य प्रत्ययत्वं न तदवयवस्याकारस्येत्यजादौ प्रत्यय आकारलोपविधानादत्राप्रसङ्ग एवेति। **अदुग्धेति।** क्सस्य अलोऽन्त्यस्येति लोपे कृते तस्य स्थानिवद्भावाद् 'झलो झलि' इति लोपो न स्यादिति लुग्वचनम्। अदुग्धहीत्येवमर्थस्त्ववश्यं वक्तव्यो वकारस्याझल्त्वात्। **घ्नन्तीति।** अल्लोपस्य स्थानिवत्त्वादनन्तरो नकारो न भवतीति घत्वाप्रसङ्गः। वचनसामर्थ्यात् व्यवधानाश्रयणे तु हननादिष्वतिप्रसङ्गः।

उ :—**उत यत्र ;** यस्मिन् कार्ये स्थानी नाश्रीयते आदेशे च सति प्राप्तिः तत्रापीत्यर्थः। संयोगसंज्ञाविधिरिति वक्तव्ये गुरुविधीत्युक्तम् ; अत आह—**कार्येति।** अत्र कार्यस्य स्थान्यनाश्रितत्वमाह—**लोपेति। स्थानी ;** लोपस्याकारः, यण इकारः। भाष्ये **द्विर्वचनादयश्चेति** गौरवमुक्तम्। तत्र कल्पान्तरे नास्तीत्याह—**द्विर्वचनादावपीति।** ननु 'अनचि च' इति प्रतिषेधे स्थान्याश्रितः। तथा च कल्पान्तरेऽपि प्रतिषेधद्विर्वचनग्रहणं कर्तव्यमिति तदंशे साम्यमेव ; अत आह—**अनचीति।** उदाहरणान्तरेऽपि स्थान्यनाश्रयत्वमाह—**एवमिति।** वरे तु स्थान्याश्रयणमस्तीति नोदाहरणमित्याह—**वरे त्विति।** भाष्यकृतोऽपि वरेग्रहणं पक्षद्वयेऽपि न कर्तव्यमित्येवाभिप्रेतम्। तत्पाठस्तु संपातायातमित्यशयेनाह—**तत्रायं भाव इति। क्सस्येति।** लुग्वा दुहेत्यत्र लोप इत्यनुवृत्तावपि लुग्ग्रहणसामर्थ्यात् सर्वलोपो विधीयते। तत्र पक्षान्तरे 'झलो झलि' इति लोपस्य स्थान्याश्रितत्वाभावेनान्त्यलोपस्य स्थानिवद्भावाभावात् 'झलो झलि' इति सलोपेन अदुग्धेत्यादि सिध्यति। अस्मिन् पक्षे स्थानिवद्भावेन सलोपासिद्धेः सर्वलोपार्थं लुग् वक्तव्य इति गौरवमिति तात्पर्यम्। **लोपः ;** सलोपः। क्सस्य लोपे प्रकृते लुग्वचनं कर्तव्यमिति वार्तिकार्थः। पक्षान्तरेऽपि लुग्वक्तव्य एवेत्याह—**अदुग्धहीति। अल्लोपस्येति ;** गमहनेत्यनेन विहितस्य। **घत्वेति ;** 'हो हन्तेः' इत्यनेन विहितस्य घत्वस्याप्रसङ्ग इत्यर्थः। वचनात् व्यवधानेऽपि घत्वाङ्गीकारेऽतिप्रसङ्गमाह—**वचनेति।**

भा :—अस्तु तह्याश्रीयमाणायां प्रकृताविति ।

॥ वा ॥ ग्रहणेषु स्थानिवदिति चेज्जग्ध्यादिष्वादेशप्रतिषेधः ॥

भा :—ग्रहणेषु स्थानिवदिति चेज्जग्ध्यादिषु आदेशस्य प्रतिषेधो वक्तव्यः। निराद्य समाद्य। "अदो जग्धिर्ल्यप्ति किति" इति अदो जग्धिभावः प्राप्नोति ।

॥ वा ॥ यणादेशे युलोपेत्वानुनासिकात्वप्रतिषेधः ॥

भा :—यणादेशे युलोपेत्वानुनासिकात्वानां प्रतिषेधो वक्तव्यः। यलोप—वाय्वोः। अध्वर्य्वोः। "लोपो व्योर्वलि" इति यलोपः प्राप्नोति। उलोप—अकुर्वि आशाम् अकुर्व्याशाम् "नित्यं करोतेः, ये च" इत्युकारलोपः प्राप्नोति। ईत्व—अलुनि आशाम् अलुन्याशाम् 'ईहल्यघोः' इतीत्वं प्राप्नोति। अनुनासिकात्व-अजज्ञि आशाम् अजज्ञ्याशाम् "ये विभाषा" इत्यनुनासिकात्वं प्राप्नोति ।

॥ वा ॥ रायात्वप्रतिषेधश्च ॥

भा :—रायात्वस्य च प्रतिषेधो वक्तव्यः। रायि आशाम् राय्याशाम् "रायो हलि" इत्यात्व प्राप्नोति ।

॥ वा ॥ दीर्घे यलोपप्रतिषेधः ॥

भा :—दीर्घे यलोपस्य प्रतिषेधो वक्तव्यः। सौर्ये नाम हिमवतः शृङ्गे, तद्वान् सौर्यी हिमवानिति सौ इन्नाश्रये दीर्घत्वे कृते "सूर्यतिष्या" इति यलोपः प्राप्नोति ।

॥ वा ॥ अतो दीर्घे यलोपवचनम् ॥

भा :—अतो दीर्घे यलोपो वक्तव्यः। गार्गीभ्यां वात्साभ्याम्। दीर्घे कृते "आपत्यस्य च तद्धितेऽनाति" इति प्रतिषेधः प्राप्नोति। नैष दोषः। आश्रीयते तत्र प्रकृतिस्तद्धित इति। सर्वेषामेष परिहारः। उक्तं विधिग्रहणस्य प्रयोजनम्—विधिमात्रे

**स्थानिवद्यथा स्यादनाश्रीयमाणायां प्रकृताविति। अथवा पुनरस्त्वविशेषेण स्थानिवदिति। ननु चोक्तम् अविशेषण स्थानिवदिति चेल्लोपयणादेशे गुरुविधिः, द्विर्वचनादयश्च प्रतिषेधे, क्सलोपे लुग्वचनम्, हन्तेर्घत्वमिति। नैष दोषः। यत्तावदुच्यतेऽविशेषेण स्थानिवदिति चेत् लोपयणादेशे गुरुविधिरिति। उक्तमेतत् न वा संयोगस्यापूर्वविधित्वादिति। यदप्युच्यते द्विर्वचनादयश्च प्रतिषेधे वक्तव्याः इति। उच्यन्ते न्यास एव। 'क्सलोपे लुग्वचनम्' इति। क्रियते न्यास एव। 'हन्तेर्घत्वम्' इति। सप्तमे परिहारं वक्ष्यति।**

प्र:—**निराद्येति।** आदयतेर्णिलोपे कृते एकदेशविकृतस्यानन्यत्वाददिरेवायमिति जग्धिः प्राप्नोति। न च जग्धौ णिराश्रितः। आदिग्रहणाद् घात्यादिति वधादेशप्रसङ्गः। **यणादेश इति।** बहिरङ्गपरिभाषाऽनाश्रयणेनैतदुच्यते। **अजज्ञीति।** जन जनन इत्यस्माद् व्यत्ययेनात्मनेपदम्। जनी प्रादुर्भाव इत्यस्माद्वा श्यन्। छान्दसत्वात् श्लुः। **सौर्यीति।** 'तेनैकदिक्' इत्यण्, ततो मत्वर्थीय इनिः। सौर्ये इत्यत्र तु यलोपो न प्राप्नोति यस्येत्यादौ 'श्यां प्रतिषेध' इति वचनात्। 'सूर्यमत्स्ययोर्ङ्याम्' इति परिगणनाश्रयेणैतदुच्यते। **गार्गीभ्यामिति।** 'गोत्रस्त्रिया' इति णः, 'सङ्घाङ्कलक्षणेषु' इत्यण् वा। अनातीति प्रसज्यप्रतिषेधाऽश्रयेण चोद्यं, पर्युदासाश्रयेण तु सदृशतद्धिताश्रयेण परिहारः। **सर्वेषामिति।** आश्रीयमाणायां प्रकृतावित्यस्मिन्नेव पक्षे आश्रीयमाणे विधिग्रहणादधिकाद् यत्नात्स्वाश्रयनिवृत्यर्थात्तु सिध्यन्तीति भावः। अत एव पक्षान्तरोपन्यासः—**अथवेति। न वा संयोगस्येति।** संयोगसंज्ञायाः समुदायाश्रयत्वादपूर्वविधित्वम्। **उच्यन्त इति।** अत एव लिङ्गादविशेषेण स्थानिवद्भावः। **क्रियत इति।** अदुहद्यर्थमवश्यकर्तव्यमेवेति भावः। **सप्तम इति।** श्रुतिकृतमानन्तर्यमाश्रीयते स्थानिवद्भावकृतं तु व्यवधानं वचनसामर्थ्यादविधातकम्।

उ:—नन्वत्तेर्विहितो जग्धिरादयतेः कथं स्यात्; अत आह—**आदयतेरिति। एकदेशविकृतस्येति;** वृद्धयेत्यादिः। प्राप्तिमेवाह—**न चेति।** पूर्वकल्पे तु णिलोपस्य स्थानिवद्भावादादेशप्रसङ्ग इति भावः। **घात्यादिति।** हन्तेर्ण्यन्तादाशीर्लिङ्। 'हो हन्तेः' इति कुत्वम्। 'हनस्तोऽचिण्णलोः' इति नस्य तः। उपधावृद्धिः। **वधेति;** 'हनो वध लुङि' इत्यनेन। ननु यलोपे कर्तव्ये बहि-

रङ्गस्य यणः असिद्धत्वात् वलिलोपाप्रसङ्गः। एवमग्रेऽपि ; अत आह—**बहिरङ्गेति।** भाष्ये—**अकुर्वीति** ; लङात्मनेपदोत्तमपुरुषैकवचनम्। अकुरु आशाम् इति स्थिते इकारस्य शब्दपरविप्रतिषेधेन यणि सति 'ये च' इत्युलोपप्रसङ्गः। भाष्ये **अलुनीति।** अत्रापि लङ्। अलुना इ आशामिति स्थिते यणि हल्परत्वादीत्त्वप्रसंगः। ननु ह्वादिजनेरात्मनेपदं नास्ति। दैवादिकस्य तु श्लुर्नास्ति। अतः कथम् अजज्ञीतीत्यत आह—**जनेति।** गमहनेत्युपधालोपे अजज्न् इ आशामिति स्थिते यणि नकारस्यात्वप्रसङ्गः। भाष्ये **रायीति ;** सप्तमी। रै इ आशामित्यत्र यणि सत्यात्वप्रसङ्गः। ननु सौर्ये इत्यत्रैव यलोपः कथं नोक्तः ; अत आह—**सौर्य इति।** सौर्य ई इति स्थिते यदि यस्येति लोपः स्यात् तदा यलोपः प्रसज्येत। ङीप्रत्यये परतो यस्येतिलोपाभावात् यलोपाप्रसङ्ग इत्यर्थः। सूर्यस्य ङ्यामेव यलोपनियमान्नात्र प्रसङ्गः ; अत आह—**सूर्येति।** भाष्ये **यलोपः ;** सूर्यतिष्येत्यनेन। **गोत्रस्त्रिया इति।** गोत्रं या स्त्री तदभिधायिनोऽपत्ये णः स्यात्, चात् ठक् कुत्सने गम्य इति 'गोत्रस्त्रियाः कुत्सने ण च' इति सूत्रार्थः। गार्ग्यापत्यं गार्गो जाल्मः अञ् इञ् एतदन्तादण् स्यात् संघादिष्विति 'सङ्घाङ्कलक्षणेष्वञ्यञिञामण्' इति सूत्रार्थः। गार्गः सङ्घः अङ्कः लक्षणं वा। एवं बैदः दाक्षः सङ्घादिः। नन्वनातीति प्रसज्यप्रतिषेधे सामासानुपपत्तिः। पर्युदासे शङ्कानुपपत्तिः ; अत आह—**अनातीति। सदृशेति ;** नञिवयुक्तन्यायेन नञिवयुक्तस्य सादृश्यार्थकत्वादित्यर्थः। **आश्रीयमाणायामिति।** विधावित्यस्य नियमार्थत्वेन स्वाश्रयकार्याप्रसङ्गस्योक्तत्वात् उक्तदोषाणां चादेशाश्रयत्वादप्रसङ्ग इति स्थान्याश्रितकार्ये स्थानिवदिति पक्षः स्थितः इत्यर्थः। ननु विधिग्रहणात् स्वाश्रयनिवृत्तिश्चेत् किमाश्रीयमाणायामित्यनेन कृतं स्यात् ; अत आह—**अत एवेति।** अस्वरसादित्यर्थः। **अत एवेति ;** द्विर्वचनादिग्रहणरूपादित्यर्थः। **अदुहहीति ;** यद्येतावत् प्रयोजनं स्यात् तदा वो नेत्येव ब्रूयात्। तस्मात् लुग्ग्रहणमप्यविशेषेण स्थानिवद्भावस्य लिङ्गमित्येव वक्तव्यमिति केचित्। तच्चिन्त्यम्। वाक्यभेदेन वकारनिषेधापेक्षया लुग्वचनस्यैव लघुत्वात् सप्तमे वक्ष्यमाणमाह—**श्रुतीति।**

## सू.—न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु ॥ १। १। ५७ ॥

**भा :—पदान्तविधिं प्रति न स्थानिवदित्युच्यते। तत्र केयस्वामिति कः प्राप्नोति। नैष दोषः। असंज्ञाऽत्र बाधिका**

**भविष्यति। "तसौ मत्वर्थे" इति। अकारान्तमेतद्भसंज्ञां प्रति। पदसंज्ञां प्रति तु सकारान्तम्। ननु चैवं विज्ञायते—यः संप्रति पदान्त इति। कर्मसाधनस्य विधिशब्दस्योपादाने एतदेवं स्यात्। अयं च विधिशब्दोऽस्त्येव कर्मसाधनः—विधीयत इति विधिरिति। अस्ति च भावसाधनो—विधानं विधिरिति। तत्र भावसाधनस्य विधिशब्दस्योपादाने एष दोषो भवति। इदं च—ब्रह्मबन्ध्वा ब्रह्मबन्ध्वै। धकारस्य जश्त्वं प्राप्नोति।**

प्र:—**न पदान्त। वेतस्वानिति।** भावसाधनविधिशब्दाश्रयेणोच्यते। वेतसशब्दात् 'कुमुदनटवेतसेभ्यो ड्मतुप्' इति ड्मतुपि टिलोपे कृते स्वादौ पूर्वं पदमिति पदसंज्ञायां सकारः पदान्तत्वं प्रतिपद्यत इति पदान्तताया विधीयमानत्वात् स्थानिवत्त्वनिषेधाद्रुत्वप्रसङ्गः। **तसौ मत्वर्थ इति।** तदस्मिन्नस्तीत्यत्रैवार्थे ड्मतुप्, न निर्वृत्तादिषु अनभिधानादित्येतदाश्रित्यैतदुच्यते। **अकारान्तमिति।** भसंज्ञां प्रति स्थानिवत्त्वनिषेधाऽभावात् सकारान्तत्वाभावान्नास्ति भसंज्ञा। पदान्तत्वे तु विधीयमाने स्थानिवत्त्वनिषेधात् सकारान्तस्य पदत्वाद्रुत्वप्रसङ्गः। **ननु चेति।** स्थानिवत्त्वनिषेधाद्विना यः सिद्धः पदान्तः, तस्य विधौ स्थानिवत्त्वनिषेधः। यथा कौ स्तः कानि सन्तीति। इह तु सकारः स्थानिवत्त्वनिषेधाद्विना पदान्तत्वेनासिद्ध इति भवत्येव स्थानिवद्भाव इत्यपदान्तत्वात्सकारस्य रुत्वाऽभावः। **ब्रह्मबन्ध्वेति।** ब्रह्मबन्धुशब्दादूङ् ऊङन्तेर्ङेरेकादेश आदिवद्भावादूङ्ग्रहणेन गृह्यत इति तस्मिन् स्वादिष्विति पदसंज्ञायां धकारस्य पदान्तता विधेयेति स्थानिवत्त्वनिषेधाज्जश्त्वं स्यात्। भसंज्ञां तु प्रत्येकादेशस्य स्थानिवत्त्वादूकारान्तमेतदिति भिन्नावधिकत्वाद्भपदसंज्ञयोर्नास्ति बाध्यबाधकभावः। यणादेशोच्चारणं चातन्त्रम्। एकादेशस्यैवोदाहरणत्वात्।

उ:—ननु पदसंज्ञायाः पदान्तविधित्वाभावेन तस्यां कर्तव्यायामाकारलोपस्य स्थानिवद्भावात् सावधेर्नास्ति पदसंज्ञेति सकारस्य पदान्तत्वाभावात् कथं रुत्वाशङ्का स्यात्; अत आह—**भावेति।** ननु भावसाधनपक्षे पदान्तस्य विधाने स्थानिवत्त्वनिषेधः। न च पदसंज्ञाविधानं पदान्तस्य विधानमतः संज्ञाविधौ स्थानिवत्त्वनिषेधाभावाद्रुत्वाप्रासिरिताद्वस्थ्यमित्याशङ्क्य पदान्तस्य विधानमुपपादयति—**वेतसेति।** कुमुदादिभ्यो ड्मतुप् स्यच्चातुरर्थिक इति 'कुमुदनटवेतसेभ्यो ड्मतुप्' इति सूत्रार्थः। **पदान्तताया इति।** यद्यपि सकारो न विधेयस्तथापि पदान्तत्वविशिष्टत्वेन तात्पर्यतो

विधीयते स्वादिष्विति संज्ञाविधिना पदकार्यार्थित्वात् संज्ञाविधानस्य। पदान्तशब्दस्य भावप्रधानत्वमभिप्रेत्य पदान्तता इत्युक्तं इति केचित्। ननु यदि मतुबर्थ एव ड्मुतप् स्यात्तदा निर्वृत्तादिषु त्रिषु न भत्वमिति रुत्वप्रसङ्गः; अत आह—**तदस्मिन्निति;** अत्र सप्तम्यर्थो मतुबर्थ इति भावः। **अनभिधानादिति**। अत एव वेतस्वान् बहुवेतस इति मत्वर्थस्यैव कोशपाठः। पदसंज्ञामिति भाष्यं व्याचष्टे—**पदान्तत्व इति**। पदसंज्ञाशब्दः पदान्तत्वपर इत्यनेन व्याख्यातम्। किमपेक्षया संप्रतीत्युच्यते; अत आह—**स्थानिवत्त्वेति। तस्य विधौ;** तस्य कार्यान्तरविधौ। **कौ स्त इति;** अत्र स्थानिवत्त्वनिषेधाद्विना औकारः पदान्तः। तस्यावादेशविधौ स्थानिवत्त्वनिषेधः। भाष्ये **तत्र भावसाधनस्येति;** द्वन्द्वान्ते श्रूयमाणविधिशब्देन षष्ठीसमासाय भावसाधनो विधिशब्दोऽङ्गीकार्यः। कर्मसाधनत्वे तु द्विर्वचनादिभिः सामानाधिकरण्येऽपि पदान्तेन वैयधिकरण्यात् समानाधिकरणसमासो न स्यात्। पदान्तेनापि सामानाधिकरण्याङ्गीकारे वेतस्वानित्यत्रापि अतिप्रसङ्गानुद्धारात् कर्मसाधनत्वाङ्गीकारो व्यर्थः। अतो भावसाधन एवेति भावः। धकारस्य जश्त्वमुपपादयति—**ब्रह्मेति। ऊङ्;** 'ऊङुतः' इत्यनेन। नन्वादिवद्भावेन ऊङि परतः धान्तस्य भसंज्ञया पदसंज्ञाबाधात् कथं जश्त्वम्; अत आह—**भसंज्ञामिति।** नन्वेवं ब्रह्मबन्धूरित्यत्रापि जश्त्वसंभवात् यण्सहितोदाहरणं किमर्थम्; अत आह—**यणादेशेति।**

**भाः—अस्ति पुनः किंचिद्भावसाधनस्य विधिशब्दस्योपादाने सतीष्टं संगृहीतम्, आहोस्विद्दोषान्तमेवेति?। अस्तीत्याह। इह—कानि सन्ति, यानि सन्ति। कौ स्तः, यौ स्त इति। योऽसौ पदान्तो यकारो वकारो वा श्रूयते, स न श्रूयेत। षडिकश्चापि सिद्धो भवति। वाचिकस्तु न सिध्यति। अस्तु तर्हि कर्मसाधनः। यदि कर्मसाधनः षडिको न सिध्यति। अस्तु तर्हि भावसाधनः। वाचिको न सिध्यति। वाचिकषडिकौ न संवदेते। कर्तव्योऽत्र यत्नः। कथं ब्रह्मबन्ध्वा ब्रह्मबन्ध्वै? उभयत आश्रयणे नान्तादिवदिति। कथं वेतस्वान्। नैवं विज्ञायते पदस्यान्तः पदान्तः, पदान्तस्य विधिः पदान्तविधिः पदान्तविधिं प्रतीति। कथं तर्हि? पदे अन्तः पदान्तः, पदान्तस्य**

**विधिः पदान्तविधिः पदान्तविधिं प्रतीति। अथ वा यथैवान्यान्यपि पदकार्याण्युपप्लवन्ते रुत्वं जश्त्वं च। एवमिदमपि पदकार्यमुपप्लोष्यते। किम्? भसंज्ञा नाम।**

प्र:—**कानि सन्तीति।** पक्षद्वयसाधारणमिदं प्रयोजनम्। भावसाधनपक्षेऽपि सिध्यत्येवेति तूक्तन्यस्तम्। **यकार इति।** यकारवकारौ विधीयमानावेव पदान्तौ भवत इत्यस्ति पदान्ततया विधानम्। इदानीमसाधारणं प्रयोजनमाह—**षडिक इति।** षडङ्गुलिशब्दाद् 'बह्वचो मनुष्यनाम्नष्ठज्वेति' ठचि कृते ठाजादावूर्ध्वमिति ङ्गुलिशब्दस्य लोपे यस्येति लोपे षषित्ययं शब्दोऽन्तर्वर्तिन्या विभक्त्या सिद्धः पदत्वेनेति पदान्ततायाा अविधानान्नास्ति स्थानिवत्त्वनिषेध इत्यकारलोपस्य स्थानिवद्भावादकारान्तस्य भसंज्ञा। पदसंज्ञा त्वन्तर्वर्तिविभक्त्याश्रयेण षकारान्तस्येति सिद्धं जश्त्वम्। कर्मसाधने तु षषः षकारः पदान्तत्वेन सिद्ध इति स्थानिवत्त्वनिषेधात् षकारान्तस्यैव भसंज्ञेति तुल्यावधिकया भसंज्ञया पदसंज्ञाया एकसंज्ञाधिकाराद् बाधनाज्जश्त्वासिद्धिः। **वाचिकस्त्विति।** चकारस्य पदान्तत्वात्कुत्वप्रसङ्गात्। कथं पुनः षडिकस्य सिद्धिः। यावतोक्तं योऽसौ पदान्तो यकार इति तद्वदिहापि डकारस्य पदान्तस्य विधेयत्वात् पदान्ततायाा विधिरिति स्थानिवत्त्वनिषेधप्रसङ्गः। नैष दोषः। पूर्वमेव जश्त्वेन डकारस्य निष्पन्नत्वान्नेदानीं विधिरिति भावसाधने षडिकसिद्धिः। कर्मसाधने तु डकारस्य पदान्तत्वेन प्रसिद्धस्य भत्वात्पदत्वनिवृत्तौ षकाररूपापत्तिर्विधेयेति स्थानिवत्त्वनिषेधात् तुल्यावधिकया भसंज्ञया पदसंज्ञाया बाधनाज्जश्त्वनिवृत्तौ षडिकासिद्धिः। न च भावसाधने षकारापत्तिर्भाव्येति शक्यते वक्तुं तस्या अपदान्तरूपत्वात्। पदान्तत्वे हि जश्त्वं स्यात्। न च जश्त्वविधिनिमित्तं स्थानिवत्त्वनिषेधः। यत्र स्थानिवत्त्वनिषेधाज्जश्त्वं विधीयते भग्विर्बब्धमिति सोऽस्य विषयः। इह तु पूर्वमेव जश्त्वं कृतम्, स्थानिस्त्वनिषेधात्तु तन्निवृत्तिराशङ्क्यते। पूर्वत्रासिद्धे न स्थानिवदित्यस्याप्ययमविषयः। न ह्यत्र पूर्वत्रासिद्धीयं किंचित्कार्यं विधेयम्। **कर्तव्योऽत्र यत्न इति।** 'एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्यः' इति वाचिकः सिद्धः। षडिकस्तु 'षषष्ठाजादिवचनात्सिद्धम्' इत्युत्तरपदलोपाभावे ठाजादाविति लोपे यस्येतिलोपे च सिद्धः। **उभयत इति।** यस्मात् स्वादिविधिस्तत्स्वादौ पदमिति पूर्वपरोभयाश्रयणम्। **पदेऽन्त इति।** न च ड्मतुप्प्रत्ययः पदम्। एवं षडिके इकप्रत्ययो न पदमिति नास्ति स्थानिवत्त्वनिषेधः। **यथैवेति।** 'यचि भम्' इत्यत्र 'तसौ मत्वर्थे' इत्यत्र च पदमिति वर्तते। तेन

पदं सद्धं भवतीति लब्धे पदत्वे तन्निबन्धनरुत्वप्रतिबन्धार्था भसंज्ञा तद्विषयत्वात् पदान्तविधिरिति स्थानिवत्त्वनिषेध इति भत्वाद्रुत्वाभावः सिद्धः।

उ :—ननु कौ स्त इत्यादेः' कर्मसाधनत्वेऽपि सिद्धत्वात् कथं भावसाधनत्वस्यासाधारणमुदाहरणम्; अत आह—**पक्षद्वयेति।** भावसाधनत्वपक्षे सिद्धिमुपपादयति—**यकारेति।** यणावोर्विधाने तयोरपि विधानादित्यर्थः। **पदान्ताविति।** एकदेशविकृतस्यानन्यत्वेन पदसंज्ञाप्रवृत्तेरित्यर्थः। **पदान्ततायाः इति।** 'सुप्तिङन्तं पदम्' इति विधीयमाना पदसंज्ञा अवयवान्तस्य भवतीति पदान्ततायाः विधानम्। वस्तुतो यकारविधिरेव पदान्तविधानम्। अत एवोक्तं **विधीयमानावेवेति। षडिति;** षडङ्गुलिरनुकम्पित इत्यर्थे ठच्। बह्वचो मनुष्यनाम्नोऽनुकम्पायां ठज् वा स्यात् पक्षे क इति सूत्रार्थः। अस्मिन् प्रकरणे ठज् अजादिश्च यः प्रत्ययस्तस्मिन् परतः द्वितीयादचः परस्य लोपः। ऊर्ध्वग्रहणं सर्वलोपार्थमिति 'ठाजादौ ऊर्ध्वं द्वितीयादचः' इति सूत्रार्थः। **यस्येति लोपे;** षड इति डकारस्याकारस्य। **अन्तर्वर्तिन्येति;** सुबन्तस्याङ्गुलिशब्देन समासादित्यर्थः। **सिद्धः;** जश्त्वे कर्तव्य इत्यादिः। नास्ति स्थानिवत्वनिषेध इत्यकारलोपस्येत्यन्वयः। तत्र यद्यपि भसंज्ञाविधौ स्थानिवत्वनिषेधो नास्तीति वक्तव्ये पदान्ततायाः अविधानादिति हेतुरयुक्तस्तथापि पदत्वे भत्वे चोभयत्र स्थानिवत्वनिषेधस्य प्रसङ्ग एव नास्तीत्यतिशयार्थमुक्तम्। भसंज्ञया पदसंज्ञाबाधशङ्कां निराह—**अकारेति।** डकारोपर्यकारस्य यस्येति लोपस्येत्यर्थः। **अन्तर्वर्तीति;** प्रथमाबहुवचनान्तः षट्च्छन्दः समस्यत इति अन्तर्वर्तिविभक्त्या भसंज्ञा नास्तीति ठजाश्रया वाच्या। तत्र च स्थानिवद्भावादकारान्तस्य सा, न षान्तस्येति भावसाधनत्वपक्षे जश्त्वं सिद्धमित्यर्थः। असाधारण्यार्थं कर्मसाधनत्वपक्षे जश्त्वसिद्धिमाह—**कर्मेति। पदान्तत्वेनेति;** अन्तर्वर्तिविभक्त्येत्यर्थः। **स्थानिवत्वनिषेधादिति।** षान्तावधेः पदस्य भसंज्ञाविधानादित्यर्थः। यद्यप्यन्तर्वर्तिविभक्तिनिबन्धना पदसंज्ञा, भसंज्ञा तु प्रत्ययनिबन्धनेति निमित्तभेदोऽस्ति, तथाप्येकविषयत्वमात्रं बाधप्रयोजकमित्याशयेनाह—**एकेति।** वागाशीर्दत्तोऽनुकम्पित इत्यर्थे पूर्ववत् ठचि शीरित्यादेर्लोपे आकारस्य यस्येति लोपे वाचिकः। तत्र कुत्वप्राप्तिमाह—**चकारस्येति।** चकारस्य जश्त्ववदित्यर्थः। भावसाधनत्वपक्षेऽपि षडिकासिद्धिं शङ्कते—**कथमिति। स्थानिवत्वेति;** तथा च तुल्यावधिकया भसंज्ञया पदत्वबाधात् जश्त्वाभावसिद्धिरित्यर्थः। **पूर्वमिति;** अन्तवर्तविभक्त्या प्रत्ययोत्पत्तेः

पूर्वमेवेत्यर्थः। **इदानीम्**; अकारलोपानन्तरम्। **कर्मसाधन इति।** तस्मिन् पक्षे पदान्तत्वेन सिद्धस्य कार्यान्तरविधौ स्थानिवत्त्वनिषेधात् जश्त्वसिद्धिरित्यर्थः। तदुपपादयति—**इकारस्येति। पदनिवृत्तौ;** पदत्वनिवृत्तौ। **विधेया;** तात्पर्यत इत्यादिः। ननु भावसाधनत्वेऽपि षकारापत्तेः पदान्तत्वात् स्थानिवत्त्वनिषेधः स्यात् इत्यत आह—**न चेति। भाव्या;** पदान्तत्वेनेत्यादिः। **तस्य;** षत्वरूपस्य। तत्र हेतुः—**पदान्तत्व इति।** नन्वेवमपि षडिको भावसाधनेऽपि न सिध्यति। पदान्तताविधिनिमित्तस्थानिवत्त्वनिषेधाभावेऽपि जश्विधिनिमित्तनिषेधात् तुल्यावधिकभसंज्ञया पदत्वबाधात्; अत आह—**न चेति।** तन्निषेधस्य विषयमाह—**यत्रेति। सग्धिरिति;** अदेः क्तिनि ‘बहुलं छन्दसि’ इति घस्लादेशे ‘घसिभसोर्हलि च’ इति उपधालोपे ‘झलो झलि’ इति सलोपे ‘झषस्तथोः’ इति धत्वे उपधालोपस्य स्थानिवत्वात् घस्य जश्त्वम्। समाना च सा ग्धिश्च सग्धिः। ‘समानस्य छन्दसि’ इति सभावः। **बब्धामिति;** भसेर्लोटि, तामि, ह्वादित्वाच्छपः श्लुः, द्विर्भावः, अभ्यासकार्यं, पूर्ववदुपधालोपादि। ननु तथापि ‘पूर्वत्रासिद्धे न स्थानिवत्’ इति स्थानिवत्वनिषेधः किं न स्यात्; अत आह—**पूर्वत्रेति। न हीति;** षत्वापत्तेः पूर्वत्रासिद्धीयत्वाभावादित्यर्थः। को यत्न इत्याशङ्क्य पञ्चमे वक्ष्यमाणमाह—**एकेति।** तथा च हलचोरादेशस्य स्थानिवत्त्वाभावादेकविषये भसंज्ञया पदसंज्ञानिवृत्तावन्तर्वर्तिविभक्त्यधीनजश्त्वस्यापि निवृत्तेः वाचिकस्सिद्धः इत्यर्थः। षडिक इति लक्ष्यानुरोधेनात्र ठाजादिलोपस्यैवाङ्गीकारो नोत्तरपदलोपस्येति भावः। **यस्येतिलोप इति;** तथा भसंज्ञाविधौ तस्य स्थानिवत्त्वेन भिन्नावधिकया तया पदसंज्ञाया अबाधात् जश्त्वसिद्धिरित्यर्थः। ‘स्वादिष्वसर्वनामस्थाने’ इत्यत्र यस्मादित्यनुवृत्त्या पदसंज्ञाया उभयाश्रयत्वमुपपादयति—**यस्मादिति।** पारिभाषिकं पदमत्र गृह्यते न यौगिकमित्यभिप्रेत्याह—**न चेति।** अयं परिहारः साधारण इत्याशयेनाह—**एवमिति।** भावसाधनविधिशब्दस्य संबन्धसामान्यषष्ठीसमासेन पदान्ते विधेये पदान्तस्यान्यस्मिन् विधेये च स्थानिवत्त्वनिषेधो लभ्यते इत्याशयेनाह—**अथवेति** भाष्यम्। तत्र भसंज्ञायाः पदकार्यत्वमुपपादयति—**यचीति।** ननु जश्त्वादिविधिसमयेऽपि पदसंज्ञास्तीति पदसंक्रान्तस्य विधीयमानं जश्त्वादिर्भवतु पदान्तविधिः, भसंज्ञाविधिसमये पदत्वाभावात् सा कथं पदान्तविधिः अत आह—**तद्विषयत्वादिति।** भसंज्ञातः पूर्वं पदत्वेनैव तस्यास्तत्कार्यत्वं नियतपूर्ववृत्ति। तस्यैव हेतुत्वप्रयोजकत्वादिति भावः। अस्मिन् पक्षे षडिकासिद्धिप्रसङ्गात् प्रौढयेदं समाधानमित्याहुः।

**भा :—वरे यलोपविधिं प्रति न स्थानिवद्भवतीत्युच्यते। तत्र ते "अप्सु यायवरः प्रवपेत पिण्डान्"। अवर्णलोपविधिं प्रति स्थानिवत्स्यात्। नैष दोषः। नैवं विज्ञायते—वरे यलोपविधिं प्रति न स्थानिवदिति। कथं तर्हि? वरे अयलोपविधिं प्रतीति। किमिदमयलोपविधिं प्रतीति? अवर्णलोपविधिं प्रति यलोपविधिं च प्रतीति। अथवा योगविभागः करिष्यते—"वरे लुप्तं न स्थानिवत्"। ततो 'यलोपविधिं प्रति न स्थानिवद्' इति। यलोपे किमुदाहरणम्? कण्डूयतेरप्रत्ययः कण्डूरिति। नैतदस्ति। क्वौ लुप्तं न स्थानिवत्। इदं तर्हि प्रयोजनम्—सौरी बलाका। नैतदस्ति। उपधात्वविधिं प्रति न स्थानिवत्। इदं तर्हि प्रयोजनम्—आदित्यः। नैतदस्ति। पूर्वत्रासिद्धे न स्थानिवत्। इदं तर्हि—कण्डूतिर्वल्गूतिः। नैतदस्ति प्रयोजनम्। कण्डूया वल्गूया इति भवितव्यम्। इदं तर्हि—कण्डूयतेः क्तिच्। ब्राह्मणकण्डूतिः, क्षत्रियकण्डूतिः।**

प्र :—**कण्डूयतेरिति**। क्यजन्तात् क्विप्। यगन्तात्तु क्विब्न भवति। उक्तं हि भाष्ये 'नैतेभ्यः क्विब् दृश्यत' इति। **सौरीति**। एकोऽण्यकारलोपः, द्वितीय ईकारे, तयोः स्थानिवत्त्वाद्यकारस्योपधात्वं न स्यात्। स्थानिवत्त्वनिषेधे द्वितीयलोपस्य समानाश्रयत्वादसिद्धत्वादणि लोपस्य व्याश्रयत्वात्सिद्धत्वाद् यकारस्य उपधात्वाल्लोपः सिध्यति। **आदित्य इति**। अदितेः 'सास्य देवता' इत्यत्रार्थे ण्यस्ततो भवादावर्थे द्वितीयो ण्यः। 'हलो यमां यमि' इति लोप इष्यते। स च स्थानिवत्त्वनिषेधात् सिध्यति। **ब्राह्मणकण्डूतिरिति**। षष्ठीसमासः। कर्मधारये कण्डूतिशब्दस्य पूर्वनिपातप्रसङ्गः।

उ :—भाष्ये **अवर्णलोपविधिं प्रतीति**। वलि लोपं प्रति अतो लोपस्य स्थानिवत्वनिषेधेऽपि अवर्णलोपे स्थानिवद्भावानिषेधाद् 'आतो लोप इटि च' इति द्वितीययकारस्थाकारस्य लोपप्रसङ्ग इत्यर्थः। 'वरे लुप्तं न स्थानिवत्' इत्यनेनैव यायावर इत्यत्र यकारलोपस्यापि सिद्धत्वात् यलोपस्य किमुदाहरणमिति पृच्छति—भाष्ये **यलोप इति**। **क्यजन्तादिति**। कण्डूमात्मनः इच्छतीत्यर्थे क्यच्; **उक्तं**; 'कण्ड्वादिभ्यो यक्' इत्यत्र। सूर्यो देवता अस्यास्सौरी; अत्र स्थानिवत्त्वानिषेधे यलोपो न स्यादित्याह—**एक इति**। भाष्ये **उपधात्वेति**; क्लिडुपाधात्वेत्यनेन। ननु स्थानिवत्वनिषेधे-

ऽपि 'असिद्धवदत्राभात' इति लोपद्वयस्यापि यलोपं प्रत्यसिद्धत्वादुपधात्वं न स्यात्; अत आह-**स्थानिवत्त्वनिषेध इति। समानेति;** ईत्येव यलोपविधानात्। **ततः;** आदित्यशब्दात्। ण्यद्वयमपि दित्यदित्यादित्येत्यनेन। भाष्ये **कण्डूयेति;** अप्रत्ययेन क्तिनो बाधात्। भाष्ये **कूतिच्;** 'क्तिच् क्तौ च संज्ञायाम्' इत्यनेन। **कण्डूतिशब्दस्येति;** विशेषणत्वादित्यर्थः।

**॥ वा ॥ प्रतिषेधे स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवत् ॥**

**भा :—प्रतिषेधे स्वरदीर्घयलोपविधिषु लोपाजादेशो न स्थानिवदिति वक्तव्यम्। स्वर—आकर्षिकः। चिकीर्षकः। जिहीर्षकः। यो ह्यन्य आदेशः, स्थानिवदेवासौ भवति पञ्चारत्न्यो दशारत्न्यः॥ स्वर॥ दीर्घ—प्रतिदीव्ना प्रतिदीव्ने। यो ह्यन्य-आदेशः, स्थानिवदेवासौ भवति—कियोः गियोः॥ दीर्घ॥ यलोप—ब्राह्मणकण्डूतिः क्षत्रियकण्डूतिः। यो ह्यन्य आदेशः, स्थानिवदेवासौ भवति—वाय्वोरध्वर्य्वोरिति॥ यलोप॥ तत्तर्हि वक्तव्यम्। न वक्तव्यम्। इह हि लोपोऽपि प्रकृतः, आदेशोऽपि। विधिग्रहणमपि प्रकृतमनुवर्तते। दीर्घादयोऽपि निर्दिश्यन्ते। केवल तत्राभिसम्बन्धमात्रं कर्तव्यम्—स्वरदीर्घयलोपविधिषु लोपाजादेशो न स्थानिवदिति। आनुपूर्व्येण सन्निविष्टानां यथेष्ट-मभिसम्बन्धः शक्यते कर्तुम्। न चैतान्यानुपूर्व्येण सन्निविष्टानि। अनानुपूर्व्येणापि सन्निविष्टानां यथेष्टमभिसम्बन्धो भवति। तद्यथा—अनड्वाहमुदहारि या त्वं हरसि शिरसा कुम्भं भगिनि साचीनमभिधावन्तमद्राक्षीरिति। तस्य यथेष्टमभिसम्बन्धो भवति—उदहारि भगिनि या त्वं कुम्भं हरसि शिरसा अनड्वाहं साचीनमभिधावन्तमद्राक्षीरिति।**

**॥ वा ॥ किलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानम् ॥**

**भा :—किलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानं कर्तव्यम्।**

प्र :—**आकर्षिक इति।** चरत्यर्थे 'आकर्षात् ष्ठल्' इति ष्ठल्। यस्येति लोपस्य स्थानिवत्त्वात् ककाराकारस्य [1]स्वरः न स्यात्। कारक इत्यादौ च 'स्वरविधौ

(१) मु. पु. उदात्तत्वम्

व्यञ्जनमविद्यमानवद्' इति व्यञ्जनस्याविद्यमानत्वादनन्तरस्य स्वरभाजः संभवादन्यव्यवधानेऽत्र[1] न स्यात्। यत्र तु व्यवहितेऽपि पूर्वशब्दो वर्तते तत्राप्यवध्यवधिमतोरानन्तर्यसंभवादन्तरालस्थान् सतोऽप्यर्थाननादृत्य व्यवहारः। यत्र त्वानन्तर्यसम्भवस्तत्र व्यवहितं नैवाश्रीयते। ष्ठलो लित्करणाद् व्यवधानेऽपि भविष्यतीति चेत् आकारस्यापि पक्षे स्यादिति स्थानिवत्त्वनिषेध [2]एष्टव्यः। **प्रतिदीव्नेति।** रेफवकारान्तस्य भस्य 'न भकुर्छुराम्' इति दीर्घत्वनिषेध इत्यत्र न प्रवर्तते। **इह हि लोपोऽपीति। प्रकृतः।** प्रस्तुतः। **आनुपूर्व्येणेति।** तत्र पदार्थानां समन्वयावगमात्। इह तु लोपो यशब्देन संबद्धः। सकृच्च श्रुतो, द्विधा चास्योपयोग इष्यते। स्वरदीर्घयलोपाश्च विक्षिप्ताः कथं समुच्चीयन्तामिति भावः। **अनानुपूर्व्येणापीति।** लोपशब्द आवर्तते। तत्र लोपाजादेश इति ज्ञायते। तत्र द्विर्वचनविधौ लोपाजादेशस्यासंभवात्सवर्णादिविधौ तु तस्यैव सम्भवान्न तत्रादेशस्य लोपो विशेषणम्। पदान्ते तु यद्यपि सम्भवव्यभिचारौ स्तस्तानि सन्ति कानि सन्तीति तथापि न पदान्तेति योगविभागात् तद्विधौ लोपो न विशेषणमिति पारिशेष्यात् स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवदिति विज्ञायते। स्मृतिशास्त्रत्वाच्चास्य एतावन्तोऽर्थाः संनिहिता इत्येतावत्प्रतीयते। ग्रहणकवाक्यात्तु लक्ष्यसंस्कारकं प्रक्रियावाक्यं उपप्लवत इति सिद्धमिष्टम्। **अनड्वाहमिति;** पाठक्रमादार्थक्रमो बलीयानिति यथेष्टमत्राभिसम्बन्धः।

उ :—आकर्षिक इति मत्वर्थीयठनन्तत्वे अस्योदाहरणत्वं न भवति; अत आह—**चरत्यर्थ इति।** चिकीर्षकः जिहीर्षक इत्यत्र ण्वुल्। अत्र 'लिति' इत्यनेन लिति प्रत्यये प्रत्ययात् पूर्वमुदात्तं स्यादित्युदात्तत्वं स्थानिवत्त्वनिषेधं विना न सिध्यतीत्याह—**यस्येति।** अतो लोपस्येत्यपि बोध्यम्। **ककारेति।** हकारककारयोरपीति ज्ञेयम्। **स्वरः** उदात्तत्वम्। नन्वव्यवहितपूर्वासंभवात् व्यवहितेऽपि स्यात्; अत आह—**कारक इति।** तत्रापि रेफेण व्यवधानमाशङ्कयाह—**स्वरविधाविति। अत्र;** आकर्षिक इत्यादौ। ननु लितीत्यत्र पूर्वमित्यनुवर्तनेन तस्मिन्निति परिभाषानुपस्थानात् तदङ्गनिर्दिष्टग्रहणस्याप्यनुपपस्थितेर्व्यवहितेऽपि पूर्वशब्दप्रयोगात् स्वरः सेत्स्यति; अत आह—**यत्र त्विति। नैवेति;** मुख्यसंभवे गौणाग्रहणादित्यर्थः। स्थानिवद्भावेऽपि स्वरसिद्धिं शङ्कते—**ष्ठल इति। आकारस्य;** आकर्षिक इत्याकारस्य। **पक्ष इति।** एकस्मिन् पदे सकृत् प्रवृत्तस्य लितीत्यस्य वर्णद्वये युगपद्व्यापारात् पर्यायेण द्वयोः स्वरः स्यादित्यर्थः। **एष्टव्य इति।** तथा च

(१) मु. पु. अत्र इति नास्ति (२) मु. पु. एष्टव्य इति नास्ति

स्वरविधौ व्यञ्जनस्याविद्यमानतया अनन्तरपूर्वासंभवात् व्यवहिताकारस्य न स्वर इत्यर्थः **पश्चारत्न्य इति।** यणः स्थानिवत्वादिगन्ते परतः पूर्वपदप्रकृतिस्वरः सिध्यतीत्यर्थः। **न प्रवर्तेत इति;** तथा च 'हलि च' इति दीर्घः स्यादेवेत्यर्थः। भाष्ये—**गिर्योरिति।** यणः स्थानिवत्वात् 'हलि च' इति दीर्घो न भवतीत्यर्थः। भाष्ये—**वाय्वोरिति।** यणः स्थानिवत्वात् वलिलोपो न भवतीति। सूत्रान्तरे विद्यमानत्वरूपं प्रकृतत्वं न संभवति; अत आह—**प्रस्तुत इति।** आनुपूर्व्येणेति शङ्कातात्पर्यमाह—**तत्रेति।** न चैतानीति भाष्यमुपलक्षणमित्याह—**इह त्विति।** **द्विधेति;** प्रथमान्तत्वेन सप्तम्यन्तत्वेन चेत्यर्थः। **विक्षिप्ताः;** आनन्तर्येणासंनिविष्टाः। इह त्वित्युक्तदोषान् परिहरति—**लोपाजादेश इति।** आवृत्तस्य प्रथमान्ततया आदेशविशेषणत्वमित्यर्थः। स्वरादीनां समुच्चयं पारशेषात् साधयति—**तत्रेति।** संभवव्यभिचाराभ्यां विशेषणत्वं न त्वेकरूपवैकल्येऽपीत्यन्यत्राप्रसक्तिमाह—**द्विर्वचनेति।** कानि सन्ति इत्यत्र संभवः। कानि यन्ति इत्यत्र व्यभिचारः। तथा च लोपस्य विशेषणत्वसंभवात् 'इणो यण्' इति यणः स्थानिवत्वात् [१]कानि यन्तीत्यत्र यण् स्यादित्यर्थः। **योगेति।** अत एव भाष्ये विधिग्रहणमनुवर्तते इत्युक्तम्। पदान्तेति च लुप्तषष्ठीकम्। तथा च पदान्तविधौ न स्थानिवदिति योगे लोपो न विशेषणमित्यर्थः। योगविभागादौ मानमाह—**स्मृतीति।** प्रयोगमूलत्वात् लक्ष्यानुरोधेनैतावन्तोऽर्था विवक्षिता इत्यर्थः। **ग्रहणकेति।** अनेकार्थसूचकसूत्रादित्यर्थः। भाष्ये—**उदहारि;** उदकाहर्त्रीति भगिनीविशेषणम्। **साचीनम्;** तिर्यग्गच्छन्तम्। अत्र व्युत्क्रमेणान्वये हेतुमाह—**पाठेति।** लुकि न स्थानिवत्। उपधात्वाश्रितकार्ये न स्थानिवत्। चङ्परहस्वत्वे न स्थानिवत् इति वार्तिकार्थः।

**भा:—क्वौ किमुदाहरणम्? कण्डूयतेरप्रत्ययः कण्डूरिति। नैतदस्ति। यलोपविधिं प्रति न स्थानिवत्। इदं तर्हि—पिपठिषतेरप्रत्ययः। पिपठीः। नैतदस्ति। दीर्घविधिं प्रति न स्थानिवत्। इदं तर्हि—लावयतेर्लौः। पावयतेः पौः। नैतदस्ति। अकृत्वा वृद्ध्यावादेशौ णिलोपः। प्रत्ययलक्षणेन वृद्धिर्भविष्यति। इदं तर्हि—लवमाचष्टे लवयति। लवयतेरप्रत्यये लौः पौः। स्थानिवद्भावाण्णेरूण् न प्राप्नोति। क्वौ लुप्तं न**

(१) अ. तानि सन्ति

**स्थानिवदिति भवति। एवमपि न सिध्यति। कथम्? क्वौ णिलोपो णावकारलोपस्तस्य स्थानिवद्भावादूण् न प्राप्नोति। नैष दोषः। नैवं विज्ञायते—क्वौ लुप्तं न स्थानिवदिति। कथं तर्हि? क्वौ विधिं प्रति न स्थानिवदिति। पुंवद्भावेनाप्येतत्सिद्धम्। इदं तर्हि आमलकम्। नैतदस्ति।**

प्रः—**लौरिति**; णिलोपस्य स्थानिवत्त्वादूण् न स्यात्। **अकृत्वेति**। 'ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषिद्धम्' इति णिलोपस्ततो वृद्धिः। अवादेशस्तु वर्णाश्रयत्वात् प्रत्ययलक्षणेन न भवति यथा गोहितमित्यवादेशः। एतच्चान्तरङ्गत्वमनाश्रित्योक्तम्। तत्र त्वाश्रितेऽन्तरङ्गबहिरङ्गयोर्विप्रतिषेधाभावः। **लवपाचष्ट इति**। क्वौ विधिं प्रति न स्थानिवदित्यस्यार्थस्य प्रदर्शनायेदमुदाहृतम्। इदं तु क्वौ लुप्तस्योदाहरणं देवयतेर्द्यूरिति।

उ:—पिपठिषतेः क्विपि अतो लोपस्य स्थानिवत्वे रेफान्तस्यापदत्वात् दीर्घो न स्यादिति **पिपठिषतेरिति** भाष्यार्थः। **ऊण्ण स्यादिति।** क्वौ परतः वकारान्तस्यानङ्गत्वादित्यर्थः। लावीत्यत्र णिलोपे वकारस्योठि 'एत्येधत्यूठ्सु' इति वृद्ध्या लौरिति। णिलोपस्य पूर्वत्वे वार्तिकमाह—**ण्यल्लोपाविति। गोहितमिति**; गवे हितमिति सुपो धात्विति ङेर्लोपे प्रत्ययलक्षणेनावादेशो न भवतीत्यर्थः। **एतच्च**; पूर्वविप्रतिषेधत्वम्। **अन्तरङ्गत्वम्**; वृद्धेरित्यादिः। यणाश्रिता वृद्धिरन्तरङ्गा क्विबाश्रितो णिलोपो बहिरङ्गः। **तत्र**; अन्तरङ्गत्वे। **विप्रतिषेधेति**; तुल्यबलत्वाभावात्। तथा च तस्मिन्नाश्रिते लौः इत्यप्युदाहरणमिति भावः। लवशब्दाण्णिच्, क्विप्। अतो लोपे णिलोपे वस्योठि वृद्धिः लौः। **प्रदर्शनाय**; क्वौ विधिं प्रति न स्थानिवत् इत्यस्यावश्यकत्वाय। क्वौ लुप्तस्य स्वयमुदाहरणमाह—**द्यूरिति**। दिवेर्णिच्, उपधागुणः, क्विप्, णिलोपः, ऊठि अयादेशः। अत्र णिलोपस्य स्थानिवत्वनिषेधेनैव रूपसिद्धेः क्वौ लुप्तोदाहरणत्वम्।

**भाः—लुकि किमुदाहरणम्? बिम्बं बदरम्। नैतदस्ति पुंवद्भावेनाप्येतत् सिद्धम्। इदं तर्हि—आमलकम्। नैतदस्ति। वक्ष्यत्येतत् फले लुग्वचनानर्थक्यं प्रकृत्यन्तरत्वाद् इति। इदं तर्हि—पञ्चभिः पट्वीभिः क्रीतः पञ्चपटुर्दशपटुरिति। ननु चैतदपि पुंवद्भावेनैव सिद्धम्। कथं पुंवद्भावः? 'भस्याढे तद्धिते'**

**पुंवद्भवतीति। भस्येत्युच्यते। यजादौ च भसंज्ञा भवति। न चात्र यजादिं पश्यामः। प्रत्ययलक्षणेन यजादिः। वर्णाश्रये नास्ति प्रत्ययलक्षणम्। एवं तर्हि "ठक्छसोश्च" इत्येवं भविष्यति। ठक्छसोश्चेत्युच्यते। न चात्र ठक्छसौ पश्यामः। प्रत्ययलक्षणेन। "न लुमता तस्मिन्" इति प्रत्ययलक्षणस्य प्रतिषेधः। न खल्वप्यवश्यं ठगेव क्रीतप्रत्ययः। क्रीताद्यर्था एव वा तद्धिताः। किं तर्हि? अन्येऽपि तद्धिता ये लुकं प्रयोजयन्ति। पञ्चेन्द्राण्यो देवता अस्येति पञ्चेन्द्रः, दशेन्द्रः। पञ्चाग्निः दशाग्निः।**

प्र:—**बिम्बमिति;** बिम्बीबदरीशब्दाभ्यां ङीषन्ताभ्याम् 'अनुदात्तादेश्च' इत्यञ्। तस्य फले लुक्। 'लुक् तद्धितलुकि' इति ङीषो लुकि तस्य स्थानिवद्भावाद्यस्येति लोपः प्राप्नोतीति प्रतिषेध उच्यते तद्धितस्य स्थानिनः परत्वाल्लुकोऽपि परत्वाऽश्रयणात् परनिमित्तकत्वं स्त्रीप्रत्ययलुक आश्रीयते अन्यथा अभावेन पौर्वापर्याभावात् कुतः परनिमित्तकत्वम्। अथवा बुद्धिपरिकल्पितमभावेनापि पौर्वापर्यं भवति। **पुंवद्भावेनेति।** 'भस्याढे तद्धिते' इति पुंवद्भावः। अत्र च भाषितपुस्कत्वं नाश्रीयते इत्येवमुक्तम्; तदाश्रयेतु नास्ति पुंवद्भावः। **आमलकमिति।** वृद्धत्वाद् मयटो विधानाद्भत्वाभावः। **प्रकृत्यन्तरत्वादिति।** बिम्बबदरामलकादयो न यौगिकाः शब्दाः। किं तर्हि? विशिष्टफलजातिवाचिन इत्यर्थः। **पञ्चभिरिति।** आर्हादिति ठक् तस्याध्यर्धपूर्वेति लुक्। 'लुक् तद्धितलुकि' इति ङीषो लुक्। 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधत' इति यणादेशः पूर्वं न प्रवर्तते। कृते तु लुकि तस्य स्थानिवत्त्वाद्यणः प्रसङ्ग इति स्थानित्त्वनिषेध उच्यते। अन्यविकल्पायेन पटुशब्दान्तादेव ठग् भविष्यति न तु पट्वीशब्दान्तादिति चेत्प्रतिपत्तिगौरवप्रसङ्गः। **वर्णाश्रय इति।** यद्यपि पुंवद्भावे सिद्धश्च प्रत्ययविधावित्यस्ति तथापि यत्र भावित्वं तत्र पुंवद्भावः। इह तु लुकि भत्वाभावात् कुतः पुंवद्भावः। **किं तर्ह्यन्योऽपीति।** यत्र पुंवद्भावो नास्ति पञ्चेन्द्र इति; 'साऽस्य देवता' इत्यण्, तस्य 'द्विगोर्लुगनपत्ये' इति लुक्, ततो ङीषो लुक्, तस्य स्थानिवत्त्वाद् ङीष्संनियुक्त आनुक् श्रूयेत यथेन्द्राणीति। तथा पञ्चाग्नाय्यो देवता अस्य पञ्चाग्निरिति ऐकारः श्रूयते समानायामाकृतौ भाषितपुंस्कत्वाभावाद्वर्णाश्रयत्वाद्भत्वाभावाच्च पुंवद्भावो नास्ति। अथवा

यस्येति लोपप्रसङ्गः। लुकि च स्थानिवत्त्वनिषेधादादीध्य इति परस्मिन्नित्यस्य पूर्वसूत्रे प्रत्युदाहरणमुपपद्यते। शब्लुकि कृते टेरत्वस्य स्थानिवद्भावादव्यवधानाच्च लोपप्रसङ्गात्।

उ:—**ङीषन्ताभ्यामिति।** गौरादित्वात् ङीष्। **अनुदात्तेति;** प्रत्ययस्वरेणान्तोदात्तत्वे शेषनिघातेनानुदात्तत्वम्। ननु लुकोऽभावस्य परत्वासंभवेन परनिमित्तत्वाभावादेव स्थानिवत्त्वाभावात् किं तन्निबन्धेन; अत आह—**तद्धितस्येति।** **अन्यथा;** गौणपरत्वानङ्गीकारे। बौद्धपरत्वमभावस्य साक्षात् संभवतीत्याह—**अथवेति।** प्रतियोगिद्वारा अभावेऽपि परत्वबुद्धिः संभवतीत्यर्थः। यद्यपि ङीष्यन्तरङ्गतया यस्येतिलोपे ङीषो लुक्यप्यकारश्रवणं दुर्लभं तथापि निमित्ताभावे नैमित्तिकस्याप्यभाव इति ङीषो लुक्यकारस्तिष्ठति। तस्य लुकः स्थानिवद्भावेन लोपनिरासाय तन्निषेधः। वस्तुतोऽन्तरङ्गानपीति वक्ष्यमाणत्वादत्रापि यस्येतिलोपात् पूर्वमेव लुगिति भावः। **तदाश्रय इति;** वृक्षजातौ स्त्रीत्वात् फले क्लीबत्वादिति भावः। आमलकस्य बिम्बादितुल्यतां वारयति—**वृद्धत्वादिति।** तथा च 'भस्याढे तद्धिते' इति पुंवत्वं न संभवतीत्यर्थः। **नेति;** बिम्ब्याः फलमित्यादि योगनिमित्तको न भवतीत्यर्थः। फलविशेषजातौ रूढा इत्याह—**किं तर्हीति।** यौगिकत्वे वृक्षसंबन्धात् फले वर्तन्ते, फलसंबन्धाद्वा वृक्ष इति विनिगमकाभाव इति भावः। अन्तरङ्गतया पूर्वमेव यण् स्यादिति स्थानिवत्वनिषेधो व्यर्थः; अत आह—**अन्तरङ्गानपीति।** **अव्यविकेति;** अवेरिदमाविकमित्यन्यस्य विग्रहोऽन्यस्मात् प्रत्ययः। तथा च पञ्चभिः पट्वीभिः क्रीतः इति विग्रहः। पञ्चपटुशब्दात् प्रत्ययः। 'ओतो गुणवचनात्' इति ङीषो विकल्पितत्वात्। तथा च स्थानिवत्वनिषेधानुपयोगः इत्यर्थः। ननु न भसंज्ञकस्य पुंवद्भावो विधीयते येन वर्णाश्रयत्वेन प्रत्ययलक्षणेन भत्वाभावात् पुंवद्भावो न स्यात। किन्तु सिद्धश्च प्रत्ययविधावित्यनेनाढे तद्धित इत्यस्य विषयसप्तमीत्वप्रतिपादनात्; अत आह—**यद्यपीति।** 'इद् दरिद्रस्य' इति सूत्रे दरिद्रातेरार्धधातुके आलोपः 'सिद्धश्च प्रत्ययविधौ' इति वक्ष्यते। तत्र आर्धधातुक इति विषयसप्तमी। भसंज्ञापि भाविन्यङ्गीक्रियत इति विवक्षितम्। **भत्वाभावात्;** भाविभत्वाभावात्। भसंज्ञाया यजाश्रयत्वेन वर्णाश्रयत्वं ज्ञेयम्। भत्वानाश्रयेण पुंवद्भावं शङ्कते भाष्ये—**एवं तर्हीति।** दूषयति—**ठक्छसोरिति।** 'न लुमताङ्गस्य' इति यथाश्रुते प्रत्ययलक्षणेन पुंवद्भावः संभवत्यतो—**न खल्विति** भाष्यम्। **यत्र;** येषु। ननु ङीपि परतः यासुट् विधीयते

बेन स्थानिवद्भावेनानुगापाद्येत ; अत आह—**ङीष्संनियुक्त इति । आग्नाय्य इति ;** वृषाकपीत्यनेन ङीवैकारादेशश्च ; नन्वत्रापि भस्याढे पुंवदित्यनेनैव सिध्यति ; अत आह—**समानायामिति ।** एकेन प्रवृत्तिनिमित्तेन लिङ्गद्वयवृत्तौ भाषितपुंस्कत्वम् । इन्द्रादिशब्दा इन्द्रत्वादिप्रवृत्तिनिमित्तकाः पुंलिङ्गाः, पुंयोगनिमित्तकाश्च स्त्रीलिङ्गा इति नैकस्मिन् प्रवृत्तिनिमित्ते भाषितपुंस्कत्वमित्यर्थः । 'भस्याढे' इत्यत्र भाषितपुंस्कत्वानाश्रयणेऽप्याह—**वर्णेति ।** न चात्र वर्णोपसर्जनप्रत्ययाश्रयत्वेन केवलवर्णाश्रयत्वाभावात् प्रत्ययलक्षणं स्यादिति वाच्यम् । यथाकथञ्चित् वर्णाश्रय एव तन्निषेधात् । अत एवोक्तं भाष्ये **वर्णाश्रय इति ।** ननु स्थानिकार्यमादेशेऽतिदिश्यते । आनुगैकारयोर्न तत्कार्यत्वं ! किं चानुपसर्जनाधिकाराच्चानुग् भविष्यति ; अत आह—**अथवेति ।** लुकि स्थानिवत्त्वनिषेध आदीध्य इत्युदाहरणं संगच्छते । अन्यथा शपा व्यवधानेन यीवर्णयोरितीकारलोपाप्राप्तेः परस्मिन्नित्यस्य तदुदाहरणमयुक्तं स्यादित्याह—**लुकि चेति ।** उपपन्नत्वमेवाह—**शल्लुकीति ।**

**भा :—उपधात्वे किमुदाहरणम्? पिपठिषतेरप्रत्ययः पिपठीरिति । नैतदस्ति । दीर्घविधिं प्रति न स्थानिवत् । इदं तर्हि—सौरी बलाका । नैतदस्ति । यलोपविधिं प्रति न स्थानिवत् । इदं तर्हि पारिखीयः ।**

प :—**पारिखीय इति ;** परिखाशब्दाच्चातुरर्थिकेऽणि कृते आकारलोपस्य स्थानिवत्त्वात् पारिखे भव इति 'वृद्धादकेकान्तखोपधाद्' इति च्छो न स्यात् ।

उ :—**चातुरर्थिक इति ;** परिखाया अदूरभवो देशः पारिखः । अकान्तादिकान्तात् खोपधाच्च वृद्धाद्भवार्थे छः स्यादिति वृद्धादिति सूत्रार्थः ।

**भा :—चङ्परनिर्ह्रासे चोपसंख्यानं कर्तव्यम् । वादितवन्तं प्रयोजितवान् । अवीवदद्वीणां परिवादकेन । किं पुनः कारणं न सिध्यति? योऽसौ णौ णिर्लुप्यते तस्य स्थानिवद्भावाद्ध्रस्वत्वं न प्राप्नोति । ननु चैतदप्युपधात्वविधिं प्रति न स्थानिवदित्येव सिद्धम् । विशेषत एतद्वक्तव्यम् । क्व? प्रत्ययविधाविति । इह मा भूत्—पटयति लघयतीति ।**

उ :—भाष्ये **पटयतीति ;** उपधात्वाश्रयविधिमात्रं प्रति स्थानिवत्त्वविधिनिषेधे पटयतीत्यत्र टिलोपे 'अत उपधायाः' इति वृद्धिः स्यात् । तन्निरासाय प्रत्ययविध-

त्वुपधाश्रये न स्थानिवदिति परिखीयार्थं वक्तव्यम्। तथा च चङ्परनिर्ह्रासे पृथक् निषेधः कार्यः इत्यर्थः।

भा :—कुत्वे चोपसंख्यानं कर्तव्यम्। अर्चयतेरर्कः। मर्चयतेर्मर्कः। नैतद् घञन्तम्। औणादिक एष कशब्दस्तस्मिन्नाष्टमिकं कुत्वम्। एतदपि णिचा व्यवहितत्वान्न प्राप्नोति।

॥ वा ॥ पूर्वत्रासिद्धे च ॥

भा :—पूर्वत्रासिद्धे च न स्थानिवदिति वक्तव्यम्। किं प्रयोजनम्?

॥ वा ॥ प्रयोजनं क्सलोपः सलोपे ॥

भा :—क्सलोपः सलोपे प्रयोजनम्। अदुग्ध। अदुग्धाः। "लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये" इति लुग्ग्रहणं न कर्तव्यं भवति।

॥ वा ॥ दध आकारलोप आदिचतुर्थत्वे ॥

भा :—दध आकारलोप आदिचतुर्थत्वे प्रयोजनम्—धत्से धद्ध्वे धद्ध्वमिति "दधस्तथोश्च" इति चकारो न कर्तव्यो भवति।

॥ वा ॥ हलो यमां यमि लोपे ॥

भा :—हलो यमां यमि लोपे प्रयोजनम्। आदित्यः। "हलो यमां यमि लोपः" सिद्धो भवति।

॥ वा ॥ अल्लोपणिलोपौ संयोगान्तलोपप्रभृतिषु ॥

भा :—अल्लोपणिलोपौ संयोगान्तलोपप्रभृतिषु प्रयोजनम्। पापच्यतेः पापक्तिः। यायज्यतेर्यायष्टिः। पाचयतेः पाक्तिः। याजयतेर्याष्टिः।

॥ वा ॥ द्विर्वचनादीनि च ॥

भा :—द्विर्वचनादीनि च न पठितव्यानि भवन्ति। पूर्वत्रासिद्धेनैव सिद्धानि भवन्ति। किमविशेषेण? नेत्याह।

॥ वा ॥ **वरेयलोपस्वरवर्जम्** ॥

**भा :—वरेयलोपं स्वरं च वर्जयित्वा ।**

॥ वा ॥ **तस्य दोषः संयोगादिलोपलत्वणत्वेषु** ॥

**भा :—तस्यैतस्य लक्षणस्य दोषः संयोगादिलोपलत्वणत्वेषु । संयोगादिलोपे—काक्यर्थम् वास्यर्थम् । "स्कोः संयोगाद्योरन्ते च" इति लोपः प्राप्नोति ॥ लत्वम्—निगार्यते निगाल्यते । "अचि विभाषा" इति लत्वं न प्राप्नोति । णत्वम्—माषवपनी व्रीहिवपनी । "प्रातिपदिकान्तस्य" इति णत्वं प्राप्नोति ॥ न पदान्तद्विर्वचन—॥ ५७ ॥**

प्र :—**कसलोप इति ;** अदुह्वह्यर्थं लुग्वचनं कर्तव्यमेव । तदर्थं लुग्ग्रहणं नेति च्छेदं कुर्वन्ति । कर्तव्यं भवतीत्युत्तरम् । अवश्यकार्यमित्यर्थः । **चकारो न कर्तव्य इति ।** झषन्तत्वात् पूर्वेणैव सिद्धत्वात् । **पापक्तिरिति** । क्तिच् । संयोगान्तलोपादयः पदान्तविधौ स्थानिवत्त्वनिषेधात्सिद्धा इति भाष्ये नोदाहृताः । स्कन्दयतेः स्कन्, काष्ठं तक्षयतीति काष्ठतक् । 'संयोगादिलोपलत्वणत्वेषु' इति वचनात्संयोगादिलोपे स्थानिवत्त्वात्तदभावादत्र संयोगान्तलोपः । दोहयतेर्धोक् । लेहयतेर्लेट् । उणादीनामव्युत्पन्नत्वात् किर्योर्गिर्योरित्यत्र दीर्घाभावः । **माषवपनीति ।** समासान्तस्य नकारस्य णत्वं विधीयमानमल्लोपस्य स्थानिवत्त्वनिषेधाद् ङीबुत्पत्तेः प्राक् समासविधानात् प्राप्नोति ।

उ :—भाष्ये **अर्क इति ।** घञि णिलोपस्य स्थानिवत्त्वे चकारान्तमङ्गं न भवति इति चजोरिति कुत्वं न स्यादित्यर्थः । भाष्ये—**नैतदिति ;** परत्वा बाधितत्वादित्यर्थः । भाष्ये **आष्टमिकं ;** 'चो कुः' इति आष्टमिकमपि कुत्वं णिलोपस्य स्थानिवत्त्वे न सिध्यतीत्युदाहरणं युक्तमित्याह—भाष्ये **एतदपीति ।** आष्टमिकं कुत्वमपीत्यर्थः । ननु अदुह्वहीत्यत्र झल्परत्वाभावेन सलोपाभावात् लुगवश्यं वक्तव्य इत्युक्तत्वात् लुग्ग्रहणं न कर्तव्यमिति भाष्यं कथम् ; अत आह—**अदुह्वह्यर्थमिति ।** **तदर्थम् ;** तदुपपत्त्यर्थम् । **छेदमिति ;** तथा च नेत्यन्तेन वार्तिकव्याख्या, कर्तव्यमिति भगवद्वचनमिति भावः । भाष्ये—**आदिचतुर्थत्वे ;** आदिवर्णस्य चतुर्थवर्णत्वे भष्भाव इति यावत् । घस्स इत्यादौ 'श्नाभ्यस्तयोरातः' इति आल्लोपस्य स्थानिवत्त्वे झषन्तत्वाभावात् भष्भावो न स्यादिति

स्थानिवत्त्वनिषेधः। ननु विधिसामर्थ्याद्दाल्लोपो न स्थानिवत्; अत आह भाष्ये—**चकार इति**। तद्व्याचष्टे—**झषन्तत्वादिति;** स्थानिवत्त्वनिषेधे सतीत्यादिः। **पूर्वेण;** 'एकाचो बशः' इत्यनेन। भाष्ये **आदित्य इति;** दित्यदित्येति ण्ये, यस्येतिलोपस्य स्थानिवत्त्वे यलोपो न स्यादित्यर्थः। भाष्ये **पापक्तिरिति;** अत्रा-ल्लोपस्य स्थानिवत्त्वात् कुत्वं न स्यात्। **यायष्टिरिति;** अत्र व्रश्चेति षत्वं न स्यात्। पाक्तिर्यष्टिरित्यत्र णिलोपस्य स्थानिवत्वात् कुत्वषत्वे न स्याताम्। **क्तिजिति;** प्रत्ययान्तात् क्तिनोऽभावात्। ननु भाष्ये प्रतिज्ञातसंयोगान्तलोपमसुदाहृत्य कुत्वादिकं कथमुदाहृतम्; अत आह—**संयोगेनि।** स्वयमुदाहरति—**स्कन्दयतेरिति।** णिलोपस्यस्थानिवत्त्वे दकारषकारयोः संयोगान्तलोपो न स्यात्। ननु काष्ठतक् इत्यत्र संयोगादिलोपेन भाव्यम्; अत आह—**संयोगादीति।** पदान्तेऽप्युदाहरति—**दोहयतेरिति।** ननु यदि 'पूर्वत्रासिद्धीये न स्थानिवद्' इति तर्हि गिर्योरित्यत्र 'हलि च' इति दीर्घः स्याद्; अत आह—**उणादीनामिति।** भाष्ये **तस्य दोषः;** 'पूर्वत्रासिद्धीये न स्थानिवद्' इत्यस्य तथा। तत्रस्थानिवद्भावोऽङ्गीकार्य एवेति भावः। माषा उप्यन्तेऽनया माषान् वपतीति वा ल्युटि माषवपनी। अत्र णत्वप्रसङ्गमाह—**समा-सान्तस्येति।** ननु माषशब्दस्य वपनीशब्देन समासे नकारस्य समासान्तत्वाभावात् णत्वं न प्राप्नोति; अत आह—**ङीबुत्पत्तेरिति।** 'गतिकारकोपपदानां कृद्भिस्सह समासवचनम्' इति वचनादिति भावः।

## सू.—द्विर्वचनेऽचि ॥ १। १। ५८ ॥

**॥ वा ॥ आदेशे स्थानिवदनुदेशात्तद्वतो द्विर्वचनम् ॥**

**भा:—आदेशे स्थानिवदनुदेशात् तद्वतः। किंवतः? आदेशवतः। द्विर्वचनं प्राप्नोति। तत्र को दोषः।**

**॥ वा ॥ तत्राभ्यासरूपम् ॥**

**भा:—तत्राभ्यासरूपं न सिध्यति। चक्रतुश्चक्रुरिति।**

**॥ वा ॥ अज्ग्रहणं तु ज्ञापकं रूपस्थानिवद्भावस्य ॥**

**भा:—यदयमज्ग्रहणं करोति तज्ज्ञापयत्याचार्यः—रूपं स्थानिवद्भवतीति। कथं कृत्वा ज्ञापकम्? अज्ग्रहणस्यैतत्प्रयो-**

जनम्—इह मा भूत्—जेघ्रीयते देध्मीयते। यदि च रूपं स्थानिवद्भवतीति। ततोऽजुग्रहणमर्थवद्भवति। अथ हि कार्यम्, नाऽर्थोऽजुग्रहणेन। भवत्येवाऽत्र द्विर्वचनम्।

॥ वा ० तत्र गाङ्प्रतिषेधः ॥

भा :—तत्र गाङः प्रतिषेधो वक्तव्यः। अधिजगे। इवर्णाभ्यासता प्राप्नोति। न वक्तव्यः। "गाङ्लिटि" इति द्विलकारको निर्देशः। लिटि लकारादाविति।

प्र :—**द्विर्वचने।** अचः परस्मिन्नित्यत्र योऽनादिष्टादचः पूर्व इति स्थितम्। साच्कस्य च द्विर्वचनमिति पूर्वविधित्वाभावादप्राप्तं स्थानिवत्त्वं विधीयते। अथाऽपि निमित्तात् पूर्वमित्यस्मिन् पक्षे प्राप्तिः स्यात्। तथापि न पदान्तद्विर्वचनेति प्रतिषेधप्रसङ्गादिदं वचनम्। **आदेश इति।** कार्यातिदेश इति पूर्वः पक्षः। चक्रतुरित्यत्र यणादेशे कृते एकाचो विधीयमानं द्विर्वचनमनच्कत्वादप्राप्तमिति स्थानिवत्त्वाद् यण्युक्तस्यैव प्राप्नोति। **अथ हीति।** कार्याऽतिदेशे हि घ्रीध्मीति भाव्यमेव द्विर्वचनेनेति किमज्ग्रहणेन। नन्वज्ग्रहणस्य प्रयोजनं भसेः क्वसौ 'घसिभसोर्हलि' इत्युपधालोपे कृते द्विर्वचनं मा भूदिति। नैतदस्ति। सत्यसति वा द्विर्वचने प्सानिति श्रुतौ विशेषाऽभावात्। छान्दसश्चैवोपधालोपः, छन्दसि च दृष्टानुविधिः रूपस्थानिवत्त्वे च निन्यतुरित्यत्र पूर्वमियङादेशे कृते स्थानिरूपातिदेशाद् नीनीति द्विर्वचने एरनेकाच इति यणा बाधितत्वात्पुनरियङ् न प्रवर्तते। **अधिजग इति;** कृते एशादेशे गाङिति प्रक्रियाश्रयेण चोद्यम्। ङकारस्यानुबन्धत्वादिकारस्य गाङ् भवत्यजादेशः।

उ :—नन्वचः परस्मिन्नित्येव स्थानिवत्त्वसिद्धेः किमर्थमिदं सूत्रमित्याह—**अच इति। अथापीति** प्रौढ्या निमित्तापेक्षया पूर्वत्वस्य अस्थितत्वात्। द्विर्वचनादिग्रहणस्य प्रत्याख्यातत्वाच्च। **यणादेश इति।** परत्वात् द्विर्वचनात् पूर्वं यणादेश इति भावः। भाष्ये **जेघ्रीयत इति**—'ईघ्राध्मोः' इति यङि विधीयमानस्येकारस्य स्थानिवत्त्वरूपातिदेशे जाघ्रीयत इति स्यात्। तन्निरासायाचीत्युक्तमित्यर्थः। कार्यातिदेशे अज्ग्रहणवैयर्थ्यमुपपादयति—**कार्येति।** घ्राध्मेत्रीकारसहितस्यैवेत्यर्थः। अज्ग्रहणस्य प्रयोजनान्तरं शंकते—**नन्विति। क्वसौ;** 'क्वसुश्च' इति लिडादेशे क्वसौ। ननु द्वित्वे प्प्सानित्यत्र पकारद्वयम्, द्वित्वाभावे- एक एवेति श्रुतौ विशेषोऽस्तीत्यत

आह—**छान्दस इति।** 'तनिपत्योः' इत्यतः छन्दसीत्यनुवर्तत इत्यर्थः। **दृष्टेति;** तथा चोपधालोपस्य स्थानिवत्त्वेऽपि द्विर्वचनं न भविष्यतीत्यर्थः। रूपातिदेशस्य प्रयोजनान्तरं सूचयन्नाह—**रूपेति।** कार्यातिदेशे निन्युरित्यत्रेयङ्श्रवणप्रसङ्ग इति भावः। ननु लिटि विधीयमानस्य गाङोऽचि परतो विधानाभावात् कथं स्थानिवत्त्वम्; अत आह—**कृत इति।** परत्वादिति भावः। हलचोरादेशस्य कथं स्थानिवत्त्वम्; अत आह—**ङकारस्येति।**

**॥ वा ॥ कृत्येजन्तदिवादिनामधातुष्वभ्यासरूपम् ॥**

**भा :—कृत्येजन्तदिवादिनामधातुष्वभ्यासरूपं न सिध्यति। कृति—अचिकीर्तत्॥ कृति॥ एजन्त—जग्ले मम्ले॥ एजन्त॥ दिवादि—दुद्यूषति सुस्यूषति॥ दिवादि॥ नामधातु—भवनमिच्छति भवनीयति। भवनीयतेस्सन् बिभवनीयिषति। एवं तर्हि प्रत्यय इति वक्ष्यामि।**

**॥ वा ॥ प्रत्यय इति चेत् कृत्येजन्तनामधातुष्वभ्यासरूपम् ॥**

**भा :—प्रत्यय इति चेत् कृत्येजन्तनामधातुष्वभ्यासरूपं न सिध्यति। दिवादय एके परिहृताः। एवं तर्हि—द्विर्वचननिमित्ते अच्यजादेशः स्थानिवद् इति वक्ष्यामि। स तर्हि निमित्तशब्द उपादेयः। न ह्यन्तरेण निमित्तशब्दं निमित्तार्थो गम्यते। अन्तरेणापि निमित्तशब्दं निमित्तार्थो गम्यते। तद्यथा—"दधित्रपुसं प्रत्यक्षो ज्वरः? ज्वरनिमित्तमिति गम्यते। नड्वलोदकं पादरोगः? पादरोगनिमित्तमिति गम्यते। "आयुर्घृतम्" आयुषो निमित्तमिति गम्यते। अथ वा अकारो मत्वर्थीयः द्विर्वचनमस्मिन्नस्ति सोऽयं द्विर्वचनः द्विर्वचने इति। एवमपि न ज्ञायते—कियन्तमसौ कालं स्थानिवद्भवतीति। यः पुनराह 'द्विर्वचने कर्तव्य' इति, कृते तस्य द्विर्वचने स्थानिवन्न भविष्यति। एवं तर्हि—प्रतिषेधः प्रकृतः सोऽनुवर्तिष्यते। क्व प्रकृतः? "न पदान्तद्विर्वचन—" इति। द्विर्वचननिमित्ते अचि अजादेशो न**

भवतीति। एवमपि न ज्ञायते—कियन्तमसौ कालमादेशो न भवतीति। यः पुनराह—द्विर्वचने कर्तव्य इति कृते तस्य द्विर्वचने अजादेशो भविष्यति। एवं तर्हि—उभयमनेन क्रियते—प्रत्ययश्च विशेष्यते, द्विर्वचनं च। कथं पुनरेकेन यत्नेनोभयं लभ्यम्? लभ्यमित्याह। कथम्? एकशेषनिर्देशात्। एकशेषनिर्देशोऽयम्—द्विर्वचनं च द्विर्वचनश्च द्विर्वचनम्। द्विर्वचने कर्तव्ये द्विर्वचनेऽचि प्रत्यय इति।

॥ वा ॥ द्विर्वचननिमित्तेऽचि स्थानिवदिति चेण्णौ स्थानिवद्वचनम् ॥

भा :—द्विर्वचननिमित्तेऽचि स्थानिवदिति चेण्णौ स्थानिवद्भावो वक्तव्यः। अवनुनावयिषति अवचुक्षावयिषति। न वक्तव्यः।

॥ वा ॥ ओः पुयण्जिषु वचनं ज्ञापकं णौ स्थानिवद्भावस्य ॥

भा :—यदयम्—"ओः पुयण्ज्यपरे" इत्याह, तज्ज्ञापयत्याचार्यो—भवति णौ स्थानिवद्भाव इति। यद्येतज्ज्ञाप्यते अचिकीर्तत् अत्रापि प्राप्नोति। तुल्यजातीयस्य ज्ञापकम्। कश्च तुल्यजातीयः? यथाजातीयकाः पुयण्जयः। कथंजातीयकाश्चैते? अवर्णपराः। कथं जग्ले मम्ले? अनैमित्तिकमात्वम्, शिति तु प्रतिषेधः।

प्र :—कृत्येजन्तेति। अचि योऽजादेशः स द्विर्वचने कर्तव्ये स्थानिवदिति सूत्रार्थमाश्रित्यैतदुच्यते। जग्ल इति। शित्सदृशे आत्वमित्यत्र पक्षेऽयं दोषः। द्विर्वचननिमित्त इति। अस्मिन् पक्षे जग्ल इत्यपरिहृतम्। उत्तरत्र तु परिहरिष्यते। दधित्रपुसमिति। समाहारद्वन्द्वः कर्मधारयो वा। दध्येव विशिष्टावस्थायुक्तं त्रपुसमुच्यते तत्र द्विर्वचननिमित्तत्वात्तद्रूपारोपेणाजेव द्विर्वचनमुच्यते। अथवा अधिकरणे ल्युट्। द्विरुच्यतेऽस्मिन्निति द्विर्वचनम्। एतदप्रतिपद्यमानं प्रति

परिहारान्तमाह । **अथवा अकार इति । एवमपीति ।** एकत्वाद् द्विर्वचनशब्दस्य चाज्विशेषणे उपयुक्तत्वात् कालावधारणाभावः । **एवं तर्हीति ।** स्थानिवदिति नानुवर्तते इति भावः । **प्रत्ययश्चेति ।** द्विर्वचनेन प्रत्ययस्याक्षिप्तत्वात्तद्विशेषणं द्विर्वचनम्, अचीत्येतच्च । तस्य तदादिविधिर्भवत्यजादाविति; **कथं पुनरिति ।** विरुद्धत्वादनयोरर्थयोरेकेन द्विर्वचन इत्यनेन पदेनानुपदानादिति भावः । **एकशेषनिर्देश इति ।** सहविवक्षाभावेऽपि सरूपाणामित्येकशेषः संज्ञापरिभाषावल्लक्षणाङ्गत्वात्तस्येति प्रागेवोक्तम् । विभक्त्यन्तयोश्चैकशेषविधानादप्रातिपदिकत्वाच्च द्विवचनाभावः । अथ वैकशेषेण समानफलत्वात्तन्त्रमावृत्तिर्वा लक्ष्यते । **ओः पुयण्जिष्विति ।** न हि णौ कृतस्य स्थानिवद्भावमन्तरेण पुयण्जिषु सर्वेष्ववर्णपरेषु उवर्णान्तोऽभ्यासः सम्भवति । पिपविषते यियविषतीत्यत्रैवाऽनेन स्थानिवद्भावात्तत्र पु इति पवर्गग्रहणाद् यणिति प्रत्याहारग्रहणाज्जग्रहणाच्च ज्ञापकाण्णौ कृतस्य स्थानिवद्भावोऽनुमीयते । ननु तत्र णाविति नास्ति तत्कथं तत्रैव स्थानिवत्त्वानुमानं न तु बिभवनीयिषति निनवनीयिषतीत्यादावपि । नैतदस्ति । येन नाव्यवधानमित्येकेनैव प्रत्ययेन तत्र व्यवधानाश्रयणाण्णेरेव केवलस्य व्यवधायकस्य संभवात् ।

उः—अत्र पञ्च पक्षा उपक्षिप्ता भाष्ये—अचि योऽजादेशो द्विर्वचने कार्ये स स्थानिवदिति प्रथमः । अजादौ प्रत्यये यो अजादेशस्स द्विर्वचने कार्ये स्थानिवदिति द्वितीयः । द्वित्वनिमित्ते अचि योऽजादेशस्स स्थानिवदिति तृतीयः । द्वित्वनिमित्ते अचि अजादेशो न भवतीति चतुर्थः । द्वित्वनिमित्ते अचि योऽजादेशः स द्वित्वे कर्तव्ये स्थानिवदिति पञ्चमः । तत्र प्रथमपक्षे दोषोऽयमित्याह—**अचीति ।** भाष्ये **अचिकीर्तदिति ।** कृतेर्णिचि 'उपधायाश्च' इतीत्वे 'हलि च' इति दीर्घः । द्वित्वम् । ननु शिति प्रतिषेधान्नैमित्तिकमात्वं कथं स्थानिवत् स्याद्; अत आह—**शिदिति ।** श इदिति कर्मधारयः । यस्मिन्विधिस्तदादाविति इत्संज्ञकशकारादिप्रत्ययव्यतिरिक्तप्रत्यये आत्वमिति भवति अचि अजादेश इत्यर्थः । भाष्ये **दुद्यूषतीति**—दिवेः सनीवन्तर्धेति इडभावपक्षे 'हलन्ताच्च' इति कित्वे च्छ्वोः शूडिति ऊठि यणादेशे 'सन्यङोः' इति द्वित्वे कृते रूपम् । एवं सिवेः सुस्यूषतीति । अत्र यणः स्थानिवत्त्वे अभ्यासे इकारश्रवणप्रसङ्ग इत्यर्थः । भाष्ये **बिभवनीयिषतीति ।** तत्रावादेशस्य स्थानिवत्वादभ्यासे उकारश्रवणप्रसङ्गः । न चात्र स्थानिवद्भावेन भू इत्यस्य द्वित्वे ओः पुयणिति इत्वं भविष्यतीति वाच्यम् । सनि परे विधीयमानमित्वं येन नाव्यव-

धानमिति णिव्यवधाने भवति नत्वनेकप्रत्ययव्यवधानेऽपीति भावः। द्वितीयपक्षमुद्भावयति भाष्ये—**एवं तर्हीति**। द्विर्वचन इत्यनेनाक्षिप्तप्रत्ययस्याचीति विशेषणादजादौ प्रत्यये योऽजादेशः स स्थानिवदिति लभ्यत इत्यर्थः। भाष्ये **दिवादय इति**। झलादौ सन्यूठ्, नाजादावित्यर्थः। कृत्यादिपरिहारार्थं तृतीयमाशङ्कते भाष्ये—**एवं तर्हीति**। द्विर्वचननिमित्ते अचीत्येतदुपपादयति—**तत्रेति**; सूत्र इत्यर्थः। औपचारिकत्वमसहमान आह—**अथवेति**। यद्वा निमित्तशब्दं विनापि निमित्तार्थो गम्यत इत्येतावन्मात्रे दृष्टान्तः। दार्ष्टान्तिके तु मुख्य एवेत्याह—**अथवेति**। **अप्रतिपद्यमानम्**; अजानानम्। एवमपीति परिहारभाष्यमुपपादयति—**एकत्वादिति**। **कालेति**—द्विर्वचनसमय एवेत्यवधारणालाभ इत्यर्थः। अवधारणालाभे चक्रतुरित्यत्र यणश्रवणं न स्यादिति भावः। भाष्ये **एवं तर्हि इति**; चतुर्थपक्षः। तमुपपादयति—**स्थानिवदिति**। तथा च द्वित्वनिमित्तेऽच्यजादेशो न भवतीत्यर्थः सम्पद्यते। भाष्ये **एवं तर्हीति**; पञ्चमपक्षः। तत्राश्रुतप्रत्ययस्य कथं विशेष्यत्वम्; अत आह—**द्विर्वचनेनेति**। अचीत्युक्तयेह द्विर्वचनं षाष्ठिकं गृह्यते। तत्प्रत्यये परत एवेति न तदाक्षेप इत्यर्थः। द्विरुच्यतेऽस्मिन्निति व्युत्पत्त्या प्रत्ययविशेषणत्वम्। अचि इत्यपि प्रत्ययविशेषणमित्याह—**अचीत्येतदिति**। तथा च द्वित्वनिमित्तेऽजादौ प्रत्यये योऽजादेशः स द्वित्वे कार्ये स्थानिवदिति सूत्रार्थः। भाष्ये द्विर्वचनं च कार्यत्वेन विवक्ष्यत इति शेषः। **विरुद्धत्वादिति**—एकत्राधिकरणव्युत्पत्तिरितरत्र भावव्युत्पत्तिरिति विरुद्धता। **एकेन**; युगपदित्यादिः। ननु सहविवक्षाभावात् कथमेकशेषः; अत आह—**सहेति**। भावादित्यर्थः। **प्राक्**; सर्वादिसूत्रे। भाष्ये **द्विर्वचनं च द्विर्वचनश्चेति**। अनेन नपुंसकमनपुंसकेनेत्येकशेषभावः सूचितः। यद्यपि प्रत्ययविशेषणस्य पुंस्त्वेन भाव्यं तथाऽप्यनुपात्तप्रत्ययं प्रत्यार्थिकविशेषणत्वं नपुंसकत्वेऽप्यविरुद्धमिति भावः। एकशेषे द्विवचनप्रसङ्गं निराह—**विभक्तीति**। अविभक्त्यन्तैकशेषपक्षे द्विवचनप्रसङ्गादाह—**अथवेति**। ननु सर्वेष्वित्ययुक्तं पुयण्परे णिं विनाऽभ्यासोवर्णस्य द्विर्वचनेऽचीत्यनेनैव संभवात् इति शङ्कते—**यियविषतीति**। यद्यपीत्यादिः। सनीवन्तर्धेति स्मिपूङिति चोभयत्रेट्। समाधत्ते—**तत्रेति**; तथापीत्यादिः। बिभावयिषति रिरावयिषतीत्यादौ स्थानिवत्त्वं विनेत्वासिद्धेर्वर्गप्रत्याहारग्रहणं च ज्ञापकमेवेत्यर्थः। नन्ववर्णपराः पुयण्जाः प्रत्ययान्तरेऽपि सम्भवन्ति णावपि, तत्र णावेव ज्ञापकं नान्यत्रेति किं विनिगमकमिति शङ्कते—**नन्विति**। **तत्र**;

पुयण्सूत्रे । **निनवनीयिषतीति**; नौतेः ल्युडन्तस्य क्यच्, सन्, तत्राभ्यासे उकारश्रवण-प्रसङ्गः । **नैतदिति**—पवर्गयण्जकारेष्ववर्णपरेषु परतः अभ्यासोवर्णस्य सनि परे इत्वं विधीयते । न च प्रत्ययव्यवधानं विना सर्वत्रावर्णपरत्वं सम्भवतीति प्रत्यय-व्यवधानस्यावश्यकत्वे णावेकेनैव व्यवधानमन्यत्र ल्युट् क्यजादिनानेकेनेति णावेव स्थानि-वत्त्वानुमानं लभ्यत इति भावः । भाष्ये **अनैमित्तिकमिति**—तथा च 'ह्वावा-मश्च' इति ह्वेञ्वेञोः कप्रत्ययबाधनार्थं पुनर्विधानमुपपन्नमिति भावः ।

**भा :—कानि पुनरस्य योगस्य प्रयोजनानि । पपतुः पपुः । तस्थतुः तस्थुः । जग्मतुः जग्मुः आटिटत् । आशिषत् । चक्रतुः चक्रुः इति । आल्लोपोपधालोपणिलोपयणादेशेषु कृतेषु अनच्कत्वात् द्विर्वचनं न प्राप्नोति । स्थानिवद्भावाद्भवति । नैतानि सन्ति प्रयोजनानि पूर्वप्रतिषेधेनाप्येतानि सिद्धानि । कथम्? वक्ष्यति ह्याचार्यः—द्विर्वचनं यणयवायावादेशाल्लोपो-पधालोपणिलोपकिकिनोरुत्वेभ्यः इति । स पूर्वविप्रतिषेधो न पठितव्यो भवति । किं पुनरत्र ज्यायः? स्थानिवद्भाव एव ज्यायान् । पूर्वविप्रतिषेधे हि सतीदं वक्तव्यं स्यात्—ओदौदा-देशस्य उद्भवति 'चुटुतुशरादेरभ्यासस्य' इति । ननु च त्वया-पीत्वं वक्तव्यम् । परार्थं मम भविष्यति "सन्यतः" इद्भवतीति । ममापि तद्युत्वं परार्थं भविष्यति । "उत्परस्यातस्ति च" इति । इत्वमपि त्वया वक्तव्यम । यत्समानाश्रयं तदर्थम्—उत्पिपविषते संयियविषतीत्येवमर्थम् । तस्मात्स्थानिवदित्येष एव पक्षो ज्यायान् । द्विर्वचनेऽचि ॥ ५८ ॥**

**इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरण-**
**महाभाष्ये प्रथमस्याध्यायस्य प्रथमे**
**पादेऽष्टममाह्निकम् ॥**

प्र :—**कानि पुनरिति** । अन्यथासिद्धत्वात्प्रश्नः । **पूर्वविप्रतिषेधेना-पीति** । अपूर्वो वाचनिकः पूर्वविप्रतिषेधः । न हि नित्यानामाल्लोपादीनामनित्येन द्विर्वचनेन च न्याय्यो विप्रतिषेधः । [1]ननु निन्यतुरिति कथं? न ह्यत्रेयङ् परिगणितः ।

---

(१) मु. पु. अथ

एवं तर्हि 'प्रकल्प्य चापवादविषयम्' इति न्यायाद् यणाऽत्र भवितव्यमितीयङ् न प्रवर्तत इति द्विर्वचने कृते 'एरनेकाच' इति यणा सिद्धम्। **ओदौदादेशस्येति;** ओदौतोरादेशो यस्मिन्नङ्गे तस्य योऽभ्यासश्चुटुतुशरादिस्तस्य योऽकारस्तस्योकारदेशो भवतीत्यर्थः। यथा चुक्षावयिषति ऊर्णुनावयिषति [1]जुहावयिषति तुनावयिषति शुश्रावयिषति पुस्फारयिषति। अत्र 'चिस्फुरोर्णौ' इत्योकारस्यात्वम्। अत्र च यद्यपि खयः शेषे कृते अभ्यासस्य शरादित्वं नास्ति तथाप्यभ्याससंज्ञाप्रवृत्तिसमयेऽस्ति। एतेष्वन्तरङ्गत्वात्प्रागेव द्विर्वचनाद्-वृद्ध्यावादेशयोः प्रवर्तनादिवर्णान्ततायामभ्यासस्य प्राप्तायामुत्वं विधीयते। **ननु च त्वयापीति।** ओःपुयण्जिष्वपरे इति ज्ञापनार्थमवश्यं वाच्यमित्यर्थः। उत्त्ववादी तु ओः पुयण्जीति न पठति सन्यत इतीत्त्वस्य सिद्धत्वात्। **परार्थमिति।** इत्वार्थम्। प्रसङ्गात्तु ज्ञापकम्। त्वया त्वपूर्वमुत्त्वं वक्तव्यमित्यर्थः। **ममापीति।** उत्त्वमप्यन्यार्थं वक्तव्यं तदेवाधिकविषये उपजीव्यत इत्यर्थः। तत्रायं न्यासः। 'उत्परस्यातः' इति च' 'ओदौदादेशस्य चुटुतुशरादेः' इति। अभ्यासस्येति वर्तते। **इत्त्वमपीति।** यत्रान्तरङ्गत्वं नास्ति समानाश्रयत्वात्। पवतेर्यौतेश्च सनि 'स्मिपूङ्रञ्ज्वशां सनि' सनीवन्तर्द्धेति चेटि कृते परत्वाद् गुणः। पूर्वविप्रतिषेधादवादेशात् पूर्वं द्विर्वचनमितीत्वं वक्तव्यम्। तथा जिजावयि-षतीत्यत्रेत्वविधानार्थं वक्तव्यम्। **तस्मादिति।** नन्वसत्यस्मिन् सूत्रे ओः पुयण्जीति ज्ञापकमेवं समर्थयिष्यते—अन्तरङ्गो नित्यश्च विधिर्द्विर्वचनेन प्रतिषिध्यत इति तत्र द्विर्वचने कृते यथाप्राप्तं भविष्यति। तदयुक्तम्। यदि सामान्येन ज्ञापकमाश्रीयत अचिकीर्तदि-त्यत्रापि पूर्वं द्विर्वचनप्रसङ्गादनिष्टरूपप्राप्तिः। अथ तुल्यजातीयापेक्षं ज्ञापकं व्याख्यायते, यथोक्तं भाष्यकारेण, तथा सति चक्रुरित्यादि न सिध्यतीति सूत्रमेव कर्तव्यम्। यत्तु तेन न सिध्यति तदर्थं ज्ञापकमाश्रयणीयं तुल्यजातीयापेक्षमिति सर्वेष्टलक्ष्यसिद्धिः॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे

प्रथमाध्यायस्य प्रथमपादे ऽष्टममाह्निकम्॥

उः—भाष्ये **आटिटत्;** अटतेर्ण्यन्तात् चङि, 'अजादेर्द्वितीयस्य' इति टीत्यत्य द्वित्वम्। भाष्ये **अनच्त्वादिति;** आटिटदित्यत्र णिलोपे धातोर्द्वितीयाज्-रहितत्वादित्यर्थः। भाष्ये द्विर्वचनमित्यादिवार्तिकं 'दाश्वान्साह्वान्मीढ्वांश्च' इति सूत्रस्थम्। **न हीति**—तुल्यबलत्वाभावादित्यर्थः। किकिनोः परत उदोष्ठ्यपूर्वस्येत्युत्वम्। वार्तिके न्यूनतामाशङ्कते—**नन्विति। प्रकल्प्येति।** यदाकदाचिदपि अपवादं परित्यज्येत्यर्थः।

(१) मु. पु. तुनावयिषति।

षष्ठीसमासे ओदौदादेशस्याभ्यासस्येति सामानाधिकरण्यायोगादाह—**ओदौतोरिति**। ओदौतमुदाहरति—**यथेति**। क्षु ऊर्णु हु श्रु एभ्यो णौ वृद्ध्यावादेशौ। ऊर्णोतेः 'अजादेर्द्वितीयस्य' 'नन्द्राः संयोगादयः' इति नु इत्यस्य द्वित्वम्। आद्यतृतीयौ च वर्गादी। द्वितीयः टवर्गादिः। चतुर्थपञ्चमौ तु शराद्युदाहरणमिति विवेकः। आकारमुदाहरति **पुस्फारयिषतीति**। स्फुरोरित्यत्र एच इत्यनुवृत्तेः गुणे कृते ओकारस्यात्वमित्याह—**अत्रेति**। **अत्र**; पुस्फारयिषतीत्यत्र। अत्र शरादित्वमाक्षिप्य समाधत्ते—**अत्रेति**। **खय इति**—'शर्पूर्वाः खयः' इत्यनेन। ननूदाहृतेषु वृद्धेः पूर्वं द्विर्वचनेन रूपसिद्धेरुत्वं न वक्तव्यमित्यत आह—**एतेष्विति**। सनपेक्षद्वित्वापेक्षया ण्याश्रितवृद्ध्यादेरन्तरङ्गत्वम्। एवं स्फुरतेरप्यात्वमन्तरङ्गम्। **इवर्णेति**; 'सन्यत' इत्यनेन। ननु णेर्द्वित्वनिमित्तत्वाभावेन स्थानिवद्भावाभावात् 'सन्यतः' इतीत्वं सिद्धमिति, ननु च त्वयेत्युक्तमयुक्तम्; अत आह—**ओः पुयण्जीति**। उत्ववादिनापीत्वं वक्तव्यमुत्वमधिकमिति न साम्यम्; अत आह—**उत्ववादी त्विति**। ज्ञापकापेक्षयेत्वं परशब्देन विवक्षितमित्याह—**इत्वार्थमिति**। यियविषति पिपविषते इत्यादौ 'द्विर्वचनेऽचि' इति स्थानिवद्भावः, तत्रेत्वार्थमित्यर्थः। **प्रसङ्गादिति**; पवर्गप्रत्याहारजग्रहणादिति भावः। 'सन्यतः' इत्यत इत्वमनुवर्तते, तत्परार्थं मम भविष्यतीति परार्थमिति भाष्यार्थः। सन्यत इत्यभिधानं स्वरूपेणेत्वमपूर्वं न भवतीति सूचयितुम्। अत एव वैषम्यमाह—**अपूर्वमिति**। परः अपूर्वत्वतदभावाभ्यामेव वैषम्यमभिप्रेतमिति मत्वा तद्विघटयति—**ममापीति**। भाष्ये तद्व्याचष्टे—**उत्वमिति**। अधिकविषये ओदौदादेशस्येत्यत्र। ननु पूर्वसूत्रस्थमित्वमुत्तरसूत्रेऽनुवर्तत इति युक्तम्, प्रकृते तु कथमनुवृत्तिः; अत आह—**तत्रेति**। अभ्यासस्येत्यपि न वाच्यमित्याह—**अभ्यासस्येति**। समानाश्रयमित्यस्य तात्पर्यमाह—**यत्रेति**। द्विर्वचनापेक्षयेत्वादेरन्तरङ्गत्वं नास्तीत्यर्थः। वक्तव्यत्वमुपपादयति—**गुणः इति**; द्वित्वात् पूर्वमित्यादिः। नन्ववादेशे सन्यत इत्येव सिद्धम्; अत आह—**पूर्वविप्रतिषेधादिति**। उदाहरणान्तरमाह—**तथेति**। **इत्वेति**; ओदौदादेशस्येत्यनेन प्राप्तोत्वबाधनार्थमित्यर्थः। तथा चोत्ववादिनो गौरवमित्वमपीति त्वयेत्यनेनोक्तमिति भावः। भाष्ये ओः पुयण्जीत्यस्य ज्ञापकत्वमङ्गीकृत्य स्थानिवद्भावोऽप्यङ्गीकृतः। तमाक्षिपति—**नन्विति**। **समर्थयिष्यते**; व्याख्यास्यते। णौ गुणावादेरन्तरङ्गत्वम्, अन्यत्र यियविषतीत्यादौ नित्यत्वामित्युभयोपादानम्। पूर्वं द्विर्वचने अभ्यासोकारः स्थानिवत्त्व-

मन्तरेण सम्भवति, चक्रतुरित्याद्यपि सिध्यति। **अचिकीर्तदिति;** कृत् णि चङिति स्थिते पूर्वं द्विर्वचने अभ्यासस्य लघुपरत्वाभावात् अवर्णाभ्यासत्वापत्तेरित्यर्थः। **अथेति।** यत्राङ्गवर्त्यवर्णपरत्वमभ्यासस्य द्वित्वानन्तरं तत्र द्विर्वचनेनान्तरङ्गनित्ययोर्बाधो ज्ञाप्यत इत्यर्थः। **चक्रतुरिति;** अत्राभ्यासस्यावर्णपरत्वभावेन पूर्वं द्वित्वाभावात् परत्वात् नित्यत्वाच्च यणि कृतेऽनच्कत्वात् द्वित्वं न स्यादित्यर्थः। **सूत्रमेवेति।** न तूक्तरूपज्ञापकव्याख्यानमित्येवकारार्थः। **यत्तु;** नुनावयिषतीत्यादि। **तेन;** 'द्विर्वचनेऽचि' इत्यनेन॥

इति श्रीमहोपाध्यायाद्वैतविद्याचार्यराघवसोमयाजिकुलावतंस-
श्रीतिरुमलाचार्यवर्यस्य सूनोरन्नम्भट्टस्य कृतौ
महाभाष्यप्रदीपोद्द्योतने प्रथमस्याध्या-
यस्य प्रथमे पादे अष्टमाह्निकम्॥

---

# नवममाह्निकम् ॥

## सू.—अदर्शनं लोपः ॥ १। १। ५९ ॥

॥ वा ॥ लोपसंज्ञायामर्थसंज्ञाकरणम् ॥

भा :—लोपसंज्ञायाम् अर्थस्य संज्ञा कर्तव्या। शब्दस्य मा भूदिति।

॥ वा ॥ इतरेतराश्रयं च ॥

भा :—इतरेतराश्रयं च भवति। का इतरेतराश्रयता? सतोऽदर्शनस्य संज्ञया भवितव्यम्। संज्ञया चादर्शनं भाव्यते। तदेतदितरेतराश्रयं भवति। इतरेतराश्रयाणि च कार्याणि न प्रकल्प्यन्ते।

॥ वा ॥ लोपसंज्ञायामर्थसतोरुक्तम्।

भा :—किमुक्तम्? अर्थस्य तावदुक्तम् 'इतिकरणो अर्थनिर्देशार्थः' इति। सतोऽप्युक्तम् 'सिद्धं तु नित्यशब्दत्वाद्' इति। नित्याः शब्दाः। नित्येषु च शब्देषु सतोऽदर्शनस्य संज्ञा क्रियते, न संज्ञयाऽदर्शनं भाव्यते।

॥ वा ॥ सर्वप्रसङ्गस्तु सर्वस्यान्यत्राहष्टत्वात् ॥

भा :—सर्वप्रसङ्गस्तु भवति। सर्वस्यादर्शनस्य लोपसंज्ञा प्राप्नोति। किं कारणम्? सर्वस्यान्यत्राहष्टत्वात्। सर्वो हि शब्दो यो यस्य प्रयोगविषयः स ततोऽन्यत्र न दृश्यते। त्रपु जतु इत्यत्राणोऽदर्शनम्। तत्र "अदर्शनं लोपः" इति लोपसंज्ञा प्राप्नोति। तत्र को दोषः।

॥ वा ॥ तत्र प्रत्ययलक्षणप्रतिषेधः।

**भा :—तत्र प्रत्ययलक्षणं कार्यं प्राप्नोति। तस्य प्रतिषेधो वक्तव्यः। "अचो ञ्णिति" इति वृद्धिः प्राप्नोति। नैष दोषः। ञ्णित्यङ्गस्याचो वृद्धिरुच्यते। यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गं भवति। यस्माच्चात्र प्रत्ययविधिः न तत् प्रत्यये परतः। यच्च प्रत्यये परतः न तस्मात्प्रत्ययविधिः। क्विपस्तर्ह्यदर्शनम्। तत्र "अदर्शनं लोपः" इति लोपसंज्ञा प्राप्नोति। तत्र को दोषः? तत्र प्रत्ययलक्षणप्रतिषेधः। तत्र प्रत्ययलक्षणं कार्यं प्राप्नोति। तस्य प्रतिषेधो वक्तव्यः। "ह्रस्वस्य पिति कृति तुग्" इति तुक् प्राप्नोति।**

प्र :—अदर्शनं लोपः। **अर्थस्येति।** स्वं रूपमिति वचनाच्छब्दस्यैव संज्ञा प्राप्नोतीति भावः। **इतरेतराश्रयमिति।** विधिप्रदेशेष्वेतच्चोद्यं नानुवादे 'चादिलोपे विभाषा' इत्यादौ। **इतिकरण इति।** इहापि स एवानुवर्तते लोपे इत्यन्वर्थसंज्ञाविज्ञानाद्वार्थस्य संज्ञा, न शब्दस्य। **सर्वप्रसङ्गस्त्विति।** यदि स्वभावतोऽप्रयुक्तस्यान्वाख्यानमात्रं क्रियते तदा सर्वस्य स्वविषयादन्यत्राप्रयोगादस्त्यदर्शनमिति लोपसंज्ञाप्रसङ्गः। **ञ्णित्यङ्गस्येति।** अङ्गसंज्ञा च विधानप्रतिबद्धा। न चात्र प्रत्ययस्य णितो विधानम्। **यस्माच्चेति।** त्रपुशब्दात्सोर्विधानम्। **न तत्प्रत्यय इति।** ञ्णिति वृद्धिनिमित्त इत्यर्थः। **यच्चेति।** सुशब्दे। **न तस्मादिति।** तस्मात्त्रपुशब्दात्सोरन्यस्याणोविधानं नास्तीत्यर्थः। अनाङ्गं कार्यं चोदयति। **क्विप इति** त्रपु इत्यत्र क्विपोऽदर्शनमस्ति स च कृदिति तुक्प्रसङ्गः।

उ :—अदर्शनं लोपः। नन्वर्थप्रत्यायनाय शब्दप्रयोगादर्शनशब्दादर्थस्य संज्ञा सिध्यति; अत आह—**स्वं रूपमिति।** यद्यपि शब्दोऽप्यर्थः, तथाऽपि तद्व्यतिरिक्तार्थस्येति भाष्यार्थः। **नानुवाद इति।** तत्र ह्यर्थनिमित्ता संज्ञा न संज्ञानिमित्तोऽर्थः पूर्वसिद्धस्यैवानुवादादित्यर्थः। नन्वत्रेतिर्नास्ति; अत आह—**इहापीति। स एव;** नवेति सूत्रस्थ एव। असंबद्धव्यवायान्नानुवृत्तिरिति चेत्तत्राह—**लोप इति।** लोपनं लोप इत्यन्वर्थता। इतरेतराश्रयपरिहारोपजीवनेन शङ्केयमित्याह—**यदीति।** भाष्ये **अणोऽदर्शनमिति;** 'त्रपुजतुनोः षुक्' इति विहितस्य। यस्माच्चेति भाष्यतात्पर्यमाह—**अङ्गसंज्ञेति।** त्रपुशब्दात्सोर्विधानेऽपि अणोऽविधानात्तस्मिन् परतोऽङ्गत्वाभावान्न वृद्धिप्रसङ्ग इति यस्माच्चेति भाष्यार्थः। तमक्षरारूढं करोति—**त्रपु-**

**शब्दादिति ।** पूर्वभाष्येण पौनरुक्त्यं निराह—**अनाङ्गमिति ।** चादिलोप इत्यादिसंग्रहार्थमर्थद्वित्युक्तम् ।

**॥ वा ॥ सिद्धं तु प्रसक्तादर्शनस्य लोपसंज्ञत्वात् ॥**

भाः—**सिद्धमेतत् । कथम्? प्रसक्तादर्शनं लोपसंज्ञं भवतीति वक्तव्यम् । यदि प्रसक्तादर्शनं लोपसंज्ञं भवतीत्युच्यते ग्रामणीः सेनानीः—अत्र वृद्धिः प्राप्नोति । प्रसक्तादर्शनं लोपसंज्ञं भवति षष्ठीनिर्दिष्टस्य । यदि षष्ठीनिर्दिष्टस्येत्युच्यते "चाहलोप एवेत्यवधारणम्" "चादिलोपे विभाषा" अत्र लोपसंज्ञा न प्राप्नोति । अथ प्रसक्तादर्शनं लोपसंज्ञं भवतीत्युच्यमाने कथमेवैतत् सिध्यति? को हि शब्दस्य प्रसङ्गः? यत्र गम्यते चार्थो, न च प्रयुज्यते । अस्तु तर्हि प्रसक्तादर्शनं लोपसंज्ञं भवतीत्येव । कथं ग्रामणीः सेनानीः? योऽत्राऽणः प्रसङ्गः क्विपासौ बाध्यते ॥ अदर्शनम् ॥**

प्रः—**सिद्धं त्विति ।** शास्त्रादर्थाद्वा प्रसक्तस्य यददर्शनं तल्लोपसंज्ञं भवति । स्थानेग्रहणमिहाप्यनुवर्तते । स्थानं च प्रसङ्गः । तेन प्रसङ्गे यददर्शनमिति लभ्यते । **ग्रामणीरिति ।** अर्थोपपदधातुसन्निधानादर्थाच्छास्त्राच्चाणः प्रसङ्गोऽस्तीति भावः । **षष्ठीनिर्दिष्टस्येति ।** षष्ठीग्रहणमप्यनुवर्तते । **चादिलोप इति ।** ततश्च शुक्ला व्रीहयो भवन्ति श्वेता गा आज्याय दुहन्तीति निपातविकल्पो न स्यात् । **अथेति ।** अत्रापि चादीनां शास्त्रान्नास्ति प्रसङ्गः । **क्विपाऽसौ बाध्यत इति ।** सत्सूद्विषेति क्विपो विधानादणोऽत्र प्रसङ्गाभावः ॥ ६० ॥

उ :—नन्वयमर्थोऽस्मात्सूत्रान्न प्रतीयते ; अत आह—**स्थानेति ।** ग्रामणीरित्यत्राणः प्रसङ्गमाह—**अर्थेति ।** **अर्थः**; कर्ता । **उपपदम्**; कर्मवाचकग्रामपदम् । **धातुः**; णीधातुः । अर्थग्रहणमर्थात्प्रासक्त्यर्थम् । **शास्त्रात्**; 'कर्मण्यण्' इत्यस्मात् । चाहयोर्लोपे प्रथमा तिङ्विभक्तिर्नानुदात्ता एवश्चेदवधारणे प्रयुज्यते । गम्यमानार्थत्वादप्रयोग एव लोपः । देवदत्त एव ग्रामं गच्छतु । स एवारण्यं गच्छतु । अरण्यं चेत्यर्थः । अत्र प्रथमा तिङ्विभक्तिर्नानुदात्ता । चादिपञ्चकलोपे प्रथमा तिङ्विभक्तिर्वानुदात्ता । एतदुदाहरति—**शुक्ला व्रीहय इति ।** अत्र श्वेता गावश्चेति चकारलोपः । ननु षष्ठीग्रहणाननुवृत्तावपि शुक्ला व्रीहय इत्यादौ स्वरो न सिध्यतीति [illegible]

भाष्ये—**अथ प्रसक्तेति।** शास्त्रत एव प्रसक्तिमभिप्रेत्येयं शङ्केत्याह—**अत्रेति।** शास्त्रादर्थाद्वा प्रसक्तिमात्रमभिमतम्, न तु शास्त्रत एवेत्यभिप्रेत्य समाधत्ते भाष्ये—**अस्तु तर्हीति। प्रसङ्गेति।** अपवादविषयपरिहारेणोत्सर्गप्रवृत्तेरित्यर्थः।

सू.—प्रत्ययस्य लुक्श्लुलुपः ॥ १। १। ६० ॥

**भा :—प्रत्ययग्रहणं किमर्थम्?**

**॥ वा ॥ लुमति प्रत्ययग्रहणमप्रत्ययसंज्ञाप्रतिषेधार्थम् ॥**

**भा :—लुमति प्रत्ययग्रहणं क्रियते। अप्रत्ययस्यैताः संज्ञा मा भूवन्निति। किं प्रयोजनम्?**

**॥ वा ॥ प्रयोजनं तद्धितलुकि कंसीयपरशव्ययोर्लुकि च गोप्रकृतिनिवृत्त्यर्थम् ॥**

**भा :—तद्धितलुकि गोनिवृत्त्यर्थम्। कंसीयपरशव्ययोश्च लुकि प्रकृतिनिवृत्त्यर्थम्। "लुक्तद्धितलुकि" इति गोरपि लुक् प्राप्नोति। प्रत्ययग्रहणान्न भवति। 'कंसीयपरशव्ययोर्यञञौ लुक् च' इति प्रकृतेरपि लुक् प्राप्नोति। प्रत्ययग्रहणान्न भवति। गोनिवृत्त्यर्थेन तावन्नार्थः।**

**॥ वा ॥ योगविभागात् सिद्धम् ॥**

**भा :—योगविभागः करिष्यते—"गोरुपसर्जनस्य" गोऽन्तस्य प्रातिपदिकस्योपसर्जनस्य ह्रस्वो भवति। ततः "स्त्रियाः" स्त्रीप्रत्ययान्तस्य प्रातिपदिकस्योपसर्जनस्य ह्रस्वो भवति। ततो "लुक्तद्धितलुकि" इति स्त्रिया इति वर्तते। गोरिति निवृत्तम्।**

**॥ वा ॥ कंसीयपरशव्ययोर्विशिष्टनिर्देशात् सिद्धम् ॥**

**भा :—कंसीयपरशव्ययोर्विशिष्टनिर्देशः कर्तव्यः। कंसीयपरशव्ययोर्यञञौ भवतश्छयतोश्च लुग्भवतीति। स चावश्यं विशिष्टनिर्देशः कर्तव्यः। क्रियमाणेऽपि वै प्रत्ययग्रहणे उकारसकारयोर्मा भूदिति। "कमेः सः" कंसः, परान् शृणातीति**

**परशुरिति। नैष दोषः। उणादयोऽव्युत्पन्नानि प्रातिपदिकानि। स एषोऽनन्यार्थो विशिष्टनिर्देशः कर्तव्यः। प्रत्ययग्रहणं वा कर्तव्यम्।**

**॥ वा ॥ उक्तं वा ॥**

**भाः—किमुक्तम्? ङ्याप्प्रातिपदिकग्रहणमङ्गभपदसंज्ञार्थं [1]छयतोश्च लुगर्थम् इति।**

प्र:—**प्रत्ययग्रहणमिति।** लुगादिविधौ क्वचित्प्रत्ययः साक्षान्निर्दिश्यते क्वचिदनुवर्तते क्वचित्सामर्थ्यात्प्रतीयते इति प्रश्नः। **अप्रत्ययस्येति।** अविद्यमानः प्रत्ययोऽस्मिन्नदर्शने इति तदप्रत्ययम्। **गोरपीति।** पञ्चेन्द्र इत्यादौ तु निर्दिश्यमानस्यादेशा भवन्तीति वचनात् स्त्रीप्रत्ययस्यैव लुग् भविष्यति न तदन्तस्य। 'गोरतद्धितलुकि' इत्यत्र गोर्लुकि कृते पञ्चगुरित्यादौ गोशब्दान्तत्वाऽभावात्समासान्ताप्राप्तावतद्धितलुकीति प्रतिषेधोऽनर्थकः स्यादिति चेत्। कृते समासान्ते लुक् स्यादित्यर्थवानेव प्रतिषेधः। ननु स्वभावतोऽप्रवृत्तस्यादर्शनं लुक्संज्ञम्। न च तत्र गोशब्दस्य स्वभावतोऽप्रवृत्तिः। नैष दोषः। शास्त्रानुसारिभिरस्यार्थस्य दुर्ज्ञानत्वात्। **प्रकृतेरपीति।** समुदायस्य षष्ठीनिर्देशात्। **योगविभागादिति।** एकयोगनिर्दिष्टानामप्येकदेशाऽनुवृत्तिरित्येतत् प्रकारान्तरेण प्रतिपाद्यते। **विशिष्टनिर्देशादिति।** छयतावेवात्र निर्दिष्टव्याविस्यर्थः। **उणादय इति।** अतः कृकमिकंसकुम्भेति कंसशब्दस्य भेदेनोपादानात् क्वचिदुणादयो व्युत्पत्तिकार्यं न लभन्त इत्यर्थः। यञञोस्तु विधानसामर्थ्याल्लुगभावः। **स एषोऽनन्यार्थ इति।** प्रकृतिनिवृत्त्यर्थ एव न तु प्रत्ययान्तरनिवृत्त्यर्थोऽपीत्यर्थः।

उ:—ननु प्रत्ययग्रहणाभावे लुगादिसंज्ञा तददर्शनस्यैवेति न स्याद्; अत आह—**लुगादीति। साक्षादिति।** 'यूनि लुक्' 'फक्फिञोः' इति। अत्रातिप्रसङ्गनिरासाय विशेषे निर्दिष्टे सामान्यमपि तत्रान्तर्भूततया निर्दिष्टमिति भावः। **क्वचिदिति।** 'विभाषा घ्राधेट्शाच्छासः' इत्यादौ। **सामर्थ्यादिति।** 'यूनि लुक्' इत्यादौ। ननु प्रत्ययादर्शनमप्रत्यय इत्यप्रत्यये संज्ञाया इष्टत्वात्तन्निषेधो न युक्तः; अत आह—**अविद्यमान इति।** प्रतियोगित्वेनेत्यादिः। ननु

---

(१) प्र० पु० यञ्छयोश्च

'गोस्त्रियोः' इत्यत्र स्त्रीशब्दे स्वरितलिङ्गात् स्त्र्यधिकारविहितटाबादीनां ग्रहणात्प्रत्ययग्रहणपरिभाषया तदन्तविधौ सति पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्र इत्यत्रेन्द्रशब्दस्यापि लुक्प्रसङ्ग इति कुतो नोक्तम्; अत आह—**पञ्चेति**। गोर्लुगभावं शङ्कते—**गोरिति**। 'गोरतद्धितलुकि' इति समासान्ताप्राप्तेरित्यन्वयः। तत्र हेतुः—**गोर्लुगिति**। पञ्चभिः गोभिः क्रीतः पञ्चगु 'तेन क्रीतम्' इति ठकोऽध्यर्धपूर्वेति लुक्। अत्र 'लुक्तद्धितलुकि' इति गोशब्दस्य लुक्प्रतिषेधानर्थक्यमित्यर्थः। परिहरति—**तत्कृ इति**। परत्वादित्यादिः। न च समासान्तेन व्यवधानान्नगोर्लुगिति वाच्यम्। 'लुक्तद्धितलुकि' इत्यस्य परसप्तमीत्वाभावात्। तथात्वेऽपि निर्दिश्यमानस्येति न्यायेन वचनासामर्थ्याद्व्यवधानेऽपि लुक्प्रसङ्ग इति भावः। नित्यशब्दाश्रयेण शङ्कते—**नन्विति**। शास्त्रपूर्वकप्रतिपत्त्यभिप्रायेण परिहरति—**नैष दोष इति**। **समुदायस्येति**। यस्येति लोपेनान्त्यलोपस्य सिद्धतया लुक्यलोऽन्त्यपरिभाषानुपस्थानात् निर्दिश्यमानस्येति न्यायेन सर्वस्य लुक्स्यादित्यर्थः। योगविभागे गो स्त्रिया इति सूत्रविन्यासप्रसङ्गादाह—**एकेति**। **छयताविति;** कंसशब्दात् 'प्राक्क्रीताच्छः' परशुशब्दाद् 'उगवादिभ्यो यत्' तयोर्लुकि कंसीयस्य विकारः कांस्यम् परशव्यस्य-विकारः पारशवः। भाष्ये—**परांछृणोतीति**। 'अडपरयोः खनिशृभ्यां डिच्च' इत्युप्रत्ययः। **कंसशब्दस्येति**। धातौ सप्तमीनिर्दिष्टे केवलधातोः प्रयोगाभावात्तदादिग्रहणात् कमिग्रहणेनैव सिद्धेऽपीत्यादिः। ननूणादीनामपि व्युत्पन्नत्वेऽपि यञिञो-र्निवृत्त्यर्थं विशिष्टनिर्देशः कार्यः; अत आह—**यञिञोरिति**। अन्यशब्दः प्रकृति-व्यतिरिक्तप्रत्ययपरः। तेन नञ्समासे प्रकृतिरभिधीयत इत्याशयेनाह—**प्रकृतीति**। भाष्ये **छयतोश्चेति**। सति प्रातिपदिकाधिकारे कंसीयपरशव्ययोरवयवभूतं यत्प्रातिपदिकं तस्मात्परस्य लुगित्युक्ते छयतोर्लुग्भवतीत्यर्थः।

**॥ वा ॥ षष्ठीनिर्देशार्थं तु ॥**

**भाः—षष्ठीनिर्देशार्थं तर्हि प्रत्ययग्रहणं कर्तव्यम्। षष्ठीनिर्देशो यथा प्रकल्पेत।**

**॥ वा ॥ अनिर्देशे हि षष्ठ्यर्थाप्रसिद्धिः ॥**

**भाः—अक्रियमाणे हि प्रत्ययग्रहणे षष्ठ्यर्थस्याप्रसिद्धिः स्यात्। कस्य? स्थानेयोगत्वस्य। क्व पुनरिह षष्ठीनिर्देशार्थेनार्थः प्रत्ययग्रहणेन। यावता सर्वत्रैव षष्ठ्युच्चार्यते—अणिञोः,**

तद्राजस्य यञञोः। शप इति? इह न काचित् षष्ठी—"जनपदे लुप्" इति। अत्रापि प्रकृतं प्रत्ययग्रहणनुवर्तते। क्व प्रकृतम्? "प्रत्ययः परश्च" इति। तद्वै प्रथमानिर्दिष्टम्। षष्ठीनिर्दिष्टेन चेहार्थः। "ङ्याप्प्रतिपदिकाद् इत्येषा पञ्चमी प्रत्यय इति प्रथमायाः षष्ठीं प्रकल्पयिष्यति "तस्मादित्युत्तरस्य" इति। प्रत्ययविधिरयम्। न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति। नायं प्रत्ययविधिः। विहितः प्रत्ययः प्रकृतश्चानुवर्तते।

॥ वा ॥ सर्वादेशार्थं वा वचनप्रामाण्यात् ॥

भा :—सर्वदेशार्थं तर्हि प्रत्ययग्रहणं कर्तव्यम्। लुक्श्लुलुपः सर्वादेशा यथा स्युः। अथ क्रियमाणेऽपि प्रत्ययग्रहणे कथमिव लुक्श्लुलुपः सर्वादेशा लभ्याः? वचनप्रामाण्यात्। प्रत्ययग्रहणसामर्थ्यात्। एतदपि नास्ति प्रयोजनम्। आचार्यप्रवृत्तिर्ज्ञापयति—लुक्श्लुलुपः सर्वादेशा भवन्तीति। यदयं—'लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये' इति लोपे प्रकृते लुकं शास्ति।

॥ वा ॥ उत्तरार्थं तु ॥

भा :—उत्तरार्थं तर्हि प्रत्ययग्रहणं कर्तव्यम्। क्रियते तत्रैव—"प्रत्ययलोपे प्रत्ययलक्षणम्" इति। द्वितीयं कर्तव्यम्। कृत्स्नप्रत्ययलोपे प्रत्ययलक्षणं यथा स्यात्। एकदेशलोपे मा भूदिति 'आघ्नीत' 'सं रायस्पोषेण ग्मीय' इति। प्रत्ययस्य० ॥ ६० ॥

प्र :—**षष्ठीनिर्देशार्थं त्विति ;** विशिष्टस्य षष्ठ्यर्थस्य स्थानेयोगत्वस्य निर्देशार्थमित्यर्थः। असति प्रत्ययस्येत्येतस्मिन् यः कश्चिदानन्तर्यादिः सम्बन्धः स्यात्। ततश्च 'जनपदे लुप्' इति पञ्चालाः शोभना इत्यादौ जनपदवाचिनोऽनन्तरस्य शोभनादेरपि लुप् स्यात्। **सर्वादेशार्थं वेति।** षष्ठीनिर्देशार्थत्वं तु स्थितमेवेति वार्तिककारेण विकल्पार्थो वाशब्दः प्रयुक्तः। आगस्त्यकौण्डिन्ययोरित्यत्र हि यदि लुगनुवर्तते सर्वेकैकस्य आदेशाः स्युः। अथ नानुवर्तते द्वावेवादेशौ विधीयेते तदागस्त्यादेशेन

सर्वत्र भाव्यमिति आगस्तीयाश्छात्रा इति न सिध्यति अवृद्धत्वात् प्रकृतेः। प्रत्ययस्येति तूच्यमाने गोत्रेऽलुगचीति लुकि प्रतिषिद्धे संनियोगशिष्टत्वात् लुगभावादगस्त्यादेशाभावादागस्तीया इति सिध्यतीति। भाष्यकारस्तु षष्ठ्यर्थे वाशब्दं व्याचक्षाणः षष्ठीनिर्देशार्थत्वं नेच्छति। स ह्येवं मन्यते—'आगस्त्यकौण्डिन्ययोः' इत्यत्र 'यस्कादिभ्यो गोत्र' इत्यतो गोत्रग्रहणमनुवर्तते लुगिति च। तेनागस्त्यकौण्डिन्ययोर्यो गोत्रे विहितस्तस्य लुक्, परिशिष्टस्य तु प्रकृतिभागस्य यथासंख्यमगस्तिकुण्डिनचावादेशाविति सूत्रार्थः। **अथ क्रियमाणेऽपीति।** 'अलोऽन्त्यस्य' इति वचनात् प्रत्ययस्य योऽन्त्यस्तस्यैव प्राप्नुवन्तीति भावः। **वचनप्रमाण्यादिति।** प्रत्ययस्येति वचनसामर्थ्यादलोऽन्त्यस्येति बाध्यते। वचनप्रामाण्यादिति ब्रुवतो वार्तिककारस्यापि षष्ठीनिर्देशार्थत्वमनभिप्रेतमेव। षष्ठीनिर्देशार्थत्वे हि प्रत्ययस्येत्यस्य चरितार्थत्वात्कथमलोऽन्त्यविधिर्बाध्येतेति। **यदयमिति।** विपर्ययस्तु न कल्प्यते अनुपसंजातविरोधित्वात् लोपस्तावदन्त्यादेशः स्थितस्ततो लुगारभ्यमाणो यद्यन्त्यस्य स्याल्लोपानुवृत्त्यैव सिद्धत्वाल्लुकं न विदध्यात्। विहितस्तु सर्वादेशत्वस्य ज्ञापकः संपद्यते। **द्वितीयमिति।** लोपविशेषणापेक्षया द्वितीयम्, पाठापेक्षया तु तृतीयं भवति। **एकदेशलोप इति।** अवयवक्रिया समुदायेऽपि व्यपदिश्यते। यथा पटो दग्ध इति। अवयवे हि पटाख्योऽवयवी समवेत इति तस्याप्यसौ दाहः। न त्वयं गौणव्यपदेशः। गौणत्वे हि सति मुख्यस्यैव संप्रत्ययान्न कर्तव्यमेव प्रत्ययग्रहणं स्यात्। **आघ्नीतेति।** ररत्वादुपधालोपे कृते पुनः प्रसङ्गविज्ञानादनुनासिकलोपः।

उ :—षष्ठीशब्दस्य तदर्थविशेषे लक्षणेत्याशयेन व्याचष्टे—**विशिष्टस्येति।** प्रत्ययस्येत्युक्ते स्थान इत्यनुवृत्त्या स्थानषष्ठी लभ्यत इत्यर्थः। स्थानेयोगत्वमेवार्थः। अन्यथा शोभना इत्यादेरपि लुप्प्रसङ्गात्। **यद्यपि;** प्रत्ययग्रहणस्यैवेदं प्रयोदनमुक्तम् तथापि षष्ठ्यर्थप्रक्रमानुसारेण यः कश्चिदित्याद्युपक्रममात्रमिति बोध्यम्। **ननु क पुनरित्यादिना** प्रत्ययग्रहणस्य दूषितत्वादाकारोऽनुपपन्नः; अत आह—**षष्ठीति।** स्थानिविशेषनिर्देशार्थत्वमिति यावत्। भाष्यकृता दूषितं न तु वार्तिककृतेति वाशब्दो युक्त इत्यर्थः। वार्तिकमते प्रत्ययस्येत्यस्यावश्यकत्वमाह—**आगस्त्यस्येति। एकैकस्येति।** यथासंख्यासंभवादित्यर्थः। **सर्वत्रेति।** प्राग्दीव्यतीयप्रत्ययविषयभूत इत्यर्थः। **न सिध्यति;** शैषिकप्रत्यये विवक्षिते अगस्त्यादेशे वृद्धत्वाभावेन छस्याप्राप्तेरित्यर्थः। तदेतदाह—**अवृद्धत्वादिति। गोत्र इति।**

'यस्कादिभ्यो गोत्रे' इति प्रकरणे येषां गोत्रप्रत्ययानां लुगुक्तस्तेषामजादौ प्राग्दीव्यतीये प्रत्यये लुङ् न स्यादिति सूत्रार्थः। **सन्नियोगेति**। लुक्सन्नियोगेनादेशविधानात्तदभावे तदभाव इत्यर्थः। **आगस्तीया इति**। अगस्त्यशब्दादृष्यण्। 'ततो वृद्धाच्छः' यस्येत्यणो लोपः। सूर्यतिष्येति यलोपः। आगस्त्यकौण्डिन्ययोर्गोत्र-प्रत्ययस्य बहुत्वे वर्तमानस्य लुक्स्यात्प्रकृत्योः क्रमादगस्तिकुण्डिनजावादेशौ स्तः। आग-स्त्यस्य कौण्डिन्यस्य वापत्यानि बहूनि अगस्तयः कुण्डिनाः। अगस्त्यशब्दादृष्यणः कुण्डिनशब्दाद्गर्गादियञश्च लुक्। **सूत्रार्थ इति**। तथा च लुकि प्रतिषिद्धे सन्नियोगशिष्टादेशाभावादागस्तीया इति सिध्यतीत्याशयः। वचनं न सूत्रं, तस्य संज्ञा-विधानेन चरितार्थत्वात्, किन्तु तदेकदेश इत्याह—**प्रत्ययस्येति**। पुनः श्रुत्या सर्वस्य प्रत्ययस्येति लभ्यते इति भावः। वार्तिककृतोऽपि षष्ठीनिर्देशार्थत्वं नातीव संमतमित्याह—**वचनेति**। ननु लुग्लोपयोर्द्वयोरप्यन्त्यादेशत्वे अन्यतरस्य सर्वादेशत्वे वाच्ये लोपस्यैव सर्वादेशत्वं किं न स्याद्; अत आह—**विपर्यय इति**। न उपसंजातः विरोधिः वैयर्थ्यशङ्कारूपो यस्य तस्य भावस्तस्मादित्यर्थः। **पाठेति**। प्रत्ययसूत्रे द्वयमनुवर्तमानं तृतीयमित्यर्थः। नन्ववयवलोपे प्रत्ययलोपस्य गौणत्वान्मुख्यसंभवे गौणाग्रहणात्प्रत्ययस्ये-त्यनुवृत्तौ न प्रयोजनम् अत आह—**अवयवेति**। **न त्विति**। एकदेशलोपे अवयविलोपव्यपदेशो न गौणः किन्तु मुख्य एव समुदायलोपः स्यादिति भावः। गौण-त्वनिरसनस्य व्यतिरेकमुखेन प्रयोजनं निराह—**गौणत्व इति**। **प्रत्ययग्रहणम्**; द्वितीयमित्यादिः। **उपधालोप इति**; गमहनेत्यनेन। **अनुनासिकेति**। अनुदात्तोपदेशेत्यनेन। आङ्पूर्वाद्धन्तेः 'आङो यमहनः' इत्यात्मनेपदम्। विध्यादि-लिङस्तादेशे सीयुटि सलोपे उपधालोपे 'हो हन्तेः' इति कुत्वे आघ्नीत। अत्र सीयुट्-सकारस्य प्रत्ययैकदेशस्य लोपेऽपि प्रत्ययलक्षणेनानुनासिकलोपः स्यात्। संपूर्वाद्गमेर्विध्यादि-लिङ्। समो गमीत्यात्मनेपदम्। 'बहुलं छन्दसि' इति शपो लुक्। इटोऽदादेशे सीयुडागमे सलोपे उपधालोपे च संग्मीयेति। अत्रापि पूर्ववदनुनासिकलोपप्रसङ्गः। यद्यप्यङ्गवृत्तन्यायेन नानुनासिकलोपो भविष्यति, तथापि तदनाश्रयेणैतदुक्तम्॥

## सू.—प्रत्ययलोपे प्रत्ययलक्षणम्॥ १। १। ६१॥

**भा:—प्रत्ययग्रहणं किमर्थम्? "लोपे प्रत्ययलक्षणम्" इती-यत्युच्यमाने सौरथी वैहतीति गुरूपोत्तमलक्षणः ष्यङ् प्रसज्येत। नैष दोषः। नैवं विज्ञायते—लोपे प्रत्ययलक्षणं भवति। प्रत्ययस्य**

**प्रादुर्भाव इति। कथं तर्हि? प्रत्ययो लक्षणं यस्य कार्यस्य तल्लुप्तेऽपि भवति। इदं तर्हि प्रयोजनम्। सति प्रत्यये यत्प्राप्नोति तत्प्रत्ययलक्षणं यथा स्यात्। लोपोत्तरकालं यत्प्राप्नोति तत्प्रत्ययलक्षणं मा भूदिति। किं प्रयोजनम्। ग्रामणिकुलम्। सेनानिकुलम् इत्यत्रौत्तरपदिके ह्रस्वत्वे कृते 'ह्रस्वस्य पिति कृति तुक्' इति तुक् प्राप्नोति। स मा भूदिति। यदि तर्हि यत्सति प्रत्यये प्राप्नोति तत्प्रत्ययलक्षणेन भवति, लोपोत्तरकालं यत्प्राप्नोति तन्न भवति। जगत् जनगदित्यत्र तुग् न प्राप्नोति। लोपोत्तरकालं ह्यत्र तुगागमः। तस्मान्नार्थ एवमर्थेन प्रत्ययग्रहणेन। कस्मान्न भवति—ग्रामणिकुलं सेनानिकुलम्? बहिरङ्गं ह्रस्वत्वम्, अन्तरङ्गस्तुक् "असिद्धं बहिरङ्गमन्तरङ्गे"। इदं तर्हि प्रयोजनम्—कृत्स्नप्रत्ययलोपे प्रत्ययलक्षणं यथा स्यादेकदेशलोपे मा भूदिति। 'आघ्नीन' 'सं रायस्पोषेण ग्मीय'। पूर्वस्मिन्नपि योगे प्रत्ययग्रहणस्यैतत्प्रयोजनमुक्तम्। अन्यतरच्छक्यमकर्तुम्।**

प्र॰—**प्रत्ययग्रहणमिति**। प्रत्ययनिमित्तं कार्यं लोपे भवतीत्युक्ते प्रत्यासत्त्या प्रत्ययस्यैव लोप इति विज्ञास्यत इति भावः। **सौरथीति**। प्रत्ययस्य लक्षणं दर्शनप्रादुर्भाव इत्यर्थं परिकल्प्यैतदुच्यते। सुरथस्य विहतस्य चापत्यं गोत्रं स्त्रीति इञि कृते मकारनकारयोर्भावे यथा गुरूत्तमत्वात् ष्यङ् भवति एवं लोपेऽपि स्यात्। प्रत्ययग्रहणे तु सति विरुद्धत्वान्नायमर्थो भवति—प्रत्ययस्य लोपे कृते तस्यैव पुनः प्रादुर्भाव इति। एवं हि लोपविधानमनर्थकम् स्यात्। तस्मात् प्रत्ययनिमित्तं कार्यं प्रत्ययलोपे भवतीति वाक्यार्थ आश्रीयते। **नैवमिति**। संदेहेऽपि व्याख्यानात्करणसाधनो लक्षणशब्द आश्रयिष्यते। अन्यथा क्रियमाणेऽपि प्रत्ययग्रहणे भावसाधनाशङ्का न निवर्तते प्रत्ययलोपे प्रत्ययान्तरस्य प्रादुर्भाव इति। यथा ग्रामणीरिति क्विपो लोपे स्वाद्युत्पत्तिः। ततश्चाधोगित्यत्र पदसंज्ञा न स्यादिति करणसाधनत्वे व्याख्यानमेव शरणमिति भावः। लक्षणशब्दोपादानसामर्थ्याद्वा करणसाधनो लक्षणशब्दः। अन्यथा लोपे प्रत्यय इत्येव वक्तव्यं स्यात्। **सति प्रत्यय इति**। प्रत्ययशब्दोऽत्र लुप्तसप्तमीको निर्दिश्यते तेन प्रत्यये सति यत्कार्यं दृष्टं तल्लोपे सति भवति। न च ग्रामणीरित्यत्र क्विपि सति तुग्

दृष्टः ह्रस्वाभावात् । कृते क्विलोपे ह्रस्वत्वे च तुक्प्राप्तिः । **जगदिति ।** द्युतिगमिजुहोत्यादीनां द्वे च 'इति' गमेः क्विप् । अत्रान्तरङ्गत्वात्पूर्वं विलोपः । 'गमः क्वौ' इत्ययं हि लोपोऽङ्गविशेषापेक्षत्वाद्बहिरङ्गः । भिन्नविषयत्वाच्च येन नाप्राप्तिन्यायो न भवति । सति त्वस्मिन्न्याये नैव विलोपः स्यात् । तस्मात्सति क्विपि नाऽत्र तुकः प्राप्तिः, अपि तु विलोपे कृते । **अन्यतरदिति ।** एकमेव प्रत्ययग्रहणं सामर्थ्यात् कृत्स्नप्रत्ययलोपप्रतिपादने समर्थम् ।

उः—लक्षणशब्देन निमित्तमुक्तम् । बहुव्रीहौ च कार्यलाभ इत्याभिप्रेत्याह—**प्रत्ययेति । प्रत्यासत्त्येति;** कृतेऽपि प्रत्ययग्रहणे यत्किञ्चित्प्रत्ययलोपे प्रत्ययान्तरनिमित्तं कार्यं मा भूदिति प्रत्यासत्तिराश्रयेया । तथा च तयैव प्रत्ययस्य लोप इति विशेषणसंभवाद्यस्य कस्यचिल्लोपे तन्निमित्तप्रत्ययोत्पत्तिरिति सूत्रार्थः संपद्यते । तदाह—**सुरथस्येति । मकारेति;** रमेरौणादिके हनिकुषीत्यादिना क्थनि, हन्तेश्च क्तेऽनुदात्तेत्यनुनासिकलोपः नन्वस्मिन्नर्थे प्रत्ययग्रहणेऽपि लुप्तस्य सोःप्रादुर्भावः स्याद्; अत आह—**प्रत्ययेति ।** विरुद्धमर्थमेवाह—**प्रत्ययलोप इति ।** तत्र हेतुः **एवं हीति । सन्देहे** भावसाधनत्वकरणसाधनत्वसन्देहे; **अन्यथा;** व्याख्यानं शरणं न चेदित्यर्थः । शङ्कामेवाह—**प्रत्ययेति । प्रत्ययान्तरस्येति ।** विरोधाल्लुप्तप्रत्ययाग्रहणमिति भावः । तर्हि भावसाधनत्वे किं दूषणम्; अत आह—**ततश्चेति । अधोगिति ।** दुहेर्लङ्, दादेरिति घत्वं, भष्भावः हल्ङ्यादिलोपः । पदसंज्ञायां प्रत्ययस्याभावादित्यर्थः । करणसाधनत्वे हेत्वन्तरमाह—**लक्षणेति ।** लोपे प्रत्यय इत्युक्तेऽपि 'अस्तिर्भवन्तीपरः' इति न्यायेन प्रत्ययो भवत्युत्पद्यते इत्यर्थलाभादित्यर्थः । ननु प्रत्ययलोप इत्युक्ते सति प्रत्यय इति कथं लभ्यते; अत आह—**प्रत्यय इति ।** ग्रामणिकुलमित्यत्र तुगभावमुपपादयति—**न चेति । ह्रस्वाभावादिति ।** क्विपि सतीगन्तत्वाभावादिति भावः । ननु गमेः क्विपि विलोपात्पूर्वं परत्वादनुनासिकलोपे सत्यपि क्विपि तुकः प्राप्तेर्विलोपेऽपि प्रत्ययलक्षणेन तुकः श्रवणं भविष्यति; अत आह—**अत्रेति ।** ननु नित्यप्राप्ते विलोपे आरभ्यमाण अनुनासिकलोपः तस्य बाधकः स्याद्; अत आह—**भिन्नेति । अस्मिन्;** भिन्नविषयेऽपि येन नाप्राप्तिन्याये । **तस्मात्** विलोपात्पूर्वं मकारलोपाभावात् । भाष्ये **बहिरङ्गमिति ।** प्रातिपदिकत्वक्लीबत्वसापेक्षादर्थनिरपेक्षस्तुगन्तरङ्ग इत्यर्थः । **सामर्थ्यात्;** प्रत्ययग्रहणेत्यादिः । लोपे प्रत्ययलक्षणमित्युक्तेऽपि दोषपरिहारादिति भावः ।

**भा :—अथ द्वितीयं प्रत्ययग्रहणं किमर्थम्? प्रत्ययलक्षणं यथा स्यात्। वर्णलक्षणं मा भूदिति। गवे हित गोहितम्। रायः कुलं रैकुलमिति।**

प्र:—**वर्णलक्षणमिति।** प्रत्ययलोपे तल्लक्षणमित्युच्यमाने प्रत्ययस्य यत्र कार्ये निमित्तभावः प्रत्ययरूपाऽऽश्रयेण वर्णरूपताऽऽश्रयेण वा तत्सर्वं स्यात्। सर्वनाम्नो वस्तुमात्रपरामर्शित्वात्। प्रत्ययग्रहणे सति प्रत्ययनिमित्तमेव कार्यं प्रत्ययलोपे भवति, न वर्णरूपतानिमित्तम्। **रैकुलमिति।** अवयवद्वारेणात्र प्रत्ययस्याप्यादेशं प्रति निमित्तत्वमस्त्येव प्रत्ययाश्रयस्त्वायादेशो न भवतीति न प्रवर्तते। अनेनैव न्यायेन न, धातुलोप आर्धधातुके' इत्यत्र भिन्विकृण्व्योर्विचि, 'लोपो व्योर्वलि' इति वलोपस्य वलनिमित्तत्वादार्धधातुकनिमित्तत्वाभावाद्गुणप्रतिषेधो न भवति। तेन सुधे सुकरिति भवति न तु सुधी सुकीरिति।

उ:—नन्वसति प्रत्ययपदे बहुव्रीहेरभावात्तल्लभ्यकार्यातिदेशो न स्यादिति कस्मान्नोक्तमिति शङ्कां निराकुर्वन् समाधानभाष्यतात्पर्यमाह—**प्रत्ययलोप इति। सर्वनाम्न इति;** तल्लक्षण इत्यत्रत्यतच्छब्दस्येत्यर्थः। **वस्तुमात्रेति;** प्रत्ययमात्रं परामृश्यते। तेन प्रत्ययनिमित्तमेव कार्यमित्यवधारणं न लभ्यत इत्यर्थ। **प्रत्ययग्रहण इति।** अन्यथा लाघवात् तल्लक्षणमित्येव सूत्रं स्यादिति भावः। **अवयवद्वारेण।** ङसित्यत्रत्याच्त्वेन रूपेण। **अनेनैवेति।** बहुव्रीगैव आर्धधातुके लब्धे पुनरार्धधातुकग्रहणादवधारणलाभ इति भावः। **तेनेति।** भिविकृव्योरिदित्वान्नुमि, विचि, तस्य लोपे, प्रत्ययलक्षणेन लघूपधगुणे, सोस्ताभ्यां गतिसमासे समासत्वात्स्वाद्युत्पत्तौ, हल्ङ्यादिनलोपयोः कृतयोः सुधे सुकरिति भवति। गुणाभावे तु सुधिन् सु इति स्थिते 'सौ च' इत्युपधादीर्घे सुनलोपयोस्सुधीति भवति। सुकृन् सु इति स्थिते 'सर्वनामस्थाने च' इत्युपधादीर्घे 'उपधायाश्च' इतीत्वे सुनलोपयोः र्वोरुपधायाः' इति दीर्घे सुकीरिति भवति।

**भा :—किमर्थं पुनरिदमुच्यते?**

**॥ वा ॥ प्रत्ययलोपे प्रत्ययलक्षणवचनं सदन्वाख्यानाच्छास्त्रस्य ॥**

**भा :—"प्रत्ययलोपे प्रत्ययलक्षणम्" इत्युच्यते। सदन्वाख्यानाच्छास्त्रस्य। सच्छास्त्रेणान्वाख्यायते, सतो वा शास्त्र-**

**मन्वाख्यायकं भवति। सदन्वाख्यानाच्छास्त्रस्य। " उगिदचां सर्वनामस्थानेऽधातोः " इतीहैव स्यात्—गोमन्तौ यवमन्तौ, गोमान् यवमानित्यत्र न स्यात्। इष्यते च स्यादिति। तचान्तरेण यत्नं न सिध्यतीत्यतः प्रत्ययलोपे प्रत्ययलक्षणवचनम्। इत्येवमर्थमिदमुच्यते। अस्ति प्रयोजनमेतत्। किं तर्हीति।**

प्र:—**किमर्थमिति;** स्थानिवद्भावेन सिद्धमिति भावः। **सदन्वाख्यानादिति।** शास्त्रं कर्तृ करणं वा शेषत्वेन विवक्षितमिति षष्ठी कृता। **सच्छास्त्रेणेति।** शास्त्रेण करणेनाचार्यः स्मर्ता सद्भिद्यमानं वस्तु निमित्तत्वेनान्वाचष्टे। **सतो वेति।** शास्त्रस्यैवाविच्छेदेन प्रवर्तमानस्य [1]कर्तृत्वमन्वाख्यान इति पूर्वस्माद्व्याख्यानादस्य विशेषः। न च स्थानिवद्भावेन सिध्यति। अतृणेडित्यादावल्विधित्वात्।

उ:—ननु शास्त्रं कर्तृ करणं वा आद्ये सतः कर्मत्वात् ' उभयप्राप्तौ कर्मणि ' इति नियमाच्छास्त्रस्येति षष्ठी न स्यात् ' कर्मणि च ' इति निषेधात्सदन्वाख्यानादिति समासोऽप्यनुपपन्नः। द्वितीये षष्ठ्यनुपपत्तिः; अत आह—**शास्त्रमिति। अविच्छेदेन;** प्रवाहेत्यादिः। **कर्तृत्वमिति।** काष्ठानि पचन्तीतिवद्वैवक्षिकमित्यर्थः। **अल्विधित्वादिति।** इमो हलादिसार्वधातुकापेक्षत्वादित्यर्थः। तृहेर्लङि, श्नमि, इमि, हल्ङ्यादिलोपे, ढत्वे जश्त्वे अतृणेडिति भवति।

**॥ वा ॥ लुक्युपसंख्यानम् ॥**

**भा:—लुक्युपसंख्यानं कर्तव्यम्। पञ्च सप्त। किं पुनः कारणं न सिध्यति?**

**॥ वा ॥ लोपे हि विधानम् ॥**

**भा:—लोपे हि प्रत्ययलक्षणं विधीयते। तेन लुकि न प्राप्नोति।**

**॥ वा ॥ न वाऽदर्शनस्य लोपसंज्ञित्वात् ॥**

---

(१) मु. पु. स्वतन्त्रत्वम्

**भा :—न वा कर्तव्यम्। किं कारणम्? अदर्शनस्य लोपसंज्ञित्वात्। अदर्शनं लोपसंज्ञं भवतीत्युच्यते। लुमत्संज्ञाश्चाप्यदर्शनस्य क्रियन्ते। तेन लुक्यपि भविष्यति।**

प्र :—**लुक्युपसंख्यानमिति।** तक्रकौण्डिन्यन्यायेन लोपसंज्ञाया लुगादिसंज्ञया बाधनादिति भावः। लुग्ग्रहणस्योपलक्षणार्थत्वात् श्लुलुपावपि गृह्येते। **न वादर्शनस्येति।** अदर्शनमात्रस्य लोपसंज्ञा विधीयमाना लुगादिसंज्ञाविषयमप्यवगाहते। न च संज्ञानां बाध्यबाधकभावः समावेशदर्शनाच्चासामिति कडारसूत्रे वक्ष्यते। लोपस्य संज्ञि लोपसंज्ञि तस्य भावो लोपसंज्ञित्वं तस्मादित्यर्थः।

उ :—नन्वेकस्य संज्ञाद्वयाभावादुपसंख्यानवैयर्थ्यम्; अत आह—**तक्रेति।** संज्ञासु तन्न्यायो नास्तीत्याह—**न चेति।** बहुव्रीहौ मत्वर्थीयानुपपत्तेरिनन्तेन षष्ठीसमासमाह—**लोपस्येति।** लोपसंज्ञाया इत्यर्थः।

**भा :—यद्येवम्।**

**॥ वा ॥ प्रत्ययादर्शनं तु लुमत्संज्ञम् ॥**

**भा :—प्रत्ययादर्शनं तु लुमत्संज्ञमपि प्राप्नोति। तत्र को दोषः?**

**॥ वा ॥ तत्र लुकि श्लुविधिः प्रतिषेध्यः ॥**

**भा :—तत्र लुकि श्लुविधिः प्राप्नोति। स प्रतिषेध्यः। अस्ति हन्ति "श्लौ" इति द्विर्वचनं प्राप्नोति।**

**॥ वा ॥ न वा पृथक्संज्ञाकरणात् ॥**

**भा :—न वा एष दोषः। किं कारणम्? पृथक् संज्ञाकरणात्। पृथक्संज्ञाकरणसामर्थ्याल्लुकि श्लुविधिर्न भविष्यति। तस्माददर्शनसामान्याल्लोपसंज्ञा लुमत्संज्ञा अवगाहते, यथैव तर्हि अदर्शनसामान्याल्लोपसंज्ञा लुमत्संज्ञा अवगाहते। एवं लुमत्संज्ञा अपि लोपसंज्ञामवगाहेरन्। तत्र को दोषः? अगोमती गोमती सम्पन्ना गोमतीभूतेति "लुक् तद्धितलुकि" इति**

**ङीपो लुक् प्रसज्येत। ननु चात्रापि न वा पृथक् संज्ञाकरणाद् इत्येव सिद्धम्। यथैव तर्हि पृथक्संज्ञाकरणसामर्थ्यादत्र लुमत्संज्ञा लोपसंज्ञां नावगाहन्ते एवं लोपसंज्ञापि लुमत्संज्ञां नावगाहेत। तत्र स एव दोषो लुक्युपसंख्यानमिति। अस्त्यन्यल्लोपसंज्ञया: पृथक्संज्ञाकरणे प्रयोजनम्। किम्? लुमत्संज्ञासु यदुच्यते तल्लोपमात्रे मा भूदिति।**

**॥ वा ॥ लुमति प्रतिषेधाद्वा ॥**

**भा:—अथवा यदयं—"न लुमताङ्गस्य" इति प्रत्ययलक्षण-प्रतिषेधं शास्ति, तज्ज्ञापयत्याचार्यो—'भवति लुकि प्रत्ययलक्षणम्' इति।**

प्र:—**प्रत्ययादर्शनं त्विति** लुक्श्लुलुप्संज्ञानां संकरः प्राप्नोतीत्यर्थः। **तत्र लुकि श्लुविधिरिति**। उपलक्षणं चैतत्। तेन श्लावपि लुग्विधिः प्राप्नोति। जुहोतीति 'उतो वृद्धिर्लुकि हलि' इति लुक्यपि लुग्विधिप्रसङ्गः। हरीतकीति लुक्। तद्धितलुकीति तथा लुकि लुग्विधिः। लवणः सूप इति। युक्तवद्भावः स्यात्। **न वा पृथगिति**। एकयैव संज्ञया प्रदेशवाक्येषु संज्ञिप्रत्यायने सिद्धेऽनेकसंज्ञाविधान-सामर्थ्यात्तद्भावितग्रहणं विज्ञायते। तदाश्रितस्वरूपव्यापारास्ते लुगादय आश्रीयन्ते आवृत्तिर्वा लुगादिशब्दानामाश्रीयत इति तद्भावितग्रहणं सिध्यति। विधिप्रदेशेषु चेतरेतराश्रयदोषानवतारो नित्यशब्दाश्रयणाद्भाविसंज्ञाविज्ञानाद्वा। **यथैवेति**। तिसृणां संज्ञानां विधानसामर्थ्यात्परस्परविषयावगाहनं तासां मा भूत्। लोपसंज्ञाविषये तु ताः प्रवर्तेरन्। **गोमतीति**। च्वेर्लोपे कृते लुक्संज्ञायां सत्यां 'लुक् तद्धितलुकि' इति लुक् प्राप्नोति। पुंवद्भावस्त्वत्र न भवति वैयधिकरण्यात्। महद्भूता ब्राह्मणीत्यत्र तु भवति सामानाधिकरण्यात्। नित्यत्वाद्धि शब्दानां क्वचिद्विकारस्य जनिकर्तृत्वं क्वचित्प्र-कृतेः। **ननु चात्रापीति**। लुगादिसंज्ञानां भेदेनोपादानात्तद्भावितग्रहणमित्यर्थः। **अस्त्यन्यदिति**। प्रत्ययात्प्रत्ययदर्शनस्य लोपसंज्ञा यथा स्यादिति। लोपमात्रे मा भूदिति। यथा गोमतीभूतेति च्वेर्लोपे कृते 'लुक् तद्धितलुकि' इति न भवति। तस्माल्लोपसंज्ञायां नास्ति तद्भावितग्रहणम्।

उ:—यथाश्रुते इष्टापत्तिमाशङ्कय लुमत्संज्ञमित्यनेन सूचितमर्थमाह—**लुगिति**। श्लुविधिमाह—**उत इति**। **हरीतकीति**। 'हरीतक्यादिभ्यश्च' इति विका-

राद्यर्थप्रत्ययस्य लुप्। **लवण इति।** 'लवणाल्लुक्' इति संसृष्टार्थस्य ठको लुक्। ननु लुगादिशब्दैर्विहितमदर्शनं लुगादिसंज्ञमित्ययमर्थः सूत्रात्कथं लभ्यते; अत आह— **तत्राश्रितेति।** आश्रितस्वरूपस्य व्यापारोऽदर्शनविषयो यैस्ते तथोक्ताः। लक्षणया लुगादिशब्दा अदर्शनविधायकलुगादिपराः। तथा चादर्शनविधायका लुगादिशब्दाः प्रत्ययादर्शनस्य संज्ञा इत्युक्ते प्रत्यासत्तेर्थस्यादर्शनस्य विधायकास्तस्येति लभ्यत इत्यर्थः। नन्वेवं प्रदेशेषु संज्ञया लुगादिशब्दार्थप्रतिपत्तिस्तत्प्रतिपत्त्यधीना च अदर्शनविशेषस्य लुगादिसंज्ञेति प्रतिपत्ताावितरेतराश्रयत्वम्; अत आह—**आवृत्तिर्वेति।** आवृत्तौ वाक्यद्वयम्। तत्रैकेन वाक्येनानाश्रितविशेषप्रत्ययादर्शनस्य लुगादिसंज्ञा क्रियते; ततः प्रदेशेषु लुगादिशब्दार्थप्रतिपत्तौ द्वितीयवाक्येन सांकर्यपरिहाराय नियमः क्रियते, लुगिति यददर्शनम् तदेव लुक्संज्ञं भवति इति। एवमितरत्रापि पूर्ववाक्याद्द्वितीयवाक्ये लुगाद्यनुवृत्त्योक्तनियमो लभ्यते। वस्तुतो भाविसंज्ञयेतरेतराश्रयस्य सुपरिहारत्वाल्लक्षणयोक्तार्थप्रतिपत्तेः क्लिष्टत्वादाह —**आवृत्तिर्वेति।** तथा च लुगिति यददर्शनम् तल्लुक्संज्ञमित्याद्येकवाक्यत्वेऽपि सिद्ध्यतीति वाक्यभेदनियमयोरनुपयोग इति ज्ञेयम्। ननु तद्भावितग्रहणे यथैवेति शङ्कानुपपत्तिः; अत आह—**तिसृणामिति।** तद्भाविताग्रहणाच्छङ्केयमित्यर्थः। **परस्परेति।** लुगादीनां मध्ये यस्यादर्शनम् भाव्यते तस्यैव संज्ञेत्यर्थः। **वैयधिकरण्यादिति।** भवनक्रियायां प्रकृतेः कर्तृत्वादित्यर्थः। **सामानाधिकरण्यादिति।** अमहती महती संपन्ना महद्भूतेत्यत्र प्रकृतेरेव कर्तृत्वेऽपि विकृतिशब्दस्य प्रकृतिवृत्तित्वात्सामानाधिकरण्यम्। अत एव गौणत्वान्महच्छब्दस्यात्वाभावः। ननु क्वचित्प्रकृतेः कर्तृत्वं क्वचिद्विकृतेरित्यत्र किं मानम्; अत आह—**नित्यत्वादिति।** प्रयोगद्वयदर्शनादिति भावः। लोपसंज्ञायामपि तद्भावितग्रहणं मन्वानः शङ्कते—भाष्ये **यथैव तर्हीति।** लोपसंज्ञायां तद्भावितग्रहणाभावेऽपि पृथक्संज्ञाकरणस्य प्रयोजनमस्तीत्याह भाष्ये— **अस्त्यन्यदिति।** स्वयं प्रयोजनान्तरमाह—**प्रत्ययेति।**

**॥ वा ॥ सतो निमित्ताभावात्पदसंज्ञाभावः ॥**

**भा :—सन् प्रत्ययो येषां कार्याणामनिमित्तं राज्ञः पुरुष इति; स लुप्तोऽप्यनिमित्तं स्याद्—राजपुरुष इति। अस्तु तस्यानिमित्तम्—या स्वादौ पदमिति पदसंज्ञा, या तु 'सुबन्तं पदम्' इति पदसंज्ञा सा भविष्यति। सत्येतत् प्रत्यय आसीत्। अनया भविष्यत्यनया न भविष्यतीति। लुप्त इदानीं प्रत्यये**

**यावत एवावधेः स्वादौ पदमिति पदसंज्ञा तावत एव सुबन्तं पदमिति। अस्ति च प्रत्ययलक्षणेन यजादिपरतेति कृत्वा भसंज्ञा प्राप्नोति।**

**॥ वा ॥ तुग्दीर्घत्वयोश्च विप्रतिषेधानुपपत्तिरेकयोगलक्षणत्वात् परिवीरिति ॥**

**भा :—तुग्दीर्घत्वयोश्च विप्रतिषेधो नोपपद्यते। क? परिवीरिति। किं कारणम्? एकयोगलक्षणत्वात्। एकयोगलक्षणे हि तुग्दीर्घत्वे। इह लुप्ते प्रत्यये सर्वाणि प्रत्ययाश्रयाणि कार्याणि पर्यवपन्नानि भवन्ति तान्येतेन प्रत्युत्थाप्यन्ते। अनेनैव तुग्, अनेनैव च दीर्घत्वमिति तदेकयोगलक्षणं भवति। एकयोगलक्षणानि च न प्रकल्पन्ते।**

**॥ वा ॥ सिद्धं तु स्थानिसंज्ञानुदेशादान्यभाव्यस्य ॥**

**भा :—सिद्धमेतत्। कथम्? स्थानिसंज्ञाऽन्यभूतस्य भवतीति वक्तव्यम्। किं कृतं भवति? सत्तामात्रमनेन क्रियते। यथाप्राप्ते तुग्दीर्घत्वे भविष्यतः। तद्वक्तव्यं भवति। यद्यप्येतदुच्यते; अथवैतर्हि स्थानिवद्भावो, नारभ्यते, "स्थानिसंज्ञान्यभूतस्यानल्विधौ" इति वक्ष्यामि।**

प्रः—**सतो निमित्ताभावादिति**। निमित्तशब्देन निमित्तत्वमुच्यते तेन यस्य सतः कार्यं प्रति निमित्तत्वं नाभूत्स लुप्तोऽप्यनिमित्तं स्यादित्यर्थः। **राज्ञ इति**। सति ङसि भसंज्ञायां स्वादिष्विति पदसंज्ञा बाधितेति नलोपो नाभूदल्लोपश्चाभूदिति लुप्तेऽपि तस्मिन्नलोपो न स्यादल्लोपश्च स्यात्। **अस्तु तस्या इति**। द्वे चात्र पदसंज्ञे। एका स्वादिष्वित्यवयवस्य, सा च भसंज्ञया बाधिता। द्वितीया सुबन्तत्वेन समुदायस्य, सा च लुप्तेऽपि स्थितैव। अल्लोपस्तु 'न लुमताङ्गस्य' इति प्रतिषेधान्न भवति। **सत्येतदिति**। कालविप्रकर्षप्रतिपादनायानद्यतनप्रत्ययप्रयोगः। राज्ञ इत्यत्रावधिभेदाद्भसंज्ञयावयवस्यैव पदसंज्ञा बाध्यते न समुदायस्य सुबन्तत्वनिमित्ता। लुप्ते प्रत्ययेऽवधिभेदाभावात्प्रत्ययलक्षणेन प्राप्तया भसंज्ञया द्वे अपि पदसंज्ञे बाधितव्ये। एकापवादत्वेन द्वितीया परत्वेनेति भावः। **अनयेति**। पदसंज्ञाद्वयमनेन दर्शितम्। भसंज्ञा

प्रत्ययलक्षणेन वर्णाश्रयापि भवति । यथा अतृणेडितीमागमः । **तुग्दीर्घत्वयोश्चेति ;** अनेनैव प्रत्ययनिमित्तानि कार्याणि लुप्तेऽपि प्रत्यये विधीयन्ते इति क्रमाभावात्पौर्वापर्यं न प्रकल्पते कार्यस्य प्रधान्यान्नानेन शास्त्रव्यपदेशौ विधीयेते । **सिद्धं त्विति** । अन्यो भावोऽन्यद्वस्तु । स्थान्यपेक्षयादेशः । अन्यभाव एवान्यभाव्यमिति स्वार्थे ष्यञ् । तत्र परिवीरिति स्थानिनः क्विपो या संज्ञा यो व्यपदेशः पित् कृत्प्रत्यय इत्यादिः स लोपस्यानेन विधीयते ततस्तन्निबन्धनं शास्त्रं प्रवर्तत इति सिद्धो विप्रतिषेधः । **सत्तामात्रमिति ।** कृदादिव्यपदेशस्येत्यर्थः ।

उ :—वार्तिकतद्व्याख्यानभाष्ययोर्विरोधं परिहरति—**निमित्तशब्देनेति ।** अभावो भावस्याप्युपलक्षणमित्याह—**अल्लोपश्चेति । सा चेति ।** समानाश्रयत्वादित्यर्थः । **लुप्तेऽपीति ।** समुदाये भसंज्ञाया अभावादित्यर्थः । ननु भवतु समुदाये पदसंज्ञया नलोपः, प्रकृते भसंज्ञया अल्लोपः किं न स्याद् ; अत आह—**अल्लोपस्त्विति । कालेति ।** प्रत्ययकाले इयमाशङ्का न तु प्रत्ययलोपकालेऽपीति द्योतयितुमासीदित्युक्तमिति भावः । विप्रकर्षमेवाह—**राज्ञ इत्यत्रेति । एका ;** स्वादिष्विति विहिता । **द्वितीया ;** 'सुप्तिङन्तम्' इति विहिता । ननु पदस्य द्विर्वचनं न वाक्यस्येत्याशङ्क्य, नेदं द्विर्वचनं किन्तु वाक्यद्वयमित्याह—**संज्ञाद्वयमिति ।** ननु वर्णाश्रयत्वात् कथं प्रत्ययलक्षणेन संज्ञा ; अत आह—**भसंज्ञेति ।** लक्ष्यानुसारेण क्वचिद्वर्णाश्रयेऽपि प्रत्ययलक्षणमङ्गीक्रियते । वर्णस्य प्राधान्येन यत्राश्रयणं तत्र वा तन्निषेध इति भावः । एकयोगलक्षणत्वमुपपादयति—**अनेनैवेति । पौर्वापर्यमिति ;** तथा च 'विप्रतिषेधे परम्' इति दीर्घो न प्राप्नोतीत्यर्थः । ननु शास्त्रनिमित्तयोरतिदेशपक्षे पौर्वापर्यं संभवतीत्यत आह—**कार्यस्येति । व्यपदेशो** निमित्तम्, पित्कृदिति व्यपदेशो वा । परिपूर्वस्य व्येञः क्विपि संप्रसारणे पूर्वत्वे कृते, ह्रस्वस्येति तुकः संप्रसारणस्येति दीर्घस्य च प्राप्तौ परत्वाद्दीर्घे सति परिवीरिति रूपम् । भाष्ये **प्रत्यवपन्नानि ;** मृतानि । अप्राप्तानीति यावत् । नन्वन्यभावशब्दस्य षष्ठीसमासे कर्मधारये वाप्यङ्गोऽनुपपत्तिः ; भावस्य भावान्तरायोगाद् ; अत आह—**अन्य इति । स्वार्थ इति ;** चातुर्वर्ण्यादित्वात् । **परिवीरिति ।** परिवीरित्यत्रेति यावत् । सत्ता न स्थानिनः, किन्तु तद्व्यपदेशस्येत्याह—**कृदिति ।**

**भा :—यद्येवम् 'आङो यमहनः' आत्मनेपदं भवतीति हन्तेरेव स्यात्, वधेर्न स्यात् । न हि काचिद्धन्तेः संज्ञास्ति, या**

वधेरनिर्दिश्येत। हन्तेरपि संज्ञास्ति। का? हन्तिरेव कथम्? "स्वं रूपं शब्दस्याशब्दसंज्ञा" इति वचनात्स्वं रूपं शब्दस्य संज्ञा भवतीति हन्तेरपि हन्तिः संज्ञा भविष्यति।

॥ वा ॥ भसंज्ञाङीप्ष्फगोरात्वेषु च सिद्धम् ॥

भाः—भसंज्ञाङीप्ष्फगोरात्वेषु च सिद्धं भवति। भसंज्ञा—राज्ञः पुरुषः। राजपुरुषः। प्रत्ययलक्षणेन "यचि" इति भसंज्ञा प्राप्नोति। "स्थानिसंज्ञान्यभूतस्यानल्विधौ" इति वचनान्न भवति॥ भसंज्ञा॥ ङीप्—चित्रायां जाता चित्रा। प्रत्ययलक्षणेनाणन्तादितीकारः प्राप्नोति स्थानिसंज्ञान्यभूतस्यानल्विधौ इति वचनान्न भवति॥ ङीप्॥ ष्फ—वतण्डी। प्रत्ययलक्षणेन "यञन्ताद्" इति ष्फः प्राप्नोति। "स्थानिसंज्ञान्यभूतस्यानल्विधौ" इति वचनान्न भवति॥ ष्फ॥ गोरात्वम्—गामिच्छति। गव्यति। प्रत्ययलक्षणेनामि औतोऽम्शसोः इत्यात्वं प्राप्नोति। स्थानिसंज्ञान्यभूतस्यानल्विधौ इति वचनान्न भवति॥ गोरात्वम्॥

॥ वा ॥ तस्य दोषो ङौनकारलोपेत्त्वेम्विधयः ॥

भाः—तस्यैतस्य लक्षणस्य दोषः। ङौ नकारलोप—आर्द्रे चर्मन्, लोहिते चर्मन्। प्रत्ययलक्षणेन "यचि" इति भसंज्ञा सिद्धा भवति। "स्थानिसंज्ञान्यभूतस्यानल्विधौ" इति वचनान्न प्राप्नोति। इत्वम्।—आशीः। प्रत्ययलक्षणेन हलि इतीत्वं सिद्धं भवति। 'स्थानिसंज्ञान्यभूतस्यानल्विधौ' इति वचनान्न प्राप्नोति। इम्—अतृणेट्। प्रत्ययलक्षणेन हलीति इम् सिद्धो भवति। "स्थानिसंज्ञान्यभूतस्यानल्विधौ" इति वचनान्न प्राप्नोति। सूत्रं च भिद्यते। यथान्यासमेवास्तु। ननु चोक्तम्—सतो निमित्ताभावात् पदसंज्ञाभावस्तुग्दीर्घत्वयोश्च विप्रतिषेधानुपपत्तिरेकयोगलक्षणत्वात्परिवीः इति। नैष दोषः। [१]कथम्? वक्ष्यत्यत्र परिहारम्। इहापि परिवीरिति शास्त्रपरविप्रतिषेधेन परत्वाद्दीर्घत्वं भविष्यति।

---

(१) मु. पु. कथमिति नास्ति।

प्र :—**यद्येवमिति ;** हन्ति स्वरूपेणोपादायात्मनेपदं विधीयते न तु कांचित्संज्ञामाश्रित्येति भावः। **न हीति।** यद्यपि धातुसंज्ञाऽस्ति तथापि न तदुपादानेनात्मनेपदं विधीयते। **हन्तेरपीति।** आङो यमहन इति सूत्रोपात्तो हन्तिः संज्ञा, प्रयोगस्थस्तु संज्ञीति अभेदेऽपि हन्तिसंज्ञातिदिश्यते। **चित्रायां जातेति।** 'चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम्' इत्यणो लुक्। टिड्ढाणञित्यत्राच इत्यधिकारात् ङीपोऽल्विधित्वम्। वतण्डीति। यथा आवट्यायनीति चापं बाधित्वा सर्वत्रग्रहणापकर्षात् ष्फो भवत्येवं शार्ङ्गरवादिपाठात् प्राप्तं ङीनं बाधित्वा प्राचां ष्फः स्यात्। अत इत्यधिकारादल्विधिःष्फः। **गव्यतीति।** औतोऽम्शसोरित्यत्राचीत्यनुवर्तनादल्विधित्वम्। **चर्मन्निति।** सुपां सुलुगिति ङेर्लुकि अत्र भसंज्ञाया अभावान्नलोपः प्राप्नोतीति 'न ङिसम्बुद्ध्योः' इति वक्तव्यं जायते। **परत्वाद्दीर्घत्वमिति।** सति प्रत्यये यत्कार्यं दृष्टं तल्लुप्तेऽपि भवतीति सूत्रार्थः। परिवीयेत्यादौ च सति प्रत्यये दीर्घो दृष्टो न तुगिति परिवीरित्यत्रापि दीर्घ एव भवति।

उ :—भाष्ये तद्वक्तव्यमिति गौरवे चोदिते लाघवप्रतिपादनाय—**यद्यपीति।** यदीत्यर्थः। **अथवैतर्हि ;** एवं तर्हि। **तदुपादानेन ;** तन्मात्रोपादानेन। अभेदे संज्ञासंज्ञित्वानुपपत्तिः ; अत आह—**सूत्रेति।** भाष्ये **न भवतीति ;** भसंज्ञाया अल्विधित्वादित्यर्थः। 'नक्षत्रेण युक्तः कालः' इत्यणो 'लुबविशेषे' इति लुपि युक्तवद्भावात् स्त्रीलिङ्गता। ततो जातार्थे सन्धिवेलेति सूत्रेणाण्। तस्य वार्तिकेन लुगित्याह—**चित्रेति।** ननु वतण्डशब्दात् 'वतण्डाच्च' इति विहितस्य यञो 'लुक्स्त्रियाम्' इति लुकि, प्रत्ययलक्षणेन प्राप्तं 'प्राचां ष्फ तद्धित' इति ष्फं परत्वाद्बाधित्वा शार्ङ्गरवादिपाठात् ङीन् भविष्यतीति वतण्डीत्यत्र प्रत्ययलक्षणेऽपि न दोषः ; अत आह—**यथेति।** 'आवट्याच्च' इति चापं बाधित्वावट्यायनीति यथा ष्फो भवतीत्यन्वयः। ष्फस्य बाधकत्वे हेतुः—**सर्वत्रेति।** अस्य 'प्राचां ष्फ तद्धितः' इति पूर्वत्रान्वयात्, तस्य च बाधकविषयेऽन्यत्र चेत्यसमर्थत्वात्प्राचां मतेन ङीनं बाधित्वा प्रत्ययलक्षणेन ष्फः स्यादित्यर्थः। **अचीत्यनुवर्तनादिति ;** तद्धितश्शसो निवृत्त्यर्थमिति भावः। न चाम्साहचर्यात्सुप्शस एव ग्रहणम्। अचिनवमित्यत्राम्त्वनिवृत्तये शसा साहचर्येणाम्यपि सुब्ग्रहणस्य वाच्यत्वादचीत्यनुवृत्त्यैव सुप्शसो लाभः। **अभावादिति।** अनल्विधाविति प्रतिषेधादित्यर्थः। **वक्तव्यमिति।** तथा च गौरवम्। प्रत्ययलक्षणे तु न वक्तव्यमिति लाघवम्। **आङ्पूर्वाच्छ्यतेः क्विपि** 'श्वास

इदङ्हलोः' इति इत्त्वे सकारस्य रुत्वे 'र्वोरुपधाया' इति दीर्घे आशीः। **भाष्ये इम्।** 'तृणह इम्' इत्यनेन। **अतृणेडिति** भाष्ये; तृहेर्लङि तिपि श्नमि, 'इतश्च' इतीकारलोपे, हल्ङ्याब्दिलोपे, इमागमे आड्गुणे, हस्य ढत्वे, चर्त्वे ऋवर्णान्नस्येति णत्वे, अतृणेडिति रूपम्। भाष्ये **कथमिति;** प्रश्नः। **वक्ष्यतीत्युत्तरम्।** 'न ङिसंबुद्ध्योः' इति ज्ञापकात्प्रत्ययलक्षणेन भसंज्ञा नास्तीत्यनुपदमेव वक्ष्यतीत्यर्थः। शास्त्रनिमित्तयोरन्यतरातिदेशेन भाष्यकृता परिहृते स्वयं प्राधान्यातिदेशेऽपि न दोष इत्याह—**सति प्रत्यय इति।** यद्यपि जगदित्यत्र तुगभावप्रसङ्गेन दूषितोऽयमर्थः। तथापि यस्मिन् सति यत्कार्यं दृष्टं तल्लोपेऽपि भवतीत्याश्रित्य पूर्वं दूषितम्। इदानीं कार्यनिमित्तप्रत्यये यस्मिन् कस्मिन् सति यत्कार्यं दृष्टं तत्तत्कार्यनिमित्तप्रत्ययान्तरस्य लोपेऽपि भवतीत्याश्रीयते। **परिवीयेति;** अत्र तुङ्निमित्तप्रत्यये सत्यपि तुङ्न दृष्ट इति परिवीरित्यत्र तन्निमित्तविलोपे तुक् न भवति। एवमागत्येत्यत्र तुक्सिद्धिः।

**भा :—कानि पुनरस्य योगस्य प्रयोजनानि ?**

**॥ वा ॥ प्रयोजनमपृक्तशिलोपे नुममामौ गुणवृद्धी दीर्घत्वेमडाट्श्नम्विधयः ॥**

**भा :—अपृक्तलोपे शिलोपे च कृते नुम् अमामौ गुणवृद्धी दीर्घत्वमिम् अडाटौ श्नम्विधिरिति प्रयोजनानि। नुम्—अग्ने त्री ते वाजिना त्री षधस्था ता ता पिण्डानाम्॥ अमामौ॥ हे अनड्वन् अनड्वान्। गुणः—अधोक् अलेट्। वृद्धिः—न्यमार्ट्। दीर्घत्वम्—अग्ने त्री ते वाजिना त्री षधस्था ता ता पिण्डानाम्। इम्—अतृणेट्। अडाटौ—अधोक् अलेट् ऐयः औनः। श्नम्विधिः—अभिनोऽत्र अच्छिनोऽत्र। अपृक्तशिलोपयोः कृतयोरेते विधयो न प्राप्नुवन्ति। प्रत्ययलक्षणेन भवन्ति। नैतानि सन्ति प्रयोजनानि। स्थानिवद्भावेनाप्येतानि सिद्धानि। न सिध्यन्ति। आदेशः स्थानिवदित्युच्यते। न च लोप आदेशः। लोपोऽप्यादेशः। कथम्? आदिश्यते यः स आदेशः, लोपोऽप्यादिश्यते। दोषः खल्वपि स्याद् यदि लोपो नादेशः स्यात्। इह "अचः परस्मिन् पूर्वविधौ" इत्येतस्य भूयिष्ठानि लोप उदाहरणानि तानि न स्युः। यत्र तर्हि स्थानिव-**

**द्भावो नास्ति, तदर्थमयं योगो वक्तव्यः। क्व च स्थानिवद्भावो नास्ति? योऽल्विधिः। किं प्रयोजनम्?**

प्र:—**प्रयोजनमिति।** यद्यप्यल्विध्यर्थमतृणेडित्यादौ तथापि विशेषविहितत्वान्नुमादयोऽप्यस्यैवोदाहरणानीति भावः। **अनड्वन्निति।** पूर्वं संबुद्धिलोपमाश्रित्यैतदुक्तम्। यदि तु विशेषविहितत्वाद् 'अम् संबुद्धौ' इति पूर्वमम् प्रवर्तते तदा संबुद्धिलोपो न स्यात्। **ऐय इति।** इयर्तेर्लङ् तिप् शपः श्लुर्द्विर्वचनमर्तिपिपर्त्योश्चेतीत्वमभ्यासस्यासवर्णे' इतीयङ्। **औन इति।** उन्देर्लङ् सिप् श्नम् 'श्नान्नलोपो दश्च' इति रुत्वम्। **न च लोप इति।** दिशिरुच्चारणक्रियो, न च लोप उच्चार्यते अभावरूपत्वात्। **लोपोऽपीति।** प्रतिपादनक्रियोऽत्र दिशिरिति भावः।

उ:—विशेषविहितत्वात्संबुद्धिलोपात्प्रागमादयो भविष्यन्तीत्यत आह—**यदीति। न स्यादिति;** विशेषविहितेनामा बाधितत्वात्। न चैवमपि येन नाप्राप्तिन्यायेन अमा संबुद्धिलोपः कृतो न बाध्यत इति वाच्यम्। भिन्नविषये तन्न्यायाभावात्। तस्मात्पूर्वमेव संबुद्धिलोप इत्यर्थः। भाष्ये **त्री ते वाजिनेति।** अन्तरङ्गत्वात्तु शेश्छन्दसीति पूर्वरूपं शिलोपे प्रत्ययलक्षणेन नुमुपधादीर्घावित्यर्थः। **द्विर्वचनं;** 'श्लौ' इत्यनेन। इत्वं, रपरत्वं, हलादिशेषः, तत इयङ् गुणः रपरत्वम्, हल्ङ्यादिलोपः। भाष्ये **अभिन इति।** भिदेर्लङ् सिप्, श्नम्, 'दश्च' इति रुत्वम्। लोपस्यानादेशत्वमुपपादयति—**दिशिरिति।**

**॥ वा ॥ प्रयोजनं ङौ नकारलोपेत्वेम्विधयः ॥**

**भा:—ङौ नकारलोपेत्वेम्विधयः प्रयोजयन्ति। ङौ नकारलोपस्तावत्—आर्द्रे चर्मन् लोहिते चर्मन्। स्थानिवद्भावः "अनल्विधौ" इति वचनान्न प्राप्नोति। प्रत्ययलक्षणेन तु यचीति भसंज्ञा सिद्धा भवति। इत्वम्—आशीः। स्थानिवद्भावः "अनल्विधौ" इति वचनान्न प्राप्नोति। प्रत्ययलक्षणेन तु हलीतीत्वं सिद्धं भवति। इम्—अतृणेट्। स्थानिवद्भावः "अनल्विधौ" इति वचनान्न प्राप्नोति। प्रत्ययलक्षणेन तु हलीतीम् सिद्धो भवति।]**

**॥ वा ॥ भसंज्ञाङीपुष्फगोरात्वेषु च दोषः ॥**

भा :—भसंज्ञाङीप्ष्फगोरात्वेषु च दोषो भवति। [भसंज्ञा—राज्ञः पुरुषो राजपुरुषः। प्रत्ययलक्षणेन तु यचीति भसंज्ञायां "न लोपः प्रातिपदिकान्तस्य" इति नलोपो न प्राप्नोति। स्थानिवद्भावस्त्वनल्विधाविति वचनान्न प्राप्नोति। ङीप्—चित्रायां जाता चित्रा। प्रत्ययलक्षणेन त्वणन्तादिनीकारः प्राप्नोति। स्थानिवद्भावस्त्वनल्विधाविति वचनान्न प्राप्नोति। ष्फ—वलण्डी। प्रत्ययलक्षणेन तु यञन्तादकारान्तादिति ष्फः प्राप्नोति। स्थानिवद्भावस्तु अनल्विधाविति वचनान्न प्राप्नोति। गोरात्वम्—गामिच्छति गव्यति। प्रत्ययलक्षणेन "औतोऽम्शसोः" इत्यात्वं प्राप्नोति। स्थानिवद्भावस्त्वनल्विधाविति वचनान्न प्राप्नोति। भसंज्ञायां तावन्न दोषः। आचार्यप्रवृत्तिर्ज्ञापयति—न प्रत्ययलक्षणेन भसंज्ञा भवतीति। यदयम्—"न ङिसंबुद्ध्योः" इति ङौ प्रतिषेधं शास्ति। ङीप्यपि, नैवं विज्ञायते—अणन्तादकारान्तादिति। कथं तर्हि? अण्योऽकार इति। ष्फेऽपि नैवं विज्ञायते। यञन्तादकारान्तादिति। कथं तर्हि? यञ् योऽकार इति। गोरात्वेऽपि, नैवं विज्ञायते—अमि अचीति। कथं तर्हि? अच्यमीति। प्रयोजनान्यपि तर्हि नैतानि सन्ति। यत्तावदुच्यते—ङौ नकारलोप इति। क्रियत एतन्न्यास एव—"न ङिसंबुद्ध्योः" इति। इत्त्वमपि। वक्ष्यत्येतत्—शास इत्त्वे आशासः क्वौ इति। इड्विधिरपि—हलीति निवृत्तम्। यदि हलीति निवृत्तम् तृणहानि अत्रापि प्राप्नोति। एवं तर्हि—"अचि न" इत्यनुवर्तिष्यते। न तर्हीदानीमयं योगो वक्तव्यः। वक्तव्यश्च। किं प्रयोजनम्? प्रत्ययं गृहीत्वा यदुच्यते तत्प्रत्ययलक्षणेन यथा स्यात्। शब्दं गृहीत्वा यदुच्यते तत्प्रत्ययलक्षणेन मा भूदिति। किं प्रयोजनम्? शोभना दृषदोऽस्य ब्राह्मणस्य सुदृषद् ब्राह्मणः "सोर्मनसी अलोमोषसी" इत्येष स्वरो मा भूदिति॥ प्रत्ययलोपे प्रत्ययलक्षणम्॥

प्र :—**अण् योऽकार इति;** अकारेणाणन्तं न विशेष्यते। किं तर्हि? अणेव! सर्वश्चाण् अकार एवेति विशेषणसामर्थ्यात् श्रूयमाणाकाररूपादण इति विज्ञायते अथवा

ऽण्योऽकार इति अणाऽकारो विशेष्यत इति वर्णनिमित्तो ङीप् न तु प्रत्ययनिमित्त इति प्रत्ययलक्षणाभावः। **यञ् योऽकार इति।** अकारावयव इत्यर्थः। अथवा यञवयवे यञ्शब्दोऽत्र वर्तते यञवयवो योऽकार इत्यर्थः। पूर्ववदेतद् व्याख्येयम्। **अच्यमीति।** अच् प्रधानं तद्विशेषणममीति तदादिविध्यभावः। तत्र वर्णनिमित्तमात्त्वं न प्रत्ययनिमित्तमिति दोषाभावः। **कियत एतदिति।** त्वयापि ज्ञापनार्थमवश्यं वक्तव्यमिति भावः। **शास इत्त्वे इति।** कृतेऽप्यस्मिन् सूत्रे नियमार्थमेतद्वक्तव्यमाशास्ते इत्यादौ मा भूत्। अकृते तु विध्यर्थम्। आशास्त इत्यादौ तु न भवति। शासु अनुशिष्टावित्यस्यैव तत्र ग्रहणात्। **प्रत्ययं गृहीत्वेति।** स्थानिवद्भावेन सिद्धे सत्ययं योगो नियमार्थः। प्रत्यय एव यस्य लक्षणं तत्प्रत्ययलोपे यथा स्यात्। सोमनसी इत्यत्र स्वनिनस्मन्ग्रहणानि चेति वचनादस् प्रत्ययश्चाप्रत्ययश्च गृह्यते इति सुहृषदित्यत्र स्थानिवद्भावाभावादुत्तरपदाद्युदात्तत्वाभावे नञ्सुभ्यामित्यन्तोदात्तत्वं भवति। तत्र चोत्तरपदादिरित्यधिकारादसन्तमुत्तरपदं गृह्यत इति सुहृषदित्यत्रापि स्थानिवद्भावादसन्तत्वमुत्तरपदस्य स्यात्॥ ६२॥

उ:—भाष्ये अण्योऽकार इत्यत्र योऽणकारः, योऽकारः अणिति वचनस्य वृत्तिद्वयं भवति। विशेषणविशेष्यत्वे कामचारात्। तत्राद्यमाश्रित्याह—**अथवेति।** अकारेऽण्यञ्विशेषणे तु वर्णनिमित्तत्वमिति प्रत्ययलक्षणाभाव इत्यर्थः। अच्यमीति भाष्यतात्पर्यमाह—**अच्प्रधानमिति।** **तदादीति**; अचीत्यत्रेत्यर्थः। तदादिविधौ प्रत्ययनिमित्तत्वं स्यात्तदभावात्तु न प्रत्ययलक्षणमित्याह—**तत्रेति।** **ज्ञापनार्थमिति।** प्रत्ययलक्षणेन भञ्ज्ञा नेत्येतज्ज्ञापनार्थमित्यर्थः। **नियमार्थमिति।** शास इदित्यत्र सामान्येन शासिमात्रग्रहणमिति नियमार्थम्। **एतत्**; वर्तिकम्। आशासः क्वावेवेत्त्वं नान्यत्रेत्युक्तम्। वस्तुतोऽट्साहचर्यात् तस्य च परस्मैपदेष्वेव संभवात्परस्मैपदिन एव 'शासु अनुशिष्टौ' इत्यस्य ग्रहणं, 'न तु शासु इच्छायाम्' इत्यस्येति कृते अकृतेऽप्यस्मिन्नाशासः क्वाविति वार्तिकं विध्यर्थमिति मन्तव्यम्। ननु सामान्यग्रहणे वार्तिकस्य क्विपि विध्यर्थत्वे चाशास्त इत्यत्र सूत्रेणेत्त्वं किं न स्यादित्याशङ्क्यातिप्रसङ्गं निराह—**आशास्त इत्यादाविति।** उक्तोऽभिप्रायः। भाष्ये **तृणहानीति**; आटः पित्वादिम्प्रसङ्ग इत्यर्थः। भाष्ये **अचि नेतीति**; 'नाभ्यस्तस्याचि पिति सार्वधातुके' इत्यत इत्यर्थः। ननु शब्दं गृहीत्वा यदुच्यते तत्प्रत्ययलक्षणेन मा भूत् स्थानिवद्भावेन किं न स्याद्; अत आह—**स्थानिवद्भावेनेति।** **अनिनस्मन्निति।** 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थ-

केन च तदन्तविधिं प्रयोजयन्ति ' इत्यत्रानर्थकेनेत्येतदप्रत्ययग्रहणे एव संभवतीति भावः ननु स्थानिनिमित्तमन्यस्य कार्यं स्थानिवद्भावेन भवति स्वरस्तु स्थानिनः कार्यं तल्लोपे सति कथं स्यात् असतः कार्यित्वासंभवादसतो लोपस्येह स्थानिवद्भावो नास्तीति नेदं प्रयोजनम्; अत आह—**तत्रेति**। ' सोर्मनसि ' इति ' सूत्र इत्यर्थः। सुशब्दात्परं मन्नन्तमसन्तं च बहुव्रीहावाद्युदात्तं स्याल्लोमोषसी वर्जयित्वेति सूत्रार्थः। दृषद्दृषदित्यत्र सुपो धात्विति जसो लुकि स्थानिवद्भावेनैतत्स्वरनिवृत्त्यर्थमेतत्सूत्रमिति तात्पर्यम्।

## सू.—न लुमताङ्गस्य ॥ १। १। ६२ ॥

### ॥ वा ॥ लुमति प्रतिषेध एकपदस्वरस्योपसंख्यानम् ॥

**भा :—लुमति प्रतिषेध एकपदस्वरस्योपसंख्यानं कर्तव्यम्। एकपदस्वरे च लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वक्तव्यम्। किमविशेषेण? नेत्याह।**

### ॥ वा ॥ सर्वामन्त्रितसिज्लुक्स्वरवर्जम् ॥

**भा :—सर्वस्वरमामन्त्रितस्वरं सिज्लुक्स्वरं च वर्जयित्वा। सर्वस्वर—सर्वस्तोमः सर्वपृष्ठः। " सर्वस्य सुपि " इत्याद्युदात्तत्वं यथा स्यात्। आमन्त्रितस्वर—सर्पिरागच्छ, सप्तागच्छत। " आमन्त्रितस्य च " इत्याद्युदात्तत्वं यथा स्यात्। सिज्लुक्स्वर—मा हि दातां मा हि धाताम्। " आदिः सिचोऽन्यतरस्याम् " इत्येष स्वरो यथा स्यात्। किं प्रयोजनम्?**

### ॥ वा ॥ प्रयोजनं ञिनिकिल्लुकि स्वराः ॥

**भा :—ञिनिकित्स्वरा लुकि प्रयोजयन्ति। गर्गाः वत्साः बिदा उर्वाः, उष्ट्रग्रीवा वामरज्जुः " ञ्निति " इत्याद्युदात्तत्वं मा भूदिति। इह चात्रयः कितः इत्यन्तोदात्तत्वं मा भूदिति।**

### ॥ वा ॥ पथिमथोः सर्वनामस्थाने लुकि ॥

**भा :—पथिमथोः सर्वनामस्थाने लुकि प्रयोजनम्। पथिप्रियो मथिप्रियः। " पथिमथोः सर्वनामस्थाने " इत्येष स्वरो मा भूदिति।**

॥ वा ॥ अह्नो रविधौ ॥

**भा :—अह्नो रविधाने लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वक्तव्यम्। अहर्ददाति अहर्भुङ्क्ते "रोऽसुपि" इति प्रत्ययलक्षणेन प्रतिषेधो मा भूदिति।**

प्र :—न लुमताङ्गस्य। **लुमतीति।** लुमत्संज्ञया प्रतिपादितमदर्शनं लुमत्। तत्र यः प्रतिषेधस्तस्मिन्नित्यर्थः। **एकपदस्वरस्येति।** एकपदाश्रयो यः स्वरस्तस्येत्यर्थः। यस्तु पदस्य पदादिति पदद्वयाश्रयः स्वरस्तत्र प्रत्ययलक्षणं भवत्येव। दधि तिष्ठति। तिङ्ङतिङ इति निघातः। अङ्गस्येत्यङ्गाधिकारनिर्देशात् ञ्नित्ति कित्स्वरस्य चानाङ्गत्वात्प्रतिषेधस्याप्राप्तिरिति भावः। **सर्वस्तोम इति।** 'सर्वस्य सुपि' इति यदाद्युदात्तत्वं तदेव बहुव्रीहौ प्रकृत्येति विधीयत इत्येकपदस्वरो भवत्येव। **सर्पिरिति।** सर्पिश्शब्दोऽन्तोदात्तः प्रत्ययस्वरेण घृतादित्वाद्वा। सप्तन्शब्दोऽपि घृतादित्वादन्तोदात्तः। नित्स्वरेण त्वाद्युदात्तत्वे विशेषो न स्यात्। **मा हि दातामिति।** गातिस्थाघ्विति लेरेव लुकि विधातव्ये सिचो लुग्विधानं प्रत्ययलक्षणार्थम्। **ञ्नित्किल्लुकीति।** इकार उच्चारणार्थः। ञ्नित्कितां प्रत्ययानां लुकि कृते स्वरा निवर्त्यमानतया प्रयोजनमिति पदानां संबन्धः। भाष्यकारस्तु वस्त्वर्थं व्याचष्टे—**ञ्नित्कित्स्वरा इति।** प्रतिषेधमित्यध्याहारः। **उष्ट्रग्रीवा वामरज्जुरिति।** देवपथादित्वात्कनो लुप्। असंज्ञायां चेदमुदाहरणम्। संज्ञायां तु संज्ञायामुपमानमिति भवितव्यमाद्युदात्तत्वेन। **अत्रय इति।** राशदिभ्यां त्रिप् अदेस्त्रिर्निच्चेति त्रिबन्तोऽत्रिशब्द आद्युदात्तः। **पथिप्रियो मथिप्रिय इति।** पूर्वपदप्रकृतिस्वरेणान्तोदात्तौ पथिमथिशब्दौ भवतः। **अहर्ददातीति।** असुपीति प्रसज्यप्रतिषेधः। पर्युदासे तु दीर्घाहा निदाघ इत्यत्रापि सुप्सदृशे निदाघशब्दे परतो रत्वं स्यात्, रुत्वं चेष्यते। लोपशब्देन लोलुप्तत्वात्प्रत्ययलक्षणेन सुपि नेति रत्वप्रतिषेधाद्रुत्वे यत्वे तस्य च लोपे दीर्घाहा निदाघ इति सिध्यति। लुकि तु प्रत्ययलक्षणप्रतिषेधाद्रत्वे सत्युत्वाभावादहर्ददातीत्यादि सिध्यति।

उ :—ननु लुमदिति संज्ञा, नत्वदर्शनम्। संज्ञायां परतो न लुमतेति निषेधासंभवः; अत आह—**लुमत्संज्ञयेति।** संज्ञया संज्ञिलक्षणेत्यर्थः। **तत्र;** लुमता प्रतिपादितादर्शने। ननु सर्वस्य स्वरस्यैकमेव पदं कार्यीत्येकेति व्यर्थम्; अत आह—**एकेति।** व्यावर्त्यमाह—**यस्त्विति।** सोऽलुक्यपि प्रत्ययलक्षणेन पदसंज्ञामाश्रित्य निघातः सिद्ध

इत्यर्थः। यद्यपि पदस्य पदादित्यनन्तरं 'आम्रेडितस्य' इत्याष्टमिकनिघात उदाहर्तु-मुचितस्तथापि सर्वामन्त्रितेत्यामन्त्रितग्रहणेन आष्टमिकस्यापि ग्रहणसंभवेन तदुपेक्ष्य व्यवहित-तिङ्निघान उदाहृत इति ध्येयम्। उपसंख्यानवादिनस्तात्पर्यमाह—**अङ्गस्येति।** ननु पूर्वपदमुत्तरपदसापेक्षमिति बहुव्रीहिस्वरस्य पदद्वयाश्रयत्वेनौपसंख्यानिकप्रतिषेधाप्रसक्तेः तदपवादे सर्वस्तोमोदाहरणमयुक्तम्; अत आह—**सर्वस्येति।** सुपि परे सर्वस्याद्यु-दात्तः स्यादिति सूत्रार्थः। **विधीयते;** अपवादनिवर्तनेन व्यवस्थाप्यते। **प्रत्ययेति।** औणादिक इसिप्रत्ययः। **नित्स्वरेणेति।** सप्यशूभ्यां तुट् च' इति कनिन्-प्रत्ययान्तत्वादिति भावः। उपलक्षणमिदं 'त्रेः संख्यायाः' इत्याद्युदात्तत्वेनेत्यपि द्रष्टव्यम्। भाष्ये **आद्युदात्तत्वमिति।** संबोधनप्रथमाया लुक्यपि प्रत्ययलक्षणेन आमन्त्रितान्तत्वात् षाष्ठिकमाद्युदात्तत्वमित्यर्थः। भाष्ये अडागमस्वरनिरासाय माङ्प्रयोग, निघातनिषेधाय हिप्रयोगः। सिजन्तस्यादिर्वोदात्त इति सूत्रार्थः। सिज्लुक्स्वरवर्जनं न कर्तव्यमित्याह—**लेरेवेति।** गा इत्यनेन वेरेव लुकि मन्त्रेघसेत्यत्र पुनर्विग्रहणं कर्तव्य-मिति लाघवम्। भाष्ये ञिनिकित्स्वरा इति दर्शनात् ञिनिकिदिति स्वरविशेषणं प्रतीयते। तथा च लुका समासो न स्यादसमर्थत्वात्; अत आह—**ञिनिकितामिति।** प्रयोजयन्तीत्यत्र कर्माध्याहरति—**प्रतिषेधमिति। कनो लुबिति।** 'इवे प्रति-कृतौ' इति विहितस्येत्यर्थः। इवार्थे वर्तमानात् कन् स्यात्प्रतिकृताविति सूत्रार्थः। देवपथादिराकृतिगणः। **संज्ञायामिति।** उपमानशब्दः संज्ञायामाद्युदात्त इति सूत्रार्थः। भाष्ये गर्गा इत्यादिषु प्रत्ययलक्षणेनाद्युदात्तत्वाभावे प्रातिपदिकस्वरेण समासस्वरेण च यथायोग-मन्तोदात्तत्वम्। नन्वत्रिशब्दस्य प्रातिपदिकस्वरेणान्तोदात्तत्वात्प्रत्ययलक्षणप्रतिषेधोऽनर्थकः; अत आह—**अदेरिति।** प्रत्ययलक्षणेनाद्युदात्तत्वस्य प्राप्तस्य निषेधकः स्वरो भवति; अत आह—**अन्तोदात्ताविति।** प्रातिपदिकस्वरेणेत्यर्थः। नन्वसुपीति पर्युदासे प्रत्ययलक्षणेन रुप्रतिषेधो न भविष्यतीत्यत आह भाष्ये—**प्रतिषेधो मा भूदिति।** तदुपपादयति—**प्रसज्येति। दीर्घेति।** बहुव्रीहितया टजभावात्सर्वनामस्थाने चेत्युप-धादीर्घः। हल्ङ्यादिलोपः। **सुप्सहशेति।** प्रत्ययत्वेन सुप्सहश इत्युक्तावहर्द-दातीत्यत्रापि रत्वं न स्यादिति भावः। ननु प्रत्ययलक्षणप्रतिषेधेनास्यापि प्रतिषेधाप्राप्तौ रत्वमेव भविष्यतीतीष्टमपि रुत्वं कथं स्याद्; अत आह—**लोपेति।** हल्ङ्यादिसूत्रेण सोर्लोपादिति भावः। **रुत्वे;** 'अहन्' इत्यनेन। **लोपे;** हलि सर्वेषाम्' इत्यनेन। अत्र निदाघशब्दस्याप्रयोगे वा यत्वलोपयोरभावाद्रोर्विसर्जनीयं दीर्घाहः दीर्घाह्नौ, दीर्घाहः, दीर्घाहोभ्यामित्यादि ज्ञेयम्। अहर्ददातीत्यत्यन्तसंयोगाद्द्वितीया। अह्न एव कर्तृत्व-

विवक्षया प्रथमा तयोः स्वमोरिति लुक्। तेन रुत्वसिद्धिरिह। **लुकि त्विति।** सुपां सुलुगिति सप्तम्येकवचनस्य लुक्। तेनाह्न ददातीत्यर्थ इत्यपि केचित्।

॥ वा ॥ उत्तरपदत्वे चापदादिविधौ ॥

भा:—उत्तरपदत्वे चापदादिविधौ लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वक्तव्यम्। परमवाचा परमवाचे। परमगोदुहा परमगोदुहे। परमश्वलिहा परमश्वलिहे। पदस्येति प्रत्ययलक्षणेन कुत्वादीनि मा भूवन्निति। अपदादिविधाविति किमर्थम्? दधिसेचौ दधिसेचः। "सात्पदाद्योः" इति प्रतिषेधो यथा स्यात्। यद्यपदादिविधावित्युच्यते उत्तरपदाधिकारो न प्रकल्पेत। तत्र को दोषः? "कर्णो वर्णलक्षणात्" इत्येवमादिविधिर्न सिध्यति। यदि पुनः नलोपादिविधौ प्लुत्यन्ते लुमता लुप्ते प्रत्ययलक्षणं न भवतीत्युच्येत। नैवं शक्यम्। इह हि राजकुमार्यौ राजकुमार्य इति शाकलं प्रसज्येत। नैष दोषः। यदेतत्—सिति शाकलं न इति। एतत्—प्रत्यये शाकलं न इति वक्ष्यामि। यदि "प्रत्यये शाकलं न" इत्युच्यते, दधि अधुना, मधु अधुना अत्रापि न प्रसज्येत। प्रत्यये शाकलं न भवति। कतरस्मिन्? यस्माद्यः प्रत्ययो विहित इति। इह तर्हि परमदिवा परमदिवे "दिव उत्" इत्युत्त्वं प्राप्नोति। अस्तु तर्ह्यविशेषेण। ननु चोक्तम्—उत्तरपदाधिकारो न प्रकल्पेतेति। वचनादुत्तरपदाधिकारो भविष्यति। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। अनुवृत्तिः करिष्यते इदमस्ति "यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्॥ सुप्तिङन्तं पदम्" यस्मात्सुप्तिङ्विधिस्तदादि सुबन्तं तिङन्तं च। नः क्ये नान्तं क्ये पदसंज्ञं भवति। यस्मात्क्यविधिः तदादि सुबन्तं च। "सिति च" सिति च पूर्वं पदसंज्ञं भवति, यस्मात्सिद्विधिस्तदादि सुबन्तं च। "स्वादिष्वसर्वनामस्थाने" स्वादिष्वसर्वनामस्थाने पूर्वं पदसंज्ञं भवति, यस्मात्स्वादिविधिस्तदादि सुबन्तं च। "यचि भम्" यजादिप्रत्यये पूर्वं भं भवति, यस्माद्यजादिविधिस्तदादि सुबन्तं च।

प्र :—**उत्तरपदत्वे चेति।** उत्तरपदम् उत्तरशब्देनोच्यते पदैकदेशलोपात्। तेनोत्तरपदस्य पदत्वे पदव्यपदेशे कर्तव्ये प्रत्ययलक्षणं न भवतीत्यर्थः। **परमवाचेति।** समासार्था या विभक्तिः कृता तां प्रत्ययलक्षणेनाश्रित्य पदत्वनिबन्धनानि कुत्वादीनि प्राप्नुवन्ति। भसंज्ञा तु यस्माद् यजादिविधिरिति समुदायस्यैव न स्ववयवस्य। **दधिसेचाविति।** दध्नः सेचाविति षष्ठीसमासः। उपपदसमासे तु प्राक्सुबुत्पत्तेः समासविधानात्सेच्शब्दस्य पदसंज्ञाया अभावात्पदादित्वं सकारस्य न स्यात्। अनभिधानाच्च सोपपदाद्विजभावाद्दधिषेचावित्यादिप्रयोगाभावात्। **कर्णो वर्णलक्षणादिति।** नन्वपदादिविधावित्युच्यते, स्वरश्चाऽयं पदादिविधिः। ककारेऽत्रादिर्न त्वकार इत्यदोषः। स्वरविधौ व्यञ्जनमविद्यमानवन्न त्वादिव्यपदेशे। सूत्रं चासमासार्थं स्यात्। कर्णशब्दादर्श आदित्वादचि कृते शुक्लः कर्ण इत्याद्युदात्तत्वं यथा स्यात्। **यदि पुनरिति।** तेन पूर्वस्मिन् परत्र च भवत्येव प्रत्ययलक्षणम्। **राजकुमार्याविति।** इकोऽसवर्ण इत्यत्र 'एङः पदान्तादति' इत्यतः पदग्रहणमनुवर्तते। तत्र प्रत्ययलक्षणेन पदान्तत्वाच्छाकल्प्रसङ्गः। **दधि अधुनेति।** अधुनाप्रत्यय इदमो विधीयते, तत इदम इश्, यस्येति च' इति लोपः। **यस्माद्य इति।** प्रत्यासत्त्येति भावः। राजकुमार्यावित्यत्र यद्यपि समुदायाद्विहितस्तथाप्यवयवादप्यसौ विहित इति बुद्धिर्भवत्येव। समुदायद्विर्वचनेऽवयवद्विर्वचनबुद्धिवत्। **उत्त्वमिति।** उत्त्वविधावेङः पदान्तादिति पदाधिकारः। **अचनादिति।** समासे ह्युत्तरपदं भवति, न च कर्णशब्दो अच्प्रत्ययान्तोऽस्ति, अर्श आदिषु हि स्वाङ्गाद्धीनादिति पठ्यते तेन स्वङ्गादिभ्य एव हीनस्वाङ्गवाचिभ्योऽच्प्रत्ययो भवति। न च कर्णशब्दो हीनस्वाङ्गवाची। **तत्तर्हीति।** उत्तरपदत्वं चापदादिविधाविति न। **यचि भमिति।** ततश्च परमवाचेत्यत्र वाक्शब्दस्य भत्वात्पदत्वाभावः।

उ :—ननूत्तरस्य पदव्यपदेशे कर्तव्ये प्रत्ययलक्षणप्रतिषेधे कर्तव्ये निषेधे परमं सद्मेत्यत्र परमशब्दादुत्तरस्य सद्मशब्दस्य प्रत्ययलक्षणनिषेधात् पदत्वाभावान्नलोपो न स्याद्; अत आह—**उत्तरपदमिति। पदव्यपदेशे;** पदसंज्ञायाम्। न चैवं परमसद्मेत्यत्र नलोपो न स्यादिति वाच्यम्। तत्र समासादुत्पन्नविभक्त्या समुदायस्य पदत्वे प्रत्ययलक्षणनिषेधाभावेन समासपदान्तत्वेन तल्लोपसंभवादिति भावः। **समासार्थेति।** सन्महदिति समासविधौ सुप्सुपेत्यनुवर्तनादिति भावः। **ताम्;** सुपो धात्विति लुप्ताम्। **कुत्वादीनि** कुत्वघत्वादीनि। ननु भसंज्ञया पदत्वाभावान्न कुत्वप्रसङ्ग; अत आह—**भसंज्ञेति; यस्मादिति।** 'यचि भम्' इत्यत्र यस्मादित्यनुवर्तते। तथा च भिन्नावधिकतया

भत्वेन पदत्वं न बाध्यते इत्यर्थः । **प्रागिति ।** 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः' इत्यङ्गीकारादित्यर्थः । ननु सेनीति केवलाद्धिचि षत्वनिषेधे सोपपदाद्धिचि षत्वं स्यादत आह—**अनभिधानादिति । कर्णे इति ।** वर्णवाचि-नश्छिद्रवाचिनश्च परः कर्णशब्दो बहुव्रीहावाद्युदात्त इति सूत्रार्थः । यद्यपदादिविधावित्युच्यते इति भाष्येण प्रत्ययलक्षणप्रतिषेधस्यातिव्याप्तिश्चोद्यते । तदाक्षिपति—**नन्विति । स्वरश्चेति ।** उत्तरपदादिरित्यधिकारादित्यर्थः । तथा च प्रतिषेधापवादात् स्वरसिद्धिरिति शङ्कार्थः । **नत्विति ।** विधेः पूर्वमुत्तरपदादित्वे स्थितस्य विधौ प्रतिषेधापवादः दधिसेचावि-त्यत्र स्वरविधिसमय एव उत्तरपदादित्वबुद्धिर्न प्रागिति भावः । नन्वेवं सूत्रं व्यर्थं स्यादित्यत आह—**सूत्रमिति ।** नन्वसमासे स्वाङ्गशिटामिति कर्णशब्दस्याद्युदात्तत्वं सिद्धमेवात आह—**कर्णशब्दादिति ।** तथा चान्तोदात्तस्याद्युदात्तत्वं विधीयत इत्यर्थः । अस्मिन् सूत्रे बहुव्रीहाविति नान्वेति । उत्तरपदादिरित्यत्रोत्तरपदशब्दो यौगिको गृह्यत भावः । भाष्ये **यदि पुनरिति ।** उत्तरपदत्वे चापदादिविधाविति त्यक्त्वेत्यर्थः । अस्मिन् पक्षे पूर्वदोषपरिहार इत्याह—**तेनेति । पूर्वस्मिन् ;** स्वरविधौ । **परत्र ;** षत्वनिषेधे । **पदेति ।** ततश्चार्थात् षष्ठ्यन्तस्येग्विशेषणतया पदान्तस्येक इत्युक्तौ कुमार्यावित्यत्र शाकल-प्रसङ्ग इति ज्ञेयम् । भाष्ये **सितीति ।** 'सिन्नित्यसमासयोश्शाकलप्रतिषेधः' इति वार्तिक इत्यर्थः । **प्रत्यासत्त्येति ।** प्रत्ययाक्षिप्तप्रकृतेः विहित इति भावः । विधानविव-क्षायामपि नोक्तदोष इत्याह—**राजेति ।**

**भा :—इह तर्हि परमवाक् । "असर्वनामस्थाने" इति प्रतिषेधः प्राप्नोति । अस्तु तस्याः प्रतिषेधः—या स्वादौ पदमिति पदसंज्ञा । या तु सुबन्तं पदमिति पदसंज्ञा सा भविष्यति । सत्येतत्प्रत्यये अनया भविष्यत्यनया न भविष्यतीति । लुप्त इदानीं प्रत्यये यावत एवावधेः स्वादौ पदमिति पदसंज्ञा, तावत एवावधेः सुबन्तं पदमिति । अस्ति च प्रत्ययलक्षणेन सर्वनाम-स्थानपरतेति कृत्वा 'प्रतिषेधाश्च बलीयांसो भवन्ति' इति प्रतिषेधः प्राप्नोति ।**

**॥ वा ॥ नाप्रतिषेधात् ॥**

**भा :—नायं प्रसज्यप्रतिषेधः सर्वनामस्थाने नेति । किं तर्हि ? । पर्युदासोऽयम्—यदन्यत्सर्वनामस्थानादिति । सर्वनाम-**

स्थाने अव्यापारः। यदि केनचित्प्राप्नोति तेन भविष्यति। पूर्वेण च प्राप्नोति।

॥ वा ॥ अप्राप्तेर्वा ॥

भा :—अथवा—अनन्तरा या प्राप्तिः सा प्रतिषिध्यते। कुत एतत्?। अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति। पूर्वा प्राप्तिरप्रतिषिद्धा तया भविष्यति। ननु चेयं प्राप्तिः पूर्वां प्राप्तिं बाधते। नोत्सहते प्रतिषिद्धा सती बाधितुम्। यद्येवं परमवाचौ परमवाच इति "सुप्तिङन्तं पदम्" इति पदसंज्ञा प्राप्नोति। एवं तर्हि योगविभागः करिष्यते। "स्वादिषु" पूर्वं पदसंज्ञं भवति॥ ततः "सर्वनामस्थाने अयचि" पूर्वं पदसंज्ञं भवति; ततो—"भम्"। भसंज्ञं भवति यजादावसर्वनामस्थान इति। यदि तर्हि—सावपि पदं भवति, एचः प्लुतविकारे पदान्तग्रहणं चोदयिष्यति इह मा भूत्—भद्रं करोषि गौरिति। तस्मिन् क्रियमाणेऽपि प्राप्नोति। वाक्यपदयोरन्त्यस्येत्येवं तत्। इह तर्हि—दधिसेचौ दधिसेचः, "सात्पदाद्योः" इति पदादिलक्षणः षत्वप्रतिषेधो न प्राप्नोति। मा भूदेवम्,—पदस्यादिः पदादिः पदादेर्नेति। कथं तर्हि? पदादादिः पदादिः पदादेर्नेत्येवं भविष्यति। नैवं शक्यम्। इहापि प्रसज्येत—ऋक्षु वाक्षु त्वक्षु कुमारीषु किशोरीष्विति। सात्प्रतिषेधो ज्ञापकः। स्वादिषु पदत्वेन येषां पदसंज्ञा, न तेभ्यः प्रतिषेधो भवतीति। इह तर्हि—'बहुसेचौ बहुसेचः बहुजयं प्रत्ययः। अत्र पदादादिः पदादिः पदादेर्नेत्युच्यमानेऽपि न सिध्यति।

प्र :—**इह तर्हीति।** असर्वनामस्थान इति प्रसज्यप्रतिषेधं मन्यते। ततश्च सर्वनामस्थाने परतो यस्मात् स्वादिविधिस्तदादि सुबन्तं च पदसंज्ञं न भवतीति प्रत्ययलक्षणेन सर्वनामस्थानपरत्वात् पदत्वप्रतिषेधात् कुत्वाप्राप्तिः। **सत्येतदिति।** अवधिभेदात्संज्ञिनां भेदात्। **बलीयांस इति।** विध्युन्मूलनरूपत्वात्। **एवं तर्हीति।** योगविभागे सति सर्वा प्राप्तिः प्रतिषिध्यत इति दोषाभावः। **असर्वनामस्थान इति**

नञः क्रियापदेन सम्बन्धादुत्तरपदेनासम्बधो यचीत्येतच्च सर्वनामस्थानविशेषणम्। तेनायमर्थो भवति—यजादौ सर्वनामस्थाने परतः पदसंज्ञा न भवतीति। हलादौ तु सुशब्दे भवत्येव। भाष्ये तु वस्तुमात्रमुपन्यस्तम्। **सर्वनामस्थाने अयचीति ;** यजादौ सर्वनामस्थाने पदसंज्ञानिषेधात्सामर्थ्यादयमर्थः संपद्यते। अयजादौ सर्वनामस्थाने पदसंज्ञा भवतीति। **वाक्यपदयोरिति।** गौरित्यौकारो वाक्यान्तो न भवतीत्यादुतौ न भवतः। **पदादादिरिति।** पञ्चमीति योगविभागात्समासः।

उ :—यदि पुनर्नलोपादिविधावित्यत्र शाकलादिप्रसङ्गे निरस्तेऽपि दूषणान्तरमाह—भाष्ये **इह तर्हीति। तद्विधावपीति।** तथा च पदान्तस्य वकारस्य उत्त्वमित्यर्थः। भाष्ये **अविशेषेण।** उत्तरपदत्वे चापदादिविधावित्येव। योगरूढमभिप्रेत्याह—**समासे हीति।** केवलयोगेऽप्याह—**न चेति।** तथा च सामर्थ्यादिति सुष्ठूक्तमित्यर्थः। **वाक्छब्दस्येति।** समासार्थविभक्त्या सुबन्तस्य वाक्छब्दस्य भसंज्ञया पदत्वाभाव इत्यर्थः। **संज्ञिनामिति।** न च श्रूयमाणसुबन्तस्य सर्वनामस्थानं परमिति प्रतिषेधाप्राप्तिरित्यर्थः। ननु परशब्दस्येष्टवाचित्वात् पूर्वविप्रतिषेधेन सुबन्तं पदमिति पदसंज्ञा स्यान्न निषेध इत्याशङ्क्याह—भाष्ये **प्रतिषेधाश्चेति।** कथमनेन पूर्वविप्रतिषेधनिरासः ; अत आह—**विधीति।** विधेरुन्मूलनं निवर्तनम्। तद्रूपत्वात् विधिप्राप्त्युत्तरकालं निषेधप्राप्तिर्न तु तयोर्युगपत्प्राप्तिरिति विप्रतिषेधासंभव इत्यनेनोक्तमिति ज्ञेयम्। असर्वनामस्थान इत्यस्य प्रसज्यप्रतिषेधत्वेऽपि परमवागित्यत्र नोक्तदोष इत्याह—भाष्ये **अप्राप्तेर्वेति।** यद्यपि 'यचि भम्' इत्यत्रानुवर्तमानं सुबन्तस्येत्येतदसर्वनामस्थान इत्यत्राप्यनुवर्तेत इति तस्यापि निषेधेन भाव्यमानन्तर्याविशेषात्तथापि स्वस्थानापेक्षयानन्तरस्येति परिभाषा न त्वनुवृत्त्यपेक्षया आनन्तर्यस्येत्याश्रीयत इति भावः। भाष्ये—**यद्येवमिति।** समासार्थविभक्त्यापदत्वात् कुत्वं स्यादित्यर्थः। **योगेति।** तद्बलादेवानन्तरस्येति नाश्रीयत इति भावः। ननु सर्वनामस्थाने यचि पदमिति यथाश्रुतभाष्ये स्वादिष्विति सर्वत्र पदसंज्ञायां नियमार्थमिदम्—अयच्येव पदसंज्ञेति। तेन वाचौ वाच इत्यत्र न पदकार्यम्। तथा च परमवाचावित्यादौ सुबन्तं पदमिति पदसंज्ञाया नियमेनाव्यावर्तनाद्दोषतादवस्थ्यम्। किं चाऽयचीति पदभेदलभ्यः अकारः, असर्वनामस्थान इत्यत्रत्यो वा। नाद्यः। सर्वनामस्थाने यचीति भाष्यविरोधात्। न द्वितीयः। पूर्वेण समस्योत्तरेणान्वयायोगात्। अत आह—**असर्वनामेति।** अमानोनाः प्रतिषेध इति नञर्थस्याकार्यस्य केनाप्यस-

मर्थस्य क्रियया संबन्ध इत्यर्थः। उत्तरपदेन यचीत्यस्यान्वयमुक्त्वा वाक्यार्थमाह— **तेनेति। हलादाविति।** तेन परमवागिति सिध्यति। पर्यवसितार्थकथन-परतया भाष्यं सङ्गमयति—**भाष्य इति।** भाष्ये **प्लुतविकार इति।** प्लुतसहितो विकारो 'एचोऽप्रगृह्यस्य' इति विहितः।

**भा:—एवं तर्हि—**

**॥ वा ॥ उत्तरपदत्वे च पदादिविधौ ॥**

**भा:—"लुमता लुप्ते प्रत्ययलक्षणं भवति" इति वक्ष्यामि। तन्नियमार्थं भविष्यति—पदादिविधावेव, न पदान्तविधाविति। कथं बहुसेचौ बहुसेचः ?**

**॥ वा ॥ बहुच्पूर्वस्य च ॥**

**भा:—बहुच्पूर्वस्य च पदादिविधावेव न पदान्तविधाविति।**

**॥ वा ॥ द्वन्द्वेऽन्त्यस्य ॥**

**भा:—द्वन्द्वेऽन्त्यस्य लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वक्तव्यम्। वाक्सक्त्वचम्। इहाभूवन्निति प्रत्ययलक्षणेन जुस्भावः प्राप्नोति।**

**॥ वा ॥ सिचि जुसोऽप्रसङ्ग आकारप्रकरणात् ॥**

**भा:—सिचि सिज्निमित्तस्य जुसोऽप्रसङ्गः। किं कारणम्। आकारप्रकरणात्। "आतः" इत्येतन्नियमार्थं भविष्यति—आत एव च सिज्लुगन्तात्, नान्यस्मात्सिज्लुगन्तादिति। इह—इति युष्मत्पुत्रो ददाति इत्यस्मत्पुत्रो ददातीत्यत्र प्रत्ययलक्षणेन "युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ" इति वांनावादयः प्राप्नुवन्ति।**

**वा ॥ युष्मदस्मदोः स्थग्रहणात् ॥**

**भा:—स्थग्रहणं तत्र क्रियते तच्छ्रूयमाणविभक्तिविशेषणं विज्ञास्यते। अस्त्यन्यत्स्थग्रहणस्य प्रयोजनम्। किम् ? सवि-**

**भक्तिकस्य वांनावादयो यथा स्युरिति। नैतदस्ति प्रयोजनम्। पदस्येति वर्तते। विभक्त्यन्तं च पदम्। तत्रान्तरेणापि स्थग्रहणं सविभक्तिकस्यैव भविष्यन्ति। भवेत्सिद्धम्—यत्र विभक्त्यन्तं पदम्। यत्र तु खलु विभक्तौ, पदं तत्र न सिध्यति—ग्रामो वां दीयते, जनपदो वां दीयते, ग्रामो नौ दीयते, जनपदो नौ दीयते। सर्वग्रहणमपि प्रकृतमनुवर्तते। तेन सविभक्तिकस्यैव भविष्यति। इह—चक्षुष्कामं याजयांचकारेति "तिङ्ङतिङः" इति, तस्य च निघातस्तस्माचानिघातः प्राप्नोति।**

**॥ वा ॥ आमि लिलोपात्तस्य चानिघातस्तस्माच निघातः ॥**

**भा :—आमि लिलोपात्तस्य चानिघातः तस्माच्च निघातः सिद्धो भविष्यति।**

प्र :—**कथं बहुसेचाविति।** समासाभावान्नोत्तरपदत्वं, नापि पूर्वस्य पदत्वम्। **द्वन्द्वेऽन्त्यस्येति।** उत्तरपदत्वे चेत्यनेनैव सिद्धे नियमार्थमिदमन्त्यस्यैवेति। मध्यमपदस्यापि पूर्वपदापेक्षयोत्तरपदत्वसम्भवात्प्रत्ययलक्षणप्रतिषेधप्रसङ्गात्। मुख्ये तूत्तरपदे सम्भवति कथं मध्यमपदस्य ग्रहणं स्यादिति चिन्त्यमेतत्। **आकारप्रकरणादिति।** आकारस्य नियमार्थत्वेन प्रस्तावादित्यर्थः। अथ वाकारे प्रकरणादात इत्यत्र सिचः प्रकृत्वादित्यर्थः। **इति युष्मत्पुत्र इति।** पदादुत्तरयोर्युष्मदस्मदोरादेशविधानादितिशब्दप्रयोगः। **श्रूयमाणविभक्तिविशेषणमिति।** षष्ठीचतुर्थीद्वितीयास्वित्येव सिद्धे स्थग्रहणे सत्ययमर्थो भवति तासु ये व्यवस्थिते युष्मदस्मदी इति। श्रूयमाणासु चावस्थानं भवति, न तु लुप्तासु लुप्तस्याधारत्वासम्भवात्। **अस्त्यन्यदिति।** तिष्ठतिरहानावपि वर्तते, यथा तपसि स्थितः। तपो न जहातीत्यर्थः। तथा 'समये तिष्ठ सुग्रीव' इति, समयं मा हासीरित्यर्थः। तेन सति स्थग्रहणे तत्सहितयोः कार्यं विज्ञायते। अथ वा यथा रथस्थ आनीयतामिति सरथ आनीयते तथा षष्ठ्यादिसहितयोर्युष्मदस्मदोः कार्यं भवतीति विज्ञायते। **पदस्येति वर्तत इति।** केवलयोः पदत्वाभावात्[1]दवयवस्थं पदं गृह्यत इति भावः। **यत्र त्विति।**

(१) मु. पु. तदवयवम्

अत्र हि ते एव पद इति तयोरेवादेशप्रसङ्गः। **सर्वग्रहणमपीति।** अनेकाल्त्वात्सर्वादेशत्वे लब्धे सर्वग्रहणमनुवृत्तं षष्ठ्यन्तं विपरिणम्यमानं सर्वस्य पदस्य विभक्तिसहितस्य स्थानित्वमवगमयतीत्यर्थः। **याजयाञ्चकारेति।** परत्वात्तिबादिषु कृतेषु आम इति लुकि प्रत्ययलक्षणेन याजयामित्यस्य तिङन्तत्वमिति पूर्वः पक्षः। **आमि लिलोपादिति।** नाप्राप्तेषु तिबादिषु लुगारभ्यमाणस्तेषां बाधकः।

उ:—ननु बहुसेचावित्यत्र षत्वनिषेधार्थमेवोत्तरपदत्वे चेत्युक्तम्। तत्र कथं बहुसेचाविति प्रश्नस्य कोऽभिप्रायः; अत आह—**समासेति।** बहुचः प्रत्ययत्वात्समासाभावः। अत एव पदादादिरित्यपि न संभवतीति प्रश्न इत्यर्थः। भाष्ये **बहुच्पूर्वस्येति।** असमासेऽपि यौगिकमुत्तरपदत्वं संभवति। पदस्यादिरिति षष्ठीसमास एवेति बहुसेचावित्यत्र षत्वनिषेधः संभवतीत्यर्थः। बहुच्पूर्वस्येत्यादिनियमान्तरपरतया वा व्याख्येयम्। वार्तिकस्य नियममाह—**उत्तरेति।** उत्तरपदत्वे चापदादिविधाविति वार्तिकेत्यर्थः। **अन्त्यस्यैवेति।** न तु मध्यमस्येत्यर्थः। मध्यमस्योत्तरपदत्वाभावादेव प्रतिषेधाप्राप्तेरन्त्यस्येति व्यर्थम्; अत आह—**मध्यमेति।** यद्यपि भाष्योदाहरणे मध्यमस्यापदत्वेऽपि झल्परत्वेनैव कुत्वं सिध्यति; तथापि वाक्स्रुचरुचमित्याद्युदाहार्यम्। **मुख्य इति।** समासान्त्यपद एवोत्तरपदशब्दो मुख्योऽन्यत्र गौण इत्यर्थः। **एतत्;** द्वन्द्वेऽन्त्यस्येति वक्तव्यमित्येतत्। आकारप्रकरणादित्यस्मात इत्येतन्नियमार्थमिति व्याख्यानं संगमयितुमाह—**आकारस्येति।** **प्रस्तावात्;** आरम्भात्। जुसोऽप्रसङ्गे आत इत्यस्य नियमार्थत्वं हेतुः। तदुपपादनार्थत्वेन प्रकारान्तरेण व्याचष्टे—**अथवेति।** **प्रकृतत्वाद्;** अनुवर्तनात्। सिच इत्यनुवृत्त्या आत्मिजुभयपरत्वे लब्धे एकदोभयपरत्वासंभवात् सिज्लुकि प्रत्ययलक्षणेनोभयपरत्वं संभवतीति भावः। इति शब्दस्योपयोगमाह—**पदादिति।** **आधारत्वासंभवात्;** उपश्लेषासंभवात। **समये तिष्ठेति।** रामवाक्यम्। स्थग्रहणेन षष्ठ्यादीनां विषेषणत्वं लभ्यत इति व्याख्यानान्तरमाह—**अथवेति।** **युष्मदस्मदोरिति।** समुदायलक्षणेति भावः। **केवलयोरिति।** यद्यपि विभक्तिलोपे प्रत्ययलक्षणेन केवलपदत्वं संभवति, तथापि मुख्यविभक्त्यन्तस्य ग्रहणे संभवति लाक्षणिकं पदं न गृह्यत इत्यर्थः। **तदवयवस्थम्;** विभक्तिस्थं। तद्विशिष्टमिति यावत्। **ते एव;** विभक्तिरहिते एव युष्मदस्मदी इत्यर्थः। यद्यपि चतुर्थीद्विवचनव्यतिरिक्ते पूर्वस्य न पदत्वं द्वितीयायां सुतराम्। तथा च तत्र समुदायलक्षणावश्यकत्वे सर्वत्रावैरूप्याय समुदायलक्षणैव युक्ता तथापि समाधानान्तरमाह; भाष्ये—

**सर्वग्रहणमिति।** एतदुपपादयति—**अनेकेति।** ननु याजयामित्यस्य तिङन्तत्वाभावात्कथं तस्य निघातः। कथं वा चकारेत्यस्यानिघातः; अत आह—**परत्वादिति।** **लुकि**; तिबादेरित्यर्थः।

**॥ वा ॥ अङ्गाधिकार इटो विधिप्रतिषेधौ ॥**

**भा :—अङ्गाधिकारे इटो विधिप्रतिषेधौ न सिध्यतः। जिगमिष संविवृत्स। अङ्गस्येतीटो विधिप्रतिषेधौ न प्राप्नुतः।**

**॥ वा ॥ क्रमेर्दीर्घत्वं च ॥**

**भा :—किं च। इटश्च विधिप्रतिषेधौ। नेत्याह। अदेशोऽयं चः पठितः। क्रमेश्च दीर्घत्वम्। उत्क्राम संक्रामेति। इह किञ्चिदङ्गाधिकारे लुमता लुप्ते प्रत्ययलक्षणेन भवति, किंचिच्चान्यत्र न भवति।**

प्र :—**अङ्गाधिकार इति।** अङ्गस्येति स्वर्यते तेनाङ्गाधिकारविहितं यत्कार्यं तल्लुमता लुप्ते प्रत्यये न भवतीति सूत्रार्थे दोषोपन्यासः। **जिगमिषेति।** अतो हेरिति लुकि कृते गमेरिट्परस्मैपदेष्विताीड् न प्राप्नोति। **संविवृत्सेति।** न वृद्भ्यश्चतुर्भ्य इतीट्प्रतिषेधः। **क्रमेरिति।** कार्यसमीपे श्रूयमाणश्चकारः कार्यमेव समुच्चिनुयादित्यभिप्रायेण—**किं चेति। अदेश इति।** कार्यस्य समुचेतव्यस्याभावात्सामर्थ्यात्प्रकृतिसमुच्चय इत्यर्थः। **किंचिच्चेति।** ञिनिकित्स्वराः।

उ :—नन्वङ्गस्येत्युक्तावङ्गाधिकारः कथं लभ्यतेऽत आह—**स्वर्यत इति।** तथा च स्वरितलिङ्गेनाधिकारलाभ इत्यर्थः। **लुकि कृत इति।** नित्यत्वादिति भावः। **गमेरिति** प्रतीकं स्थलप्रदर्शनार्थम्।

**भा :—यदि पुनः—**

**॥ वा ॥ न लुमता तस्मिन् ॥**

**भा :—इत्युच्येत। अथ "न लुमता तस्मिन्" इत्युच्यमाने किं सिद्धमेतद्भवति—इटो विधिप्रतिषेधौ क्रमेर्दीर्घत्वं च। बाढं सिद्धम्। न इटो विधिप्रतिषेधौ परस्मैपदेष्वित्युच्यते।**

कथं तर्हि। सकारादाविति। तद्विशेषणं परस्मैपदग्रहणम्। न खल्वपि क्रमेर्दीर्घत्वं परस्मैपदेष्वित्युच्यते। कथं तर्हि?। शितीति। तद्विशेषणं परस्मैपदग्रहणम्।

॥ वा ॥ न लुमता तस्मिन्निति चेद्धनिणिङादेशास्तलोपे ॥

भा:—न लुमता तस्मिन्निति चेद्धनिणिङादेशास्तलोपे न सिध्यन्ति। अवधि भवता दस्युः। अगायि भवता ग्रामः। अध्यगायि भवताऽनुवाकः। तलोपे कृते लुङीति हनिणिङादेशा न प्राप्नुवन्ति। नैष दोषः। न लुङीति हनिणिङादेशा उच्यन्ते। किं तर्हि?। आर्धधातुक इति। तद्विशेषणं लुङ्ग्रहणम्। इह च—सर्वस्तोमः, सर्वपृष्ठः—"सर्वस्य सुपि" इत्याद्युदात्तत्वं न प्राप्नोति। तच्चापि वक्तव्यम्। न वक्तव्यम्। "न लुमताङ्गस्य" इत्येव सिद्धम्। कथम्?। न लुमता लुप्तेऽङ्गाधिकारः प्रतिनिर्दिश्यते। किं तर्हि?। योऽसौ लुमता लुप्यते तस्मिन् यदङ्गं तस्य यत्कार्यं तन्न भवति। एवमपि—सर्वस्वरो न सिध्यति। कर्तव्योऽत्र यत्नः। न लुमताङ्गस्य ॥ ६२ ॥

प्र:—**न लुमता तस्मिन्निति।** लुमता यो लुप्तः प्रत्ययः तस्मिन् यत्कार्यमाङ्गमनाङ्गं वा तन्न भवतीत्यर्थः। अत्रय इत्यत्र स्वरो न भवति तद्धितस्यैव कितोऽन्तोदात्तत्वविधानाल्लुकि कृते कार्यिणोऽसत्वात्। प्रत्ययलक्षणं हि यदन्यस्य कार्यं तत्प्रत्ययलोपेऽपि भवति, न तु यत्प्रत्ययस्यैव कार्यं तदपि। न हि वचनेनासतः कार्यित्वं शक्यते प्रतिपादयितुम्। **तद्विशेषणमिति।** विशेषण एवोपक्षीणत्वात्कार्यं प्रति निमित्तभावो नास्तीत्यर्थः। **हनिणिङादेशा इति।** लुका लुङो [1]विषयापहाराद्विषयसप्तम्याश्रयणेऽप्यसिद्धिः। **तद्विशेषणं लुङ्ग्रहणमिति।** तेन लुङ्परे चिण्यादेशविधानम्। **न लुमतेति।** अङ्गस्येत्यस्य स्वरितत्वाप्रतिज्ञानात्तत्र लुमता लुप्ते प्रत्यये यदङ्गं तस्य यत्कार्यं प्रत्ययाश्रयमाङ्गमनाङ्गं वा तन्न भवतीत्यर्थः। **कर्तव्योऽत्र यत्न इति।** सर्वशब्दार्थं वचनं कर्तव्यम् ॥ ६२ ॥

(१) मु. पु. विषयत्वापहारात्

उ :—प्रकृत्यन्वये हेतुमाह—**लुमतेति ।** नन्वत्रय इत्यत्र कित्तद्धितस्यान्तस्योदात्तत्वं विधीयते, न तु प्रत्यये परतः पूर्वस्येति न लुमता तस्मिन्निति प्रतिषेधाभावादन्तोदात्तत्वप्रसङ्गः ; अत आह—**अत्रय इति । तद्धितस्यैवेति ।** 'कित' इत्यत्रानुवृत्तस्य तद्धितस्य विशेष्यत्वेन विशेषणत्वाभावात् । तेन तदन्तविधिर्नास्तीत्यर्थः । ननु विशिष्टस्य निमित्तत्वे विशेषणमपि निमित्तमेव ; अत आह—**विशेषण एवेति ।** व्यावृत्तावेवोपयोगः व्यावर्तकत्वमुपलक्षणत्वेनापि संभवतीति न निमित्तत्वमित्यर्थः । ननु लुङीति विषयसप्तमी न परसप्तमी । तेन वधाद्यादेशेषु न निषेधप्रसङ्गः ; अत आह—**लुकेति ।** यदि भावि लुक् स्यात्तदा विषयसप्तमी स्यात् । लुप्तस्य प्रकृत्युपश्लेषरूपं विषयत्वं न संभवतीत्यर्थः । **विषयापहारात् ;** विषयत्वापहारात् । भाष्ये **तच्चापीति ।** सर्वस्वरो न सिध्यति । न लुमता तस्मिन्नित्युत्सूत्रं कर्तव्यमिति दोषद्वयोपन्यासः । द्वितीयं निराह भाष्ये—**न वक्तव्यमिति ।** ननु स्वरितत्वेनाधिकारनिर्देश उक्तः ; अत आह—**स्वरितत्वेति ।** प्रतिज्ञास्वरिताः पाणिनीया इत्यप्रतिज्ञानादित्यनेनोक्तम् । अस्मिन् पक्षेऽपि सर्वस्वरासिद्धिं शङ्कते भाष्ये—**एवमपीति । वचनमिति ।** सुपो लुक्यपि प्रत्ययलक्षणेन 'सर्वस्य सुपि' इत्येष स्वरो भवतीति वचनं कर्तव्यमित्यर्थः । यद्यपि न्यासान्तरेऽपि वचनेनैव सर्वः स्वरः सेत्स्यति । तथाप्युत्सूत्रत्वमेव न्यासान्तरेऽपि दोष इति भावः ।

## सू.—अलोऽन्त्यात्पूर्व उपधा ॥ १। १। ६४ ॥

**भा :—किमिदमल्ग्रहणमन्त्यविशेषणम् ? । एवं भवितुमर्हति ।**

**॥ वा ॥ उपधासंज्ञायामल्ग्रहणमन्त्यनिर्देशश्चेत्संघातप्रतिषेधः ।**

**भाः—उपधासंज्ञायामल्ग्रहणमन्त्यनिर्देशश्चेत्संघातस्य प्रतिषेधो वक्तव्यः । संघातस्योपधासंज्ञा प्राप्नोति । तत्र को दोषः ? "शास इदङ्हलोः" शिष्टः शिष्टवान् । संघातस्येत्वं प्राप्नोति । यदि पुनरलन्त्यादित्युच्यते । एवमप्यन्त्योऽविशेषितो भवति । तत्र को दोषः ? संघातादपि पूर्वस्योपधासंज्ञा प्रसज्येत । तत्र को दोषः ? "शास इदङ्हलोः" शिष्टः शिष्टवान् शकार-**

स्येत्त्वं प्रसज्येत। सूत्रं च भिद्यते। यथान्यासमेवास्तु। ननु चोक्तम्, उपधासंज्ञायामल्ग्रहणमन्त्यनिर्देशश्चेत् संघातप्रतिषेधः इति। नैष दोषः।

॥ वा ॥ अन्त्यविज्ञानात्सिद्धम् ॥

भा :—सिद्धमेतत्। कथम्? अलोऽन्त्यस्य विधयो भवन्तीत्यन्त्यस्य भविष्यति।

॥ वा ॥ अन्त्यविज्ञानात् सिद्धमिति चेन्नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे ॥

भा :—अन्त्यविज्ञानात् सिद्धमिति चेत्। तन्न। किं कारणम्? "नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे" अनर्थकेऽलोऽन्त्यस्य विधिर्नेत्येषा परिभाषा कर्तव्या। किमविशेषेण? नेत्याह—अनभ्यासविकारे। अभ्यासविकारान् वर्जयित्वा। "भृञामित्" "अर्तिपिपर्त्योश्च" इति।

प्र :—अलोऽन्त्यात्। **किमिदमिति।** प्रथमा पञ्चमी वेति सन्देहात्प्रश्नः। **एवमिति।** प्रथमायामभिप्रेतायामसन्देहार्थमलित्येकवचनं वक्तव्यं स्याद्। अन्त्यादिति पञ्चमीसाहचर्याच्चाल इत्यपि पञ्चम्यन्तमिति भावः। **अल्ग्रहणमिति।** निर्दिश्यतेऽभिधीयतेऽनेनेति निर्देशः। यद्यन्त्यः प्रत्याय्यत इत्यर्थः। **सङ्घातप्रतिषेध इति।** पूर्वस्याविशेषितत्वात् समुदायावयवसन्निधौ च समुदायस्यैव कार्यित्वादेकाज्द्विर्वचन इवेति भावः। अन्त्यविशेषणत्वे वर्णनिर्देशे जातिग्रहणेऽप्यल इत्युपादानसामर्थ्यात् सङ्ख्या विवक्ष्यते। **यदि पुनरिति।** अत्राप्यल्ग्रहणसामर्थ्यात् सङ्ख्या विवक्ष्यते। पिबेरदन्तत्वप्रतिज्ञानाच्च लिङ्गादल्समुदायस्य संज्ञित्वे गुणस्य प्राप्तिरेव नास्ति, किमदन्तत्वप्रतिज्ञानेन। **सूत्रं चेति।** अलन्त्यादिति पठ्यमान इत्यर्थः। **अन्त्यविज्ञानादिति।** उपधाया इति षष्ठ्यन्तमलन्तीयते इत्यर्थः। **अनभ्यासविकार इति।** अभ्यासोऽनर्थकः शब्दस्य ह्यावृत्तिर्नार्थस्य।

उ :—**प्रथमेति।** प्रथमाबहुवचनान्तमित्यर्थः। यद्यपि बहुवचनस्य पूर्व इत्यनेनासंबन्धस्तथापि छान्दसो वचनव्यत्ययः स्यादिति भावः। विनिगमने हेत्व-

भावादेवमित्ययुक्तम्; अत आह—**प्रथमायामिति**। व्याख्यानेन सन्देहनिवृत्ति-माशङ्क्याह—**अन्त्यादिति**। निर्देशशब्दस्य करणव्युत्पत्त्या ग्रहणमित्यनेन सामानाधिकरण्यमाह—**निर्दिश्यत इति**। अनिर्धारितकरणविशेषव्युत्पादितस्य निर्देश-शब्दस्य पश्चाद्ग्रहणेन संबन्ध इति वार्तिके पुन्नपुंसकयोः सामानाधिकरण्योपपत्तेः व्युत्पत्ति-लभ्यमर्थमाह—**यदीति**। प्रतिषेधस्य प्राप्तिपूर्वकत्वात्तामाह—**पूर्वस्येति**। ननु वर्णग्रहणे जातिग्रहणादन्त्यादल इति पक्षेऽपि समुदायस्योत्वप्रसङ्गो न निरस्तः; अत आह—**अन्त्येति**। **संख्या;** वृत्तिगतैकत्वसंख्या। वर्णनिर्देशे जातिनिर्देशात् समुदायाव्यावृत्तिशङ्कां पूर्ववदेव परिहरति—**अत्रापीति**। एकत्वविवक्षायां हेत्वन्तर-माह—**पिबेरिति**। **प्राप्तिरेवेति**। अलघूपधत्वादित्यर्थः। नन्वल इति प्रथमान्तमिति व्याख्याने सूत्रभेदो नास्ति; अत आह—**अलन्त्यादिति**। अन्त्यादित्यनेन साहचर्यात्प्रथमव्याख्यानासंभवादलन्त्यादिति पठनीयम्। तथा च सूत्रभेद इति भावः। अभ्यासस्यानर्थकत्वे हेतुः; **शब्दस्येति**। अर्थावृत्तावभ्यासस्या-प्यर्थवत्वं स्याच्छब्दमात्रावृत्तौ अभ्यस्तस्यैवार्थवत्त्वात्तदवयवाभ्यासस्यानर्थक्यमित्यर्थः। एकाक्षु धातुष्विदं समाधानम् अनेकाक्षु शङ्कैव नास्तीति ज्ञेयम्।

**भा :—कान्येतस्याः परिभाषायाः प्रयोजनानि ?।**

**॥ वा ॥ प्रयोजनमव्यक्तानुकरणस्यात इतौ ॥**

**भा :—"अव्यक्तानुकरणस्यात इतौ" इत्यन्त्यस्य प्राप्नोति। अनर्थकेऽलोऽन्त्यविधिर्न भवतीति न दोषो भवति। नैतदस्ति प्रयोजनम्। आचार्यप्रवृत्तिर्ज्ञापयति—नान्त्यस्य पररूपं भवतीति। यदयम्—" नाम्रेडितस्यान्त्यस्य तु वा " इत्याह।**

**॥ वा ॥ घ्वसोरेद्धावभ्यासलोपश्च ॥**

**भा :—घ्वसोरेद्धावभ्यासलोपश्चेत्यन्त्यस्य प्राप्नोति। अनर्थकेऽलोऽन्त्यविधिर्नेति न दोषो भवति। एतदपि नास्ति प्रयोजनम्। पुनर्लोपवचनसामर्थ्यात्सर्वस्य भविष्यति। अथवा शिल्लोपः करिष्यते। स "शित्सर्वस्य" इति सर्वादेशो भविष्यति। स तर्हि शकारः कर्तव्यः। न कर्तव्यः। क्रियते**

न्यास एव द्विशकारको निर्देशः = "श्वसोरेद्धावभ्यासलोपश्च" इति।

॥ वा ॥ आपि लोपोऽकोऽनचि ॥

भा:—तिष्ठति सूत्रम्?। अन्यथा व्याख्यायते। आपि हलि लोप इत्यन्त्यस्य प्राप्नोति। अनर्थकेऽलोऽन्त्यविधिर्नेति न दोषो भवति। एतदपि नास्ति प्रयोजनम्। अन एव लोपं वक्ष्यामि। तदनोग्रहणं कर्तव्यम्?। न कर्तव्यम्। प्रकृतमनुवर्तते। क्व प्रकृतम्?। "अनाप्यकः" इति। तद्वै प्रथमानिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः। हलीत्येषा सप्तमी अनिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति—"तस्मिन्निति निर्दिष्टे पूर्वस्य" इति।

प्र:—**अव्यक्तानुकरणस्येति।** अव्यक्तानुकरणस्य योऽच्छब्दस्तस्येतौ पररूपमिति सूत्रार्थः। **यदयमिति।** आम्रेडितस्य वेत्येव वक्तव्यं स्यात्। **श्वसोरिति।** अनभ्यासविकार इति प्रतिषेधो रूपवत्यादेशे लोपस्तु नीरूपः। तथा च पस्पशायां लोपागमवर्णविकारज इति लोपविकारौ भेदेन निर्दिष्टौ। **पुनर्लोपेति।** लोपो यीत्यतो लोपग्रहणेऽनुवर्तमान इति भावः। तत्र श्वसोरेद्धावभ्यासस्य चेति वक्तव्यम्। तत्र व्याख्यानादभ्यासस्य लोप एव भविष्यति न त्वेत्वम् योगविभागो वा करिष्यते **श्वसोरेद्धौ ततोऽभ्यासस्येति।** अत्र च लोपोऽनुवर्तिष्यते तत्र पुनर्लोपवचनात् सर्वापहारार्थादलोऽन्त्यस्येति बाध्यते। **द्विशकारको निर्देश इति।** लोपशब्दात् कृदन्तात्संज्ञिनार्थेनार्थवत्त्वाद्विभक्तौ कृतायां शकारः प्रतिनिर्दिश्यते। तस्य चेत्संज्ञायां सत्यां सर्वादेशो लोपो भवति। इत्संज्ञोपदेश एव प्रवर्तते तत्कार्यं तु प्रयोग इत्येष सिद्धान्तः। **तिष्ठति सूत्रमिति।** लक्ष्यलक्षणभावस्याविवक्षितत्वात्तिष्ठत् सूत्रमिति न कृतम्। तत्रायमर्थः। तिष्ठति सूत्रम्। न प्रत्याख्यायते। तत्तु अन्यथा व्याख्यायते। तत्रानचीत्यनेन हलीत्यस्यार्थो व्याख्यातः। आप्यक इत्यनुवृत्तिर्दर्शिता। **अन एवेति।** अनाप्यक इति सामान्येनानादेशं विधाय हलादौ तु तस्यैव लोपो विधीयत इत्यर्थः। येन नाव्यवधानमिति त्यदाद्यत्वे न व्यवधानमाश्रीयते।

उ :—नन्वच्छब्दान्तस्यानुकरणस्यानुकार्येणार्थवत्त्वात्कथमानर्थक्यम्; अत आह—**अव्यक्तेति**। तथा च कार्यभाजोच्छब्दस्यानर्थक्यमेवेत्यर्थः। ननु विकल्पार्थं सूत्रं कथं ज्ञापकम्; अत आह—**आम्रेडितस्य वेति**। पूर्वत्रालोऽन्त्यविधिश्चेदत्रान्त्यस्येति व्यर्थं सत्तदभावं ज्ञापयतीत्यर्थः। ननु अनभ्यासविकार इति प्रतिषेधादभ्यासलोपोऽन्त्यस्यैव स्याद्; अत आह—**अनभ्यासेति**। **रूपवति**; वर्णात्मके। **नीरूपः**; वर्णरहितः। लोपस्याविकारत्वे भाष्यसंवादमाह—**तथा चेति**। ननु लोपग्रहणाभावे घ्वसोरेद्धावभ्यासस्येति सूत्रं चेदन्यवचनाच्चकाराकरणे च प्रकृतापवादन्यायेनैत्वमेव स्यान्न लोपः। यदि च लोपोऽनुवर्तते तदास्तेरभ्यासाभावेन यथासंख्येन घोरभ्यासस्यैत्वमस्तेर्लोप इत्यपि स्यात्; अत आह—**तत्रेति**। ननु चकारेणानुवृत्तौ लोपोऽभ्यासस्यैवेति कथम्; अत आह—**व्याख्यानादिति**। अन्ते तु बादरायण इति न्यायेनानुवर्तमानं लोपग्रहणमभ्यासस्येत्यनन्तरं निविशति। तथा च सन्निधानादभ्यासस्य लोपः घ्वसोरेत्वं च सिध्यतीत्यर्थः। नन्वभ्यासस्य चेत्युक्तौ स्थानिसन्निहितचकारः स्थान्यन्तरमेव समुच्चिनुयान्न विधेयान्तरमित्यभ्यासस्याप्येत्वमेव स्यान्न लोपः; अत आह। **योगेति**। योगविभागसामर्थ्यादेत्वं नानुवर्तते किं तु लोप इति भावः। **सर्वेति**। पुनर्लोपग्रहणेन लोप एव, नावशेषः कस्यचिदित्यवगमादिति भावः। ननु लोपशब्दस्याप्रातिपदिकत्वेन स्वाद्युत्पत्तेरभावः। उत्पत्तौ वा लोपशब्दात्सोर्हल्ङ्यादिलोपाद् द्विशकारकत्वमयुक्तम्; अत आह—**लोपेति**। टिघुभादिवदव्युत्पन्नत्वेऽप्याह—**संज्ञिनेति**। **कृतार्थ मिति**। तथा च विभक्तेरुपरि शकारः पठ्यत इति न हल्ङ्यादिलोप इत्यर्थः। **पृथगिति**। तथा च शकारान्तस्य पदत्वाभावात्संयोगान्तलोपो न भवतीत्यर्थः। **इत्संज्ञायाम्**; हलन्त्यमित्यनेन। ननु लोपशब्दश्शित्, न तु तदर्थ इति कथं तस्य सर्वादेशत्वम्; अत आह—**इत्संज्ञेति**। शब्दे कार्याभावादर्थे कार्यं विज्ञायत इति भावः। ननु हलि लोप इति प्रयोजनमिति वक्तव्ये 'आपि लोपोऽकोऽनचि' इति वार्तिकेन तत्प्रत्याख्यानं प्रतीयते तच्चायुक्तम्; अत आह—भाष्ये **तिष्ठतीति**; यथास्थितसूत्रमनेन न प्रत्याख्यायते, किं त्वन्यथा व्याख्यानं कृतमित्यर्थः। तत्र तिष्ठत्सूत्रमिति वक्तव्ये तिष्ठतीति कथमुक्तम्; अत आह—**लक्षणेति**। **न कृतमिति**। 'लक्षणहेत्वोः क्रियायाः' इत्यस्याप्रवृत्तेरित्यर्थः। आख्यातद्वयस्यैकवाक्यत्वासंभवादाह—**तत्रेति**। अपि सूत्रमन्यथा तिष्ठति तथापि तन्न प्रत्याख्यायते, किं त्वन्यथा व्याख्यायत इत्यक्षरान्वय

इत्यर्थः । अन्यथा व्याख्यानमेवाह—**तत्रेति । सामान्येन ।** विभक्तिमात्रे परतः । नन्विदोऽनादेशः, मकारस्य त्यदाद्यत्वं, तथा च तेन व्यवधानान्नानो विभक्तिपरत्वम् ; अत आह—**येनेति ।**

**॥ वा ॥ अत्र लोपोऽभ्यासस्य ॥**

**भा :—अन्त्यस्य प्राप्नोति । 'नानर्थकेऽलोन्त्यविधिः' इति न दोषो भवति । एतदपि नास्ति प्रयोजनम् । अत्रग्रहणसामर्थ्यात्सर्वस्य भविष्यति । अस्त्यन्यदत्रग्रहणस्य प्रयोजनम् । किम् ? सन्नधिकारोऽपेक्ष्यते । इह मा भूत्—दधौ ददौ । अन्तरेणाप्यत्रग्रहणं सन्नधिकारमपेक्षिष्यामहे । संस्तर्हि सकारादिरपेक्ष्यते—सनि सकारादाविति । इह मा भूत्—जिज्ञापयिषतीति । अन्तरेणाप्यत्रग्रहणं सनं सकारादिमपेक्षिष्यामहे । प्रकृतयस्तर्ह्यपेक्ष्यन्ते । एतासां प्रकृतीनां लोपो यथा स्यात् । इह मा भूत् । पिपक्षति यियक्षति । अन्तरणाप्यत्रग्रहणं एताः प्रकृतीरपेक्षिष्यामहे । विषयस्तर्ह्यपेक्ष्यते—“ मुचोऽकर्मस्य गुणो वा” इति । इह मा भूत्—मुमुक्षति गामिति । अन्तरेणाप्यत्रग्रहणमेतं विषयमपेक्षिष्यामहे । कथम् ? अकर्मकस्येत्युच्यते, तेन यत्रैवायं मुचिरकर्मकस्तत्रैव भविष्यति । तस्मान्नार्थोऽनया परिभाषा—नानर्थकेऽलोऽन्त्यविधिरिति ।**

**॥ वा ॥ अलोऽन्त्यात् पूर्वोऽलुपधेति वा ॥**

**भा :—अथ वा व्यक्तमेव पठितव्यम् । अलोऽन्त्यापूर्वोऽलुपधासंज्ञो भवतीति । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् ।**

**॥ वा ॥ अवचनाल्लोकविज्ञानात् सिद्धम् ॥**

**भा :—अन्तरेणापि वचनं लोकविज्ञानात् सिद्धमेतत् । तद्यथा लोके—अमीषां ब्राह्मणानामन्त्यापूर्व आनीयतामित्युक्ते यथाजातीयकोऽन्त्यस्तथाजातीयकोऽन्त्यात्पूर्व आनीयते । अलोऽन्त्यात्पूर्व उपधा ॥ ६४ ॥**

प्र :—**अत्रग्रहणसामर्थ्यादिति।** मीमादीनामधिकारादेव सिद्धेरत्रग्रहणादयमर्थ आश्रीयते योऽभ्यामत्वेन निर्ज्ञातस्तस्य समग्रस्य लोपो न त्वलोऽन्त्यस्येति। **यथाजतीयकोऽन्त्य इति।** एतच्च ब्रुवता पञ्चमीपक्ष एवाश्रितः। षष्ठीप्रथमयोरपि न दोषः। षष्ठीपक्षे निर्धारणे षष्ठी, निर्धारणं च तुल्यजातीयस्य भवतीति अलां मध्ये योऽन्त्योऽलतस्मात् पूर्व उपधासंज्ञ इत्यलेवोक्तान्न्यायात्प्रतीयते। प्रथमाबहुवचनपक्षेऽप्ययमर्थः। अन्त्यात्पूर्वोऽलुपधासंज्ञ इति। अल इति जातौ बहुवचनम्। अवधिमत्तुल्यजातीयश्चावधिरिति अलोऽन्त्यादिति विज्ञायते॥ ६५॥

उ :—**अधिकारादेवेति।** भाष्योदाहृतप्रयोजनानां सर्वेषामपीत्यर्थः। अत्रग्रहणेन सर्वलोपसिद्धिमाह—**अयमर्थ इति।** अन्त्यलोपे सिद्धे अत्रग्रहणादेतदर्थलाभ इत्यर्थः। **एतच्चेति।** अवधिना अवधिमतो निर्णयं ब्रुवतेत्यर्थः। **उक्तान्न्यायात्;** यथाजातीयक इति भाष्योक्तन्यायात्। अवधिमत्यवधितुल्यत्वमेवावधिमत्तुल्यत्वमवधेरपि न्यायसाम्यादित्यभिप्रेत्याह—**प्रथमेति।**

सू.—तस्मिन्निति निर्दिष्टे पूर्वस्य॥ १। १। ६५॥

तस्मादित्युत्तरस्य॥ १। १। ६६॥

**भा :—किमुदाहरणम्? इह तावत् "तस्मिन्निति निर्दिष्टे पूर्वस्य" इति "इको यणचि" दध्यत्र मध्वत्र। इह "तस्मादित्युत्तरस्य" इति "द्व्यन्तरुपसर्गेभ्योऽप ईत्" द्वीपम् अन्तरीपम् समीपम्। अन्यथाजातीकेन शब्देन निर्देशः क्रियते, अन्यथाजातीयक उदाह्रियते। किं तर्ह्युदाहरणम्? इह तावत् "तस्मिन्निति निर्दिष्टे पूर्वस्य" इति "तस्मिन्नणि च युष्माकास्माकौ" इति। "तस्मादित्युत्तरस्य" इति—"तस्माच्छसो नः पुंसि" इति। इदं चाप्युदाहरणम्—"इको यणचि" "द्व्यन्तरुपसर्गेभ्योऽप ईद्" इति। कथम्? सर्वनाम्नायं निर्देशः क्रियते। सर्वनाम च सामान्यवाची। तत्र सामान्ये निर्दिष्टे विशेषा अप्युदाहरणानि भवन्ति। किं पुनः सामान्यम् को विशेषः? गौः सामान्यम्। कृष्णो विशेषः। न तर्हीदानीं**

**कृष्णः सामान्यम् गौर्विशेषो भवति? भवति च। यदि तर्हि सामान्यमपि विशेषो, विशेषोऽपि सामान्यम्, सामान्यविशेषौ न प्रकल्पेते। प्रकल्पेते च। कथम्? विवक्षातः। यदाऽस्य गौः सामान्येन विवक्षितो भवति कृष्णो विशेषत्वेन, तदा गौः सामान्यम्; कृष्णो विशेषः। यदाऽस्य कृष्णः सामान्येन विवक्षितो भवति गौर्विशेषत्वेन, तदा कृष्णः सामान्यम्; गौर्विशेषः। अपर आह—"प्रकल्पेते च" कथम्? पितापुत्रवत्। तद्यथा— स एव कंचित्प्रति पिता भवति, कंचित्प्रति पुत्रो भवति। एवमिहापि स एव कंचित्प्रति सामान्यं कंचित्प्रति विशेषः। एते खल्वपि नैर्देशिकानां वार्त्ततरका भवन्ति, ये सर्वनाम्ना निर्देशाः क्रियन्ते। एतैर्हि बहुतरकं व्याप्यते।**

प्र:—तस्मिन्निति। तस्मादिति। **किमुदाहरणमिति।** इतिकरणस्य गौरित्ययमाहेत्यादौ स्वरूपपदार्थकत्वेन व्यवस्थापकत्वदर्शनात्प्रश्नः। **दध्यत्रैवेति।** यदि तस्मिन्नणि चेति तस्माच्छस इति चात्रैवैते परिभाषे उपस्थास्येतां तदा तत्रैवं पूर्वग्रहणमुत्तरग्रहणं चाकरिष्येतामिति भावः। अत्र व्यवच्छेद्यमस्ति यौष्मकीण अस्मभ्यं देहि आस्मकीन युष्मभ्यं दीयतामिति स्वञः परयोर्युष्मदस्मदारादेशौ न भवतः। वृक्षानित्यत्र च पूर्वसवर्णदीर्घभूताच्छसः पूर्वस्य षकारस्य नत्वं न भवति। अथ शस इति स्थानषष्ठीति व्याख्यानात् षकारस्य न भवतीत्युच्यते, एवमप्युच्चरन् आनुपलभन इत्यादौ पूर्वसवर्णदीर्घात्पूर्वस्य शसो नत्वं व्यवच्छेद्यमेव। **अन्यथाजातीयकेनेति।** इतिकरणात् स्वरूपग्रहणेनैव भाव्यमिति भावः। थाला प्रकारमात्रमभिधीयत इति तद्वतोऽभिधानाय जातीयर्प्रत्ययः कृतः। लौकिके प्रयोगे लाघवानादरप्रदर्शनाय प्रत्ययद्वयप्रयोगः। केवलेनापि जातीयरा प्रकारवान् गम्यत एव। **इदं चापीति।** सिद्धान्तवादी। इतिकरणोऽत्रार्थनिर्देशार्थ एव स्वं रूपमिति वचनात्स्वरूपग्रहणे प्राप्ते। **सर्वनाम्नाऽयमिति।** सूत्रान्तरोपात्तस्य तस्मिन्नित्यस्य तस्मादित्यस्य च नैतदनुकरणं, किं तर्हि? सर्वनाम्ना निर्देश इत्यर्थः। तेन यत्र सप्तम्यर्थनिर्देशः पञ्चम्यर्थनिर्देशश्च तत्रोभयोरुपस्थानम्। **विशेषा अपीति।** अपिः सम्भावनायां न समुच्चये। न हि विशेषपरित्यागेनेह शास्त्रे सामान्यमस्ति यदुदाहरणं स्यात्। तस्मात्सर्वे विशेषा इहोदाहरणमित्यर्थः। सामान्यस्य सर्वविशेषेषु भावात्। **किं पुनरिति।** सामान्यविशेषभावस्याऽनवस्थानात्प्रश्नः।

कदाचिद् दूराद् गोत्वमात्रग्रहणं पश्चात् कृष्णादिविशेषावगमः। कदाचित्तु पूर्वं कृष्णादेर्ग्रहणं पश्चाद् गोत्वादेः। **गौः सामान्यमिति।** यद्विशेष्य प्रधानं तत्सामान्यम्। यत्तु विशेषणत्वेन परोपकारितया निर्दिश्यते स विशेष इति तात्पर्यम्। इहापि तस्मिन्नित्यनेन सप्तम्यर्थमात्रं सामान्यं निर्दिष्टम्। अचि हलीत्यादयस्तु विशेषाः। **पितापुत्रवदिति।** जन्यजनकशक्तिद्वययोगवदेकस्यैव विशेषणविशेष्यशक्तिद्वययोगात्कदाचित्काचिच्छक्तिराश्रीयते। सप्तमीनिर्दिष्टे पूर्वस्येत्येवं कस्मान्नोच्यते इत्याह—**एते खल्वपीति। नैर्देशिकानां;** निर्देशप्रयोजनानां मध्ये। **वार्त्तनरका** युक्तनरका इत्यर्थः। भाष्यकारवचनप्रामाण्यादत्र न प्रत्ययः। तमग्र ह्यत्र भाष्यम्। **एतैर्हीति।** यदि हि सप्तमीनिर्दिष्ट इत्युच्यत तदा सप्तमीशब्देन यो निर्दिष्ट इति प्रतीयेतेति भावः।

उ:—**तस्मिन्निति।** ननु दध्यत्रेत्याद्युदाहरणस्य स्फुटत्वात्प्रश्नायोगः; अत आह—**इतिकरणस्येति। तत्रैवेति;** परिभाषाया बहुव्यापित्वान्नैकमुदाहरणमिति न्यायाच्च सूत्रद्वयवैयर्थ्यपरिहाराय सप्तमीपञ्चमीनिर्दिष्टमात्र गृह्यते न स्वरूपमित्यर्थः। ननु तस्मिन्नणीत्यत्र युष्मदस्मदोरित्यनुवर्तनात्तयोः प्रत्ययात्पूर्वयोरेवादेशो भविष्यतीति पूर्वग्रहणस्य परिभाषाया वा न प्रयोजनम्; अत आह—**अत्रेति।** ‘तस्मिन्नणि’ ‘तस्माच्छसः’ इति सूत्रद्वय इत्यर्थः। **व्यवच्छेद्यम्;** पूर्वोत्तरग्रहणयोरित्यादिः। तस्मिन्निति खञ् परामृश्यते। सप्तमी चौपश्लेषिकसम्बन्धे। तथा च पूर्वोत्तरयोः खञुपश्लेषतौल्यात्पूर्वस्येव परस्याप्यादेशप्रसङ्गात्तन्निवृत्तये पूर्वग्रहणं कर्तव्यमित्यर्थः। खञव्यवधानसंपादनाय संबुद्ध्यन्तोपादानं। देहि दीयतामित्यत्र वस्त्रादिकमित्यध्याहारः। तस्माच्छस इत्यत्रोत्तरग्रहणस्य व्यवच्छेद्यमाह—**वृक्षानिति।** तस्मादिति च साहचर्याच्छस इति पञ्चमीति चेत्पूर्वसवर्णदीर्घपरामर्शिना तस्मादित्यनेन सामानाधिकरण्याय शस इति तदवयवे वर्तते। ततश्चादिवद्भावेन शसोऽवयवभूतात्पूर्वसवर्णदीर्घात्पूर्वस्य सस्यापि नत्वं प्राप्तं तस्मादित्युत्तरस्येति वचनान्न भवतीत्यर्थः। ननु स्थानिसमर्पणाय शस इति षष्ठी न पञ्चमीति, नोक्तदोष इति शङ्कते—**अथेति। आन् इति;** अवर्णस्य द्वितीयाबहुवचनम्। **पूर्वस्य;** उच्चरत इति पदस्थस्य। थाल्जातीयरोरन्यतरवैयर्थ्यं परिहरति—**थालेति। तद्वत इति;** यद्यपि जातीयैव विवक्षितसिद्धेस्थालो वैयर्थ्यम्, तथाप्येतादृशप्रयोगसाधुत्वख्यापनायोभयप्रयोग इत्याह—**लौकिक इति। इदं चेति;** भाष्यं न पूर्वपक्षिणः तेन तदुदाहरणत्वानङ्गीकारात्, किं तु सिद्धान्तिन इत्याह—**सिद्धान्तेति। इतिकरण इति;**

इतिं विना योऽर्थः प्रतीयते तदर्थान्तरमितिना प्रतिपाद्यते, न तु स्वरूपपदार्थकत्वमेवेति भावः। नन्वनुकार्यानुकरणयोरभेदादनुकरणस्यापि सर्वनामत्वमविरुद्धम्; अत आह— **सूत्रान्तरेति। सप्तम्यर्थः;** अधिकरणम्। **पञ्चम्यर्थः;** अवधिः। **विशेषपरित्यागेन;** निर्धारितपरित्यागेनेत्यर्थः। **सामान्यम्;** अनिर्धारितविशेषः। **सामान्यस्य;** यः कश्चिद्विशेष इत्यस्य। **सर्वविशेषेषु;** इदंतया निर्धारितविशेषेषु। **भावाद्;** अभेदेन सत्वात्। सामान्यविशेषशब्दयोरुक्तमर्थमजानतः प्रश्न इत्यभिप्रेत्य यथाश्रुतभाष्यानुसारेण प्रश्नाशयमाह—**सामान्येति।** ननु पूर्वंप्रतीतं सामान्यं पश्चात्प्रतीतो विशेष इति व्यवस्थोपपत्तेः कथमनवस्थितिः; अत आह—**पूर्वं कृष्णादेरिति;** गोत्वव्यञ्जकावयवविशेषसन्निकर्षाभावदशायामिति भावः। अपर आहेत्यतः प्राक्तनभाष्यतात्पर्यमाह—**यद्विशेष्यमिति।** ननु गोत्वसामान्यस्य कथं विशेषत्वमत आह—**परोपकारितयेति;** परव्यावर्तकतया घटादिसाधारणकृष्णशब्दार्थस्य गोत्वमपि विशेषकमिति विशेष इत्युच्यत इत्यर्थः। दार्ष्टान्तिकेऽपि योजयति— **इहापीति; सामान्यम्;** अनिर्धारितविशेषरूपमधिकरणमात्रम्। विशेषणविशेष्यत्वयोरेकत्र विरोधादसम्भवशङ्कानिरासार्थत्वेन पितापुत्रवदिति भाष्यं व्याचष्टे— **जन्येति।** एत इत्यस्य व्यावर्त्यांशमाह—**सप्तमीति;** स्पष्टप्रतिपत्तय इत्यादिः। **इत्याह;** इति शङ्कायामाह। ये सर्वनाम्ना निर्दिश्यन्ते ते युक्ततरा भवन्तीति भाष्यार्थः। ननु द्विवचनविभज्योपपदाभावात्कथमत्र तरप्; अत आह—**भाष्यकारेति।**

**भा:—अथ किमर्थमुपसर्गेण निर्देशः क्रियते? शब्दे सप्तम्या निर्दिष्टे पूर्वस्य कार्यं यथा स्यात्। अर्थे मा भूत्—जनपदे, अतिशायन इति। किं गतमेतदुपसर्गेण, आहोस्विच्छब्दाधिक्यादर्थाधिक्यम्। गतमित्याह। कथम्? निरयं बहिर्भावे वर्तते। तद्यथा—निष्क्रान्तो देशाद् निर्देशः,। बहिर्देश इति गम्यते। शब्दश्च शब्दाद्बहिर्भूतः। अर्थोऽबहिर्भूतः। अथ निर्दिष्टग्रहणं किमर्थम्?**

**॥ वा ॥ निर्दिष्टग्रहणमानन्तर्यार्थम् ॥**

**भा:—निर्दिष्टग्रहणं क्रियते। आनन्तर्यार्थम्। आनन्तर्यमात्रे कार्यं यथा स्यात्—"इको यणचि" दध्यत्र, मध्वत्र। इह मा भूत्—समिधौ समिधः। दृषदौ दृषदः।**

प्रः—**किमर्थमिति ।** किमर्थमुपसर्गयुक्तस्य धातोर्निर्देशः क्रियते । तस्मिन्निति पूर्वस्येति कस्मान्नोच्यत इति प्रश्नः, न पुनर्दिष्ट इत्येवोच्यतामिति प्रश्नः केवलस्य दिशेर्दानार्थत्वादिहानुपयोगात् । **शब्द इति ।** अन्तरेणाऽपि निर्दिष्टग्रहणं तस्मिन्निति पूर्वस्येत्येव निर्दिष्टत्वे लब्धे पुनर्निर्दिष्टशब्द उपादीयमानो बहिर्भावं गमयति । शब्दाच्च बहिर्भूतः शब्द एव भवतीति । **जनपद इति ।** तत्रायमर्थः स्याद् जनपदवाचिनि शब्दे परतश्चातुर्थिकस्य लुब् भवतीति । **अथेति ।** ननु प्रयोजनस्योक्तत्वात् पुनः प्रश्नानुपपत्तिः । अयं भावः । जनपदे लुबित्यत्रार्थेन पौर्वापर्याभावाज्जनपदे यः प्रत्यय उत्पन्नस्तस्य लुब् इति । तथातिशायने वर्तमानात्तमबादय इत्यर्थनिर्देशेषूपस्थानं न भविष्यति । यदि चैतत्प्रयोजनं तदा तस्मिन्निति शब्दे पूर्वस्येति वक्तव्यम् । **निर्दिष्टग्रहणमिति ।** पूर्वोक्तप्रयोजनाभावादिति भावः । निःशब्दश्च नैरन्तर्ये वर्तते । दिशिश्चोच्चारणक्रियः, तेन निरन्तरोच्चारिते कार्यं लभ्यते । **समिधाविति ;** ननु संहितायामित्युच्यते न च व्यवहितयोः संहितास्ति । अचीति चाधिकरणमौपश्लेषिकं निर्दिष्टम् । न च व्यवहितमुपश्लिष्टं भवति । नैष दोषः । वर्णानां परः संनिकर्षः संहिता । सा चात्रास्ति । अचीति सत्सप्तमी विज्ञायते । व्यवहितेऽपि पूर्वशब्दो वर्तते इति यत्र विषये यथाभूत इक् संभवति अनन्तरो व्यवहितो वा तथाभूतस्यैव यणादेशः स्यात् ।

उः—ननु सप्तमीनिर्दिष्टशब्दस्य बहिर्भूतार्थकत्वे तस्मिन्सप्तम्यर्थे इत्यर्थो भवति । बहिर्भावस्य सावधिकतया अवध्यपेक्षायां शब्दानुशासनेऽस्मिन्शब्द एवावधिर्गृह्यते । अवधिमानपि शब्द एव गृह्यत इत्यर्थः । शब्दे सप्तमीनिर्दिष्टे पूर्वस्य कार्यमिति लभ्यत इति भावः । शब्दस्यार्थोऽन्तरङ्गः प्रतिपाद्यत्वेति न बहिर्भूतः, किं तु शब्द एवेत्यप्याहुः । ननु प्रत्ययस्यार्थेन पौर्वापर्याभावात् 'जनपदे लुब्' इत्यत्र कथं तस्मिन्निति परिभाषोपस्थानम् ; अत आह—**तत्रेति ।** तदा औदुम्बरः पञ्चाला इति चातुरर्थिकाविति प्रयोगे जनपदवाचिपञ्चालशब्दे औदुम्बर इत्यत्र चातुरर्थिकप्रत्ययस्य लुप्स्यात् । औदुम्बरो जनपदश्च रम्यावित्यत्रापि स ज्ञेयः । पूर्वोक्तप्रयोजनाक्षेपेणेयं शङ्केत्याह—**अयमिति । यः प्रत्यय इति ।** लुप्स्थानित्वेनोपस्थितप्रत्ययस्यैव तदर्थकत्वेन विशेषणत्वसम्भवे तद्वाचिशब्दान्तरपरत्वकल्पने मानाभावादिति भावः । षष्ठीप्रकॢप्तिपक्षेऽप्याह—**यदिति ।** अर्थव्यावृत्तिमात्रं चेत्प्रयोजनं निर्दिष्टग्रहणेन तद्व्यावृत्तेः क्लिष्टत्वाच्छब्दपूर्वस्येत्येव वक्तव्यं स्यादित्यर्थः । पूर्वप्रयोजनासम्भवात्प्रयोजनान्तरकथनमित्याह—

**पूर्वोक्तेति।** आनन्तर्यार्थित्वमुपपादयति—**निरशब्द इति।** निमित्तस्थानिनो-रन्येनाऽव्यवधानं संहितेति मन्वानश्शंकते—**नन्विति।** मध्ये वर्णशून्यकालाभाव-स्संहितेति परिहरति—**नैष इति।** नन्वसत्यपि निर्दिष्टग्रहणे तस्मिन्निति पूर्वस्येति पक्षेऽपि धव्यवहितस्येकोऽचः पूर्वत्वाभावान्न समिधावित्यादौ प्रसङ्गः ; अत आह—**व्यव-हितेति।** नन्वव्यवहितसम्भवे व्यवहितं न गृह्यत इत्याशङ्क्य लक्ष्यभेदे लक्षण-भेदाश्रयेणाह—**यत्रेति।**

**भा :—किमर्थं पुनरिदमुच्यते ?**

**॥ वा ॥ तस्मिंस्तस्मादिति पूर्वोत्तरयोर्योगाविशेषान्नि-यमार्थं वचनं दध्युदकं पचत्योदनम् ॥**

**भा :—तस्मिंस्तस्मादिति पूर्वोत्तरयोर्योगयोरविशेषान्नियमा-र्थोऽयमारम्भः। ग्रामे देवदत्तः, पूर्वः पर इति संदेहः। ग्रामाद्दे-वदत्तः, पूर्वः पर इति संदेहः। एवमिहापि—दध्युदकम्। पचत्योदनम्। [इको यणचि" इति] उभाविकौ उभावचौ। अचि पूर्वस्य अचि परस्येति संदेहः। तिङ्ङतिङः इत्यतिङः पूर्वस्य अतिङः परस्येति सन्देहः। इष्यते चाचि पूर्वस्य स्याद्, अतिङश्च परस्येति। तच्चान्तरेण वचनं न सिध्यतीति नियमार्थं वचनम्। एवमर्थमिदमुच्यते। अस्ति प्रयोजनमेतत्? किं तर्हीति? अथ यत्रोभयं निर्दिश्यते, किं तत्र पूर्वस्य कार्यं भवति। आहो-स्वित् परस्येति ?**

**॥ वा ॥ उभयनिर्देशे विप्रतिषेधात्पञ्चमीनिर्देशः ॥**

**भा :—उभयनिर्देशे विप्रतिषेधात्पञ्चमीनिर्देशो भविष्यति। किं प्रयोजनम् ?**

प्र :—**किमर्थमिति।** किं नियमार्थमथ षष्ठीप्रकॢप्त्यर्थमिति प्रश्नः। **पूर्वोत्तरयोरिति।** कर्मणि षष्ठी। योगः सम्बन्धः। तदयमर्थः। अच्युपश्लिष्ट-स्येको यणा भाव्यम्। यथा च परस्मिन् पूर्व उपश्लिष्ट एवं पूर्वस्मिन्नपि परः।

तिङ्ङतिङ इत्यत्रपि यथातिङ्ङन्तात्परं तिङ्ङन्तं भवत्येवं पूर्वमपि। तत्र षष्ठीप्रकॢप्तिपक्षे षष्ठ्यनुवर्तयितव्येति गौरवप्रसङ्गान्नियमार्थमित्युक्तम्। **योगयोरिति**। युज्येते इति योगौ कर्मणि घञ्। अचीति सत्सप्तमीपक्षेऽप्यनियमप्रसङ्गः। **अचि पूर्वस्येति**। 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति, न्यायादधिकरणसप्तमी कृता न तु दिग्योगलक्षणा पञ्चमी। तत्र दध्युदकमित्यादौ पर्यायप्रसङ्गः। न हि युगपदेकस्य स्थानित्वं निमित्तत्वं चोपपद्यत इति नियमार्थं वचनम् पूर्वस्यैवानन्तरस्यैव भवतीति द्वयं चानेन क्रियते परनिवृत्तिर्व्यवहितनिवृत्तिश्च। संदेहस्तूपक्रममात्रतयोपन्यस्तः। न हि संदेहादलक्षणमिति न्यायात् पर्यायप्रसङ्गात्। **अथ यत्रेति**। यथा बहोर्लोप इत्यत्र युगपच्चैकस्य कार्यित्वनिमित्तत्वासंभवात् प्रश्नः। **विप्रतिषेधादिति**। सूत्रपाठापेक्षया परस्य व्यवस्थापकत्वमित्यर्थः। **किं प्रयोजनमिति**। विभक्तिविशेषनिर्देशस्यानवकाशत्वाद्वक्ष्यमाणोऽभिप्रायः।

उ:—**कर्मणीति**। सम्बन्धक्रियाकर्मणीत्यर्थः। सम्बन्ध उपश्लेषरूपः। पर्यवसितं वाक्यार्थमाह—**तदिति**। **उपश्लिष्टस्येति**। नचानेन वार्तिकस्थयोगशब्दः कर्मणि घञन्तत्वेन व्याख्यात इति मन्तव्यम्। तथा सति पूर्वोत्तरयोरित्येतद्विशेषणतया योगशब्दस्य युक्तार्थकस्य समासायोगात्। तस्मादित्युत्तरस्येत्यस्यापि नियममाह—**तिङिति**। नियमार्थत्वे त्रैदोष्यापत्तेः षष्ठीप्रकॢप्तिपक्ष एव श्रेयान्; अत आह—**तत्र षष्ठीति**। **योगयोरिति** भाष्यं पर्यवसितव्याख्यानम्। तत्संगमयति—**युज्यते इति**। एतद्भाष्यदर्शनाद् योगाविशेषादिति सापेक्षत्वेऽपि समास इत्यपि केचित्। औपश्लेषिकाधिकरणसप्तमीपक्ष इव सतिसप्तमीपक्षेऽप्यनियम इत्याह—**सत्सप्तमीति**। नन्वत्राचः पूर्वस्येति भाष्यं कथमचि पूर्वस्येत्यत आह—**उपपदेति**। यौगपद्यं न कुतः; अत आह—**नहीति**। स्थानित्वे कार्यित्वेन प्राधान्यं, निमित्तत्वे परार्थत्वेन गुणत्वम्। उभयमेकस्यैकदा विरुद्धमिति भावः। ननु व्यवहितेऽपि पूर्वशब्दप्रयोगात्समिधावित्यत्रातिप्रसङ्गस्तदवस्थः; अत आह—**द्वयं चेति**। पूर्वस्येत्यनेन परनिवृत्तिर्निर्दिष्टा इत्यनेन व्यवहितनिवृत्तिश्चेत्यर्थः। ननु भाष्ये दध्युदकादौ सन्देह उक्तस्त्वया तु पर्यायप्रसङ्गः इति तद्विरुद्धम्; अत आह—**सन्देहस्त्विति**। भाष्यस्यापि पर्यायप्रसङ्ग एव तात्पर्यमिति भावः। **बहोरिति**। बहोरिष्ठेमेयस्सु लोप इत्युक्ते इष्ठादेः कार्यित्वनिमित्तत्वे विरुद्ध इत्यर्थः। पर्यायत्वेऽपि वाक्यभेदप्रसङ्गो बोध्यः। कार्यकालत्वात्परिभाषायाः कथं पौर्वापर्यम्; अत आह—**सूत्रेति**।

॥ वा ॥ प्रयोजनमतो लसार्वधातुकानुदात्तत्वे ॥

भा :—वक्ष्यति 'तास्यादिभ्योऽनुदात्तत्वे सप्तमीनिर्देशोऽभ्यस्तसिजर्थः' इति। तस्मिन् क्रियमाणे तास्यादिभ्यः परस्य लसार्वधातुकस्य, लसार्वधातुके परतस्तास्यादीनामिति संदेहः। तास्यादिभ्यः परस्य लसार्वधातुकस्य।

॥ वा ॥ बहोरिष्ठादीनामादिलोपे ॥

भा :—'बहोरुत्तरेषामिष्ठेमेयसाम्' इष्ठेमेयःसु परतो बहोरिति संदेहः। बहोरुत्तरेषामिष्ठेमेयसाम्।

॥ वा ॥ गोतो णित् ॥

भा :—गोतः परस्य सर्वनामस्थानस्य, सर्वनामस्थाने परतो गोत इति सन्देहः। गोतः परस्य सर्वनामस्थानस्य।

॥ वा ॥ रुदादिभ्यः सार्वधातुके ॥

भा :—रुदादिभ्यः परस्य सार्वधातुकस्य, सार्वधातुके परतो रुदादीनामिति संदेहः। रुदादिभ्यः परस्य सार्वधातुकस्य।

॥ वा ॥ आने मुगीदासः ॥

भा :—आस उत्तरस्यानस्य, आने परत आस इति संदेहः। आस उत्तरस्यानस्य।

॥ वा ॥ आमि सर्वनाम्नः सुट् ॥

भा :—सर्वनाम्न उत्तरस्यामः, आमि परतः सर्वनाम्न इति संदेहः। सर्वनाम्न उत्तरस्यामः।

॥ वा ॥ घेर्ङित्याण् नद्याः ॥

भा :—नद्या उत्तरेषां ङिताम्, ङित्सु परतो नद्या इति संदेहः। नद्या उत्तरेषां ङिताम्।

॥ वा ॥ याडापः ॥

भा :—आप उत्तरस्य ङितः, ङिति परत आप इति संदेहः। आप उत्तरस्य ङितः।

॥ वा ॥ ङमो ह्रस्वादचि ङमुण् नित्यम् ॥

भा :—ङम उत्तरस्याऽचः, अचि परतो ङम इति संदेहः। ङम उत्तरस्याचः।

॥ वा ॥ विभक्तिविशेषनिर्देशानवकाशत्वादविप्रतिषेधः ॥

भा :—विभक्तिविशेषनिर्देशस्यानवकाशत्वादयुक्तोऽयं विप्रतिषेधः। सर्वत्रैवात्र कृतसामर्थ्या सप्तमी अकृतसामर्थ्या पञ्चमीति कृत्वा पञ्चमीनिर्देशो भविष्यति।

॥ वा ॥ यथार्थं वा षष्ठीनिर्देशः ॥

भा :—यथार्थं वा षष्ठीनिर्देशः कर्तव्यः। यत्र पूर्वस्य कार्यमिष्यते तत्र पूर्वस्य षष्ठी कर्तव्या। यत्र परस्य कार्यमिष्यते तत्र परस्य षष्ठी कर्तव्या। स तर्हि तथा निर्देशः कर्तव्यः। न कर्तव्यः। अनेनैव प्रकॢप्तिर्भविष्यति—तस्मिन्निति निर्दिष्टे पूर्वस्य षष्ठी, तस्मादित्युत्तरस्य षष्ठीति। तत्तर्हि षष्ठीग्रहणं कर्तव्यम्। न कर्तव्यम्। प्रकृतमनुवर्तते। क्व प्रकृतम्? "षष्ठी स्थानेयोगा" इति।

प्र:—**संदेह इति**। संदेहाच्च पर्यायप्रसङ्गः। **इष्ठेमेयःस्विति**। यदि तदा च बहुशब्दस्य लोपभूभावौ पर्यायेण स्याताम्। **गोतो णिदिति**। यदि गोशब्दस्य णित्त्वं स्यात्तदा तिष्ठति गौरित्यत्र वचनसामर्थ्यादनङ्गस्यापि वृद्धिः स्यात्। **ङमो ह्रस्वादिति**। ङमो ङमुडागमे सति कुर्वन्नास्ते इत्यत्र णत्वप्रसङ्गः। पदस्य चैको नकारोऽन्तो न तु द्वाविति णत्वनिषेधो नास्ति। **विभक्तीति**। पूर्वोक्तेषु सूत्रेषु सप्तमीनिर्देशस्य क्वचित् पूर्वार्थत्वात् क्वचिदुत्तरार्थत्वात् सावकाशत्वम्। पञ्चमी तु निरवकाशेति परस्य कार्यित्वं बोधयिष्यतीति भावः। **यथार्थं वेति**। यथाविषयमित्यर्थः। प्रदेशेषु कार्यिणः षष्ठ्यैव निर्देष्टव्याः।

उः—**तास्यादिभ्य इति।** भाष्ये ; 'तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः'। तासेरनुदात्तेतो ङितो अदुपदेशाच्च परं लसार्वधातुकमनुदात्तं स्यात् ह्नुङिङोः परं वर्जयित्वा प्रत्ययस्वरापवादः। कर्तास्ते शेते पचतः। अत्र लसार्वधातुके इति वक्तव्यम्। 'आदिस्सिचोऽन्यतरस्यां' अभ्यस्तानामादिरित्यत्र सार्वधातुके परत इति लाभार्थमिति वार्तिकार्थः। भाष्ये सर्वत्र सन्देहशब्दः पर्यायतात्पर्य इत्याह—**सन्देहाच्चेति।** ननु भू च बहोरित्यादेशान्तरविधानात्कथं लोपः ; अत आह—**तदा चेति।** गोतो णित्वे को दोषः ; अत आह—**यदेति।** भाष्ये **आमि परत इति।** तथा च प्रातिपदिकात्पूर्वं नुट्प्रसङ्गः। ननु ङमो ङमुडागमे को दोषः। न च संयोगान्तलोपप्रसङ्गः। तस्मिन्कर्तव्ये ङमुटोऽसिद्धत्वादागमविधिवैयर्थ्यप्रसङ्गाच्च ; अत आह—ङ**म इति।** यद्यपि पञ्चमी निरवकाशा तथापि सप्तमीनिर्दिष्टस्यादेशसंबन्धबोधकषष्ठ्यभावात्कथं स्थानित्वलाभः ; अतो **यथार्थं वेति** वार्तिकम्। तत्रार्थशब्दस्याभिधेयादिपरत्वनिरासायाह—**यथाविषयमिति।** भाष्ये **पूर्वस्य षष्ठीति।** आदेशसम्बन्धप्रतिपादनयोग्या षष्ठी भवतीत्यर्थः। एवमुत्तरस्य षष्ठीति इष्टापत्तिनिरासाय भाष्ये उक्तमित्युक्तम्।

**॥ वा ॥ प्रकल्पकमिति चेन्नियमाभावः ॥**

**भा :—प्रकल्पकमिति चेन्नियमस्याभावः। उक्तं चैतन्नियमार्थोऽयमारम्भ इति। प्रत्ययविधौ खल्वपि पञ्चम्यः प्रकल्पिकाः स्युः। तत्र को दोषः? "गुप्तिज्किद्भ्यः सन्"। गुप्तिज्किद्भ्य इत्येषा पञ्चमी सन्निति प्रथमायाः षष्ठीं प्रकल्पयेत् "तस्मादित्युत्तरस्य" इति। अस्तु। न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते। तत्राऽऽन्तर्यतः सनः सन्नेव भविष्यति। नैवं शक्यम्। इत्संज्ञा न प्रकल्पेत। उपदेश इतीत्सञ्ज्ञोच्यते।**

**॥ वा ॥ प्रकृतिविकाराऽव्यवस्था च ॥**

**भा :—प्रकृतिविकारयोश्च व्यवस्था न प्रकल्पते। "इको यणचि" अचीत्येषा सप्तमी यणिति प्रथमायाः षष्ठीं प्रकल्पयेत्—'तस्मिन्निति निर्दिष्टे पूर्वस्य" इति।**

**॥ वा ॥ सप्तमीपञ्चम्योश्च भावादुभयत्र षष्ठीप्रकॢप्तिस्तत्रोभयकार्यप्रसङ्गः ॥**

**भा :—सप्तमीपञ्चम्योश्च भावादुभयत्रैव षष्ठी प्राप्नोति। तास्यादिभ्य इत्येषा पञ्चमी लसार्वधातुक इत्यस्याः सप्तम्याः षष्ठीं प्रकल्पयेत्—"तस्मादित्युत्तरस्य" इति। तथा लसार्वधातुक इत्येषा सप्तमी तास्यादिभ्य इति पञ्चम्याः षष्ठीं प्रकल्पयेत्—"तस्मिन्निति निर्दिष्टे पूर्वस्य" इति। तत्र को दोषः? तत्र उभयकार्यप्रसङ्गः। तत्र उभयोः कार्यं प्राप्नोति।**

प्र :—**प्रकल्पकमिति चेदिनि।** यत्र षष्ठी नास्ति तत्र तस्याः प्रकॢप्तिः क्रियते यत्र षष्ठ्यस्ति इको यणचीत्यादौ तत्रानेन नियमो न क्रियते नहि व्यापारद्वयमुपपद्यते येन षष्ठीप्रकॢप्तिस्तस्या नियमश्चेति भावः। **इत्संज्ञेति।** आदेशान्योपदेशाभावात्तस्येत्संज्ञा न सिध्यतीत्यर्थः। स्थानी चोत्पत्तिकाल एव निवृत्त्यभिमुखतया प्रतिपन्न इति स्थानिन्यपीत्संज्ञा नास्ति। **यणिति प्रथमाया इति।** ततश्चेकः स्थाने यण् न लभ्येत। इकोऽप्यन्य आदेशः स्याद्यणोऽप्यन्य इत्यभिमता स्थान्यादेशभावव्यवस्था न स्यात्। **उभयकार्यप्रसङ्ग इति।** विरोधाभावाद्यौगपद्येनोभयोः कार्यं प्राप्नोति।

उ :—तत्रेष्टादीनां षष्ठीकल्पनेऽतिप्रसङ्गाभावान्नियमस्य कोपयोगः; अत आह—**यत्रेति। न हीति;** वाक्यभेदापत्तेरिति भावः। षष्ठीप्रकॢप्तिपक्षे दोषान्तरमाह—भाष्ये **प्रत्ययविधाविति। उपदेशाभावादिति;** 'स्थानेऽन्तरतमः' इति परिभाषयानुमीयमानस्यादेशस्योच्चारणाभावादित्यर्थः। ननु स्थान्येवेत्संज्ञालोपयोः निरनुबन्धक इत्यनुमीयमानादेशोऽपि तादृश एवेति नादेश इत्संज्ञा; अत आह—**स्थानी चेति।** यदैव धातोः प्रत्ययस्तदैवादेशो भवन्नित्संज्ञालोपौ न प्रतीक्षत इत्यर्थः। नन्विको यण्भवति, तस्य चान्तरतम्याद्यणेव भविष्यतीति नानिष्टं किञ्चिद्; अत आह—**ततश्चेति। यण्न लभ्येतेति।** द्वयोः षष्ठीनिर्दिष्टतया स्थान्यादेशभावासम्भवादिति भावः। **विरोधेति।** दध्युदकमित्यत्रैकस्य स्थानित्वनिमित्तत्वविरोधेऽप्यत्र विरोधाभावादुभे वनस्पत्यादिषु युगपदितिवदुभयोरप्यनुदात्तत्वसम्भवादित्यर्थः।

भा :—नैष दोषः। यत्तावदुच्यते—प्रकल्पकमिति चेन्नियमाभाव इति। मा भून्नियमः। सप्तमीनिर्दिष्टे पूर्वस्य षष्ठी प्रकल्प्यते, पञ्चमीनिर्दिष्टे परस्य। यावता सप्तमीनिर्दिष्टे पूर्वस्य षष्ठी प्रकल्प्यते पञ्चमीनिर्दिष्टे परस्य। नोत्सहते सप्तमीनिर्दिष्टे परस्य कार्यं भवितुं, नापि पञ्जमीनिर्दिष्टे पूर्वस्य। यदप्युच्यते—"प्रत्ययविधौ पञ्चम्यः प्रकल्पिकाः स्युः" इति। सन्तु प्रकल्पिकाः। ननु चोक्तम्—"गुप्तिज्किद्भ्यः सन्" इत्येषा पञ्चमी सन्निति प्रथमायाः षष्ठीं प्रकल्पयेत् "तस्मादित्युत्तरस्य" इति। परिहृतमेतत्—न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते। तत्रान्तर्यतः सनः सन्नेव भविष्यति। ननु चोक्तम्—नैवं शक्यमित्संज्ञा न प्रकल्पेत। उपदेश इति इत्सञ्ज्ञोच्यते—इति। स्यादेष दोषो यदीत्संज्ञा आदेशं प्रतीक्षेत। तत्र खलु कृतायामित्संज्ञायां लोपे च कृते आदेशो भविष्यति। उपदेश इति हीत्सञ्ज्ञोच्यते। अथवा नानुत्पन्ने सनि प्रकॢप्त्या भवितव्यम्। यदा चोत्पन्नः सन्, तदा कृतसामर्थ्यां पञ्चमीति कृत्वा प्रकॢप्तिर्न भविष्यति। यदप्युच्यते—प्रकृतिविकाराव्यवस्था च इति। अत्रापि प्रकृतौ षष्ठी इक इति, विकृतौ प्रथमा यणिति। यत्र च नाम सौत्री षष्ठी नास्ति, तत्र प्रकॢप्त्या भवितव्यम्। अथवाऽस्तु तावदिको यणिति, यत्र नाम सौत्री षष्ठी यदि चेदानीमचीत्येषा सप्तमी यणिति प्रथमायाः षष्ठीं प्रकल्पयेत्—'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति। अस्तु। न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते। तत्राऽऽन्तर्यतो यणो यणेव भविष्यति। यदप्युच्यते—सप्तमीपञ्चम्योश्च भावादुभयत्र षष्ठीप्रकॢप्तिस्तत्रोभयकार्यप्रसङ्गः—इति। नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति 'नोभे युगपत्प्रकल्पिके भवतः' इति। यदयम् "एकः पूर्वपरयोः" इति पूर्वपरग्रहणं करोति॥ तस्मिन्निति निर्दिष्टे पूर्वस्य॥ तस्मादित्युत्तरस्य॥

प्र :—**मा भून्नियम इति।** षष्ठीप्रकॢप्तयैव तत्फलस्य लब्धत्वादिति भावः। यत्र षष्ठी नास्ति तत्रासौ प्रकल्प्यते। 'यत्र त्वस्ति' इको यणचि' इति तत्रापि पूर्वस्यैव षष्ठी न परस्येति प्रकल्प्यते। **कृतायामित्संज्ञायामिति।** सूत्र एवोच्चारितस्य इत्संज्ञेति प्रयोगे स शब्द एव सन्नित्कार्यं लभत इत्यर्थः। **अथवेति।** परत्वविशिष्टस्य सन उत्पादने उपक्षयात् प्रवृत्त्यन्तराभावान्नास्ति पञ्चम्याः प्रकल्पकत्व-मित्यर्थः। **प्रकृतौ षष्ठीति।** इको यणचीतिश्रुतयोरेव स्थान्यादेशभावोपपाद-नान्नास्ति षष्ठीप्रकल्पनम्। अपेक्षाया अभावादित्यर्थः। **यदयमिति।** यद्युभय-निर्देशात्परस्परषष्ठीप्रकल्पने सति ग्रहणकवाक्याद्वाक्यान्तरमनुमीयते तास्यादिभ्यो लसार्व-धातुकस्य लसार्वधातुके तास्यादीनामनुदात्तत्वं भवतीति तदा 'आद्गुण' इत्यादावपि तथैव प्रकॢप्तिर्भविष्यतीति किं पूर्वपरयोरित्यनेनेत्यर्थः। तत्र परत्वानवकाशत्वाभ्यां नियम-पक्षवत् षष्ठीप्रकल्पनपक्षे व्यवस्था। दीर्घाच्छे तुग् भवतीत्यत्र षष्ठीस्थाने व्यत्ययेन पञ्चमीति व्याख्यानात् सुराच्छायेत्यादेर्वा ज्ञापकाद्दीर्घस्यैव तुग् भवति न तु च्छस्य ॥ ६६ ॥ ६७ ॥

उ :—ननु नियमाभावे दध्युदकमित्यादावतिप्रसङ्गनिरासः कथम्; अत आह—**यत्रेति।** तस्मिन्निति निर्दिष्ट इत्यस्य विषयभेदेन भेदात्क्वचित्षष्ठीमात्रकल्पनं, क्वचि-न्नियतषष्ठीकल्पनमपि। **सूत्र एवेति।** तत्रोपदेशसद्भावात्। तथा च निरनुबन्धक एव प्रत्ययः धातोः परं क्रियत इति तदादेशस्य न सानुबन्धकतेति भावः। **परत्व-विशिष्टस्येति।** अनुत्पत्तौ धातोः परस्येति वक्तुमशक्यत्वादित्यर्थः। **प्रवृत्त्यन्तरेति।** वाक्यभेदप्रसङ्गेन धातोरित्यस्यानुवृत्तौ मानाभावादित्यर्थः। [1]**विशेषणत्वेनेति।** इक इति षष्ठी प्रकृतिविशेषणत्वेन परोपकारितया आदेशापेक्षस्थानिविशेषप्रतिपत्त्यर्थतया निर्दिश्यते न तु सम्बन्धान्तरप्रतिपादकतयेत्यर्थः। ततः किं तत्राह—**इको यणिति।** **अपेक्षा;** आकाङ्क्षाधीनस्सम्बन्धः। आकाङ्क्षा च यत्र श्रुतयोस्सम्बन्धाभावः। प्रकृते तत्सत्वान्न तस्मिन्नित्यस्योपस्थानमित्यर्थः। भाष्ये **अस्तु तावदिति।** आदेशे षष्ठीप्रकल्पनार्थं परिभाषोपस्थानं भविष्यतीत्यर्थः। यद्यप्याकांक्षाया अभावान्न तत्र तस्मिन्नित्यस्योपस्थानं, तथाप्यभ्युपेत्याह—भाष्ये **अस्तु न कश्चिदिति।** ननु सप्तमीपञ्चम्योर्द्वयोरपि षष्ठीप्रकल्पने तस्मिन्पूर्वस्य तस्मादुत्तरस्येत्ययमर्थः कथं लभ्यते। अतो युगपत्प्रकॢप्तं न सम्भवति; अत आह—**ग्रहणकेति।** परिभाषाद्वयान्वय-

(१) विशेषणत्वेनेति प्रदीपे न दृश्यते.

लब्धार्थद्वयप्रतिपादकं वाक्यद्वयं कल्प्यत इत्यर्थः। **तदेति**। आद्गुणेऽप्यचीत्युक्ते पूर्वस्य आदित्यतः परस्य चैको गुणो भविष्यतीत्यर्थः। उभयोर्युगपत्प्रकल्पकत्वाभावेऽपि कस्य प्रकल्पकत्वम्; अत आह—**तत्रेति**। ननु दीर्घादिति पञ्चम्यनवकाशात् छे इत्यस्य षष्ठीं प्रकल्पयेत् ततश्च छकारोपरि तकारस्य श्चुत्वेन चकारे छस्य च 'खरि च' इति चर्त्वेन चकारे चेच्चियत इत्यनिष्टरूपं स्याद्; अत आह—**दीर्घादिति**। व्याख्याने बीजमाह—**सुराच्छायेति**। अन्यथोक्तरीत्या सुराचायेति स्यादित्यर्थः।

## सू.—स्वं रूपं शब्दस्याशब्दसंज्ञा १। १। ॥ ६७ ॥

प्र:—स्वं रूपं शब्द। स्वरूपस्य पर्यायाणां तद्विशेषाणां च ग्रहणे प्राप्ते नियमार्था परिभाषेयमिति केचिदाहुः। अन्ये तु लिङ्गाभावाद्विध्यन्तरशेषभावाभावाच्च नेयं परिभाषा, अपि तु संज्ञासूत्रमिदमिति प्रतिपन्नाः। देवदत्तादयश्च संज्ञाशब्दा नियमार्था इति सिद्धान्तः। सर्वार्थप्रत्यायनशक्तियुक्तो हि शब्दः सर्वशब्दप्रत्याय्यशक्तियुक्तश्चार्थ इति व्यवहाराय नियमः क्रियते। रूपशब्देन चेहाग्निशब्दत्वादिकं शुकसारिकापुरुषोदीरितभिन्नशब्दव्यक्तिसमवेतं सामान्यमभिधीयते। तत्र व्यक्तेः सामान्यं संज्ञा सामान्यस्य वा व्यक्तिरिति व्याख्याने कामचारः। व्यक्तिः कार्यं प्रतिपद्यमाना सामान्यप्रतिबद्धैव प्रतिपद्यते। सामान्यमपि कार्यं प्रतिपद्यमानं व्यक्तिद्वारेणैव प्रतिपद्यत इति फले न कश्चिद्भेदः।

उ:—स्वं रूपं। इदं परिभाषासूत्रमिति केचिदाहुः। तदुपन्यस्यति—**स्वरूपस्येति**। 'अग्नेर्ढक्' इत्यत्राग्निशब्देन अर्थे अवगतेऽप्यर्थे ढक्प्रत्ययस्य निरासाय सूत्रोपात्तशब्दस्यैव ग्रहणार्थमियं परिभाषेत्यर्थः। एतन्निरासपूर्वकं संज्ञामाह—**अन्ये त्विति**। **लिङ्गेति**। अत्र शब्दस्य स्वरूपं ग्राह्यत्वेन विधित्सितमिति देशविशेषसमर्पकं विधेयव्यतिरिक्तं लिङ्गं नास्तीत्यर्थः। ननु संज्ञापक्षे प्रदेशेष्वग्निशब्दोऽग्निशब्दं प्रत्याययेल्लोकप्रसिद्धमप्यर्थम्। तथा च तद्वाचकशब्दान्तरव्यावृत्तिर्न स्यादिति शङ्कामात्र निराह—**देवदत्तेति**। नियमार्थत्वमेवाह—**सर्वेति**। वृद्धिसूत्रे अनेकशक्तिरिति फक्किकाव्याख्याने कृतोपपादनमेतत्। **अर्थ इति**। शब्दे प्रतिपादकत्वशक्तिवदर्थे प्रतिपाद्यत्वशक्तिरभ्युपेयो विनिगमकाभावादित्यर्थः। केचित्तु शक्तियुक्तोऽर्थ इत्यस्य शक्तिविषय इत्यर्थः। कार्यानुपपत्तिकल्प्यशक्तेरर्थप्रतीतिजनकशब्द एव कल्प्यतया तदजनकार्थे अकल्पनादित्याहुः। तच्चिन्त्यम्। वाच्यवाचक-

भावज्ञानं हि शब्दस्य सहकारि, गोशब्दो गोत्वस्य वाचक इति ज्ञानवद्गोत्वं गोशब्दवाच्यमिति ज्ञानस्याप्यर्थधीहेतुत्वात्। न च शब्दनिष्ठशक्तिविषयत्वमेव वाच्यत्वमिति वाच्यम्। वाच्यनिष्ठशक्तिनिरूपकत्वमेव वाचकत्वमित्यपि सुवचत्वात्। सिद्धान्ते शब्दार्थसम्बन्धानां त्रयाणामपि नित्यत्वेन वाचकतया ज्ञातशब्दवद्वाच्यतया ज्ञातार्थस्यापि हेतुत्वाविरोधात्। अवस्थाभेदभिन्नव्यक्तिनिष्ठतया देवदत्तत्वादेरपि जातित्वात्। दण्डादौ घटजननशक्तिज्ञानं तदुपादानहेतुर्न तु घटजनने शक्तिज्ञानं दंडस्य सहकारि। इह तु शब्दस्यार्थज्ञानजनने शक्तिज्ञानं सहकारीति कारणतानिर्वाहशक्तिविलक्षणतयास्याः करणनिष्ठत्वेऽपि विरोधाभावाच्चेति कैयटाशय इति नवीनाः। **व्यवहाराय;** नियतव्यवहाराय। तेनाग्निशब्दस्यैव ग्रहणं न तदर्थस्येत्यर्थः। ननु रूपरूपिणोरभेदात्कथं शब्दस्येति षष्ठी? कथं वा संज्ञासंज्ञिभावः; अत आह—**रूपशब्देन चेति।** एकव्यक्तिकाकारत्वादेस्सामान्यत्वाभावादाह—**शुकेति।** उदात्तादीनां वर्णधर्मत्वेनाङ्गीकारेण तद्भेदे शब्दस्य भेदस्यावश्यकत्वाद् व्यञ्जकध्वनीनामेव भेदो, न व्यङ्ग्यशब्दस्येति मतमयुक्तमिति भावः। ननु 'वृद्धिरादैच्' इत्यादौ प्रायेण सामानाधिकरण्ये सत्येव संज्ञासंज्ञित्वदर्शनाद्रूपशब्दस्येत्यत्र तदभावात्कथं संज्ञासंज्ञित्वम्; अत आह—**तत्रेति।** रूपशब्देन सामान्याभिधाने सतीत्यर्थः। आत्मीयवाचिना स्वशब्देन रूपशब्दवाच्यसामान्यसम्बन्धिनो व्यक्तिरभिधीयते। एवं च स्वशब्देन अग्निशब्दव्यक्तिमुद्दिश्य शब्दस्य रूपमिति विधाने अग्निशब्दस्य सामान्यं व्यक्तेस्संज्ञा। शब्दस्य रूपमित्युद्दिश्य स्वमिति विधाने व्यक्तिस्सामान्यस्य संज्ञेति सामानाधिकरण्येनैव पक्षद्वयमपि सम्भवति। अत एव स्वशब्दस्य संज्ञासंज्ञिसामानाधिकरण्यसम्पादकत्वान्न वैयर्थ्यमिति भावः। ननु व्यक्तिसंज्ञित्वे 'अग्नेर्ढक्' इति सङ्गच्छते अग्निशब्दसामान्यस्य संज्ञित्वे ढक्परत्वं न संभवतीति कथं पक्षद्वयस्य साम्यम्; अत आह—**व्यक्तिरिति।** व्यक्तिः सामान्यरहिता न कार्यं प्रतिपद्यते। सामान्यमपि व्यक्तिद्वारा कार्यं प्रतिपद्यत इति सामान्यावच्छिन्नव्यक्तेः कार्यसम्बन्ध इत्यत्र कल्पद्वयस्य साम्यमेवेत्यर्थः।

**भाः—रूपग्रहणं किमर्थम्। न 'स्वं शब्दस्याशब्दसंज्ञा भवतीत्येव एवं शब्दस्य संज्ञा भविष्यति। न ह्यन्यत्स्वं शब्दस्यास्त्यन्यदतो रूपात्? एवं तर्हि सिद्धे सति यद्रूपग्रहणं करोति तज्ज्ञापयत्याचार्यः—अस्त्यन्यद्रूपात्स्वं शब्दस्येति। किं पुनस्तत्?**

**अर्थः। किमेतस्य ज्ञापने प्रयोजनम्? "अर्थवद्ग्रहणे नानर्थकस्य" इत्येषा परिभाषा न कर्तव्या भवति।**

प्र :—**रूपग्रहणमिति**। प्रतीतावुपदेशानपेक्षत्वादन्तरङ्गत्वादहेयत्वादसाधारणत्वाच्च रूपमेव ग्रहीष्यते। अर्थो हि सम्बन्धग्रहणमपेक्ष्यते अनुकरणशब्देषु नार्थः प्रतीयते। साधारणश्च पर्यायैरपि प्रत्यायनाद्। न चार्थः संज्ञा शक्यते वक्तुम्। संज्ञित्वे चार्थस्य सूत्रमनर्थकमिति प्रश्नः। **एवं तर्हीति**। यत एवेह रूपग्रहणस्य व्यावर्त्यं नास्ति तत एव ज्ञापकम्। सति तु व्यावर्त्ये तत्रैवोपक्षयान्न ज्ञापकं स्यात्। **अर्थवद्ग्रहण** इति। अर्थयुक्तं रूपं गृह्यत इत्यर्थः। तेन काशे कुशे इत्यत्र शे इति प्रगृह्यसंज्ञा न भवति। यत्र चार्थवता रूपेण शब्दो नाश्रीयते तत्रेदं नोपतिष्ठते यथा वर्णग्रहणेषु टेरेत्वे चेति पचेते इत्यत्रानर्थकस्यापि टेरेत्वं भवति।

उ :—सामानाधिकरण्य एव संज्ञासंज्ञित्वमिति न नियमः। उञ ऊँ इत्यादौ व्यभिचारात्। तथा च स्वशब्दस्य जातिपरत्वे शब्दस्य जातिस्संज्ञा, व्यक्तिपरत्वे तु शब्दस्येत्यस्य भावप्रधानत्वाद् व्यक्तिः सामान्यस्य संज्ञेति रूपग्रहणं विनापि सिध्यतीत्यभिप्रेत्य **रूपग्रहणं किमर्थमिति** भाष्यम्। तत्र शब्दस्य स्वमित्युक्ते आत्मीयवाचिना स्वशब्देन रूपमेव गृह्यते नार्थ इत्यत्र किं विनिगमकम्; अत आह—**प्रतीताविति**। उपदिश्यते ज्ञाप्यत इत्युपदेशस्सम्बन्धः' तदनपेक्षणात्। सम्बन्धग्रहणानपेक्षणादिति यावत्। अन्तरङ्गत्वे चोपदेशानपेक्षत्वं हेतुः। अर्थे हेतुत्रयराहित्यमाह—**अर्थो हीति**। **सम्बन्धेति**; अतो बहिरङ्ग इत्यर्थः। **अनुकरणेति**; तथा च तत्रासम्भवाद्धेय इत्यर्थः। भवतु वा रूपतुल्यत्वमर्थस्य तथापि तस्य संज्ञात्वसंज्ञित्वयोरसम्भवाद्रूपस्यैव ग्रहणं युक्तमित्यभिप्रेत्य संज्ञात्वं तावन्निराह—**न चेति**। आवर्तिन्यः संज्ञा भवन्तीति न्यायाच्छब्द एव संज्ञा नार्थ इत्यर्थः। अस्तु तर्हि शब्दस्य स्वमभिधेयमित्यध्याहारेणार्थस्य संज्ञित्वम्; अत आह—**संज्ञित्वे चेति**। **सूत्रमिति**। लोकव्यवहारादेवार्थस्याभिधेयत्वसिद्धेरित्यर्थः। ज्ञापकत्वे युक्तिमाह—**यत इति**। व्यावर्त्यसत्वेऽपि ज्ञापकत्वं कुतो न; अत आह। **सतीति। नेति**। 'व्यर्थं सज्ज्ञापकं भवति' इति न्यायादिति भावः। ननु रूपग्रहणेन स्वशब्दस्यार्थपरत्वे ज्ञापिते क्वचिद्रूपं क्वचिदर्थो गृह्यत इति शङ्कां निवारयति—**अर्थयुक्तमिति**; सति सम्भव इत्यादिः। असम्भवे तु क्वचित्केवलस्यार्थस्य रूपस्य वा ग्रहणं सम्भवत्येवेति भावः। अर्थवद्ग्रहणस्य प्रयोजनमाह—

**तेनेति** । सुपां सुलुगित्यादिना विहितस्य विभक्त्यादेशस्य शे इत्यस्यार्थवत्त्वं न काश इत्यादौ स्थितस्येत्यर्थः । **यथेति** । 'अचोऽन्त्यादिटि' इत्यत्र निर्धारणषष्ठ्यान्त्यशब्दस्याच्परत्वात्तदादिरर्थवत्तयानाश्रीयत इत्यर्थः । यद्यपि टेरेत्वे अर्थवतष्टेर्ग्रहणं सम्भवत्तथापि वर्णरूपेणैव तत्रापि टिग्रहणादात्मनेपदानामिति बहुवचनाच्च नार्थाश्रयणमिति भावः ।

**भा :—किमर्थं पुनरिदमुच्यते ?**

**॥ वा ॥ शब्देनार्थगतेरर्थे कार्यस्यासंभवात् तद्वाचिनः संज्ञाप्रतिषेधार्थं स्वंरूपवचनम् ।**

**भा :—शब्देनोच्चारितेनार्थो गम्यते गामानय दध्यशानेति अर्थ आनीयते अर्थश्च भुज्यते । अर्थे कार्यस्यासंभवादिह च व्याकरणे अर्थे कार्यस्यासंभवः—"अग्नेर्ढक्" इति न शक्यतेऽङ्गारेभ्यः परो ढक् कर्तुम् । शब्देनार्थगतेरर्थे कार्यस्यासंभवाद् यावन्तस्तद्वाचिनः शब्दास्तावद्भ्यः सर्वेभ्य उत्पत्तिः प्राप्नोति । इष्यते च—तस्मादेव स्यादिति तच्चान्तरेण यत्नं न सिध्यतीति तद्वाचिनः संज्ञाप्रतिषेधार्थं स्वंरूपवचनम् । एवमर्थमिदमुच्यते ।**

**॥ वा ॥ न वा शब्दपूर्वको ह्यर्थे संप्रत्ययस्तस्मादर्थनिवृत्तिः ॥**

**भा :—न वा एतत्प्रयोजनमस्ति । किं कारणम् ? । शब्दपूर्वको ह्यर्थे संप्रत्ययः । आतश्च शब्दपूर्वकः । योऽपि ह्यसावाहूयते नाम्ना । नाम च यदानेन नोपलब्धं भवति, तदा पृच्छति—'किं भवानाह' इति शब्दपूर्वकश्चास्य संप्रत्ययः । इह च व्याकरणे शब्दे कार्यस्य संभवः, अर्थेऽसंभवः । तस्मादर्थनिवृत्तिः । तस्मादर्थस्य निवृत्तिर्भविष्यति ।**

प्र:—**किमर्थमिति** । वक्ष्यमाणोऽभिप्रायः । **शब्देनार्थगतेरिति** । कात्यायनवचनप्रामाण्यादस्त्रियामिति प्रतिषेधस्यानित्यत्वाद्विभाषा गुणेऽस्त्रियामिति पञ्चमी । इह योग्यतालक्षणेन सम्बन्धेन शब्दोऽर्थं लोके प्रत्याययति । व्याकरणेऽपि पशुरपत्यं देवता प्राञ्च उदञ्चो भरता इत्यर्थ एव गृह्यते । अग्नेर्ढगित्यादौ त्वर्थस्य प्रत्ययेन पौर्वापर्यासंभवात्

साहचर्यात् सर्वस्य तद्वाचिनः संप्रत्ययः स्यादिति सूत्रारम्भः। **संज्ञाप्रतिषेधार्थमिति।** संज्ञासम्प्रत्यय उच्यते। **नवेति।** शब्द उपलब्धोऽर्थं प्रत्याययति न सत्तामात्रेण। चक्षुरादीनि तु सत्तामात्रेण विषयमवगमयन्ति। अर्थस्य शास्त्रीये कार्ये क्वचिदयोग्यत्वात्; प्रत्यासत्त्या स एवोपात्तः शब्दो गृहीष्यते, न तु विप्रकृष्टं शब्दान्तरमिति भावः। **शब्दपूर्वक इति।** [1]अर्थस्योपलब्धुः शब्दपूर्वक इत्यर्थः।

उः—**वक्ष्यमाण इति;** नवेत्यादिना। अर्थगतेरिति पञ्चमी न युक्ता अस्त्रियामिति निषेधाद्; अत आह—**कात्यायनेति।** पर्यायग्रहणे अर्थगतेर्हेतुत्वाद्वि-भाषेत्युक्तम्। नन्वसम्बद्धस्य शब्दस्यार्थगमकत्वे सर्वः शब्दस्सर्वं गमयेत्, सम्बद्धस्य तत्वे संयोगसमवायातिरिक्तसम्बन्धाभावाच्छब्दार्थयोश्च तदसम्भवाच्छब्दार्थगतेरित्ययुक्तम् अत आह—**इहेति।** व्यवहारविषये। तत्काल इति यावत्। **योग्यतालक्षणेन;** अर्थप्रत्यायनयोग्यतारूपेण शक्त्यात्मकेनेति यावत्। शक्तेर्मुख्यसम्बन्धत्वाभावेऽप्या-श्रयविषयोभयनिरूपणीयत्वेनोभयाधीनत्वगुणयोगाद्गौणसम्बन्धत्वमभिप्रेत्य सम्बन्धेनेत्युक्तम्। शब्दानुशासनेऽस्मिन्—शास्त्रे शब्द एव गृह्यते, नार्थः; अत आह—**व्याकरणेऽपीति।** अर्थग्रहणेऽपि तदनुशासनसम्भवादिति भावः। प्राच्यभरते-ष्वित्यत्र भरतग्रहणम्। पश्वादिशब्दवदग्निशब्दस्याप्यर्थपरत्वेनान्यत्रापि प्रसङ्गे सति तन्निरासाय सूत्रमिति शब्देनेत्यादिवार्तिकार्थ इत्याह—**अग्नेरिति।** संज्ञाविधानार्थस्य तत्प्रतिषेधार्थत्वमयुक्तम्; अत आह—**सम्प्रत्यय इति।** ननु शब्दादर्थ एव प्रतीयते न शब्दस्तथा चाप्रतीतशब्दग्रहणं कथम्; अत आह—**शब्द इति।** ननु पश्वादि-वदग्नेरित्यत्राप्यर्थप्रतीतेरावश्यकत्वात्सर्वशब्दग्रहणं कथं निरसनीयम्; अत आह—**प्रत्यासत्त्येति।** शब्दान्तरापेक्षया पूर्वप्रतीतिः प्रत्यासत्तिः। तथा च प्रतीत-शब्दत्यागे कारणभावादर्थव्यवधानेन कल्प्यप्रतीतिकशब्दान्तरं न गृह्यत इत्यर्थः। अर्थ इति विषयसप्तमीत्याह—**अर्थस्येति।**

**भा:—इदं तर्हि प्रयोजनम् अशब्दसंज्ञेति वक्ष्यामीति। इह मा भूत्—"दाधाघ्वदाप्" "तरप्तमपौ घः" इति।**

**॥ वा ॥ शब्दसंज्ञाप्रतिषेधानर्थक्यं वचनप्रामाण्यात् ॥**

१. मु. पु. अस्य.

**भाः—शब्दसंज्ञायाः प्रतिषेधोऽनर्थकः। शब्दसंज्ञायां स्वरूपविधिः कस्मान्न भवति?। वचनप्रामाण्यात्। शब्दसंज्ञावचनसामर्थ्यात्। ननु च वचनप्रामाण्यात् संज्ञिनां संप्रत्ययः स्यात्, स्वरूपग्रहणाच्च संज्ञायाः। एतदपि नास्ति प्रयोजनम्। आचार्यप्रवृत्तिर्ज्ञापयति—शब्दसंज्ञायां न स्वरूपविधिर्भवतीति। यदयम्—"ष्णान्ता षट्" इति षकारान्तायाः संख्यायाः षट्संज्ञां शास्ति। इतरथा हि वचनप्रामाण्याच्च नकारान्तायाः संख्यायाः संप्रत्ययः स्यात्। स्वरूपग्रहणाच्च षकारान्तायाः। नैतदस्ति ज्ञापकम्। न हि षकारान्ता संज्ञा। का तर्हि?। डकारान्ता। असिद्धं जश्त्वम्। तस्यासिद्धत्वात् षकारान्ता। मन्त्राद्यर्थं तर्हीदं वक्तव्यम्। मन्त्रे ऋचि, यजुषीति यदुच्यते, तन्मन्त्रशब्दे ऋक्शब्दे यजुःशब्दे च मा भूत्।**

**॥ वा ॥ मन्त्राद्यर्थमिति चेच्छास्त्रसामर्थ्यादर्थगतेः सिद्धम् ॥**

**भाः—मन्त्राद्यर्थमिति चेत्। तन्न। किं कारणम्? शास्त्रस्य सामर्थ्यादर्थस्य गतिर्भविष्यति। मन्त्रे ऋचि यजुषीति यदुच्यते, मन्त्रशब्दे ऋक्शब्दे यजुश्शब्दे च तस्य कार्यस्य संभवो नास्तीति कृत्वा मन्त्रादिसहचरितो योऽर्थस्तस्य गतिर्भविष्यति साहचर्यात्।**

प्रः—**अशब्दसंज्ञेति।** न्यायात् स्वरूपग्रहणे सिद्धे शब्दसंज्ञायां संज्ञाग्रहणं मा भूदित्येवमर्थमिदमित्यर्थः। अन्यथोपसर्गे घोः किरिति किः प्रत्ययो घोर्धातोः शब्दार्थात् स्यान्नतु दाधाभ्यः। कुमारीघ इत्यत्र घरूपेति ह्रस्वः प्रसज्येत। ई हल्यघोरित्यत्र तु घशब्दस्याकारान्तत्वाभावाद्दाधामेव ग्रहणं सिध्यति। **वचनप्रामाण्यादिति।** प्रदेशेषु संज्ञिप्रत्यायनार्थं संज्ञाकरणमिति सामर्थ्यात् स्वरूपग्रहणं न भविष्यति। **ननु चेति।** उभयगतिरिह शास्त्रे दृष्टा सङ्ख्याकर्मकरणादिष्विति इहापि स्वरूपस्य संज्ञिनश्च प्रदेशेषु ग्रहणं स्यात्। **नहीति।** षड्भ्यो लुगित्यादावुच्चारितेति भावः। **का तर्हीति।** तत्र डकारान्तः शब्द उच्चारितो जश्शमोश्च

(१) मु. पु. स्वरूप.

षकारान्ताल्लुक् कर्तव्यः। षण्णामिति च नुट्। **असिद्धमिति।** डकारान्तः श्रूयमाणोऽपि डत्वस्यासिद्धत्वात् षकारान्तस्य स्वरूपस्य ग्राहको भविष्यतीत्यर्थः। **मन्त्रा-द्यर्थमिति।** मन्त्रादयः शब्दस्य संज्ञा। **शास्त्रसामर्थ्यादिति।** देवसुम्नयोरि-त्यादौ क्यजादीनां निमित्तत्वेनोपादानाद्यजुषि ऋचि मन्त्र इति च स्वरूपं न ग्रहीष्यते। न च तथाविधं लक्ष्यमस्तीति भावः। **मन्त्रादिसहचरित** इति। साहचर्यं च शब्दानुविद्धस्यैवार्थस्यावगमात्। **संज्ञाग्रहणम्;** संज्ञास्वरूपग्रहणम्। **मा भूत्;** जानीयात्। **अन्यथा।** शब्दसंज्ञायां स्वरूपस्यापि ग्रहणे। **शब्दार्थात्;** घातु-शब्दार्थात्। दाधादिरूपो यो धातुस्स एव शब्दोऽर्थः प्रतिपाद्यः संज्ञित्वेन यस्य घोस्संज्ञा-भूतस्य तस्मादित्यर्थः। अनेन धात्वधिकारविहितप्रत्ययस्य सम्भव उक्तः। कुमार्या घः कुमा रीघः। अत्र स्वरूपग्रहणादेव समानाधिकरणात्स्त्रीलिङ्ग इत्यनपेक्ष्य ह्रस्वत्वं स्यादिति भावः। तर्हि घुसंज्ञायाः कोऽवकाशः; अत आह—**ई हलीति।** एवं घादाम्वद्रव्यप्रकर्ष इत्यत्र घशब्दस्य प्रकर्षार्थकत्वाभावात्किमादिपरत्वासम्भवाच्च तरप्तमपोरेव ग्रहणमिति भावः। ननु वचनस्यावकाश उक्तः; अत आह—**प्रदेशेष्विति।** कृत्रिमाकृत्रिमयोरिति न्यायानुगृहीतवचनसामर्थ्यात्प्रत्यासत्तिन्यायो बाध्यत इति भावः। वस्तुतस्तु क्वचिदपि संज्ञ्यग्रहणे संज्ञावैयर्थ्यम्। क्वचित्तद्ग्रहणे अवैरूप्याय सर्वत्रैव तद्ग्रहणं युक्तमित्य-भिप्रायः। शङ्कातात्पर्यमाह—**उभयेति।** **संख्येति।** बहुगणे सूत्रे प्रपञ्चि-तमेतत्। भाष्ये ष्णान्ता षडिति सूत्रस्थसंज्ञा डकारान्तेति प्रतीयते। तदयुक्तम्। तत्र स्वरूपसम्बन्धकार्यभावादत आह—**षड्भ्य इति।** आदिना ‘षट्चतुर्भ्यश्च’ इति सङ्गृहीतं डकारान्तस्य स्वरूपग्रहणे इष्टासिद्धिर्नेत्याह—**डकारान्त इति।** **षकारान्तादिति।** जश्शसोः लुकः प्राक् जस्त्वाभावादिति भावः। षट्चतुर्भ्य इति नुडपि षकारान्तादेव विधेयः। नुटः प्राक्जस्त्वाभावादित्याह—**षण्णामिति।** नुट् चकारान्तात्कर्तव्य इत्यनुषङ्गः। **इत्वस्येति।** षष उत्तरयोर्जश्शसोस्स्व-रूपग्रहणेन लुकि कर्तव्ये जश्त्वमसिद्धमिति भावः। तत्र ष्णान्ता षडित्यत्र डकारान्तैव संज्ञा, न षान्ता। तेन स्वरूपग्रहणेनेष्टासिद्धेष्षकारान्तसंख्याग्रहणमपि कर्तव्यमिति न ज्ञापकत्वमिति केचित्। तन्न षान्तस्य प्रसिद्धस्यैव जश्त्वेन डान्तत्वे संभवत्यप्रसिद्धडान्त-शब्दस्य संज्ञात्वकल्पने मानाभावात्। ननु टिघुभादिवन्मन्त्रादीनां संज्ञात्वेनाविधानात्कथं शब्दसंज्ञात्वम्; अत आह—**मन्त्रादय इति।** याज्ञिकव्यवहारार्थकशब्दविशेष-संज्ञात्वं सिद्धमिति भावः। **देवेति।** अनयोः क्यच्याकारोऽतादेशः देवायन्त-

स्तुम्नायन्तः। आदिना कव्यध्वरेत्युत्तरसूत्र ऋचीति, मन्त्रे घसेसूत्रे मन्त्र इति च गृहीतम्। क्यजादीनामित्यादिना मन्त्रे घसेत्यादौ लेरिति चर्लेलुक् गृहीतम्। **स्वरूपमिति।** ततः क्यजादेरसम्भवादित्यर्थः। ननु यजुरादेरपि क्यच् संभवति; अत आह—**न चेति। तथाविधेति।** यजुरादेरपि कर्थित्वे देवसुम्नयजुषामिति निर्देशस्स्यान्न तु यजुषीति पृथक् सप्तम्यन्तनिर्देश इत्यर्थः। शब्दार्थयोर्नैकाधिकरण्यलक्षणसाहचर्यम्; अत आह—**शब्देति।** गामानयेत्युक्ते गोशब्दवाच्यमानयेत्यर्थप्रतीतेरित्यर्थः। यद्वा अर्थप्रतीतेः प्राङ् नियतप्रतीतिकशब्दकत्वमेव शब्दानुविद्धत्वमित्यर्थः।

**॥ वा ॥ सित्तद्विशेषाणां वृक्षाद्यर्थम् ॥**

**भाः—सिन्निर्देशः कर्तव्यः। ततो वक्तव्यम्—"तद्विशेषाणां ग्रहणं भवति" इति। किं प्रयोजनम्? वृक्षाद्यर्थम्—"विभाषा वृक्षमृग—" इति। प्लक्षन्यग्रोधं प्लक्षन्यग्रोधाः।**

**॥ वा ॥ पित्पर्यायवचनस्य च स्वाद्यर्थम् ॥**

**भाः—पिन्निर्देशः कर्तव्यः। ततो वक्तव्यम्—पर्यायवचनस्य च तद्विशेषाणां च ग्रहणं भवति स्वस्य च रूपस्येति। किं प्रयोजनम्? स्वाद्यर्थम् "स्वे पुषः"। स्वपोषं पुष्यति। रैपोषम्। धनपोषम्। अश्वपोषम्। गोपोषम्।**

**॥ वा ॥ जित्पर्यायवचनस्यैव राजाद्यर्थम् ॥**

**भाः—जिन्निर्देशः कर्तव्यः। ततो वक्तव्यम्—पर्यायवचनस्यैव ग्रहणं भवति। किं प्रयोजनम्? राजाद्यर्थं। "सभा-राजामनुष्यपूर्वा" इनसभम् ईश्वरसभम्। तस्यैव न भवति राजसभा। तद्विशेषाणां च न भवति पुष्पमित्रसभा, चन्द्रगुप्तसभा।**

**॥ वा ॥ झित्तस्य च तद्विशेषाणां च मत्स्याद्यर्थम् ॥**

**भाः—झिन्निर्देशः कर्तव्यः। ततो वक्तव्यम्—तस्य च ग्रहणं भवति तद्विशेषाणां चेति। किं प्रयोजनम्? मत्स्याद्यर्थम्**

**"पक्षिमत्स्यमृगान् हन्ति"। मात्सिकः। तद्विशेषाणाम्— शाफरिकः। शाकुलिकः। पर्यायवचनानां न भवति— अजिह्मान् हन्ति, अनिमिषान् हन्तीति। अस्यैकस्य पर्यायवचनस्येष्यते— मीनान् हन्ति मैनिकः॥ स्वं रूपं शब्दस्याशब्दसंज्ञा॥**

प्र:—**सित्तद्विशेषाणामिति**। वृक्षस् मृगस् इत्येवं निर्देशः कर्तव्यः। एतदपि न्यायसिद्धं तुल्यजातीयानां द्वन्द्व एकवद्भवतीति वक्ष्यते। पर्यायाणां च युगपत्प्रयोगाभावात् सामान्यविशेषाणां चार्थाभावात् सामान्यशब्देन सर्वविशेषाणामाक्षेपाद्धव-वृक्षमिति द्वन्द्वाभावाद्विशेषाणामेव प्लक्षन्यग्रोधादीनां ग्रहणं सिद्धम्। **पित्पर्याय-वचनस्य चेति**। चशब्दात् स्वरूपस्य विशेषाणां च ग्रहणम्। इदं वाचनिकमेव। **जित्पर्यायेति**। इदं न्यायसिद्धमित्याहुः। **अराजेति** पर्युदास आश्रीयते। तेन राजसदृशानां तत्पर्यायाणामेव ग्रहणं सिध्यति। **झित्तस्य चेति**। इदं वाचनिकमेव। **मत्स्याद्यर्थमिति**। मृगपक्षिणोस्तु पिन्निर्देशस्तत्फललाभार्थः कर्तव्यः। **अस्यैकस्येति**। इयमिष्टिरेव॥ ६७॥

उ:—सिन्निर्देशः कर्तव्य इति भाष्यतात्पर्यमाह—**वृक्षस् इति**। एतन्याय-सिद्धार्थकथनं नापूर्वं वचनमित्याह—**एतदिति**। वृक्षमृगाविति व्यावृत्तये वृक्षपर्याय-द्वन्द्वव्यावृत्तये वा सामान्यविशेषद्वन्द्वव्यावृत्तये वा वचनमिति विकल्पं मनसि निधाय साभिप्रायं नाद्य इत्याह—**तुल्यजातीयानामिति**। **वक्ष्यते**; द्वन्द्वश्चेति सूत्रे। न द्वितीय इत्याह—**पर्यायाणामिति**। न तृतीय इत्याह—**सामान्येति**। न्यायमेवाह—**अराजेति**। सभाराजेत्यत्राराजेति पदच्छेदेनेष्टसिद्धिरिति भावः। आद्यं विहाय मत्स्योपादानस्य फलमाह—**मृगेति**। **तत्फलेति**; स्वरूपस्य पर्यायाणां विशेषाणां च ग्रहणार्थमित्यर्थः।

सू.—अणुदित्सवर्णस्य चाप्रत्ययः॥ १। १। ६८॥

**भा:—अप्रत्यय इति किमर्थम्? "सनाशंसभिक्ष उः" "अ साम्प्रतिके"। अत्यल्पमिदमुच्यते—अप्रत्यय इति। "अप्रत्ययादेशटित्किन्मितः" इति वक्तव्यम्। प्रत्यये—उदाहृतम्। आदेशे—"इदम इश्" इतः इह। टिति—लविता लवितुम्।**

क्विति—बभूव। मिति—हे अनड्वन्। टितः परिहारः—आचार्यप्रवृत्तिर्ज्ञापयति 'न टिता सवर्णानां ग्रहणं भवति' इति। यदयम्—ग्रहोऽलिटि दीर्घत्वं शास्ति। नैतदस्ति ज्ञापकम्। नियमार्थमेतत् स्यात्—ग्रहोऽलिटि दीर्घ एवेति। यत्तर्हि "वृतो वा" इति विभाषां शास्ति। सर्वेषामेष परिहारः "भाव्यमानेन सवर्णानां ग्रहणं न" इत्येवं न भविष्यति। प्रत्यये भूयान् परिहारः—अनभिधानात्प्रत्ययः सवर्णान् न ग्रहीष्यति। यान् हि प्रत्ययः सवर्णान् गृह्णीयाद् न तैरर्थस्याभिधानं स्यात् अनभिधानान्न भविष्यति। इदं तर्हि प्रयोजनम्—इह केचित्प्रतीयन्ते, केचित्प्रत्याय्यन्ते। ह्रस्वाः प्रतीयन्ते दीर्घाः प्रत्याय्यन्ते। यावच्च ब्रूते—प्रत्याय्यमानेन सवर्णानां ग्रहणं नेति, तावदप्रत्यय इति। कं पुनर्दीर्घः सवर्णग्रहणेन गृह्णीयात्? ह्रस्वम्। यत्नाधिक्यान्न ग्रहीष्यति। प्लुतं तर्हि गृह्णीयात्। अनण्त्वान्न ग्रहीष्यति। एवं तर्हि सिद्धे सति यदप्रत्यय इति प्रतिषेधं शास्ति, तज्ज्ञापयत्याचार्यो—भवत्येषा परिभाषा—"भाव्यमानेन सवर्णानां ग्रहणं न" इति।

प्रः—अणुदित्। **अप्रत्यय इति किमर्थमिति।** किं यस्य प्रत्ययसंज्ञा विहिता तस्य प्रतिषेध उत यः प्रतीयते विधीयते इति यौगिकः प्रत्ययस्तस्यापीति प्रश्नः। **इत इति।** विशेषविहितत्वात् त्यदाद्यत्वं बाधित्वा त्रिमात्र आदेशः प्राप्नोति। **बभूवेति।** अनुनासिकः प्राप्नोति। **अनड्वन्निति।** आमपि पक्षे प्राप्नोति। **यदयमिति।** ग्रहेरेव दीर्घो नान्येभ्य इति नियमाभावादिति भावः। **नियमार्थमिति।** ग्रहे दीर्घ एव न ह्रस्व इत्येवमर्थं स्यादित्यर्थः। **वृतो वेति।** ननु ववरियेति लिटि दीर्घो मा भूदित्येवमर्थमेतत् स्यादिति कथं ज्ञापकम्। एवं तर्हि वृत इत्यत्रापि अलिटीत्यनुवर्तनाल्लिटि दीर्घनिषेधादन्यत्र उभयस्मिन् सिद्धे वाग्रहणं ज्ञापकमीट इटा ग्रहणाभावस्य। **प्रत्यये भूयानिति।** साधारणश्चासाधारणश्चेत्यर्थः। प्रत्यय इत्यन्वर्था संज्ञा कृता। येनार्थं प्रतियन्ति स प्रत्ययः। न च दीर्घप्लुतयोरर्थस्याभिधानमस्ति। **ह्रस्वा इति।** प्रतीयन्ते श्रूयन्ते उच्चार्यन्ते अगादिचोदनास्वित्यर्थः। **दीर्घा इति।** ह्रस्वैर्गृहीतैरण्वा-

द्दीर्घाणां ग्रहणात्। तत्र 'अष्टन आ विभक्तौ' इत्यत्राकारो ग्राहको मा भूदित्यर्थः। यथैव हि अण्त्वादकारो रपरत्वादिकार्यं प्रतिपद्यते तथा ग्राहकत्वमपि प्रतिपद्येतेति भावः। कथं पुनरप्रत्यय इत्यस्याप्रत्याय्यमान इत्यर्थः। अन्तर्भावितण्यर्थादिनेः कर्मण्यज्विधानात्। **यत्नाधिक्यादिति**। ननु च ह्रस्वोच्चारणे अर्धमात्रिकस्य मात्रिक एव स्यादिति दीर्घोच्चारणमुभयार्थं स्यात्। एतत्तु न निरूपितं न्याय्य एवात्र परिहारो विधास्यते। **अनण्त्वादिति**। अत्र हि सूत्रे प्रत्याहारसन्निविष्टा एव गृह्यन्ते स्वात्मनि क्रियाविरोधादनिष्पादाद् ग्रहणकशास्त्रान्तराभावाच्च। अत्र सूत्रे अकारादिभिराकारादीनां ग्रहणासम्भवोऽन्येषु प्रदेशेषु अनेन सूत्रेणाकारादिभिराकारादयो गृह्यमाणा अणादिकार्याणि लभन्ते। **भाव्यमानेनेति**। प्रतीयते विधीयत इति यौगिकस्यात्र प्रत्ययस्य ग्रहणमिति भावः।

उः—अणुदित्। किमर्थमिति विशेषजिज्ञासापरं, नाक्षेप इत्याह—**किं यस्येति;** उत यौगिक इत्यन्वयः। योगमेवाह—**प्रतीयत इति**। ननु परत्वान्त्यदाद्यत्वे पररूपत्वे चार्धतृतीयमात्रस्य सवर्णग्रहणे सत्यन्तरतमस्यादेशस्यासम्भवाद्यथाश्रुत एवादेशः स्याद; अत आह—**विशेषेति**। वकारस्य सवर्णमाह—**अनुनासिक इति**। पक्ष इत्यादिः। **आमपीति**। अन्यत्र सर्वनामस्थाने आम्विधानसामर्थ्यादम् न भवति। अन्यथा सर्वनामस्थाने अममेव विदध्यादिति भावः। ननु नियमार्थमेतत्स्याद्; अत आह—**ग्रहेरेवेति। अभावात्;** असम्भवात्। 'वृतो वा' इत्यनेन विरोधप्रसङ्गादित्यर्थः। **ववरिथेति**। छन्दसि ववर्थेति निपातनाद्भाषायां क्रादिसूत्रोक्तेण्निषेधो नास्तीति भावः। सम्पूर्णसूत्रमेव ज्ञापकमिति भाष्योक्तमिति मत्वा चोदयति—**लिटीति**। अलिटीत्यनुवर्तनाल्लिटि दीर्घनिषेधः सूत्रस्य प्रयोजनमित्यर्थः। विभाषां शास्तीति भाष्येण वाग्रहणं ज्ञापकमुक्तम्, न तु सम्पूर्णसूत्रमिति परिहरति—**एवं तर्हीति। अत्रापीति** शङ्काशयविवरणम्। **अन्यत्रेति** तु समाधानम्। भूयानिति प्रतिज्ञा न वक्ष्यमाणपरिहारबहुत्वापेक्षया अनभिधानस्यैकस्यैवोक्तेः, किं तु पूर्वसमाधानापेक्षयेत्याह—**साधारण इति**। ननु 'अस्य च्वौ' इत्यादावित्यर्थाभिधानासमर्थस्यापि वर्णस्य प्रत्ययेन ग्रहणं किं न स्याद; अत आह—**प्रत्यय इति**। प्रत्ययविधौ सवर्णग्रहणं दीर्घप्लुतयोर्विधानाय। तौ च प्रत्ययाधिकारात्प्रत्ययावेव विधातव्यौ। प्रत्ययत्वं चार्थाभिधानसमर्थत्वे सत्येवेति दीर्घप्लुतयोस्तथाभावेन प्रत्यय-

त्वासम्भवेन विधानासम्भवान्निष्प्रयोजनतया सवर्णग्रहणं नास्तीति भावः। **उच्चार्यन्ते;** साक्षादगादिशब्दैर्बोध्यन्ते। तेनेकारादीनामपि सवर्णग्राहकत्वं सम्भवति। अनेन प्रत्याहारसूत्रे ये निर्दिष्टास्तैस्सवर्णानां ग्रहणमित्युक्तम् भवति। **अगादिचोदनासु;** प्रत्याहारेषु। यद्यगादिचोदना अगादिप्रत्याहारसूत्राणीति व्याख्यायते। तदा श्रूयन्त इति यथाश्रुतमेव साधु। शब्देन प्रत्यायनं ह्रस्वादीनामपीति तद्वैधर्म्यमाह—**ह्रस्वैरिति।** दीर्घाणां सवर्णग्राहकत्वनिषेधस्य प्रयोजनमाह—**तत्रेति।** अनण्त्वादेवाकारो न ग्राहकः; अत आह—**यथेति।** **कथमिति।** तदा अप्रत्यायय इति स्यादित्यर्थः। **अन्तर्भावितेति।** अप्रत्यय इति निषेधसामर्थ्यादेतल्लभ्यते। न च प्रत्याहारस्थानामेव प्रतिषेधः दीर्घाणामेव सवर्णग्राहकत्वमिति वैपरीत्यं किं न स्यादिति वाच्यं; तथा सति 'दीर्घाज्जसि च' इति निषेधानर्थक्यप्रसङ्गात्। अकोऽचि विधीयमानपूर्वसवर्णदीर्घस्य कुमार्यावित्यादौ प्रसङ्गाभावादिति भावः। **अर्धमात्रिकस्येति;** अष्टन आ विभक्ताविर्त्यादिः। **मात्रिक एवेति;** स्थानेऽन्तरतमपरिभाषयेति भावः। **एतत्;** उक्तप्रयोजनम्। **न निरूपितम्।** एतदुपेक्ष्य यत्नाधिक्यादित्युपक्रममात्रतयोक्तं, मुख्यपरिहारस्त्वनण्त्वमेवेति भावः। यथैवेति यदुक्तं तत्राह—**अत्र हीति।** अस्मिन्सूत्रे अण्ग्रहणेन ये गृहीतास्तेषां सवर्णग्राहकत्वमनेन विधीयते। अत्र च दीर्घा न गृहीताः। अणित्युच्चारणसमये सूत्रस्यानिष्पादात्। निष्पन्नं सूत्रम् 'अस्य च्वौ' इत्यादौ सवर्णग्रहणं बोधयतीति समुदायार्थः। **स्वात्मनि क्रिया;** स्वस्मिन्प्रवृत्तेः सूत्रस्य तस्य असम्भवात्। तत्र हेतुः; **अनिष्पादादिति।** ननु तपरस्तत्कालस्येत्यनेनात्र सवर्णग्रहणमस्तु; अत आह—**ग्रहणकेति।** भिन्नकालानां ग्रहणं तेन न प्राप्यत इत्यर्थः। **अन्येषु;** 'उरण् रपरः' इत्यादिषु। कथमल्पविषयेण प्रत्यय इत्यनेन बहुविषयपरिभाषार्थप्रतिपादनम्; अत आह—**प्रतीयत इति।**

**भा:—किमर्थं पुनरिदमुच्यते?**

**॥ वा ॥ अण् सवर्णस्येति स्वरानुनासिक्यकालभेदात् ॥**

**भा:—अण् सवर्णस्येत्युच्यते। स्वरभेदादानुनासिक्यभेदाद् कालभेदाच्चाण् सवर्णान्न गृह्णीयाद्। इष्यते च—ग्रहणं**

स्यादिति । तचान्तरेण यत्नं न सिध्यतीत्येवमर्थमिदमुच्यते । अस्ति प्रयोजनमेतत् । किं तर्हीति ?

॥ वा ॥ तत्र प्रत्याहारग्रहणे सवर्णाग्रहणमनुपदेशात् ॥

भा :—तत्र प्रत्याहारग्रहणे सवर्णानां ग्रहणं न प्राप्नोति— "अकः सवर्णे दीर्घः" इति। किं कारणम् ? अनुपदेशात् । यथाजातीयकानां संज्ञा कृता तथाजातीयकानां संप्रत्यायिका स्याद् । ह्रस्वानां च क्रियते ह्रस्वानामेव संप्रत्यायिका स्याद् दीर्घाणां न स्यात् । ननु च ह्रस्वाः प्रतीयमाना दीर्घान् संप्रत्याययिष्यन्ति ।

॥ वा ॥ ह्रस्वसंप्रत्ययादिति चेदुच्चार्यमाणशब्दसंप्रत्यायकत्वाच्छब्दस्यावचनम् ॥

भा :—ह्रस्वसंप्रत्ययादिति चेदुच्चार्यमाणः शब्दः संप्रत्यायको भवति, न संप्रतीयमानः । तद्यथा ऋगित्युक्ते संपाठमात्रं गम्यते, नास्या अर्थो गम्यते । एवं तर्हि वर्णपाठ एवोपदेशः करिष्यते ।

॥ वा ॥ वर्णपाठ उपदेश इति चेदवरकालत्वात् परिभाषाया अनुपदेशः ॥

भा :—वर्णपाठ उपदेश इति चेदवरकालात्वात् परिभाषाया अनुपदेशः । किं परा सूत्रात् क्रियत इत्यतोऽवरकाला ? नेत्याह । सर्वथाऽवरकालैव । वर्णानामुपदेशस्तावत् । उपदेशोत्तरकालेत्संज्ञा । इत्संज्ञोत्तरकाल "आदिरन्त्येन सहेता" इति प्रत्याहारः । प्रत्याहारोत्तरकाला सवर्णसंज्ञा । सवर्णसंज्ञोत्तरकालं "अणुदित्सवर्णस्य चाप्रत्ययः" इति । सैषावरकाला, उपदेशोत्तरकाला वर्णानामुत्पत्तौ निमित्तत्वाय कल्पयिष्यत इत्येतन्न ।

॥ वा ॥ तस्मादुपदेशः ॥

भा :—तस्मादुपदेशः कर्तव्यः ।

प्र:—**किमर्थं पुनरिति।** आकृतिनिर्देशात् सिद्धमिति प्रश्नः। **अणू सवर्णस्येति।** उदिद्ग्रहणस्याविचारयिष्यमाणत्वादेवमुक्तम्। व्यक्तिनिर्देशे कालादिभिन्नस्य ग्रहणं न प्राप्नोतीति भावः। **प्रत्याहारग्रहण इति।** अकोऽचीति यत्र संज्ञया प्रत्यायनमिकारादीनां तत्र तैरन्येषां ग्रहणं न स्याद्। यत्र स्वरूपेणोच्चार्यन्ते 'अस्य च्वौ' 'यस्येति च' इति च तत्रैवैषां ग्राहकत्वं स्यात्। **अनुपदेशादिति।** अनुच्चारणादित्यर्थः. न हि प्रत्याहारे दीर्घा उच्चारिता यतोऽगादिचोदनाभिर्गृह्येरन्। अथवा अकोऽचीत्यादावनुच्चारिता इकारादयो दीर्घाणां प्रत्यायका न स्युरित्यर्थः। **ननु चेति।** उच्चार्यमाणैरेव प्रत्यायकैर्भवितव्यमिति नास्ति। सन्निहितास्तु प्रत्यायकाः। [1]तच्च यथायोगमस्त्येवेत्यर्थः। **उच्चार्यमाणेति।** प्रतीयमानो हि प्रधानं सत्कथमन्यप्रत्यायनेऽङ्गभावं तदैव गच्छेदित्यर्थः। **शब्दस्यावचनमिति।** प्रतीयमानशब्देनान्यस्याप्रत्यायनमित्यर्थः। **ऋगित्युक्त इति।** यद्यपि प्रकरणवशाद्विशिष्टसन्निवेशापि ऋक्छब्देन ऋक् प्रत्याय्यते तथापि सा स्वार्थं न प्रत्याययतीत्यर्थः। **एवं तर्हीति।** अइउणिति प्रत्याहार एवाकारादिभिराकारादीनां ग्रहणात् तेषामप्यगादिसंज्ञाभिर्ग्रहणं भविष्यतीत्यर्थः। **उपदेश इति।** प्रत्यायनमित्यर्थः। **करिष्यत इति।** व्याख्यास्यते। **अवरकालत्वादिति।** निष्पन्नेष्वङ्गेष्वनयान्यत्रास्य च्वावित्यादौ सवर्णानां ग्रहणं भवति, नाङ्गेषु नापि स्वात्मनि अनिष्पन्नत्वादिति भावः। **सर्वथेति।** आर्थक्रमेणापि न शाब्दक्रमणैवेत्यर्थः। **वर्णानामुत्पत्ताविति।** अइउणित्यत्र इयमेव वर्णानाकारादीनुत्पादयतीत्येतन्नास्ति। **तस्मादिति।** प्रत्याहार एव दीर्घप्लुता अपि पठनीया इत्यर्थः।

उ:—प्रत्याहारसूत्रेषु 'अस्य च्वौ' इत्यादौ च जातिपक्षे सम्पूर्णसूत्रस्य प्रत्याख्यानात्। व्यक्तिपक्षे च स्थापनादणुदित्सवर्णस्येति वक्तव्येऽणसवर्णस्येति वार्तिकमयुक्तम्; अत आह—**उदिदिति।** ककारादिपञ्चकनिष्ठावान्तरजात्यभावेनोदिद्ग्रहणस्यावश्यकर्तव्यत्वादणमात्रविषयोऽयं विचार इत्यर्थः। **संज्ञयेति;** प्रत्याय्यानां प्रत्यायकत्वासम्भवादिति भावः। नन्वणसवर्णस्येति वचनसामर्थ्यादगादिष्वपि सवर्णग्रहणं स्याद्; अत आह—**यत्रेति।** अत्र प्रत्याय्यप्रत्यायकत्वलक्षणविरोधाभावादित्यर्थः। वार्तिके अगादिप्रत्याहारसवर्णानामकारादीनामप्रतिपत्तिरिति प्रतिज्ञाय कुत इत्यपेक्षायामणादिसंज्ञया तेषाम्

---

(१) मु. प. तच्च सन्निधानम्

प्रतिपत्तिः किं वेकारादिभिरिति विकल्प्य उभयनिरासायानुपदेशादित्युक्तम्। तत्रानुपदेशोऽप्रतिपादनं चेदत्र साध्याविशिष्टत्वमित्यन्यथा व्याचष्टे—**अनुच्चारणादिति**। आद्यपक्षनिराकरणे हेतुं प्रयोजयति—**नह्मीति**। **प्रत्याहारे**; अइउणित्यादौ। **गृह्येरन्**; साक्षात्प्रतीयेरन्। भाष्ये संज्ञाग्रहणं सांज्ञिनोऽप्युपलक्षणमङ्गीकृत्य द्वितीयपक्षनिरासेऽप्येतदेव योजयति—**अथवेति**। **सन्निहिताः**; बुद्धिसन्निपाताः। **तच्च**; बुद्धिसन्निधानम्। **यथायोगम्**; उच्चारणेन संज्ञयापीत्यर्थः। उच्चार्यमाणेनैव प्रत्यायकत्वे युक्तिमाह—**प्रतीयमान इति**। यद्यप्युच्चारणे प्रधानस्य शब्दस्यार्थप्रतीतावप्रधानभावोऽस्ति तथापि धात्वर्थभेदस्तत्र, नेह स इति भावः। **तदैवेति**। यद्यप्यगादिसंज्ञया संज्ञिभिरीकारादिभिर्दीर्घाणां प्रतीतिरिति न यौगपद्यं तथापि कार्यान्वयात्प्रागेवोभयप्रतीत्यपेक्षणात्प्राक्कालैक्यात्तदैवेत्युक्तम्। एवं सति पूर्वप्रतीतह्रस्वानामेव कार्यान्वयो न पश्चात्प्रतीतदीर्घाणामिति दूषणपर्यवसानं ज्ञेयम्। भाष्ये उच्चार्यमाणः शब्द इति व्याख्यानदर्शनाद्वार्तिकस्योच्चार्यमाणशब्दश्शब्दस्येत्यस्य विशेषणमिति प्रतीयते। तथा चोच्चार्यमाणशब्दस्य सम्प्रत्यायकशब्देनासमर्थसमासस्स्यादित्याशङ्क्य कर्तरि षष्ठीमङ्गीकृत्य वचनमित्यनेन शब्दस्येत्यस्य सम्बन्धं दर्शयति—**प्रतीयमानेनेति**। भाष्ये शब्द इत्यर्थसिद्धकथनमिति भावः। ऋगित्युक्ते तद्विशेषाप्रतीतेर्नार्थप्रत्यय इत्याह—**यद्यपीति**। उपदेशो नोच्चारणं किं त्वणसवर्णस्येत्यनेन प्रत्यायनमित्याह—**अइउणिति**। **तेषामपि**; अगादिसंज्ञायां सत्यामिति शेषः। **अगादिसंज्ञाभिः**; अकस्सवर्ण इत्यादाविति शेषः। प्रत्यायनस्य स्वयं करणासम्भवादाह—**व्याख्यायत इति**; अणुदिदित्यनेन आकारादीनां प्रत्यायनं प्रत्याहारसूत्र एव भवतीति व्याख्यास्यत इत्यर्थः। वार्तिके **परिभाषायाः**; आणुदित्सूत्रस्य। वर्णानामुपदेश इत्यादिभाष्यतात्पर्यं संक्षेपेणाह—**निष्पन्नेष्विति**। भाष्ये **परा सूत्रात्**; प्रत्याहारसूत्रात्परेयं परिभाषा। **क्रियते**; पठ्यत इत्यर्थः। **आर्थक्रमः**; सामर्थ्यलभ्यक्रमः। **न शाब्देति**। यद्यपि सूत्रपाठक्रमो न सवर्णग्रहणप्रयोजकः इग्यण इत्यादौ सवर्णग्रहणाभावप्रसङ्गात्, तथाप्यभ्युपगमवादेनैतदुक्तम्। अस्य च्वावित्यादौ सवर्णानामाकारादीनामुत्पत्तौ ज्ञापने निमित्तमेवेयमिति सैवेति भाष्यायोगमाशङ्क्याह—**अइउणिति**। **उत्पादयति**; ज्ञापयति। **प्रत्याहारे**; अणित्यादौ।

**॥ वा ॥ तत्रानुवृत्तिनिर्देशे सवर्णाग्रहणमनण्त्वात् ॥**

भा :—तत्रानुवृत्तिनिर्देशे सवर्णानां ग्रहणं न प्राप्नोति। "अस्य च्वौ" "यस्येति च" किं कारणम्? अनण्त्वात्। न ह्येतेऽणो येऽनुवृत्तिनिर्देशे। के तर्हि? येऽक्षरसमाम्नाय उपदिश्यन्ते। एवं तर्ह्यनण्त्वादनुवृत्तौ न। अनुपदेशाच्च प्रत्याहारे न। उच्यते चेदम्—अण् सवर्णान् गृह्णातीति। तत्र वचनाद्भविष्यति।

॥ वा ॥ वचनाद्यत्र, तन्नास्ति ॥

भा :—नेदं वचनाल्लभ्यम्। अस्ति ह्यन्यदेतस्य वचने प्रयोजनम्। किम्? य एते प्रत्याहाराणामादितो वर्णास्तैः सवर्णानां ग्रहणं यथा स्यात्। एवं तर्हि।

॥ वा ॥ सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणात्।

भा :—सवर्णेऽण्ग्रहणमपरिभाष्यम्। कुतः? आकृतिग्रहणात्; अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलं ग्रहीष्यति। तथेवर्णाकृतिस्तथोवर्णाकृतिः। ननु चान्याकृतिरकारस्यान्याकारस्य च।

॥ वा ॥ अनन्यत्वाच्च ॥

भा :—अनन्याकृतिरकारस्याकारस्य च।

॥ वा ॥ अनेकान्तो ह्यनन्यत्वकरः ॥

भा :—यो ह्यनेकान्तेन भेदो नासावन्यत्वं करोति। तद्यथा—न यो गोश्च गोश्च भेदः सोऽन्यत्वं करोति। यस्तु खलु गोश्चाश्वस्य च भेदः सोऽन्यत्वं करोति। अपर आह।

॥ वा ॥ सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणादनन्यत्वम् ॥

भा :—सवर्णेऽण्ग्रहणमपरिभाष्यम्। आकृतिग्रहणादनन्यत्वं भविष्यति। अनन्याकृतिरकारस्याकारस्य च।

॥ वा ॥ अनेकान्तो ह्यनन्यत्वकरः ॥

भा :—यो ह्यनेकान्तेन भेदो नासावन्यत्वं करोति । तद्यथा—न यो गोश्च गोश्च भेदः सोऽन्यत्वं करोति । यस्तु खलु गोश्चाश्वस्य च भेदः सोऽन्यत्वं करोति ।

॥ वा ॥ तद्वच्च हल्ग्रहणेषु ॥

भा :—एवं च कृत्वा हल्ग्रहणेषु सिद्धं भवति—"झलो झलि"—अवात्ताम् अवात्तम् अवात्त । यत्रैतन्नास्ति—अण् सवर्णान् गृह्णातीति ।

॥ वा ॥ अनेकान्तो ह्यनन्यत्वकरः ॥

भा :—इत्युक्तार्थम् ।

॥ वा ॥ द्रुतविलम्बितयोश्चानुपदेशात् ॥

भा :—द्रुतविलम्बितयोश्चानुपदेशान्मन्यामहे — 'आकृतिग्रहणात् सिद्धम्" इति । यदयं कस्यांचिद् वृत्तौ वर्णानुपदिश्य सर्वत्र कृती भवति । अस्ति प्रयोजनमेतत् । किं तर्हीति ।

प्र :—**तत्रानुवृत्तीति** । व्यक्तिपक्षे सत्यपि सूत्रारम्भेऽत्रानन्तरभेदसम्भवाद् ग्रहणं न सिध्यतीत्यर्थः । **वचनादिति** । अण्सदृशोऽणिति ग्रहीष्यत इत्यर्थः । **यत्रेति** । अनन्तरोक्तमुभयं यत्र नास्ति अकोऽचीत्यादौ । अत्र ह्यनुबन्धेन चिह्नेन प्रत्याहारस्थ एव निर्दिष्ट इत्यणत्वमुच्चारण चास्ति । तत्राकार उच्चरित आदिरन्त्येन सहेतेति मध्यपातिनां स्वरूपस्य च ग्राहकोऽस्माच्च वचनात्सवर्णानामपीत्यर्थः । एवं व्यक्तिपक्षे सत्यपि सूत्रारम्भे नास्तीष्टसिद्धिः । आकृतिपक्षे तु सूत्रं न कर्तव्यमित्याह **सवर्ण इति** । प्रत्याहारे अनुवृत्तिनिर्देशे च सर्वत्र जातिरुपदिश्यते नान्तरीयकं व्यक्त्युच्चारणम् । अत्वं च ह्रस्वदीर्घप्लुतेषु विद्यते यथा गोत्वं कृशे गोपिण्डे स्थूले शुक्ले कृष्णे चेति भावः । **ननु चान्येति** । श्रुतिभेदाद्भेदं मन्यमानस्य प्रश्नः । **अनन्यत्वाच्चेति** । सत्यपि श्रुतिभेदे एकाकृतियोगोऽस्त्येव यथा कृशे स्थूलेऽपि च गोपिण्डे गोत्वयोगः ।

**यो हीति ।** अभेदस्यापि प्रत्यभिज्ञानात्सद्भाव इत्यर्थः । **यस्त्विवति ।** अत्रापि यदा प्राणी न हन्तव्य इति प्राणित्वेनाश्रयणं तदा अभेद एव । गवाश्वरूपाश्रयणे तु भेद इति भावः । अष्टन आ विभक्तावित्यत्र तु यत्राधिक्याद्दीर्घव्यक्तिसमवेतं सामान्यं गृह्यते । यथा पूर्ववया ब्राह्मणः प्रत्युत्थेय इति विशिष्टव्यक्तिस्थं ब्राह्मण्यमाश्रीयते। **अपर आहेति ।** व्यक्तिरेव शब्दार्थः । जातिस्त्वशब्दार्थोऽप्यभेदप्रत्ययहेतुरस्तीति सर्वव्यक्तीनामभेदाश्रयणादेकव्यक्तिनिर्देशेऽपि [1]ग्रहणं सिध्यतीत्यर्थः । अत्र पक्षे आकृतिग्रहणमाकृतेरेकाकारप्रत्ययनिमित्तत्वेन प्रतिपत्तिरुच्यते । **तद्वच्चेति ।** यथाकृतिग्रहणादण्सु कार्यं सिध्यति तथा हल्स्वपि आकृतिग्रहणादेव सिध्यति । व्यक्तिनिर्देशपक्षे तु एकैव तकारव्यक्तिर्झल्व्यपदेशमासादयेत् । पूर्वा परा वेत्यवात्तामिति लोपो न स्यात्। अबुद्धेत्यादावेव तु स्यात् । धातुप्रत्ययावयवयोर्भेद एवेति चेत् तत्राह—**अनेकान्त** इति। **द्रुतेति ।** हल्ग्रहणेष्वेवेदमुच्यते । यत्रैतन्नास्ति अण् सवर्णान् गृह्णातीति । अण्सु तु व्यक्तिनिर्देशेऽपि ग्रहणकशास्त्रेण स्यादेव वृत्तिभिन्नस्य ग्रहणम् ।

उ:—प्रत्याहारे पाठेन दीर्घादेरण्त्वादिसम्पादनं पाठाभावादयुक्तमित्युक्त्वा 'अस्य च्वौ' इत्यादावकारादेस्स्वरूपेणोच्चारणेन दीर्घग्रहणं न प्राप्नोतीति दोषान्तराभिधानाय **तत्रानुवृत्तीति** वार्तिकम् । अनुवृत्तिशब्दः प्रत्याहारसूत्रपरः । अनुवृत्तौ स्वरूपेण निर्देश उच्चारणं यस्याकारादेस्तत्वेत्यर्थः । वृत्तिं स्वरूपेण स्थितिमनुगतोऽकारादिस्तस्य निर्देशस्स्वरूपेणोच्चारणमिति केचित् । तत्र येऽनुवृत्ताविति भाष्यविरोधश्चिन्त्यः । तत्र सवर्णग्रहणे हेतुमाह—**व्यक्तीति ।** प्रत्याहारसूत्रस्थाकाराद्यपेक्षया 'अस्य च्वौ' इत्यादिस्थस्य भिन्नत्वेनानण्त्वात्सवर्णग्रहणं न प्राप्नोतीत्यर्थः । **अवान्तरेति ।** उदात्तादिकृतेत्यर्थः । अनणश्च वचनादपि कथं ग्राहकत्वम्; अत आह—**अणसदृश इति ।** यत्र तन्नास्तीत्यत्र तच्छब्दार्थमाह— **अनन्तरेति** । **उभयम्;** अनण्त्वमनुच्चारणम् । **मध्यपातिनामिति;** दृष्टान्ततयोक्तम् । व्यक्तिपक्षोक्तदोषनिरासाय जातिपक्षाङ्गीकारे सूत्रमेव व्यर्थमिति वक्तुं सवर्ण इति वार्तिकमित्याह— **एवमिति ।** भाष्ये **एवं तर्हि;** जातिपक्षाङ्गीकारे । **प्रत्याहारे;** अइउणित्यादिसूत्रे । **नान्तरीयकमिति;** व्यक्त्या विना जातिनिर्देशासम्भवादित्यर्थः । यद्यप्यत्व-

---

(१) मु. पु. सर्वव्यक्तीनां ग्रहणम्.

मित्यादिनिर्देशस्सम्भवति तथाप्यस्य भाव इति व्यक्तिनिर्देशोऽस्ति गौरवं चेति भावः। **अत्वम्**; अवर्णत्वम्। प्रमाणकृतभेदे दृष्टान्तः—**कृश इति। शुक्ल इति**; गुण कृत भेदे। **श्रुतिभेदात्**; श्रोत्रेन्द्रियजन्योपलब्धिभेदात्। **भेदम्**; जातेरित्यादिः। व्यक्तिभेदेनान्यथासिद्धः श्रुतिभेदो न जातिभेदसाधक इत्याह—सत्यपीति। **प्रत्यभिज्ञानादिति**। यथा स्थूले कृशे च गौरित्येकाकारा बुद्धिस्तथा ह्रस्वे दीर्घे चावर्ण इति बुद्धेर्नाकृतिभेद इत्यर्थः। **प्राणित्वेनेति**। यद्यपि प्राणित्वं न जातिः; तथापि परम्परासम्बन्धप्राणत्वमेव प्राणित्वम्। अनुगतधर्ममात्रमाकृति-शब्दार्थ इति भावः। यथा ह्रस्वनिर्देशे नान्तरीयकतया दीर्घस्यापि ग्रहणमेवं दीर्घोच्चारणे ह्रस्वस्यापि ग्रहणं स्यादाकृतिनिर्देशाविशेषाद्; अत आह—**अष्टन इति**। यद्यपि ह्रस्वोच्चारणे दीर्घस्यानन्तरतमस्यापि प्राप्तेर्दीर्घोच्चारणं व्यक्तिविशेषविवक्षार्थमेवेति भावः; **अशब्दार्थोऽपीति**; व्यक्तीनामानन्त्येन शक्तिग्रहणानुपपत्तिपरिहाराय जातिरुप-लक्षणतयाऽङ्गीक्रियते न तु वाच्यतयेत्यर्थः। यद्वा पूर्वं जातिमात्रस्य प्राधान्येन वाच्यत्वमुक्तमिदानीं जात्यवच्छिन्नव्यक्तीनाम्। जातिर्विशेषणतया, न प्रधानतया। **अशब्दार्थः**; प्रधानतयेत्यादिः। **ग्रहणम्**; सर्वव्यक्तीनामित्यादि। पूर्वमाकृति-ग्रहणादित्यस्याभिधेयत्वेन ग्रहणं विवक्षितम्। इदानीं सर्वव्यक्तिप्रतीत्युपयुक्तप्रतीतिर्विवक्षि-तेत्याह—**अत्र पक्ष इति**। यद्यपि व्यक्तिपक्षे प्रत्याहारनिर्दिष्टैव व्यक्तिर्लक्ष्येऽपीति नास्ति प्रमाण तथापि लक्ष्यार्थाज्झलो झलीति निर्देशात्प्रत्याहारस्यैव व्यक्तिर्लक्ष्येऽपीति ज्ञानात्पूर्वापरेत्युक्तम्। **अवात्तामिति**; वसेर्लुङ्, तसस्ताम्, च्लेस्सिच्, वदव्रजेति वृद्धिः। 'सः स्यार्धधातुके' इति तत्वं, 'झलो झलि' इति सलोपः। भाष्ये **अवात्तमिति**। वसेरेव लुङि थसस्तमि रूपम्। ननु 'झलो झलि' इति निमित्तत्वेनोभयोनिर्देशसामर्थ्यात्प्रत्याहारगतैव व्यक्तिरुच्चारणभेदभिन्ना पूर्वापराप्येकैव भविष्यति; अत आह—**अबुद्धेति**। बुधेर्लुङ्यटि आत्मनेपदे थासि लिङ्सिचाविति कित्वेन गुणाभावे 'झलो झलि' इति सिज्लोपे झषस्तथोरिति धत्वे झलां जशिति जश्त्वे च रूपम्। अत्र धकारतकारव्यक्तिद्वयमादाय लक्षणप्रवृत्तेरवात्तामित्यादावप्रवृत्तिरिति भावः। **धात्विति**। कत्वतत्वादिजातौ मानाभावान्न तद्द्वारा सवर्णग्रहणसिद्धिरिति शङ्काशयः। प्रत्यभिज्ञैव तत्र मानमित्याशयेनोत्तरमाह—**आहेति**। द्रुतत्वादिकं हल्मात्रविषयमित्याह—**हल्ग्रहणेष्वेवेति**।

**॥ वा ॥ वृत्तिपृथक्त्वं तु नोपपद्यते ॥**

**भा :—वृत्तेस्तु पृथक्त्वं नोपपद्यते ।**

**॥ वा ॥ तस्मात्तत्र तपरनिर्देशात्सिद्धम् ॥**

**भा :—तस्मात्तत्र तपरनिर्देशः कर्तव्यः । न कर्तव्यः । क्रियते न्यास एव—"अतो भिस ऐस्" इति ॥ अणुदित्सवर्णस्य चाप्रत्ययः ॥**

प्र :—**वृत्तिपृथक्त्वमिति ।** ह्रस्वदीर्घादिप्रमाणलक्षणापि वृत्तिर्न भेदिका स्यादिति खट्वाभिरित्यत्रैस्प्रसज्येतेति भावः । **क्रियत इति** अवश्यकर्तव्यतां दर्शयति । व्यक्तिपक्षेऽण् सवर्णान् गृह्णातीति प्रसङ्गः । सूत्रप्रत्याख्याने त्वाकृतिग्रहणात् । उदिद्ग्रहणं कर्तव्यमेव न हि वर्ग्याणामेकाकृतियोगोऽस्ति । कृते तु सूत्रे कुहोश्चुरित्यादौ भाव्यमानस्य उदित्वसामर्थ्यादप्रत्यय इति निषेधो नावतरतीत्यण्स्वेवायं निषेधः । प्रत्याख्यानपक्षे भाव्यमानेषु यथाश्रुतं रूपमुत्पाद्यत इत्याकृतिग्रहणेऽपि भिन्नकालानां ग्रहणं न भवति यथा पशुना यजेत पशुमालभेतेत्युत्पत्तिवाक्यत्वात् संख्या विवक्ष्यते । उदात्तादयस्त्वभेदकाः इत्युक्तम् । अनुवादे तु नान्तरीयकत्वात् एकव्यक्त्युच्चारणेऽपि सकलव्यक्तिग्रहणम् । यथा 'ग्रहं सम्मार्ष्टि' इति सर्वेषां ग्रहाणां प्राजापत्या नवग्रहा इत्यादिभ्यो ज्ञातानां सम्मार्जनम् ॥ ६९ ॥

उ :—वृत्त्या पृथक्त्वमिति तृतीयासमासमभिप्रेत्य व्याचष्टे—**ह्रस्वेति ।** अवश्यकर्तव्यतामेवाह—**व्यक्तीति ।** उदिद्ग्रहणाभावे कुहोश्चु इति सूत्रं कर्तव्यम्, तत्र कत्वचत्वयोः खछादिष्वभावात्तेषां ग्रहणं जातिपक्षेऽपि न स्यादित्याह **न हीति ।** **एकेति ;** तन्मात्रनिष्ठेत्यादिः । अप्रत्यय इत्यण एव शेषो नोदित इत्याह—**कृत इति ।** नन्वण्ग्रहणप्रत्याख्यानेऽनुवाद इव विधावपि सवर्णग्रहणप्रसङ्गः ; अत आह—**प्रत्याख्यानेति । यथाश्रुतम् ;** उच्चारितव्यक्तिविशेषावच्छिन्नं जातिस्वरूपम् ॥ **उत्पाद्यते ;** विधीयते । तथा च विधेयविशेषणत्वात्पश्वेकत्ववद्व्यक्तिविशेषविवक्षेति भावः । **उत्पत्तिवाक्यत्वात् ;** विधिवाक्यत्वात् । नन्वेवं गुणभिन्नस्य स्वग्रहणं स्याद ; अत आह **उदात्तेति ।** अनुवादे ग्रहैकत्ववदुच्चारितव्यक्तिविशेषविवक्षा नास्तीत्याह—**अनुवाद इति ।** निर्ज्ञातानां ग्रहाणा-

मित्यन्वयः । 'दिव उत्' इति तपरकरणाल्लिङ्गात् अमू इत्यादिसिद्धये क्वचिद्विधावपि व्यक्त्यन्तरोपादानम् । तत्राण्ग्रहणप्रत्याख्यानपक्षे तच्छेषस्य प्रत्यय इत्यस्याभावादुदित्सवर्णस्येत्येतावत्सूत्रं कर्तव्यम् । भाव्यमानेन सवर्णग्रहणं नेति परिभाषा च पश्चेकत्वन्यायसिद्धेति मन्तव्यम् ॥

सू.——तपरस्तत्कालस्य ॥ १-१-६९ ॥

**भा :—अयुक्तोऽयं निर्देशस्तत्कालस्येति । तदित्यनेन कालः प्रतिनिर्दिश्यते । तदित्ययं च वर्णः । तत्रायुक्तं वर्णस्य कालेन सह सामानाधिकरण्यम् । कथं तर्हि निर्देशः कर्तव्यः । तत्कालकालस्येति । किमिदं तत्कालकालस्येति ? तस्य कालस्तत्कालः, तत्कालः कालो यस्येति सोऽयं तत्कालकालस्तत्कालकालस्येति । स तर्हि तथा निर्देशः कर्तव्यः । न कर्तव्यः । उत्तरपदलोपोऽत्र द्रष्टव्यः । तद्यथा--उष्ट्रमुखमिव मुखं यस्य सोऽयमुष्ट्रमुखः । खरमुखः । एवं तत्कालकालस्तत्कालस्तत्कालस्येति । अथवा साहचर्यात्ताच्छब्द्यं भविष्यति । कालसहचरितो वर्णोऽपि काल एव ।**

प्र :—तपरः । **अयुक्त इति** । न्यायेनासंबद्ध इत्यर्थः । न्यायशब्दस्य प्रयोगस्तु प्रसिद्धत्वान्न कृतः । कदाचित्प्रसिद्धार्थस्यापि प्रयोगो दृश्यते न्यायेनायुक्तमिति । धात्वर्थेऽन्तर्भूतस्य प्रयोगाभावः । न हि भवति जीवति प्राणानिति । **तदित्यनेनेति** । स कालो यस्येति कालसामानाधिकरण्येन तच्छब्दोपादानात् । तदित्ययं च वर्ण इति । परामृष्ट इत्यर्थः । तपरशब्दवाच्यस्यार्थस्य तच्छब्देन परामर्शात् । **वर्णस्येति** । वर्णवाचिनस्तच्छब्दस्येत्यर्थः । **कालेनेति** । कालवाचिनेत्यर्थः । कालो हि प्रसिद्धपरिमाणा क्रियाऽप्रसिद्धपरिमाणस्य क्रियान्तरस्य परिच्छेदिका । यथा दिवसमधीत इति दिवसशब्देनोदयादिरस्तमयान्त आदित्यगतिप्रबन्ध उच्यते । स चाध्ययनस्य परिच्छेदकत्वात्कालः । वर्णस्तु क्रियात्मको न भवति । **तस्य काल इति** । यैव एकस्य वर्णस्य परिच्छेदिका क्रिया निमेषादिः सैव यस्य परस्य स तत्कालकालः । **उष्ट्रमुख इति** । गम्यमानार्थत्वाद् द्वितीयमुखशब्दाप्रयोगः । उष्ट्रो मुखमस्योष्ट्रमुखः । न च प्राणी प्राण्यन्तरस्य मुखमिति सामर्थ्यात्सादृश्यप्रतीतिः । समग्रेण चोष्ट्रेण मुखस्य

साहश्याभावादुष्ट्रशब्दोऽवयवे वर्तते। मुखेनैव मुखस्य साहश्यं प्रसिद्धमिति सामर्थ्या-दुष्ट्रमुखमिव मुखमस्येत्यर्थो गम्यते। एवमिहापि वर्णः कालो न भवतीति सामर्थ्यात् तदीया क्रिया क्रियान्तरपरिच्छिन्ना सती [१]वर्णान्तरस्य परिच्छेदिकेति वर्ण एव परिच्छेदक उच्यते। **अथवेति।** वर्णसहचरितायां क्रियायां तच्छब्दो वर्तते स कालो यस्येति तद्वर्णसमवेता क्रिया परिच्छेदिकास्येत्यर्थः। यथाश्मादि द्रव्यं द्रव्यान्तरपरिच्छिन्नं सुवर्णादीनां परिच्छेदकं तद्वत् क्रियापीत्यर्थः।

उ :—तपर ॥ युजेस्सम्बन्धार्थत्वात्तस्योभयनिरूप्यत्वात्तदभावोऽपि तथेति सम्बन्ध्य-न्तरापेक्षायामाह—**न्यायेनेति।** तर्हि न्यायेनायुक्त इति वक्तव्यम्; अत आह—**न्यायशब्दस्येति। प्रसिद्धत्वादिति;** निष्ठान्तो युजिर्न्यायेन सम्बन्ध एव प्रयुज्यत इत्यर्थः। कदाचिन्न्यायेनायुक्तमितीष्टप्रयोगोऽपि भवत्येवेत्याह—**कदाचिदिति।** केचित्तु धात्वर्थान्तर्भूतत्वान्न्यायेनेति न प्रयुक्तमित्युक्तं, तदयुक्तं न्यायेनायुक्तमिति प्रयोगाभाव-प्रसङ्गादित्याशयेनाह—**धात्वर्थ इति। प्रयोगेति।** पृथगित्यादिः। **न हीति;** प्राणनिरूपितधारणस्यैव धात्वर्थत्वात्प्राणानीति पृथक्प्रयोगाभाव इत्यर्थः। भाष्ये **कालः प्रतिनिर्दिश्यते;** कालो विशेष्यत इत्यर्थः। विशेषणत्वं चाभेदेन, न तु वैयधि-करण्येनेत्याह—**कालेति। परामृष्ट इति।** तत्कालस्येत्यत्र तच्छब्देनायं वर्णः परामृष्ट इति भाष्यार्थः। तच्छब्देन परामृष्टो यो वर्ण इति वार्थः। वर्णपरामर्शे हेतुः—**तपरेति।** भिन्नप्रवृत्तिनिमित्तानामेकार्थप्रतिपादकत्वलक्षणसामानाधिकरण्यं शब्दधर्म इति वर्णस्य कालेनेति भाष्ययोगं परिहरति—**वर्णवाचिन इति।** सामानाधिकरण्य-सम्भवं कालस्य रूपनिर्वचनेनाह—**कालो हीति। क्रियेति;** महाकालेन व्यवहाराभावात्क्रियातिरिक्तविभुकाले मानाभाव इत्याशयः। **वर्णस्त्विति;** द्रव्यत्वा-द्गुणत्वाद्वेत्यर्थः। एवं च जन्यमात्रस्य कालोपाधित्वेन कालत्वमिति कल्पनमतिकल्पन-मेव। क्रियारूपकालस्य उपाध्यनपेक्षत्वादिति भावः। नन्वेकवर्णोत्पत्तिकाले सर्ववर्णोत्पत्ति-नियमाभावात्कथं वर्णान्तरस्य तत्कालत्वम्; अत आह—**यैवेति।** स्थितस्योत्तरपदस्य लोपकल्पने शब्दस्यानित्यत्वम्, अविद्यमानपदस्यार्थबोधकल्पने गौरवं चाभिप्रेत्याह—**गम्यमानेति।** लक्षणया तन्मुखप्रतिपादकत्वेन गम्यमानत्वमाह—**उष्ट्रो मुख-**

---

(१) मु. पु. क्रियान्तरस्य

**मित्यादिना**। दार्ष्टान्तिकेऽप्याह—**एवमिति**। इहापि स कालो यस्येत्येव विग्रहः। **तदीया क्रिया**; उच्चारणक्रिया। **क्रियान्तर**; निमेषादिक्रियान्तर। **वर्णान्तर**। क्रियायुक्तवर्णान्तर। **वर्ण एवेति**; आश्रितपरिच्छेदकत्वस्याश्रय उच्चारणाद्वर्णवाचकतच्छब्दस्य परिच्छेदककालशब्देन सामानाधिकरण्यं युक्तमित्यर्थः। पूर्वव्याख्यानाद्विशेषमाह—**वर्णेति**। **वर्णसहचरितायामिति**; लक्षणाबीज-सम्बन्धोक्तिः। पूर्वं वर्णस्यैव परिच्छेदकत्वमुक्तमिदानीं तत्क्रियाया इति भावः। तदेव व्यनक्ति—**स इति**। उच्चारणक्रियायाः परिच्छेदकत्वं सापेक्षं न तु स्वत इति सदृष्टान्तमाह—**यथेति**। नियतपरिमाणेन ताम्रादिना तुलितमश्मादि यथा परिच्छेदकं तथा निमेषादिक्रियया परिच्छिन्नोच्चारणक्रियेत्यर्थः। भाष्ये **कालसहचरित इति**। कालशब्देन परिच्छेदिका क्रियोच्यते। वर्णवाचितच्छब्दस्तत्क्रियापर इत्यर्थः।

**भा:—किं पुनरिदं नियमार्थम्, आहोस्वित् प्रापकम्? कथं च नियमार्थं स्यात्? कथं वा प्रापकम्? यद्यत्राऽण्ग्रहणमनुवर्तते, ततो नियमार्थम्। अथ निवृत्तम्, ततः प्रापकम्। कश्चात्र विशेषः?**

**॥ वा ॥ तपरस्तत्कालस्येति नियमार्थमिति चेद्दीर्घग्रहणे स्वरभिन्नाग्रहणम्।**

**भा:—"तपरस्तत्कालस्य" इति नियमार्थमिति चेद्दीर्घग्रहणे स्वरभिन्नानां ग्रहणं न प्राप्नोति। केषाम्? उदात्तानुदात्तस्वरि-ता[नुनासिका]नाम्। अस्तु तर्हि प्रापकम्।**

**॥ वा ॥ प्रापकमिति चेद् ह्रस्वग्रहणे दीर्घप्लुतप्रतिषेधः।**

**भा:—प्रापकमिति चेद् ह्रस्वग्रहणे दीर्घप्लुतयोः प्रतिषेधो वक्तव्यः। न वक्तव्यः।**

**॥ वा ॥ विप्रतिषेधात् सिद्धम्।**

**भा:—अणू सवर्णान् गृह्णातीत्येतदस्तु "तपरस्तत्कालस्य" इति वा। "तपरस्तत्कालस्य" इत्येतद्भवति विप्रतिषेधेन। अणू सवर्णान् गृह्णातीत्यस्यावकाशः—ह्रस्वा अतपरा अणः। तपरस्तत्कालस्य इत्यस्यावकाशः दीर्घास्तपराः। ह्रस्वेषु तपरेषूभयं प्राप्नोति। "तपरस्तत्कालस्य" इत्येतद्भवति विप्रतिषेधेन।**

प्र:—**दीर्घग्रहण इति।** भेदका उदात्तादय इति भावः। तत्र वृद्धिरादैच् इति षण्णामाकाराणां वृद्धिसंज्ञेष्यते। एकस्यैव तु दीर्घस्य स्यात्। तपरकरणं त्वैजर्थमेव स्यात्। **ह्रस्वग्रहण इति;** अतो भिस ऐस् इत्यकारग्रहणे पूर्वसूत्रेण दीर्घप्लुतयोर्ग्रहणं प्राप्नोति। इदं हि सूत्रमनण्ग्रहणे चरितार्थम्। **विप्रतिषेधादिति।** विरोधो ह्यत्र विद्यते। यदि पूर्वसूत्रेणाकारः सवर्णानां ग्राहकस्तदाष्टादशानां ग्रहणप्रसङ्गोऽनेन तु षण्णाम्। तत्र परत्वादनेनैव तपरोऽणू सवर्णानां तत्कालानां स्वरूपस्य च ग्राहकः। नन्वत इति तकारोच्चारणसामर्थ्यादनेनैव ग्रहणं भविष्यति किं विप्रतिषेधाश्रयेण। नैतदस्ति। मुखसुखार्थस्यापि तकारस्य दर्शनात्। 'ऋत इद्धातोः' इति यथा।

उ:—भाष्ये **प्रापकमिति।** यद्यप्यण्ग्रहणनिवृत्तावप्यण्सु प्रवर्तमानमिदं नियामकं संभवति तथापि विधिनियमसम्भवे विधेरेव ज्यायस्त्वाद्विधायकत्वमुक्तम्। वार्तिके स्वरग्रहणमुपलक्षणार्थमिति भाष्ये **अनुनासिकानामित्युक्तम्।** दीर्घस्य सवर्णग्राहकत्वे को दोषोऽत आह—**तत्रेति।** नन्वादिति तपरकरणसामर्थ्यादत्र विधायकत्वं स्यात् अत आह—**तपरेति।** तस्यानेन पूर्वप्राप्तस्य नियमसम्भवादिति भावः। ननु तपरस्तत्कालस्येति विधित्वे ह्रस्वग्रहणे दीर्घप्लुतयोः कथं प्राप्तिः; अत आह—**पूर्वेति।** एतस्य को विषयः; अत आह—**इदमिति।** अन्यतरप्रवृत्तिप्रतिबन्धकलक्षणविरोधाभावेऽपि फलतस्सोऽस्तीत्याह—**विरोध इति।** ननु प्रतिलक्ष्यं लक्षणभेदादतो भिस इत्येतद्विषयलक्षणस्यानवकाशत्वात्सावकाशानवकाशयोर्विप्रतिषेधानुपपत्तिरिति शङ्कते—**अत इति।** सर्वलक्ष्येष्वेकस्यैव लक्षणस्य प्रवृत्त्यास्यापि सावकाशत्वात्तकारोच्चारणस्यैतत्सहायत्वस्य सन्दिग्धत्वात्तुल्यबलत्वे सति प्रतिषेधोपपत्तिरित्याह—**नैतदिति। ऋत इति।** न चात्रापि स्वरभिन्नानां ग्रहणाय तकार इति वाच्यं अन्तरङ्गतया धातोरित्युदात्तत्वेनैव भाव्यत्वात्। न च धात्वन्तरे सावकाशस्य धातुस्वरस्य

तपरत्वलभ्यस्वरत्रयेण ऋदन्तधातौ बाधोऽस्त्विति वाच्यम् मुखसुखार्थेनाप्युपयोगसम्भवे साक्षाद्विहितधातुस्वरबाधकत्वकल्पनायोगात् ।

भा :—यद्येवम्—

॥ वा ॥ द्रुतायां तपरकरणे मध्यमविलम्बितयो-
रुपसंख्यानं कालभेदात् ॥

भा :—द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसंख्यानं कर्तव्यम् । तथा मध्यमायां द्रुतविलम्बितयोः । तथा विलम्बितायां द्रुतमध्यमयोः । किं पुनः कारणं न सिध्यति ? कालभेदात् । ये हि द्रुतायां वृत्तौ वर्णास्त्रिभागाधिकास्ते मध्यमायाम् । ये च मध्यमायां वर्णास्त्रिभागाधिकास्ते विलम्बितायाम् ।

॥ वा ॥ सिद्धं त्ववस्थिता वर्णा वक्तुश्चिराचिरवचनाद्
वृत्तयो विशिष्यन्ते ॥

भा :—सिद्धमेतत् । कथम् ? अवस्थिता वर्णा द्रुतमध्यमविलम्बितासु । किं कृतस्तर्हि वृत्तिविशेषः ? वक्तुश्चिराचिरवचनाद् वृत्तयो विशिष्यन्ते । वक्ता कश्चिदाश्वभिधायी भवति, आशु वर्णानभिधत्ते । कश्चिच्चिरेण कश्चित् चिरतरेण कश्चिच्चिरतमेन । तद्यथा—तमेवाध्वानं कश्चिदाशु गच्छति कश्चिच्चिरेण कश्चिच्चिरतरेण कश्चिच्चिरतमेन । रथिक आशु गच्छति । आश्विकश्चिरेण पदातिश्चिरतरेण शिशुश्चिरतमेन । विषम उपन्यासः । अधिकरणमत्राध्वा व्रजिक्रियायाः । तत्रायुक्तं यदधिकरणस्य वृद्धिह्रासौ स्याताम् । एवं तर्हि—स्फोटः शब्दः ध्वनिः शब्दगुणः । कथम् ?

॥ वा ॥ भेर्याघातवत् ॥

भा :—तद्यथा—भेर्याघातः भेरीमाहत्य कश्चिद्विंशतिपदानि गच्छति कश्चित्त्रिंशत् कश्चिच्चत्वारिंशत् । स्फोटस्तावानेव भवति ।

**ध्वनिकृता [1]वृत्तिः ।**

**ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते ।**
**अल्पो महांश्च केषांचिदुभयं तत्स्वभावतः ॥**

**तपरस्तत्कालस्य ॥**

प्र :—**यद्येवमिति ;** यद्ययं योगस्तत्कालान् प्रतिपादयन् भिन्नकालान् निवर्तयतीत्यर्थः । **त्रिभागाधिका इति ।** द्रुतं श्लोकमृचं वोच्चारयति वक्तरि नाडिकाया यस्या नव पानीयपलानि स्रवन्ति तस्या एव मध्यमायां वृत्तौ द्वादशपलानि स्रवन्ति । नवानां त्रिभागास्त्रीणि पलानि तदधिकानि नव द्वादश सम्पद्यन्ते । विलम्बितायां तु वृत्तौ षोडशपलानि स्रवन्ति । **सिद्धं त्विति ।** सर्वासु वृत्तिषु न वर्णानामुपचयापचयौ । यथा गन्तॄणामालस्यादिभेदात् गतिभेदेऽपि न मार्गभेद इत्यर्थः । **विषम इति ।** वर्णाः प्रयत्नजन्याः । तद्भेदे वृत्तिभेदाद्भिन्नकाला एव । अध्वा तु व्यवस्थित एव न गन्तृक्रियाजन्यः । **एवं तर्हीति ।** व्यक्तिस्फोटोऽत्र विवक्षितः, स च नित्यः । एतच्च येनोच्चारितेनेत्यत्र पस्पशायां विचारितमिति तत एव बोद्धव्यम् । **शब्दगुण इति ।** शब्दस्य गुण उपकारको व्यञ्जकत्वेनेत्यर्थः । तद्यथा—घटः पुनः पुनर्दृश्यमानोऽपि न भेदमवलम्बते । तथा विलम्बितायां वृत्तावकार एव पुनःपुनरुपलभ्यत इति वृत्तिभेदेऽपि वर्णस्य भेदो न गृह्यते इति सर्ववृत्तिषु तत्कालत्वम् । ह्रस्वदीर्घप्लुतास्तु स्वत एव भिन्नाभिन्नैर्ध्वनिभिर्व्यज्यन्त इति तेषां कालभेदः । **भेर्याघात इति ।** भेरीमाहन्तीति भेर्याघातः । उपलब्धिसामान्ये दृष्टान्तः । यथा प्रयत्नवशादुत्पन्नो भेरीशब्दः कश्चिदल्पकालमुपलभ्यते कश्चिच्चिरं चिरतरं च । एवं वृत्तिषूपलब्धीनां कालभेदो विषयस्य त्वभेद एव । **स्फोटस्तावानेवेति** दार्ष्टान्तिकोपन्यासः । **ध्वनिः स्फोटश्चेति ।** व्यञ्जको व्यङ्ग्यश्चेत्यर्थः । शब्दानां व्यङ्ग्यानां सम्बन्धी व्यञ्जकत्वेन यो ध्वनिः स एव महानल्पश्च लक्ष्यते व्यङ्ग्यस्त्वभिन्नकाल एवेत्यर्थः । **उभयमिति ।** व्यङ्ग्यो व्यञ्जकश्च प्रमाणेन । **स्वभावतः** स्वरूपेण सिद्धावित्यर्थः । **केषांचिदिति ।** व्यक्तानामुभयं गृह्यते, अव्यक्तानां तु ध्वनिरेव ॥ ७० ॥

उ :—ननु प्रापकस्य निवर्तकत्वाभावात्पूर्वसूत्रेण प्लुतादिग्रहणसम्भवादित्ययुक्तम् ; अत आह—**यदीति ।** सकृद्गताविति न्यायेन पूर्वसूत्रप्राप्तान्निवर्तयति । अप्राप्तिरेव

(१) मु. पु. वृद्धिः ।

निवृत्तिरिति भावः । नियमपक्षेऽप्येतत्तुल्यम् । यस्मिन्पक्षेऽप्येतत्तुल्यं यस्मिन्पक्षे यस्यां वृत्तौ प्रत्याहारे वर्णोपदेशस्तस्यामेव प्रदेशे तपरकरणे वृत्त्यन्तर उपसंख्यानम् । विधिपक्षे प्रत्याहारप्रदेशयोर्वृत्तिभेदेऽपीति विशेष इत्याहुः । भाष्ये वृत्तिषु ध्वनय एव भिद्यन्ते वर्णास्तत्काला एवेति किं पुनरिति प्रश्नः । वर्णव्यतिरिक्तध्वन्यभावाद्वर्णा एव भिन्नकाला इत्यभिमानिनः कालभेदादित्युत्तरम् । **त्रिभागाधिकाः**; तृतीयभागाधिकाः । तदुपपादयति—**द्रुतमिति** । **नाडिकायां**; वर्णोत्पत्तिहेतुवायुपूरितायां । **पलानि**; सूक्ष्मबिन्दवः । आगमगम्योऽयमर्थः । वार्तिके **अवस्थिताः**; एकरूपेणेत्यादिः । **उपचायापचयौ**; वृद्धिह्रासौ । उच्चारणकृतौ न वास्तवावित्यर्थः । दृष्टान्ते रथादिगन्तृभेदाद्गतिभेदः, दार्ष्टान्तिके पदैक्येऽपि वृत्तिषु कालभेद इति वैषम्यमाशङ्क्य गन्त्रैक्येऽपि कारणान्तराद्गतिभेदवदिहापि तत एव कालभेद इति साम्यमित्याह—**यथेति** । **तद्भेदे**; प्रयत्नभेदे । **वृत्तिभेदाद्**; उच्चारणभेदात् । **भिन्नकालाः** । चिराचिरबुद्ध्युपयोगि वृद्धिह्रासयुक्ताः । **व्यक्तिस्फोट इति** । अकारादिव्यक्तीनामर्थप्रतीतिजनकस्फोटव्यञ्जकत्वात् स्फोटत्वमिति भावः । **अत्र**; तपरसूत्रे अतो ऐसित्यादौ चेत्यर्थः । जातिस्फोटविवक्षायां तस्य ह्रस्वादिष्वेकत्वेन तपरसूत्रं प्रदेशेषु तपरकरणं च व्यर्थं स्यादिति भावः । वर्णस्य स्फोटशब्देनाभिधानं ध्वनिव्यावृत्तये । **नित्य इति** । तथा च ध्वनिरूपोपाधिकृत एव तत्रोपचयापचयप्रत्यय इति भावः । नन्वर्थप्रत्ययहेतुस्फोटसद्भावे तदभिव्यञ्जकवर्णे स्फोटव्यवहारः; स एव कुत; अत आह—**एतच्चेति** । अर्थप्रतीतिहेतुस्फोटसत्त्वमित्यर्थ । ननु ध्वनिर्नाम वर्णानुपलब्धावप्युपलभ्यमानो वायुधर्मः, आकाशगुणो वा । स कथं वर्णगुणः; अत आह—**शब्दस्येति** । वर्णोपलब्धिप्रतिबन्धकस्तिमितवाय्वपसरणद्वारा वर्णोपलब्धिहेतुत्वं व्यञ्जकत्वमिति केचित् । अन्वयव्यतिरेकाभ्यां वर्णोपलब्धौ साक्षादेव हेतुत्वं व्यञ्जकत्वम् । मध्ये प्रतिबन्धकतदपगमयोः कल्पने मानाभावादित्यन्ये । अकारप्रतीतिभेदेऽपि न तद्विषयभेद इति सदृष्टान्तमाह—**तत्रेति** । **वृत्तिभेदेऽपि**; व्यञ्जकध्वनिभेदेऽपि । **ह्रस्वेति** । तमेवायं विलम्बितमुच्चारितवानस्माद्द्रुतमुच्चारितमितिवदत्र व्यक्तिप्रत्यभिज्ञानाभावादिति भावः । ननु भेर्याघातो भेरीसंयोगविशेषः; स कथं गच्छेद्; अत आह—**भेरीमिति** । कर्मण्यण् । दण्डादिना भेरीताडनेन ध्वनिमुत्पादयन्पुरुषो भेर्याघातोऽत्र विवक्षित इति यावत् । भाष्ये **भेरीमाहत्य**; ताडयित्वा । भाष्ये **कश्चित्**; चतुष्टयस्यापि तं शब्दमुपलभमानः पुरुष इत्याशयः । ननु दृष्टान्ते उपलभ्यमानस्य ध्वनेरेव भेदः, वर्णे तूपलब्धि-

भेद एव नोपलभ्यमानभेद इति दृष्टान्तवैषम्यम्; अत आह—**उपलब्धीति**। **सामान्ये**; साम्ये। तदेवाह—**यथेति**। ननु भेर्याघातजन्यध्वनिव्यङ्ग्यवर्णरूपस्फोटाभावेन स्फोटस्तावानेवेत्ययुक्तम्; अत आह—**दार्ष्टान्तिकेति**। भाष्ये **वृत्तिः**; द्रुतादिः। भाष्ये **ध्वनिः स्फोटश्च**; स्त इति शेषः। शब्दानामित्यस्य पूर्वान्वयभ्रमनिरासायोत्तरान्वयं वदन्व्याचष्टे—**शब्दानामिति**। केषांचिदिति वक्तृपरमभिप्रेत्याह—**व्यक्तानामिति**। व्यक्तवाचामित्यर्थः। **अव्यक्तानाम्**। अव्यक्तवाचाम्। भाष्ये महांश्चेत्यन्तेन ध्वनिकृतो वृत्तिरित्युक्तम्। लक्ष्यत इत्यनुषङ्गेण केषाञ्चिदुभयं लक्ष्यत इत्युक्तम्। तस्योभयं प्रामाणिकमिति तत्स्वभावत इत्यनेनोक्तं प्रदीपे त्वेतदेव विवृतमिति मन्तव्यम्।

सू.—आदिरन्त्येन सहेता ॥ १। १। ७० ॥

**॥ वा ॥ आदिरन्त्येन सहेतेत्यसंप्रत्ययः संज्ञिनोऽनिर्देशात् ॥**

**भा :—आदिरन्त्येन सहेतेति असंप्रत्ययः। किं कारणम्? संज्ञिनोऽनिर्देशात्। न हि संज्ञिनो निर्दिश्यन्ते।**

**॥ वा ॥ सिद्धं त्वादिरिता सह तन्मध्यस्येति वचनात् ॥**

**भा :—सिद्धमेतत्। कथम्? आदिरन्त्येन सहेता गृह्यमाणः स्वस्य च रूपस्य ग्राहकस्तन्मध्यानां चेति वक्तव्यम्।**

**॥ वा ॥ संबन्धिशब्दैर्वा तुल्यम् ॥**

**भा :—सम्बन्धिशब्दैर्वा तुल्यमेतत्। तद्यथा—संबन्धिशब्दाः—मातरि वर्तितव्यम् पितरि शुश्रूषितव्यमिति। न चोच्यते—स्वस्यां मातरि, स्वस्मिन् पितरीति। संबन्धाच्च गम्यते—या यस्य माता, यो यस्य पितेति। एवमिहाप्यादिरन्त्य इति संबन्धिशब्दावेतौ। तत्र संबन्धादेतद्गन्तव्यम्—यं प्रति य आदिरन्त्य इति च भवति, तस्य ग्रहणं भवति, स्वस्य च रूपस्येति ॥ आदिरन्त्येन सहेता ॥**

प्र :—आदिरन्त्येन । **असम्प्रत्यय इति** । अप्रतिपत्तिरित्यर्थः । **सम्बन्धिशब्दैर्वेति** । संज्ञयैवाक्षिप्तः संज्ञीत्यर्थः । आद्यन्तौ च मध्यापेक्षाविति मध्यमानामेव संज्ञित्वम् । स्वं रूपमित्यनुवर्तनात्स्वस्य रूपस्य च । सहग्रहणादाद्यन्त्यौ समुदितौ संज्ञेतीको यणचीति समुदायादेव विभक्त्युत्पत्तिर्नादिमात्रात् । स्वं रूपं त्वादेरेव गृह्यते नान्त्यस्य, तस्याप्राधान्यादिति दध्यत्रेति केवल एव यकार आदेशः प्रवर्तते न तु णकारसहितः ॥ ७१ ॥

उ :—आदिरन्त्येन । असम्प्रत्ययोऽविश्वासः असम्प्रतिपत्तिर्वा द्वयमपि प्रकृत आह—**अप्रतिपत्तिरिति** । न्यायसिद्धेऽर्थे वचनं व्यर्थमिति पूर्वसमाधाने अस्वरससूचनाय वार्तिके वाशब्दः । संज्ञिसामान्यस्य वा अप्रतिपत्तिस्तद्विशेषस्य वा । नाद्य इत्याह—**संज्ञयेति** । संज्ञाधिकार इता सहित आदिरणादिसंज्ञेति प्रतीतौ संज्ञिमात्रमाक्षेपादेव लभ्यमित्यर्थः । द्वितीयं निराह—**आद्यन्ताविति** । यद्यपि केवल आदिशब्दः परमात्रापेक्षोऽन्त्यशब्दश्च पूर्वमात्रापेक्षस्तथापि मिलितौ मध्यमापेक्षाविति सूचयितुं द्वन्द्वनिर्देशः । एवकारेण संज्ञ्यन्तरनिरासः । तर्हि स्वस्य संज्ञित्वं कथम् ; अत आह—**स्वमिति** । नन्वादेरसंज्ञासत्त्वेन तत एव विभक्त्युत्पत्तिप्रसङ्गः ; अत आह—**सहेति** । ननु स्वमित्यनुवृत्त्येतोऽपि संज्ञित्वं स्याद् ; अत आह—**स्वं रूपन्त्विति** । **तस्येति ;** इता सहेत्यप्राधान्यद्योतकतृतीयानिर्देशादित्यर्थः । अन्त्यस्य संज्ञित्वाभावे प्रयोजनमाह—**दधीति** । इक इति स्थानिनिर्देशात्ककारस्य संज्ञात्वेऽपि दधीत्यत्र तदभावेन तस्य यणोऽप्रसङ्गात्केवलयकार इत्युक्तं अन्त्यस्य संज्ञित्वेऽणीत्संज्ञालोपयोगावश्यकत्वात्संज्ञित्वं निष्प्रयोजनमित्यत्र तात्पर्यम् ।

## सू.—येन विधिस्तदन्तस्य ॥ १।१।७१ ॥

**भा :—इह कस्मान्न भवति—"इको यणचि दध्यत्र मध्वत्र ? अस्तु । अलोऽन्त्यस्य विधयो भवन्तीत्यन्त्यस्य भविष्यति । नैवं शक्यम् । ये अनेकाल आदेशास्तेषु दोषः स्याद्—"एचोऽयवायावः" इति । नैष दोषः । यथैव प्रकृतितस्तदन्तविधिर्भवति एवमादेशतोऽपि भविष्यति । तत्रैजन्तस्याद्यन्ता**

**आदेशा भविष्यन्ति। यदि चैवं क्वचिद्द्वैरूप्यं तत्र दोषः स्याद्— ब्रह्मेन्द्रः ब्रह्मोदकम्। अपि चान्तरङ्गबहिरङ्गे न प्रकल्पेयाताम्। तत्र को दोषः? स्योनः स्योना। अन्तरङ्गलक्षणस्य यणादेशस्य बहिरङ्गलक्षणो गुणो बाधकः प्रसज्येत। ऊनशब्दमाश्रित्य यणादेशो, नशब्दमाश्रित्य गुणः। अल्विधिश्च न प्रकल्पेत— द्यौः पन्थाः स इति। तस्मात् "प्रकृते तदन्तविधिः" इति वक्तव्यम्। न वक्तव्यम्। येनेति करण एषा तृतीया। अन्येन चान्यस्य विधिर्भवति। तद्यथा—देवदत्तस्य समाशं शरा वै रोदनेन च यज्ञदत्तः प्रतिविधत्ते। तथा—संग्रामं हस्त्यश्वरथपदातिभिः। एवमिहाप्यचा धातोर्यतं विधत्ते। अकारेण प्रातिपदिकस्य इञं विधत्ते।**

प्र:—येन। **इह कस्मादिति।** शब्दानुशासनप्रस्तावात् शब्दरूपमिका विशेष्यत इत्यस्ति तदन्तस्य प्रसङ्गः। **येऽनेकाल इति।** ततश्च चयनजयनादिष्वयनमिति प्राप्नोति। प्रकरणादिवशाच्चाक्षादिष्विवार्थविशेषावगतिः स्यात्। निर्दिश्यमानस्यादेशा इत्यनाश्रितं परिहारान्तरविवक्षया। **यदि चैवमिति।** आद्गुण इत्यादौ अत्र ह्यादि यकारान्तो गृह्यते अचीति चाजादिस्तेन खट्वेन्द्र इत्यादाववर्णान्तस्य समुदायस्याजादेश्च गुणप्रसङ्गाद्द्वैरूप्यप्रसङ्गः। षष्ठ्यनिर्देशाच्च निर्दिश्यमानस्येत्यपि नास्ति। **स्योन इति।** सिवेर्बाहुलकादौणादिके नप्रत्यये गुणो वलोप ऊडिति कार्यत्रयप्रसङ्गः। तत्रापवादत्वादूठा वलोपो बाध्यते गुणस्त्वन्तरङ्गत्वाद्बाध्यते। गुणो ह्यङ्गसम्बन्धिनीमिग्लक्षणां लघ्वीमुपधामार्धधातुकं चाश्रयति। ऊठ् तु वकारान्तमङ्गमनुनासिकादिं च प्रत्ययमित्यल्पापेक्षत्वादन्तरङ्गः। तत्र कृते गुणश्च प्राप्नोति यणादेशश्च। तत्र वर्णमात्रापेक्षत्वाद्यणादेशोऽन्तरङ्गः प्रवर्तते नानाश्रयत्वाद्वार्णादाङ्गं बलीय इत्येतन्नास्ति। यत्रैकाश्रये वार्णाङ्गे यथाकार इति घञाश्रये यणवृद्धो तत्रैवास्य प्रवृत्तिः। यदि च इको यणचीत्यत्र तदन्ततदादिविधी स्यातां तदा यणादेशस्यान्तरङ्गत्वाभावात् परत्वाद्गुणादेशः स्यात्। **अन्तरङ्गलक्षणस्येति।** असति तदन्ततदादिविधित्वे योऽन्तरङ्गस्तस्येत्यर्थः। एवं बहिरङ्गलक्षणो गुण इति व्याख्येयम्। **अल्विधिश्चेति।** अलोऽन्त्यस्येत्यत्रापि तदन्तविधि-

सद्भावादन्त्यालन्त्यस्य समुदायस्य कार्येण भाव्यमिति द्यौः पन्था इत्यत्रालोऽन्त्यस्यादेशो न प्राप्नोतीत्यर्थः। तत्र कदाचित्पथिन्नित्यस्याकारः स्यात्। कदाचित् पथिन्नित्यस्य। अनेकाल्शित्सर्वस्येत्येतत्तु सर्वस्यैवेति नियमार्थं स्यात्। **प्रकृत इति;** प्रस्तुते। प्रस्तावश्च क्वचित्साक्षात्तदन्तविधिभाजो निर्देशात्। यथेदूदेद्‌द्विवचनं प्रगृह्यमित्यत्र द्विवचनस्य। क्वचिदधिकाराद् यथैरजित्यत्र धातोः। क्वचिदाक्षेपाद् यथेको झलित्यत्र सना धातोः। **करण एवेति।** विधिशब्दः कर्मसाधनो येन करणेन कार्यं विधीयते स शब्दस्तदन्तस्य संज्ञेत्यर्थः। तेन विशेषणेन विशेष्यस्य तदन्तविधिर्भवति नान्यथा। इको यणचीत्यादौ च विशेष्यस्यासन्निधानात्तदन्तविधेरभावः। **हस्त्यश्वरथपदाति-भिरिति।** बहुप्रकृतित्वाभावादेकवद्भावाभावः।

उः—अत्र येनेति करणे तृतीया न कर्तरि। कर्तृकर्मणोरिति षष्ठीप्रसङ्गात्। विधिशब्दः कर्मसाधन कार्यपरः। भावसाधनत्वे कर्मानुपादानेन तत्साकाङ्क्षत्वापत्तेः। करणजन्यं च कार्यं करणादन्यत्रैवेति लोकसिद्धेस्तन्निरासाय तदन्तस्येति बहुव्रीहिः। तथा च विशेषणविशेष्यकार्यत्रयसन्निधौ विशेषणं स्वान्त्यावयवकविशेष्यस्य संज्ञेति स्थिते इको यणचीत्यादौ विशेष्याभावात्कथमत्रास्य प्रवृत्तिरत आह—**शब्देति। शब्दरूपमिति।** शब्दस्यानुशास्यत्वेनार्थतः प्राधान्याच्छब्दानुशासनशब्द एव शब्दरूपविशेष्यसन्निधापक इति भावः। **चयनेति।** अनेकाल्त्वेन धातोः सर्वस्यायादेशप्रसङ्गादित्यर्थः। ननु अर्थप्रतीत्युपयुक्तशब्दानामनुशासनमिदम्। अयनमित्युक्ते नयनजयनान्यतरसन्देहात्स-र्वादेशो न भविष्यति; अत आह—**प्रकरणेति। निर्दिश्यमानस्येति;** एच एवादेशो भविष्यति न तदन्तस्येति नातिप्रसङ्ग इति भावः। क्वचिच्छब्दार्थमाह—**आदिति।** दोषं विविनक्ति—**अत्रेति। अकारान्तः;** अवर्णान्तः। **अजादिरितिः,** येन विधिरित्येतत्तुल्येन यस्मिन्विधिरित्यनेनेत्यर्थः। **षष्ठ्येति।** यद्यपि पूर्वपरयोरिति षष्ठ्यस्ति तथापि सा तदादितदन्तसाधारणेति भाव। स्योन इत्यादौ दोषं विवृणोति—**सिवेरिति। गुणः,** पुगन्तेत्यनेन। **लोपः,** लोपो व्यो-रित्यनेन। **ऊठ्;** च्छ्वोरूडित्यनेन। ऊठः पूर्वं परत्वाद्गुणे सति रूपासिद्धिमाशङ्क्यान्तरङ्गत्वा-द्गुणात्पूर्वं ऊठा भाव्यमित्याह **गुणस्त्विति। बाध्यते;** ऊठेत्यनुषङ्गः। ऊठ् प्रवर्तेत इति यावत्। पञ्चकाश्रयाद्गुणाच्चतुष्टयाश्रयस्योठोऽन्तरङ्गत्वमित्याह। **गुणो हीति।**

एवं गुणात्पूर्वमूठि सति यणा लघूपधगुणो बाध्यत इत्याह—**तत्रेति**। इकार इत्यर्थः। **नानेति,** अचि यणादेशः। प्रत्यये गुणः। एवं रूपसिद्धिमुक्त्वा तदादितदन्तविधौ तदसिद्धिमाह—**यदि चेति**। **अन्तरङ्गत्वाभावादिति**। ऊठादिशब्दसापेक्षत्वादिति भावः। यणोऽन्तरङ्गत्वाभावादित्युक्तत्वादन्तरङ्गलक्षणस्येति भाष्यमयुक्तम्, अत आह—**असतीति**। **अल्विधिः;** अन्त्यस्यालः स्थानिवत्वाभावः। तमुपपादयति **अलोऽन्त्यस्येति**। ननु समुदायस्य स्थानित्वेऽलोऽन्त्यस्येति सूत्रवैयर्थ्यम्, अत आह—**तत्रेति**। नन्वेवमेकालादेशवदनेकालादेशोऽपि सर्वस्य सिद्ध इति किमनेकाल्त्यनेन; अत आह। **अनेकालिति**। **सर्वस्य;** षष्ठीनिर्दिष्टस्य सर्वस्य। ननु पूर्वनिर्दिष्टमनुवर्तमानं प्रकृतं चेद्दीदूदेदित्यत्र तदन्तविधिर्न स्याद्, अत आह—**प्रस्तुत इति**। विशेषणबुद्धौ सन्निहित इत्यर्थः। न चात्रैवेत्याह—**प्रस्तावश्चेति**। बुद्धौ सन्निधिश्चेत्यर्थः। **तदन्तविधिभाजः** विशेष्यस्य। इह शास्त्रे प्रायेण शब्दस्यैव करणत्वात्संज्ञाधिकाराद्वा **शब्द** इत्युक्तम्। अन्यपदार्थोपस्थितिं विना संज्ञासंप्रत्ययाभावाद्विशेष्यस्य सन्निधिरपेक्षणीय इत्याह—**तेनेति**। तदन्तसंज्ञात्वेनेत्यर्थः। **विशेषणेन** करणेन **विशेष्यस्य** कार्यविधौ **तदन्तविधिः**। विशेषणेन सह विशेष्यस्याभिधानाय तदन्तविधिस्तदन्तशब्दोच्चारणम्। विशेषणसहितविशेष्यस्याभिधानाय विशेषणस्य तदन्तसंज्ञात्वेन विधिरिति वार्थः। **नान्यथा;** विशेष्यस्य सन्निधिं विना न संज्ञासम्प्रत्यय इत्यर्थः। उक्तातिप्रसङ्गं निराह—**इक इति**। असन्निधानात्। उक्तत्रिप्रकारसान्निध्याभावात्। सेनाङ्गत्वेनैकवद्भावशंकां निराह—**बह्विति**। बह्वर्थवाचिपूर्वोत्तरपदावयवकत्वादित्यर्थः।

**॥ वा ॥ येन विधिस्तदन्तस्येति चेद् ग्रहणोपाधीनां तदन्तोपाधिप्रसङ्गः ॥**

**भा :—येन विधिस्तदन्तस्येति चेद् ग्रहणोपाधीनां तदन्तोपाधिताप्रसङ्गः। ये ग्रहणोपाधयस्ते तदन्तोपाधयः स्युः। तत्र को दोषः? "उतश्च प्रत्ययादसंयोगपूर्वाद्" इति असंयोगपूर्वग्रहणमुकारान्तविशेषणं स्यात्। तत्र को दोषः? असंयोगपूर्वग्रहणेन इहैव पर्युदासः स्यात्—अक्ष्णुहि, तक्ष्णुहीति। इह न स्याद्—**

**आप्नुहि शक्नुहीति। तथा "उदोष्ठ्यपूर्वस्य" इति ओष्ठ्यपूर्वग्रहणं ऋकारान्तस्य विशेषणं स्यात्। तत्र को दोषः? ओष्ठ्यपूर्वग्रहणेन इह प्रसज्येत—संकीर्णम् संगीर्णमिति। इह च न स्याद्—निपूर्ताः पिण्डा इति।**

**॥ वा ॥ सिद्धं तु विशेषणविशेष्ययोर्यथेष्टत्वात् ॥**

**भा :—सिद्धमेतत्। कथम्? यथेष्टं विशेषणविशेष्ययोर्योगो भवति। यावता यथेष्टम्। इह तावद्—"उतश्च प्रत्ययादसंयोगपूर्वाद्" इति नासंयोगपूर्वग्रहणेन उकारान्तं विशेष्यते। किं तर्हि? उकार एव विशेष्यते—उकारो यः संयोगपूर्वस्तदन्तात्प्रत्ययादिति। तथा—"उदोष्ठ्यपूर्वस्य" इति। नौष्ठ्यपूर्वग्रहणेन ऋकारान्तं विशेष्यते। किं तर्हि? ऋकार एव विशेष्यते—ऋकारो य ओष्ठ्यपूर्वस्तदन्तस्य धातोरिति।**

**प्र :—ग्रहणोपाधीनामिति।** गृह्यत उच्चार्यत इति ग्रहणम्। तस्य ये उपाधयो गृह्यन्ते ते तदन्तस्य संज्ञिनः प्राप्नुवन्ति। संज्ञा हि संज्ञिप्रत्यायने विशेषणभावमापन्ना कथमात्मनो विशेषणसंबन्धमनुभवेत्। **संकीर्णमिति।** ओष्ठ्यः पूर्वो यस्मादृकारान्ताद्धातोः तस्योत्वमित्येव सूत्रार्थः स्यात्। तत्र च सूत्रार्थे धात्ववयवत्वमोष्ठ्यस्याश्रयितुं न युज्यते। अवयवित्वावयवित्वयोरेकस्य विरोधात्। **सिद्धं त्विति;** वृद्ध्यादिसंज्ञा गुणप्रधानभा[1]वमनपेक्ष्यैव प्रदेशेषु संज्ञिनं प्रत्याययन्ति। इयं तु संज्ञा गुणप्रधानभावापेक्षत्वात्कार्यकाला। तत्रोतश्च प्रत्ययादित्यादौ विशेषणसम्बन्धमनुभूय विशेष्येण सम्बन्धमुकारादिरनुभवतीति यथोक्तदोषाभावः।

उ :—ग्रहणशब्दस्य कर्मव्युत्पत्त्योत इत्यादिप्रतिपादकत्वमाह—**उच्चार्यत इति। उपाधयः;** विशेषणानि। वार्तिके **उपाधिपदं** भावप्रधानम्। **तदन्तस्य;** गृह्यमाणान्तस्य। **संज्ञिन इति** षष्ठी। प्राप्नुवन्ति त इत्यन्वयः। ननूत इत्यादेरसंयोगपूर्वस्येत्येतद्विशिष्टस्यैव तदन्तसंज्ञात्वं किं न स्याद्; अत आह—**संज्ञा हीति। आत्मनः;** स्वस्याः। विशेषणानां प्रधानान्वयस्यौत्सर्गिक-

१. मु. पु. भावानपेक्षा एव.

त्वादिति भावः। ननु मकारस्य धात्ववयवत्वाभावात्कथं तत्पूर्वस्य ऋदन्तस्येत्वप्रसङ्गः; अत आह—**तत्र चेति**। **अवधित्वेति;** यस्मादिति ऋदन्तधातुरवधिः। ओष्ठ्योऽवधिमान्। अवध्यवधिमद्भावस्यैकत्रासम्भवः। **अवयवित्वम्;** ओष्ठ्यावयवनिरूपितावयवित्वम्। **एकस्य;** धातोः। न चौष्ठ्यः प्रथमावयवो यस्येति बहुव्रीहिणौष्ठ्यस्यावयवत्वलाभ इति वाच्यम्। तथा सति सुस्मूर्षतीत्यादौ उत्वं न स्यात् सकारस्य प्रथमत्वेन मकारस्यातथात्वादिति भावः। भाष्ये **पूर्ता इति;** अत्र न ध्याख्येति निष्ठानत्वाभावः। **अनपेक्ष्यैवेति**। अतस्स्वदेश एव तत्र संज्ञाविधिरिति भावः। संज्ञा हीति यदुक्तं तत्राह—**इयमिति**। विशिष्टस्यैव संज्ञात्वम् न त्वसंज्ञाया विशेषणयोग इत्याह—तत्रेति।

॥ **वा** ॥ **समासप्रत्ययविधौ प्रतिषेधः** ॥

**भा:—समासविधौ प्रत्ययविधौ च प्रतिषेधो वक्तव्यः। समासविधौ तावत्—द्वितीया श्रितादिभिः समस्यते—कष्टश्रितः, नरकश्रितः। कष्टं परमश्रित इत्यत्र मा भूत्। प्रत्ययविधौ—नडस्यापत्यं नाडायनः। इह न भवति—सूत्रनडस्यापत्यं सौत्रनाडिः। किमविशेषेण? नेत्याह।**

॥ **वा** ॥ **उगिद्वर्णग्रहणवर्जम्** ॥

**भा:—उगिद्ग्रहणं वर्णग्रहणं च वर्जयित्वा। उगिद्ग्रहणं—"उगितश्च" भवती अतिभवती, महती अतिमहती। वर्णग्रहणम्—"अत इञ्" दाक्षिः प्लाक्षिः। अस्ति चेदानीं कश्चित्केवलोकारः प्रातिपदिकम् यदर्थो विधिः स्यात् अस्तीत्याह—अततेर्डः, अः तस्यापत्यम् "अत इञ्" इः।**

प्र:—**समासेति**। श्रितादिभिः सुबन्तस्य विशेषणे सति प्राप्तस्तदन्तविधिः प्रतिषिध्यते। प्रतिषेधद्वारेण चैतत् प्रदर्श्यते—श्रितादयः प्राधान्येनाश्रयितव्याः। तद्विशेषणत्वेन च सुपेति। **कष्टं परमश्रित इति**। श्रितान्तमेतत् सुबन्तं न भवतीति संबुद्ध्यन्तमुदाहर्तव्यम्। **परमश्रितेति**। एतत् प्रत्ययलक्षणेन सुबन्तं भवति

श्रितान्तं च श्रूयते। **सौत्रनाडिरिति।** अनुशतिकादित्वादुभयपदवृद्धिः। नडादीनि प्रातिपदिकेन विशेष्यन्त इति तदन्तविध्यभावः। **अतिमहतीति।** महान्तमतिक्रान्तेति प्रादिसमासः। तत्र यद्यपि गौरादिषु बृहद् महदिति पठ्येते तथापि अनुपसर्जनाधिकारात् तत्र ङीष् न भवतीति उगिल्लक्षणो ङीप् प्राप्यते। अन्ये तु गौरादिष्वेतयोः प्रमोदपाठमाहुः। तथा चोक्तम् नद्यजाद्युदात्तत्वे बृहन्महतोरुपसंख्यानमिति। ङीषि सति उदात्तस्य सिद्धत्वात् किं [1] उदात्तविधानेन। **अत इञिति।** तदन्तविधावसति ञित्करणमुत्तरार्थं **स्यात्।**

उ :—विशेष्यसन्निधिमाह—**सुबन्तस्येति।** सुपेत्यनेनोपस्थितस्येत्यर्थः। प्रतिषेधशब्देन व्याख्यानमभिप्रेतमित्याह—**प्रतिषेधद्वारेणेति।** तथा च सुबन्तैः श्रितादिभिः द्वितीयान्तं समस्यत इत्यर्थलाभ इत्यर्थः। भाष्योदाहरणे विसर्गान्तस्य श्रितान्तत्वाभावात्सम्बुद्ध्यन्तमुदाहर्तव्यमित्याह — **श्रितान्तमिति। तदन्तविध्यभाव इति;** प्रातिपदिकान्तस्य नडादेरसम्भवादिति भावः। ननूगितश्चेत्यत्र तदन्तविध्यभावेऽपि गौरादिपाठेन ङीष् भविष्यति। अनुपसर्जनादित्यनेनात्र प्रकरणे तदन्तविधिज्ञापनादिति महतीति नोदाहरणम्; अत आह—**तत्रेति।** प्रामादिकत्वे हेतुः—**तथा चेति।** 'शतुरनुमो नद्यजादी'। अनुम् यश्शता तदन्तादन्तोदात्तात्परा नदी अजाद्यसर्वनामस्थानविभक्तिश्चोदात्ता। तुदती, तुदता। **उदात्त;** नद्या इत्यादिः। ननु प्रकृत्याद्युदात्तार्थात् ञित्करणात्तदन्तविधिस्स्यात् नेत्याह ञित्करणमिति। बाहविरित्यादौ स्वरादिसिद्धय इत्यर्थः।

**॥ वा ॥ अकज्अम्वतः सर्वनामाव्ययधातुविधावुपसंख्यानम् ॥**

**भा :—अकज्वतः सर्वनामाव्ययविधौ अम्वतो धातुविधावुपसंख्यानं कर्तव्यम्। अकज्वतः सर्वनामविधौ सर्वके, विश्वके। अव्ययविधौ—उच्चकैः नीचकैः। अम्वतः—भिनत्ति छिनत्ति। किं पुनः कारणं न सिध्यति? इह—तस्य वा ग्रहणं भवति, तदन्तस्य वा न चेदं तद्, नापि तदन्तम्।**

१. मु. पु. नद्या उदात.

॥ वा ॥ सिद्धं तु तदन्तान्तवचनात् ॥

भा :--सिद्धमेतत्। कथम्? तदन्तान्तवचनात्। तदन्तान्तस्येति वक्तव्यम्। किमिदं तदान्तान्तस्येति? तस्यान्तस्तदन्तस्तदन्तोऽन्तो यस्य तदिदं तदन्तान्तं तदन्तान्तस्येति। स तर्हि तथा निर्देशः कर्तव्यः। न कर्तव्यः। उत्तरपदलोपोऽत्र द्रष्टव्यः। तद्यथा--उष्ट्रमुखमिव मुखमस्य उष्ट्रमुखः खरमुखः। एवमिहापि तदन्तः अन्तो यस्य सोऽयं तदन्तस्तदन्तस्येति।

॥ वा ॥ तदेकदेशविज्ञानाद्वा सिद्धम् ॥

भा :—तदेकदेशविज्ञानाद्वा पुनः सिद्धमेतत्। तदेकदेशभूतस्तद्ग्रहणेन गृह्यते। तद्यथा—गङ्गा यमुना देवदत्तेति। अनेका नदी गङ्गां यमुनां च प्रविष्टा गङ्गायमुनाग्रहणेन गृह्यते। तथा देवदत्तास्थो गर्भो देवदत्ताग्रहणेन गृह्यते। विषम उपन्यासः। इह केचिच्छब्दा अव्यक्तपरिमाणानामर्थानां वाचका भवन्ति—य एते संख्याशब्दाः परिमाणशब्दाश्च। पञ्च सप्तेति एकेनाप्यपाये न भवन्ति। द्रोणः खारी आढकमिति नैवाधिके भवन्ति, न न्यूने। केचिद् यावदेव तद्भवति तावदेवाहुः—य एते जातिशब्दा गुणशब्दाश्च। तैलं घृतमिति खार्यामपि भवन्ति द्रोणेऽपि। शुक्लो नीलः कृष्ण इति हिमवत्यपि भवति वटकणिकामात्रेऽपि द्रव्ये। इमाश्चापि संज्ञा अव्यक्तपरिमाणानामर्थानां क्रियन्ते ताः केनाधिकस्य स्युः। एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति। तदेकदेशभूतं तद्ग्रहणेन गृह्यत इति। यदयं "नेदमदसोरकोः" इति सककारयोरिदमदसोः प्रतिषेधं शास्ति। कथं कृत्वा ज्ञापकम्? इदमदसोः कार्यमुच्यमानं कः प्रसङ्गो यत्सककारयोः स्यात्। पश्यति त्वाचार्यः—'तदेकदेशभूतं तद्ग्रहणेन गृह्यते इति। ततः सककारयोः प्रतिषेधं शास्ति।

प्र :—**सर्वक** इति । अकचि कृते शीभावो न स्यात्, **उच्चकैरिति** । तथैवाकचि कृते लुम स्यात् । उच्चकैरधीयानेत्यव्ययानां प्रतिषेध इति पराङ्गवद्भावनिषेधो न स्यात् । उच्चकैर्मुखमिति नाव्ययदिकशब्देति मुखस्वरनिषेधो न स्यात् । भिनत्तीति धातोरन्त उदात्तो भवतीति उदात्तत्वं न स्यात् । प्रत्ययस्वरेण तु तत्सिध्यतीत्यभिनोऽत्रेति दश्चेति धातोर्विधीयमानं रुत्वं न स्यादिति वक्तव्यम् । अन्ये त्वाहुः । भिनत्तीत्यत्रागमानुदात्तत्वेन प्रत्ययस्वरस्य बाधितत्वात् एति शिष्टः स्वरो धातुस्वर एष्टव्यः । **सिद्धं त्विति ।** सर्वशब्दस्य योऽन्तोऽकारः सोऽतः सर्वकशब्दस्य । एवमन्यत्रापि योज्यम् । तत्र सर्वनामानीत्यन्वर्थसंज्ञाक्षिप्तः संज्ञी सर्वादिभिर्विशेष्यते । अव्ययसंज्ञाक्षिप्तः स्वरादिभिः । धातुसंज्ञाभाजो वाप्रकारा भूवादिभिरिति भावः । **उत्तरपदलोप इति ।** वाचनिकोऽत्र लोपो न तु सामर्थ्याद् गम्यमानार्थस्य निवृत्तिरित्याहुः । अन्ये तु वर्णयन्ति यथावयवदर्शनाद् गौरित्यवयविविषया बुद्धिरुदेति तथेहापि सर्वशब्दस्य योऽवयवोऽन्त्यस्तत्रैव सर्वशब्दबुद्ध्युत्पत्त्या तदवयवान्तः सर्वशब्दान्त इति व्यपदिश्यते । अथ वाऽवयवे समुदायरूपारोपात् तदन्तता भविष्यति । गौणेनापि ह्यर्थेन शास्त्रव्यवहारो दृश्यते । छत्रपार्श्वायःशूलदण्डाजिनशीतोष्णह्रस्वादिषु । **तदेकदेशविज्ञानादिति ।** मध्यपातिनोऽकजादयस्तदेकदेशा इति [1]तद्बुद्धिं न विघ्नन्ति । **अक्तपरिमाणानामिति ।** परिच्छिन्नपरिमाणानामित्यर्थः । **यावदेवेति ।** अल्पमधिकं वेत्यर्थः । **इमाश्चापीति ।** सर्वाद्युपादानेन संज्ञाः क्रियमाणाः कथं सर्वकादीनां भवन्ति । नित्या हि शब्दाः विकारोपजनरहिता इति सर्वशब्दः सर्वकशब्द इति न वक्तुं शक्यत इत्यर्थः । **एवं तर्हीति ।** यद्यपि नित्याः शब्दास्तथापि प्रक्रियायामकजादयो विधीयमाना ज्ञापकाद्व्यतिरेककृत इत्यर्थः ।

उ :—भाष्ये **अकजिति ।** सर्वनामाश्रितकार्यमव्ययसंज्ञाश्रितकार्यं धातुसंज्ञाश्रितकार्यं च भवतीति वक्तव्यमित्यर्थः । अवचने अनुपपद्यमानकार्यमाह—**अकचीति ।** यद्यप्यज्ञातार्थे अकच् तदर्थं च सुबन्तस्येति पूर्वं जस्यर्थनिरपेक्षतयान्तरङ्गश्शीभावः प्रवर्तते । पश्चादकजिति रूपं सिध्यति । तथाप्यकजन्तः अप्रत्यय इति निषेधाभावेन प्रातिपदिकसंज्ञायां सुपो धात्विति पूर्वं जसो लुकि पुनर्जसि शीभावो न सिध्यतीति भावः । **लुगिति ।** एकवचनमुत्सर्ग इति यदा सर्वविभक्तीनामेकवचनोत्पत्तिस्तदा विभक्त्य-

---

१. मु. पु. तत्वबुद्धिं.

न्तरस्य लुङ्न स्यात् सोऽस्तु हल्ङ्यादिलोपेनापि निवृत्तिस्स्यात्। **पराङ्गेति;** तथा च 'आमन्त्रितस्य' इत्याद्युदात्तत्वं स्यात्। 'चित्तस्सप्रकृतेः इत्यन्तोदात्त एवेष्यत इति भावः। 'नाव्ययदिक्छब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः' । एभ्यस्स्वाङ्गवाची मुखं बहुव्रीहावन्तोदात्तं न स्यादिति मुखं स्वाङ्गमिति प्राप्तान्तोदात्तत्वस्य निषेधः। श्नम्सहितस्य धातुत्वे प्रत्ययधातुस्वरयोरविशेषान्नेदमुदाहरणमिति वदन्नुदाहरणान्तरमाह—**प्रत्ययेति।** भाष्योदाहरणमपि समाधत्ते—**अन्ये त्विति। सतीति;** श्नम्वतो धातुसंज्ञायां धातुस्स्वरस्सति शिष्ट इत्यागमानुदात्तत्वबाधक इत्यर्थः। **एवमिति।** उच्चैश्शब्दस्यान्तो विसर्जनीयस्सोऽन्त उच्चैरित्यस्य। छिदोऽन्तो दकारस्सोऽन्तो छिनदित्यस्येत्यर्थः। विशेष्यसन्निधौ येन विधिरित्यस्य प्रवृत्तिस्सर्वादीनीत्यादौ तदभावात्कथमस्य प्रवृत्तिः अत आह—**तत्रेति।** सर्वनामाव्ययधातुसंज्ञास्वित्यर्थः। सर्वाद्यन्तानि सर्वेषा नामानि सर्वनामसंज्ञानीति सूत्रार्थ इति भावः। **अव्ययेति।** अन्वर्थाव्ययसंज्ञाक्षिप्त इत्यर्थः। **धात्विति।** भूश्च वाश्च भूवौ आदी येषाम्। आदिशब्दः प्रत्येकं सम्बध्यते। भ्वादय इत्यत्र व्यवस्थावाची, वादय इत्यत्र प्रकारवाची। तथा च भ्वाद्यन्तान्ता वाप्रकारा धातुसंज्ञा इति सूत्रार्थः। **न त्विति।** सोऽन्तो यस्येत्युक्तावनुपपत्त्यभावादित्यर्थः। अवयवान्तरसन्निधौ प्रत्येकावयवपर्याप्तवृत्तिरवयवीति मते सामर्थ्यलभ्य एवायमर्थ इत्याह—**अन्ये त्विति।** सर्वेष्ववयवेषु व्यासज्यवृत्तिरवयवीति मते त्वाह—**अथवेति। अवयवे;** अकारादौ। **तदन्तता** समुदायान्तता। अतो भिस इत्यादौ मुख्यविशेषणे चरितार्थमिदं सूत्रं गौणे कथं प्रवर्तते; अत आह—**गौणेनापीति।** स्वरितलिङ्गासङ्गेन स्वरितेनाधिकार इत्यस्य प्रवृत्तौ तस्य स्वरितेनाधिकं कार्यं भवतीत्यर्थस्याप्याश्रयणादेतल्लाभ इत्याहुः। तत्रोदाहरणान्याह—**छत्रेति।** च्छलं शीलमस्येत्यर्थे छत्रादिभ्यो णो विधीयते। तत्रातपत्रे मुख्योऽपि गुरुच्छिद्रत्राणवृत्तेर्गौणः छत्रशब्दो गृह्यते। गुरुछिद्रावरणशीलश्छात्र उच्यते। शरीराङ्गविशेषे मुख्यादनृजूपाये गौणात्पार्श्वशब्दात्पार्श्वेनान्विच्छतीति कन्विधीयते, ऋजुनोपायेनान्वेष्टव्यमनृजूपायेन योऽन्विच्छति स पार्श्वकः। अयश्शूलशब्दो अयोमयशूले मुख्यः। दण्डाजिनशब्दस्य गौण्या दम्भे वृत्तिः। ताभ्यां तृतीयान्ताभ्यां अन्विच्छतीत्यर्थे 'अयश्शूलदण्डाजिनाभ्यां ठक्ठञौ' इत्यनेन यथासंख्यमेतौ विधीयेते। अयश्शूलेन तीक्ष्णोपायेनान्विच्छतीत्यायश्शूलिकः। दण्डाजिनेन दम्भेनान्विच्छतीति दाण्डाजिनिको दाम्भिकः। शीतोष्णशब्दौ स्पर्शविशेषे मुख्यौ,

गौण्यां शीतशब्दो मन्दक्रियायामुष्णशब्द आशुक्रियायां च वर्तते। ताभ्यां क्रियाविशेषणाभ्यां द्वितीयान्ताभ्यां कारिण्यर्थे 'शीतोष्णाभ्यां कारिणि' इत्यनेन कन्विधीयते। शीतकोऽलसः। उष्णको दक्षः। ह्रस्वार्धशब्दो ह्रस्वार्धावयवे मुख्यः मात्रार्धे गौणः। 'तस्यादित उदात्तमर्धह्रस्वम्' इत्यत्र मात्रार्धवाचित्वमङ्गीकृत्य स्वरितस्यादितोऽर्धमात्रा उदात्ता उपरितनभागः सर्वोऽप्यनुदात्तः। तेन दीर्घस्वरितस्योपरितनसार्धमात्रो भागोऽनुदात्तः। प्लुतस्वरितस्य तु सार्धद्विमात्र इति सिध्यति। आदिना आधारोऽधिकरणमित्यादिसंग्रहः। यस्याकजादिस्तदेकदेशत्वेनाकजादेर्विज्ञानादिति वार्तिकार्थः। **तद्बुद्धिम्;** सर्वादिबुद्धिम्। परिच्छिन्नेत्यनेनाक्तशब्दार्थ उक्तः। **अल्पमिति।** गङ्गादिशब्दा अपि घृतादिशब्दतुल्या इति भावः। अत्राप्यक्तपरिमाणत्वमाह—**सर्वादीति।** मध्ये प्रविष्टास्तदवयवाः कथमवयविभेदकाः; अत आह—**नित्या इति।** नित्येषु तदेकदेशभूतं न सम्भवतीत्युक्तम्; अत आह—**यद्यपीति। अव्यतिरेकेति।** भेदबुद्धिं न कुर्वन्तीत्यर्थः।

**भा :—कानि पुनरस्य योगस्य प्रयोजनानि।**

**॥ वा ॥ प्रयोजनं सर्वनामाव्ययसंज्ञायाम् ॥**

**भा :—सर्वनामाव्ययसंज्ञायां प्रयोजनम्। सर्वे परमसर्वे। विश्वे परमविश्वे। उच्चैः परमोच्चैः, नीचैः परमनीचैरिति।**

**॥ वा ॥ उपपदविधौ भयाढ्यादिग्रहणम् ॥**

**भा :—उपपदविधौ भयाढ्यादिग्रहणं प्रयोजनम्। भयंकरः। अभयंकरः। आढ्यंकरणं स्वाढ्यंकरणम्।**

**॥ वा ॥ ङीब्विधावुगिद्ग्रहणम् ॥**

**भा :—ङीब्विधावुगिद्ग्रहणं प्रयोजनम्। भवती अतिभवती। महती अतिमहती।**

**॥ वा ॥ प्रतिषेधे स्वस्रादिग्रहणम् ॥**

**भा :—ङीप्प्रतिषेधे स्वस्रादिग्रहणं प्रयोजनम्। स्वसा परमस्वसा। दुहिता परमदुहिता।**

॥ वा ॥ अपरिमाणबिस्तादिग्रहणं च ॥

भा :—अपरिमाणबिस्तादिग्रहणं च ङीप्प्रतिषेधे प्रयोजनम्। "अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि"। द्विबिस्ता, द्विपरमबिस्ता। त्रिबिस्ता, त्रिपरमबिस्ता। द्व्याचिता द्विपरमाचिता।

॥ वा ॥ दिति ॥

भा :—दितिग्रहणं च [ण्यविधौ] प्रयोजनम्। दितेरपत्यं दैत्यः। अदितेरपत्यमादित्यः। "दित्यदित्यादित्य" इत्यदितिग्रहणं न कर्तव्यं भवति।

॥ वा ॥ रोण्या अण् ॥

भा :—रोण्या अण्ग्रहणं च प्रयोजनम्। आजकरौणः। सैंहिकरौणः।

प्र :—**प्रयोजनमिति**। अन्वर्थसंज्ञाक्षिप्तः संज्ञी सर्वादिभिर्विशेष्यते अपूर्वो वा तदन्तविधिरुपसंख्यायते। एवमुत्तरत्र विज्ञेयम्। **उपपदविधाविति**। भयाढ्यादिभिः कर्म विशेष्यते। 'क्षेमप्रियमद्रेण् च' इत्यत्र तु कर्मणा क्षेमादय इति तदन्तविध्यभावः। **प्रतिषेध** इति। विधीयत इति विधिः। सामान्येन गृह्यते इति प्रतिषेधेऽपि तदन्तविधिर्भवति। स्वस्रादिभिः प्रातिपदिकस्य विशेषणात्। **द्विपरमबिस्तेति**। द्विगुना सन्निधापितमुत्तरपदं बिस्तादिभिर्विशेष्यते इति तदन्तविधिः। **दितिग्रहणं चेति**। परमदित्यादिभ्यस्त्वनभिधानात् ण्यो न भवति।

उ :—**अपूर्वो वेति**। यद्यपि सूत्रप्रयोजनप्रश्नस्यापूर्वोपसंख्यानं नोत्तरं तथाप्यपृष्टमपि मच्छिष्याय सौहार्देन वक्तव्यमित्यपूर्वतदन्तविधिप्रयोजनोक्तिर्युक्तेति भावः। भयादौ नापूर्वतदन्तविधिरित्याह—**भयेति**। आढ्यादिवत्क्षेमादीनामपि तदन्तग्रहणशङ्कां वारयति—**क्षेमेति**। ननु सूत्रे विधिग्रहणात्प्रतिषेधस्य च तद्विरोधित्वात्कथं प्रतिषेधः प्रयोजनम्, अत आह—**विधीयत इति**। अज्ञातज्ञापकत्वलक्षणं विधित्वं

प्रतिषेधस्यापीति भावः। भयादिवदत्रापि तदन्तविधिरित्याह—**स्वस्त्रादिभिरिति।** विशेष्यसन्निधिमाह—**द्विगिवत्ति।** दितिशब्दे तदन्तविधावतिप्रसङ्गं निराह—**परमेति।**

**॥ वा ॥ तस्य च ॥**

**भाः—तस्य चेति वक्तव्यम्। रौणः। किं पुनः कारणं न सिध्यति। न तदन्ताच्च तदन्तविधिना सिद्धम्। केवलाच्च व्यपदेशिवद्भावेन? "व्यपदेशिवद्भावोऽप्रातिपदिकेन"। किं पुनः कारणं "व्यपदेशिवद्भावोऽप्रातिपदिकेन"। इह सूत्रान्ताट्ठग्भवति। दशान्ताड्डो भवतीति केवलादुत्पत्तिर्मा भूदिति। नैतदस्ति प्रयोजनम्। सिद्धमत्र तदन्ताच्च तदन्तविधिना केवलाच्च व्यपदेशिवद्भावेन। सोऽयमेवं सिद्धे सति यदन्तग्रहणं करोति तज्ज्ञापयत्याचार्यः—सूत्रान्तादेव दशान्तादेवेति। नात्र तदन्तादुत्पत्तिः प्राप्नोति। इदानीमेव ह्युक्तम्—समासप्रत्ययविधौ प्रतिषेधः इति। सा तर्ह्येषा परिभाषा कर्तव्या। न कर्तव्या। आचार्यप्रवृत्तिर्ज्ञापयति—'व्यपदेशिवद्भावोऽप्रातिपदिकेन" इति। यदयम्—"पूर्वादिनिः" सपूर्वाच्च" इत्याह। नैतदस्ति ज्ञापकम्। अस्ति ह्यन्यदेतस्य वचने प्रयोजनम्। किम्? सपूर्वादिनिं वक्ष्यामीति। यत्तर्हि योगविभागं करोति। इतरथा "पूर्वात्सपूर्वादिनिः" इत्येव ब्रूयात्। किं पुनरयमस्यैव शेषः—तस्य च इति? नेत्याह। यच्चानुक्रान्तं, यच्चानुक्रंस्यते, सर्वस्यैव शेषः—तस्य च इति।**

प्रः—**तस्य चेति।** स्वं रूपमित्यस्यानुवृत्तिं वार्तिककारो नेच्छति। तथा चाद्यन्तवदित्यत्र येन विधिस्तदन्तत्वे इति प्रयोजनमवोचत्। **व्यपदेशिवद्भावोऽप्रातिपदिकेनेति।** ननु रौणीशब्दो न प्रातिपदिकं प्रत्ययान्तत्वात्। नैष दोषः। अप्रातिपदिकेनेत्यत्र वाक्ये प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति वचनात्।

स्त्रीप्रत्ययान्तैरपि व्यपदेशिवद्भावो न भवति । न च लिङ्गविशिष्टपरिभाषा स्वरूपविधिविषयैवेति प्रातिपदिकसूत्रे वक्ष्यते । **सपूर्वादिनिमित्त** । पूर्वग्रहणे त्यक्ते सपूर्वादिनिरत्युच्यमाने सर्वस्मात् सपूर्वात्प्राप्नोतीति कथं ज्ञापकमित्यर्थः । **यच्चानुक्रान्तमिति ।** अप्रातिपदिकेनेति तु निषेधो यत्रान्तग्रहणं सूत्रेणैवोपात्तं तत्र । यथा दशान्ताड्ड इति दशाधिका अस्मिन् शत इत्यत्र न भवति ।

उ:—**ननु स्वं** रूपमित्यनुवृत्य विशेषणे तदन्तस्यैव स्वस्यापि संज्ञेति किं तस्य चेत्यनेन; अत आह—**स्वमिति ।** अनिष्टत्वे ज्ञापकमाह—**तथा चेति ।** ननु रोणीशब्दस्याप्रातिपदिकत्वेन व्यपदेशिवद्भावो भविष्यतीति तस्य चेत्यस्य न प्रयोजनमिति शङ्कते **नन्विति । प्रत्ययान्तत्वात्**; ङीषन्तत्वात । रोणीत्यत्र 'अन्यतो ङीष्' इति जातेरित्यनेन वा ङीषित्याहु । **स्वरूपेति**; प्रातिपदिकविशेषोपादानेन विहितकार्यविषय एवेत्यर्थः । भाष्ये **केवलादिति** । सूत्रमधीते वेद वा । दश अधिका यस्मिन्मत इत्यादावित्यर्थः । सूत्रान्तादित्यन्तग्रहणसामर्थ्यात्केवलान्न भविष्यतीत्याह—भाष्ये **नैतदिति** । भाष्ये **सिद्धमिति** । प्रातिपदिकस्य सूत्रादिभिर्विशेषणादिति भावः । अत्रान्तग्रहणं न नियमार्थं किं तु विध्यर्थमेव व्यपदेशिवद्भावेन केवलादुत्पत्तिनिरासायाप्रातिपदिकेनेति वक्तव्यमेवेत्याह भाष्ये **नात्रेति ।** भाष्ये **यदयमिति ;** सपूर्वादिनिरित्येव सूत्रे कृते व्यपदेशिवद्भावेन पूर्वशब्दादपि सिद्धौ पूर्वादिति व्यर्थं सत्प्रातिपदिकेन व्यपदेशिवद्भावो नास्तीति ज्ञापयतीत्यर्थः । पूर्वादित्यस्य सपूर्वादित्यत्रोपयोगान्न ज्ञापकत्वमित्याह भाष्ये **अस्ति हीति** । उपयोगमेवाह—**पूर्वग्रहण इति** । सर्वस्मात् पूर्वशब्दव्यतिरिक्तादपीत्यर्थः । योगविभागो ज्ञापक इत्याह—भाष्ये **यत्तहीति** । भाष्ये **किं पुनरयमस्यैवेति** । रोण्या अण्ग्रहणमित्यस्यैवेत्यर्थः । ननु यत्र तदन्तविधिस्तत्र तस्य चेति केवलादपि भवतीति व्यपदेशिवद्भावोऽप्रातिपदिकेनेत्येतद् व्यर्थम्; अत आह—**अप्रातिपदिकेनेति त्विति । यत्रेति** । तत्रान्तग्रहणसद्भावेन येन विधिरित्यस्याप्रवृत्त्या तच्छेषस्य तस्याप्रवृत्तावपि व्यपदेशिवद्भावेन केवलान्मा भूदित्यप्रातिपदिकेनेति वक्तव्यमित्यर्थ ।

**॥ वा ॥ रथसीताहलेभ्यो यद्विधौ ॥**

**भा :—रथसीताहलेभ्यो यद्विधौ प्रयोजनम् । रथ्यः परमरथ्यः । सीत्यं परमसीत्यम् । हल्या परमहल्या ।**

॥ वा ॥ सुसर्वार्धदिक्छब्देभ्यो जनपदस्य ॥

भा :—सुसर्वार्धदिक्शब्देभ्यो जनपदस्य प्रयोजनम्। सु-सुपाञ्चालकः सुमागधकः ॥ सु ॥ सर्व—सर्वपाञ्चालकः सर्वमागधकः ॥ सर्व ॥ अर्ध—अर्धपाञ्चालकः। अर्धमागधकः ॥ अर्ध ॥ दिक्छब्द—पूर्वपाञ्चालकः। अपरपाञ्चालकः। पूर्वमागधकः। अपरमागधकः।

॥ वा ॥ ऋतोर्वृद्धिमद्विधाववयवानाम् ॥

भा :—ऋतोर्वृद्धिमद्विधाववयवानां प्रयोजनम्। पूर्वशारदम्। अपरशारदम्। पूर्वनैदाघम्। अपरनैदाघम्।

॥ वा ॥ ठञ्विधौ संख्यायाः ॥

भा :—ठञ्विधौ संख्यायाः प्रयोजनम्। द्विषाष्टिकं पञ्चषाष्टिकम्।

॥ वा ॥ धर्मान्नञः ॥

भा :—धर्मान्नञः प्रयोजनम्। धर्मं चरति धार्मिकः। अधर्मं चरति अधार्मिकः। अधर्माच्च इति न वक्तव्यं भवति।

प्र :—**यद्विधाविति**। ठञ्विधौ तु तदन्तविधेरभावात्पारमहलिक इति ठञ भवति। **ऋतोरिति**। ऋतुवाचिनः शब्दाद्यो वृद्धिमान् प्रत्ययस्तद्विधानेऽवयवानां तदन्तविधिः। शरदः पूर्वो भागः पूर्वशरत्, तत्र भवमिति ऋतुलक्षणोऽण्। तत्र वृद्धिमदिति वचनात्प्रावृष एण्य इत्यत्र तदन्तविधिर्न भवति। तेन ऋत्वणेव भवति। **पूर्वप्रावृषमिति**। प्रावृट्शब्दो वर्षापर्यायः। अवयवानामिति किम्। पूर्वस्या शरदि भवं पौर्वशारदिकमित्यण् न भवति कालाट्ठञित्येव भवति,। तत्र हि यथाकथंचित्कालवाचिनो गृह्यन्ते। **द्विषाष्टिकमिति**। द्वे षष्टी परिमाणमस्येति समासे कृते आर्हादिति ठञ भवति संख्यायास्तदन्तविधौ सति संख्यान्तादपि ठक्प्रतिषेधात्। तेन प्राग्वतेरिति ठञ् भवति। अध्यर्धपूर्वेति लुग भवति। सोऽस्यांशवस्नभृतयः

इत्यतः सोऽस्येत्यनुवर्तमाने तदस्य परिमाणमित्यत्र पुनः प्रत्ययार्थे समर्थविभक्तिनिर्देशात्। कृते वा लुकि पुनस्तन्निर्देशसामर्थ्यात् पुनः प्रत्ययः। तद्विधानसामर्थ्याच्च पुनर्लुगभावः।

उ :—**भाष्ये रथेति**। तद्वहतीति रथात्, नौवयोधर्मेति सूत्रेण सीताशब्दात्, मतजनहलेति सूत्रेण हलशब्दाच्च, रथं वहति सितया सम्मितं हलस्य कर्ष इति यथाक्रममेष्वर्थेषु यत् विधीयते तत्र यद्ग्रहणस्य प्रयोजनमाह—**ठग्विधाविति**। 'हलसीरात् ठक्' इत्यनेन। भाष्ये **सुसर्वेति**। जनपदवाचिनश्शब्दात्प्रत्ययविधौ तदन्तविधिः। सोऽपि न सर्वत्र किं तु स्वादिभ्यः परस्यैवेत्यर्थः। भाष्ये सुपाञ्चालक इत्यादिषु 'अवृद्धादपि बहुवचनविषयात्' इति वुञ् शैषिकः। 'सुसर्वार्धाज्जनपदस्य दिशो मद्राणाम्' इत्युत्तरपदवृद्धिः। अत्रोत्तरपदवृद्धिविधिसामर्थ्यात्तदन्तविधिसिद्धेरिदं मन्दप्रयोजनमित्याहुः। **वृद्धिमान्**; वृद्धिनिमित्तम्। **अवयवानाम्**; पूर्वादत्र इति शेषः। **शरदः पूर्वं इति**; पूर्वापराधरोत्तरमित्येकदेशिसमासः। **ऋतुलक्षणः**; सान्धिवेलास्विति सूत्रेण्। पूर्वशारदमित्यादौ 'अवयवादृतोः' इत्युत्तरपदवृद्धिः। ननु प्रावृट्छब्दस्य ऋतुवाचित्वाभावात्कथं ऋत्वण्; अत आह—**प्रावृट्छब्द इति**। ननु शरच्छब्द एव कालवाची न पूर्वशरच्छब्द इति कथं ठञ्; अत आह—**तत्रेति**। कादम्बपुष्पिक इत्यादिसिद्धय इति भावः। **समास इति**। तद्धितार्थेत्यनुवृत्तौ संख्यापूर्व इत्यनेन। परत्वाट्ठका भाव्यं कथं ठञ् अत आह—**आर्हादिति**। **तदन्तेति**। संख्याया प्रयोजनमित्यनेनैव। **ठक्प्रतिषेधात्**। आर्हादगोपुच्छसंख्येत्यनेन ठक्प्रतिषेधादित्यर्थः। **पुनरिति**। अस्येति प्रत्ययार्थस्य तदिति प्रथमायाश्च निर्देशादित्यर्थः। तेन प्राक्कृतं लुक्सम्बद्धमिति सूचनादनेन विहितस्य लुगभाव इति भावः। **कृतेऽपीति**। अनुवर्तमानेन सास्येत्यनेन सहितेन परिमाणमित्यनेन विहितस्य लुकि कृते पुनस्तदस्य परिमाणमिति विहितस्य न लुगित्यर्थः।

**॥ वा ॥ पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य च ॥**

**भा :—पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य चेति वक्तव्यम्। पदाधिकारे किं प्रयोजनम्?**

**॥ वा ॥ प्रयोजनमिष्टकेषीकामालानां चिततूलभारिषु ॥**

भा :—इष्टकेषीकामालानां चिततूलभारिषु प्रयोजनम्। इष्टकचितं चिन्वीत। पक्वेष्टकचितं चिन्वीत। इषीकतूलेन मुञ्जेषीकतूलेन। मालभारिणी कन्या, उत्पलमालभारिणी कन्या। अङ्गाधिकारे किं प्रयोजनम्?

॥ वा ॥ महदप्स्वसृनप्तृणां दीर्घविधौ ॥

भा :—महदप्स्वसृनप्तृणां दीर्घविधौ प्रयोजनम्। महत्—महान् परममहान् ॥ महत् ॥ अप्—आपस्तिष्ठन्ति। स्वापस्तिष्ठन्ति। अप् ॥ स्वसृ—स्वसा स्वसारौ स्वसारः। परमस्वसा परमस्वसारौ परमस्वसारः ॥ स्वसृ ॥ नप्तृ—नप्ता नप्तारौ नप्तारः। एवं परमनप्ता परमनप्तारौ परमनप्तारः ॥ नप्तृ ॥

॥ वा ॥ पद्युष्मदस्मदस्थ्याद्यनडुहो नुम् ॥

भा :—पद्भावः प्रयोजनम्। द्विपदः पश्य। अस्ति चेदानीं कश्चित्केवलः पाच्छब्दो यदर्थो विधिः स्यात्। नास्तीत्याह। एवं तर्हि अङ्गाधिकारे प्रयोजनं नास्तीति कृत्वा पदाधिकारस्य प्रयोजनमुक्तम्—"हिमकाषिहतिषु च"। यथा पत्काषिणौ पत्काषिणः। एवं परमपत्काषिणौ परमपत्काषिणः। यदि तर्हि पदाधिकारे पादस्य तदन्तविधिर्भवति। "पादस्य पदाज्यातिगोपहतेषु"। यथेह भवति पादेनोपहतं पदोपहतम्। अत्रापि स्यात्—दिग्धपादेनोपहतं दिग्धपादोपहतमिति।

प्र :—**पदाङ्गाधिकार इति**। पदशब्देनोत्तरपदं गृह्यते पदैकदेशलोपात्। उत्तरपदेन सामर्थ्यादाक्षिप्तं पूर्वपदमिष्टकादिभिर्विशेष्यते। **महदप्स्वस्रिति**। महदादिभिरङ्गं विशेष्यते। **स्वाप इति**। न पूजनादिति समासान्तनिषेधः। अपो भीति तत्वमपि स्वद्भिरिति भवति। **द्विपद इति**। पादः पदित्यत्र पाच्छब्देनाङ्गं विशेष्यते। **पादस्य पदेति**। ननु पद्भावे तदन्तविधिरुक्तोऽयं तु पदभावविधिः। नैष दोषः। पादशब्देन पूर्वपदस्य विशेषणात्पद्भावे तदन्तविधिः। अनेनैव न्यायेन

पदभावेऽपि तदन्तविधिप्रसङ्गः। यथाभूतः पूर्वसूत्रे पादशब्दो निर्दिश्यते तथाभूतस्योत्तरत्रानुमानात्।

उ:—पदाङ्गीकार इति तदन्तविधेरपवादः। अत एव तस्य चेति पुनरभिहितमित्याहुः। तदन्तविधेरेव प्रयोजनान्तरमिदं तस्य चेत्युक्तस्यैवानुवृत्तिकथनमात्रं अत एव प्रदीपे तदन्तविधिरेव स्पष्ट इत्यन्ये। तत्रोत्तरपदाधिकारगतप्रयोजनाभिधानात्पदशब्द उत्तरपदपर इत्याह—**पदशब्देनेति**। अत्रापि तदन्तविधिलाभप्रकारमाह—**उत्तरपदेनेति**। अलुगुत्तरपद इत्यतोऽनुवर्तमानोत्तरपदसामर्थ्याक्षिप्तमित्यर्थः। **समासान्तेति**। ऋक्पूरबिति प्राप्तेत्यादिः। तत्वमपि तदन्तस्य भवतीत्याह—**अप इति**। यद्यपि वार्तिके दीर्घविधावित्यस्ति तथापि महदबित्यत्राप्बिति स्वरूपमात्रं गृहीतम्, नाप्तृन् इति सूत्रस्थम्। तथा च कार्यान्तरेऽपि तदन्तविधिसिद्धिरिति भावः। अत्रापि तदन्तविधिप्रकारमाह—**पाद इति**। भाष्ये नास्तीत्याहेति येनोक्तं स एवाह—**एवं तर्हीति**। सन्निधेर्लिङ्गं बलीय इति भावः। **नन्विति**। पद्युष्मदिति पद्भाव एव तदन्तविधेरुक्तत्वादिति भावः। **नैष इति**। नात्र वाचनिकस्तदन्तविधिः किं तु पादशब्देन पूर्वपदस्य विशेषणत्वकृतः। पद्भावसूत्रे च पादस्येत्यनुवर्तते। अनुवर्तमानेन तदन्तविधिश्चेत् स्वस्थानेऽपि तदन्तविधिः। पूर्वत्र यादृशं निर्दिष्टं तादृशस्यैवोत्तरत्रानुमानरूपानुवृत्त्यङ्गीकारादित्यर्थः।

**भा:—एवं तर्ह्यङ्गाधिकार एव प्रयोजनम्। ननु चोक्तम्—न केवलः पाच्छब्द इति। अयमस्ति पादयतेरप्रत्ययः पात्। पदः पदा पदे। पत्। युष्मत् अस्मत्—यूयं वयम्। परमयूयं परमवयम्। अस्थ्यादि—अस्थ्ना दध्ना सक्थ्ना। परमास्थ्ना परमदध्ना परमसक्थ्ना। अनडुहो नुम् अनड्वान् परमानड्वान्।**

**॥ वा ॥ द्युपथिमथिपुंगोसखिचतुरनडुत्त्रिग्रहणम् ॥**

**भा:—द्युपथिमथिपुंगोसखिचतुरनडुत्त्रिग्रहणं प्रयोजनम्। द्यौः। सुद्यौः। पन्थाः। सुपन्थाः। मन्थाः परममन्थाः। पुमान् परमपुमान्। गौः सुगौः। सखा सखायौ सखायः। सुसखा**

**सुसखायौ सुसखायः। परमसखा परमसखायौ। चत्वारः परमचत्वारः। अनड्वाहः परमानड्वाहः। त्रयाणां परमत्रयाणाम्।**

**॥ वा ॥ त्यदादिविधिभस्त्रादिस्त्रीग्रहणं च ॥**

**भा :—त्यदादिविधिभस्त्रादिस्त्रीग्रहणं च प्रयोजनम्। सः। अतिसः। भस्त्रका भस्त्रिका। बहुभस्त्रका। बहुभस्त्रिका निर्भस्त्रका निर्भस्त्रिका। स्त्रीग्रहणं च प्रयोजनम्। स्त्रियौ स्त्रियः। राजस्त्रियौ राजस्त्रियः।**

**॥ वा ॥ वर्णग्रहणं च सर्वत्र ॥**

**भाः —वर्णग्रहणं च सर्वत्र प्रयोजनम्। क्व सर्वत्र? अङ्गाधिकारे चान्यत्र च। अन्यत्रोदाहृतम्। अङ्गाधिकारे—"अतो दीर्घो यञि" "सुपि च" इहैव स्याद्—आभ्याम्। घटाभ्यामित्यत्र न स्यात्।**

प :—**एवं तर्हीति।** एवं च परमपादेन कषतीति विवक्षायां परमपादकाषीति भवति। यदि[1] तु परमः पत्काषीति विवक्षा तदा परमपत्काषीति भवति। **पादयतेरिति।** पदेर्ण्यन्तादित्यर्थः। परमपन्था इति क्वचित्पाठः। स त्वयुक्तः। समासान्तविधानात्। न पूजनादित्यत्र पूजायां स्वतिग्रहणमिति वचनान्नाति निषेधः। तस्मात्सुपन्था इति पाठः। परमगौरित्यपपाठः। गोरतद्धितलुकीति टज्विधानात्। तस्मात् सुगौरिति पाठः। परमसखायाविति बहुव्रीहिः। तत्पुरुषे तु टचा भाव्यम्। अनडुच्छब्दस्येह प्रपञ्चार्थः पाठः। अनडुहो नुमित्यत एव वचनादादित्यधिकारादमामोः कृतयोर्नुम् विधानात्। नुम्विधौ तदन्तविधिना अमामोरपि तदन्तविधेराक्षेपात्। अन्ये त्वाहुः। अपतोह पुनर्ग्रहणे यत्रैव नुम् क्रियते तत्रैवामामौ तदन्तस्य स्याताम्। परमानड्वाह इत्यत्र त्वाम्नस्यादिति पुनः पाठः कर्तव्यः। पूर्वत्रापि पाठो नुमर्थः कर्तव्यः। अन्यथा अमामोरेव तदन्तविधिः स्यान्न तु नुम्विधौ। **अतिस**

(१) मु. पु. यदा तु।

**इति ।** शोभनः स इत्यर्थः । उपसर्जने तु तच्छब्दार्थे अतिनदिति भवति । **बहुभक्तिकेति ।** नञ्पूर्वाणामपीति न वक्तव्यं भवति । **वर्णग्रहणं चेति ।** यद्येवमुगिद्वर्णग्रहणवर्जमित्यत्र किमर्थं वर्णग्रहणम् । उच्यते । प्रत्ययविधौ तदन्तविधिप्रतिषेधाद्वर्णग्रहणे प्रत्ययविधौ प्रतिषेधाशङ्कानिरासार्थम् ।

उ :—भाष्ये **एवं तर्हीति ।** पदाधिकारे पद्भावे तदन्तविधावतिप्रसङ्गे सतीत्यर्थः । तदन्तविध्यभावेऽपि परमपत्काषीति रूपं साधयति—**यदि त्विति ।** भाष्ये **अप्रत्ययः ;** आश्रूयमाणप्रत्ययः विचादिः । **समासान्तेति ;** ऋक्पूरित्यनेनेत्यर्थः । 'न पूजनात्' इति निषेधोऽत्र नास्तीत्याह—**नेति । टचा भवितव्यम् ;** 'राजाहस्सखिभ्यः' इत्यनेन । प्रपञ्चार्थत्वमेवाह—**अनडुह इति ।** इत्येव वचनादमामोरपि तदन्तविधेराक्षेपादित्यन्वयः । आक्षेपप्रकारमाह—**आदिति** 'आच्छीनद्योर्नुम्' इत्यत इत्यादिः । **यत्रैवेति ।** यत्र नुम् तत्रैव नान्यत्रेत्यर्थः । **न त्विति ।** तथा च परमानड्वानिति नुम्न स्यात् । **उपसर्जने त्विति ।** तस्य सर्वादिगणानन्तर्भावादित्यर्थ । यदि भस्त्रादौ तदन्तविधिः तदा नञ्पूर्वाणामिति व्यर्थम् ; अत आह—**नञिति ;** बहुभस्त्रिकाद्यर्थं तदन्तविधेरावश्यकत्वादिति भावः । अन्यत्रेति भाष्यात्पदाङ्गाधिकारादन्यत्र प्रत्ययविधावेव वर्णग्रहणे तदन्तग्रहणमिति मत्वा शङ्कते—**यदीति ।** अन्यत्रेति भाष्यमुपलक्षणार्थं त्रिनयसन्निधौ 'इको झल्' इत्यादावपि तदन्तविधिदर्शनादित्याशयेन परिहरति—**उच्यत इति ।**

॥ वा ॥ **प्रत्ययग्रहणं चापञ्चम्याः ।**

**भा :—प्रत्ययग्रहणं च अपञ्चम्याः प्रयोजनम् । यञिञोः फग्भवति । गार्ग्यायणः वात्स्यायनः । परमगार्ग्यायणः परमवात्स्यायनः । दाक्षायणः । परमदाक्षायणः । अपञ्चम्या इति किमर्थम् । दृषत्तीर्णा परिषत्तीर्णा ।**

प्र :—**प्रत्ययग्रहणं चापञ्चम्या इति ।** प्रत्ययग्रहणे यस्मात् स विहित इति सिद्धे तदन्तविधावपञ्चम्या इति प्रतिषेधार्थं वचनम् । यत्र पञ्चम्यन्तात् परः प्रत्ययः कार्यान्तरविधानाय परिगृह्यते तत्र तदन्तविधिर्मा भूत् यथा रदाभ्यामित्यत्र । तत्र हि तदन्तविधौ रेफदकाराभ्यामुत्तरो यो निष्ठान्तस्तस्य नत्वं स्यात् । न च संज्ञाविधौ प्रत्ययग्रहणे

तदन्तविधिर्नास्तीति निषेधावतारः। यत्र हि संज्ञाविधानं तत्रायं निषेधः। इह तु निष्ठानुवादेन नत्वविधिः। संज्ञाविधौ तर्हि तदन्तविधिनिषेधस्य किं फलम्? उच्यते। यदि संज्ञाविधौ प्रत्ययग्रहणे तदन्तस्य संज्ञा स्यात् प्रदेशेषु पुनस्तदन्तविधिः स्यादिति प्रत्ययान्तान्तं गृह्येत। तस्मात्संज्ञाविधावपि तदन्तविधिनिषेधः। रदाभ्यामित्यत्र च अपञ्चम्या इत्यस्य नायमर्थः। यत्र [1]पञ्चम्याः प्रत्ययो विधीयते तत्र तदन्तविधिर्न भवतीति। एवं हि व्याख्यायमाने ञितश्च तत्प्रत्ययादित्यत्र तत्प्रत्ययादेर्ञ्ञि विधीयमाने तस्यैवाङ्गसंज्ञायां वृद्धिस्वरौ स्यातां न तु तदन्तस्येतीति। **परमगार्ग्यायण इति**। तत्र गार्ग्यायण इत्येवोदाहरणम्। गार्ग्यशब्दाद्यञन्तात्फग्विधानात्। न त्वत्र परमगार्ग्य-शब्दात्प्रत्ययः। तस्य यञन्तत्वाभावात्। तस्माच्च फकि विधीयमाने पारमगार्ग्यायण इत्य-निष्टरूपप्रसङ्गः। तस्मादेतन्न्यायव्युत्पादनार्थं परमगार्ग्यायण इत्युपन्यस्तम्। उत्तरपदाधि-कारे प्रत्ययग्रहणे तदन्तविध्यभावो लेखग्रहणेन ज्ञापितः। तत्र रदाभ्यामित्यत्र निष्ठायाः प्राधान्येनाश्रवणात्तदन्तविध्यभावः। स्यतासी लृलुटोरित्यत्र धातोरित्यधिकारादपञ्चम्या इति निषेधाल्लृलुटोर्वा प्राधान्येनाश्रवणात्तदन्तविध्यभावः।

उ:—प्रत्ययग्रहणपरिभाषयैव तदन्तविधिसिद्धावेतद्वैयर्थ्यं निराह—**प्रत्ययेति**। न च प्रतिषेधार्थत्वे तत्रैवापञ्चम्या इति वक्तव्यमिति वाच्यम्। प्रत्ययाक्षिप्तप्रकृतेः प्रत्ययेन विशेषणेनैव तदन्तविधिसिद्धौ प्रत्ययान्तस्यैवेति नियमार्थं तदिति सूचनाय सूत्र-कारस्य गतिवैचित्र्याद्वात्राभिधानात्। अत एव प्रत्ययग्रहणपरिभाषाप्यत्रैव क्रियतामिति निरस्तम्। यस्मात्प्रत्ययविधिसूत्रारूढतां कर्तुं तत्रैव कर्तव्यत्वाच्च। अपञ्चम्या इत्यस्य विवक्षितमर्थमाह—**यत्रेति। यत्र;** सूत्रे। **परिगृह्यते;** अनूद्यते। **तदन्त-विधिः;** प्रत्ययग्रहणपरिभाषयेत्यादिः। तदुदाहरति—**यथेति। निष्ठान्तस्येति।** गीर्त्तिमितमित्यादिः। गीर्णमित्यादौ नत्वं न स्यादित्यपि ज्ञेयम्। संज्ञाविधौ प्रत्यय-ग्रहणे तदन्तविधिर्नेत्यत्रापि तदन्तविधिर्नेति न वाच्यमित्याह—**न चेति**। संज्ञा-विधानं संज्ञया विधानं यदि संज्ञया विधाने तदन्तनिषेधस्य किं प्रयोजनमिति पृच्छति—**संज्ञाविधाविति। प्रत्ययान्तान्तमिति।** प्रत्ययान्तस्य घसंज्ञायां घेनोत्तर-पदस्य विशेषणादिति भावः। अपञ्चम्या इति निषेधस्यापि प्रयोजनमुक्तमुपसंहरति—**रदाभ्यामित्यत्र चेति**। यत्र पञ्चम्यन्तात्प्रत्ययो विधीयते तत्रापञ्चम्या इति

---

(१) मु. पु. पंचयन्तात्.

निषेध इति केचित्। **पञ्चम्या इति।** पञ्चम्यन्तात्प्रत्ययादित्यर्थः। **ञितश्चेति;** ञितो विकारावयवप्रत्ययस्तदन्तादञ् स्याद्विकारावयवयोः। मयटोऽपवादः। ओरञ् दैवदारवम्। तस्य विकारोऽवयवो वा दैवदारवम्। **तत्प्रत्ययादेव;** विकारावयवप्रत्ययादेव। **तस्यैव;** ओरञ् इत्यादेरेव। ततश्चाञ एव वृद्धिस्वरौ स्यातामित्यर्थः। यत्रापंचम्यन्तात्परः प्रत्ययः कार्यान्तरविधानायानूद्यते तत्रापञ्चम्या इति निषेधः। अत्र तु प्रत्ययविधानार्थमेवानुवाद इति तदन्तविधिर्भवत्येवेति भाष्ये यञिञोः फग्भवतीत्युदाहृतम्। केचित्तु यद्यपि 'यञिञोश्च' इत्यत्र प्रातिपदिकादित्यधिकारादस्ति पञ्चमी तथापि न सा यञिञोर्विशेषणम्, फग्विधौ तयोरुपसर्जनत्वात्। किं तु ङ्याप्प्रातिपदिकात्षष्ठीसमर्थात्फग्भवति स च यञिञनन्तर इति सूत्रार्थं मत्वा भाष्ये यञिञोः फग्भवतीत्युक्तमित्याहुः। भाष्ये परमगार्ग्यायण इति दर्शनात् परमशब्दसहितस्योदाहरणत्वशङ्कां निराह—**तत्रेति।** इष्टापत्तिं निराह—**अनिष्टेति।** भाष्ये परमगार्ग्यायण इति किमर्थमुक्तम्; अत आह—**तस्मादिति।** अपञ्चम्या इति प्रतिषेधस्य स्वोक्तार्थाभिसंधिरूपन्यायप्रदर्शनाय परमसहितोक्तिः। अन्यथा पारमगार्ग्यायण इति निर्दिशेदित्यर्थः। ननु प्रत्ययग्रहणे तदन्तग्रहणं चेदुत्तरपदाधिकारेऽपि घरूपेत्यादौ, तदन्तग्रहणं स्याद्; अत आह—**उत्तरेति।** 'हृदयस्य हृल्लेखयदण्लासेषु' इत्यण्ग्रहणेन तदन्तस्य लेखस्यापि ग्रहणे सिद्धे पुनस्तद्ग्रहणात्तदन्तविध्यभावो ज्ञापितः। लेखशब्दश्च तत्राणन्त एव गृह्यते न घञन्तः। घञन्तस्य तु हृदयलेख इत्येव भवतीति भावः। अपञ्चम्या इत्यस्य यत्प्रयोजनमुक्तं तदपि व्याख्यानलभ्यमित्याह—**तत्रेति।** ल्लुटोरित्यत्र तदन्तविध्यभावमाह—**स्यतासीति।** धातोरित्यस्य ल्लुटोर्विशेषणत्वादपि तदन्तविधिर्नास्तीत्याह। **ल्लुटोर्वेति।** यद्वा प्रत्ययग्रहणपरिभाषया तदन्तविध्यभावो पञ्चम्या इत्यनेनोक्तः। येन विधिरित्यनेन तदन्तविध्यभावो ल्लुटोर्वेत्यनेनोक्त इति विवेकः। भाष्ये **हृषत्तीर्णेति।** रदाभ्यामित्यत्र निष्ठान्तं न गृह्यत इति प्रकृतितकारस्य नत्वाभावः। निष्ठातस्य नत्वं च सिद्धमिति तीर्णेत्युदाहरणमित्यर्थः।

**॥ वा ॥ अलैवानर्थकेन ॥**

**भा:—अलैवानर्थकेन तदन्तविधिर्भवति, नान्येनानर्थकेनेति वक्तव्यम्?। किं प्रयोजनम्?। हन्ग्रहणे प्लीहन्ग्रहणं मा भूत्। उद्ग्रहणे गर्मुद्ग्रहणम्। स्त्रीग्रहणे शस्त्रीग्रहणम्। संग्रहणे**

**पायसं करोतीति मा भूत्। किमर्थमिदमुच्यते, न 'पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य च' इत्येव सिद्धम्। न चेदं तत्। नापि तदुत्तरपदम्। तन्न वक्तव्यं भवति। किं पुनरत्र ज्यायः? तदन्तविधिरेव ज्यायान्। इदमपि सिद्धं भवति—परमातिमहान्। एतद्धि नैव तद्, नापि तदुत्तरपदम्॥**

**॥ वा ॥ अनिनस्मन्ग्रहणानि च ॥**

**भा:—अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति। अन्—राज्ञेत्यर्थवता साम्नेत्यनर्थकेन॥ अन्॥ इन्—दण्डीत्यर्थवता वाग्मीत्यनर्थकेन॥ इन्॥ अस्—सुपया इत्यर्थवता सुस्रोता इत्यनर्थकेन॥ अस्॥ मन्—सुशर्मा इत्यर्थवता सुप्रथिमा इत्यनर्थकेन॥ मन्॥**

**॥ वा ॥ यस्मिन्विधिस्तदादावल्ग्रहणे ॥**

**भा:—यस्मिन्विधिस्तदादाविति वक्तव्यम्। किं प्रयोजनम्? "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" इति इहैव स्यात्—श्रियौ भ्रुवौ। श्रियो भ्रुव इत्यत्र न स्यात्। येन विधिस्तदन्तस्य॥**

प्र:—**अलैवानर्थकेनेति**। अर्थवद्ग्रहणे नानर्थकस्येति वर्णनिर्देशेषु नाश्रीयत इति स्थितम्। वर्णरूपतया यस्य शब्दस्याश्रयणं नार्थवत्तारूपमाश्रीयते। तत्र वर्णग्रहणं च सर्वत्रेत्यत्र वर्णग्रहणे जातिग्रहणाद्वर्णसमुदायग्रहणेऽप्यनर्थकस्य ग्रहणं प्राप्तमनेन नियमेन निवार्यते। अलैवेति चैकत्वसंख्या गुणत्वाद्विवक्ष्यते। नियमविधानसामर्थ्याद्वा। **हन्ग्रहण इति**। तेन प्लीहानाविति दीर्घो भवति। **उद्ग्रहण इति**। उदः स्थास्तम्भ्वोरित्यत्र। तेन गर्मुत् स्थास्यतीति पूर्वसवर्णाभावः। **शस्त्रीग्रहणमिति**। तेन शस्त्र्याविति स्त्रिया इतीयङ् न भवति। **पायसं करोतीति**। संपर्युपेभ्य इति सुण् न भवति। तत्र हन्ग्रहणे स्त्रीग्रहणे चाङ्गस्य विशेष्यत्वात् स्यात्तदन्तविधिः। उदःस्थेत्यत्र तोरित्यधिकारात्तवर्गान्तस्योच्छब्देन विशेषणात्स्यात्तदन्तविधिः। प्रतिषेधविज्ञाने तु, न भवति। उद एव तवर्गेण विशेष्यत्वात्।

तोरित्यस्य वा निवृत्तत्वात्। संग्रहणे [1]पदग्रहणात्तदन्तविधिः स्यादिति निवार्यते। पदेन समादयो विशेष्यन्ते इति तदन्तविध्यभावः। पायसं करोतीति करोतेर्भूषणार्थवृत्तिता सम्भवतीति सुट् स्यात्। **किमर्थमिति।** [2]अनर्थकेनेत्येतदाक्षिप्यते। अस्य हि नियमस्य प्लीहानावित्यादि प्रयोजनम्। तच्चान्यथा सिध्यति। अङ्गाधिकारे हन्ग्रहणं स्त्रीग्रहणं चास्ति। एङः पदान्तादतीति पदाधिकारे संग्रहणम्। वा पदान्तस्येत्यतः पदग्रहणानुवर्तनादुदः स्थास्तंभ्वोरिति पूर्वसवर्णः पदाधिकारे विधीयते। पदाङ्गाधिकार इत्यत्र च केवलपदाधिकारोऽपि ग्रहीष्यते। उत्तरपदाधिकारोऽपि। ततश्च प्लीहानावित्यादिषु दोषो न भवति। न हि प्लीहानावित्यत्र हनित्यङ्गं नापि तदुत्तरपदमिति प्रश्नः। **तन्न वक्तव्यमिति।** पदाङ्गाधिकार इत्येतदित्यर्थः। अलैवानर्थकेनेति वचनेनार्थवता तदन्तविधिसद्भावादिति भावः। तदन्तविधिरेवेति प्राथमकल्पिकः सूत्रेणैव तदन्तविधिः। स एव त्वलैवानर्थकेनेति नियम्यते। **परमातिमहानिति।** परमश्चासावतिमहानिति समासः। तत्र परमादिर्महच्छब्दो न भवति। नापि महच्छब्दोत्तरपदः। अतिमहच्छब्दोत्तरपदत्वादिति सान्तमहत इति दीर्घत्वं न स्यात्। अनेनैव न्यायेनोगिल्लक्षणो नुमागमोऽपि न स्यात् तदन्तविधिना तु भवति। **सुस्रोता** इति। अनागमकानां सागमका आदेशा इत्याश्रयणादत्रास आनर्थक्यमर्थवत्तो ह्यागम इति न्यायाश्रये त्वर्थवा[3]नेव। **यस्मिन् विधिरिति।** तदन्तविध्यपवादस्तदादिविधिः। अत एव विशेषणेन भवति नान्येन॥ ७२॥

उ:—यद्यपि वर्णग्रहणे जातिग्रहणं तथाप्यर्थवत्परिभाषया अर्थवतैवाला तदन्तविधिर्नानर्थकेनेत्यलैवेति नियमोऽनर्थकः; अत आह—**अर्थवदिति। स्थितम्;** स्वं रूपमित्यत्र अनाश्रयणे हेतुः **वर्णेति।** समुदायस्याप्राप्तस्य नियमेन व्यावृत्त्यसम्भवात्तत्प्राप्तिमाह—**वर्णग्रहणं चेति।** समुदायस्याप्यल्त्वात्कथं नियमः; अत आह—**एकत्वेति। गुणत्वात्;** तदन्तविधिनियमविशेषणत्वात्। अलैवेति नियमोऽत्र विधीयते, नाल्। तथा चाविधेयगतमेकत्वं कथं विवक्ष्यते; अत आह—**नियमेति। दीर्घो भवतीति;** इन्हन् इति नियमेनाव्यावर्तितत्वादिति भावः। यद्यपि हनादि-

---

(१) मु. पु. पदप्रकर.
(२) मु. पु. अलैवानर्थके न।
(३) मु. पु. नेवासूशब्दः

ष्वर्थवत्परिभाषयानर्थकव्यावृत्तिस्सम्भवति, तथापि वर्णरूपतयात्र शब्दस्य विवक्षितत्वादर्थवत्त्वाविवक्षणात्परिभाषानुपस्थानात्प्रयोजनोपपत्तिरिति मन्तव्यम्। अत्र सर्वत्र तदन्तविधिप्रसक्तिमाह—**तत्रेति।** हनादिचतुष्टयमध्य इत्यर्थः। **तदन्तविधिरिति;** अत एव वृत्रहणावित्यादौ दीर्घाभावः। प्लीहानावित्यत्र हनोऽनर्थकसमुदायत्वात्तदन्तग्रहणात् 'वा पदान्तस्य' इत्यतोऽनुवृत्तं पदं तोरित्यनेन विशेष्यत इत्येतदभिप्रेत्य—**तवर्गान्तस्येत्युक्तं। प्रतिषेधेति।** अलैवानर्थकेनेत्यनेनेत्यर्थः। उक्ततदन्तविधिनिरासप्रकारान्तरमाह—**उद एवेति।** व्यभिचाराभावात्तवर्गेणोतो विशेषणं व्यर्थम्; अत आह-**तोरिति।** 'एङः पदान्तात्' इत्यतोऽनुवर्तमानं पदं समा विशेष्यत इति तदन्तविधिप्राप्तिरित्यर्थः। **पदग्रहणात्;** पदानुवृत्तेः। पदप्रकरणादिति पाठः स्पष्टार्थः। **निवार्यते;** अलैवेत्यनेन। निवारणे प्रकारान्तरमाह—**पदेनेति।** समादय इत्यादिना पर्यादिग्रहः। ननु भूषणार्थवृत्तेः करोतेस्सुटि पायसं करोतीत्यत्र न भूषणार्थतेति कथं सुट् अत आह—**भूषणेति।** संस्करोतीत्यत्रवदत्रापि भूषणार्थता सम्भवति। ब्राह्मणेभ्यो दातुं पायसकरणं भूषणमेवेति भावः। सिद्धे विधिरारभ्यमाण एवकारं विनापि नियमार्थ इत्येवकाराक्षेपभ्रान्तिं निराह—**अनर्थकेनेति।** अलैवानर्थकेनेत्यस्य सर्वस्याक्षेप इत्यर्थः। तदेवाह—**अस्येति।** अन्यथासिद्धिमेवाह—**अङ्गाधिकार इति।** ननु पदाङ्गाधिकार इत्यत्रोत्तरपदाधिकार इति व्याख्यानम्। तथाधिकारमात्रस्य कथं लाभः; अत आह—**पदाङ्गेति। केवलेति;** असन्देहायोत्तरपदेत्येव वक्तव्ये पदग्रहणमुभयाभिप्रायकमित्यर्थः। न चेदं तदिति प्रश्नार्थमाह—**न प्लीहानाविति। तदुत्तरपदम्;** तस्याङ्गस्योत्तरपदम्। एवं शस्त्रीत्यत्र स्त्रीस्येतन्नाङ्गं नापि तदुत्तरपदमिति ज्ञेयम्। नन्वव्यवहितनिर्दिष्टस्य पदाङ्गाधिकार इत्यस्य परामर्शार्थमेतन्न वक्तव्यमिति वाच्ये व्यवहितपरामर्शितच्छब्दोपादानमयुक्तमित्याशङ्क्यालैवेत्यनेन व्यवहितवार्तिकपरामर्शाभिप्रायेण तदुक्तरीत्याह—**पदेति।** यद्वात्र तच्छब्दोऽव्यवहितपरामर्शीत्याह—**पदेति।** अवचनेऽपीष्टसिद्धिरित्याह—**अत्रैवेति।** अनर्थकारसमुदायेन तदन्तविध्यभावे शस्त्रीत्यादौ नातिप्रसङ्गः अर्थवता हनादिना तदन्तविधिसद्भावाद्वृत्रहणावित्यादौ दीर्घाभावः प्लीहानावित्यत्र दीर्घश्च सिद्ध इत्यर्थः। भाष्ये **किमत्रेति।** पदाङ्गाधिकारेत्यस्य वचनावचनयोः किं ज्याय इत्यर्थः। वचनमेव ज्याय इत्याह—भाष्ये **तदन्तविधिरेवेति।** एवकारेणावक्तव्यनिरासः। तदुपपादयति—**प्राथमकल्पिक**

**इति ।** नापि तदुत्तरपदमिति भाष्ये दर्शनात्पदाङ्गाधिकार इति वार्तिकं येन विधिरिति सूत्रस्यापवाद इति भाष्यकृदभिप्रेत इत्युन्नीयत इति केचित् । वार्तिकेन न सूत्रमन्यथासिद्धं किं तु सूत्रेण वार्तिकमेवेति सूचनाय वार्तिकस्याव्याप्तिकथनपरमेतद्भाष्यमिति नापवादत्वप्रत्यायकमित्यन्ये । महच्छब्दस्योत्तरपदत्वाभावाय समासमाह—**परम इति ।** तत्र वार्तिकाप्रवृत्तिमाह—**तत्रेति । अनेनैवेति ;** परमातिमहानिति नोगिदङ्गं नाप्युगिदुत्तरपदं महच्छब्दस्यैवोगित्वादिति भावः । अलैवानर्थकेनेत्यनेन अनर्थकवर्णसमुदायेन तदन्तविधिर्नेत्युक्तं तस्य क्वचिदपवादमाह—भाष्ये **अनिनस्मिन्निति ।** 'अल्लोपोऽनः' 'इन्हन्पूषार्यम्णां शौ' 'अत्वसन्तस्य चाधातोः' 'मनः' इत्यादिष्वित्यर्थः । असुन्यनुवर्तमाने स्रुरीभ्यां तुट् चेत्यसुनस्तुड्विधानात्कथं सुस्रोता इत्यत्रासुनोऽनर्थकत्वम् ; अत आह—**अनागमकानामिति ।** पक्षान्तरे तु नानर्थकृयमित्याह—**अर्थवत इति । अर्थवान् ;** असुनित्यादिः । भाष्ये सुशर्मा सुप्रथिमेति स्त्रियामन्यपदार्थे बहुव्रीहिः । मन इति डिब्निषेधः । श्रृणोतेरन्येभ्योऽपीति मन्प्रत्ययः । यस्मिन्निविधिरित्यस्यात्राभिधाने सङ्गतिमाह—**तदन्तेति । अत एव ;** तदन्तविध्यपवादत्वादेव । **नान्येनेति ;** इको यणचोत्यादावित्यर्थः ॥

## सू.—वृद्धिर्यस्याचामादिस्तद् वृद्धम् ॥ १। १। ७२ ॥

**भा :—वृद्धिग्रहणं किमर्थम् । 'यस्याचामादिस्तद् वृद्धम्' इतीयत्युच्यमाने 'दात्ता राक्षिताः' अत्रापि प्रसज्येत । वृद्धिग्रहणे पुनः क्रियमाणे न दोषो भवति । अथ यस्यग्रहणं किमर्थम्? यस्येति व्यपदेशाय । अथाज्ग्रहणं किमर्थम्? 'वृद्धिर्यस्यादिस्तद् वृद्धम्' इतीयत्युच्यमाने इहैव स्यात्—ऐतिकायनीयाः औपगवीयाः । इह न स्यात्—गार्गीया वात्सीया इति । अज्ग्रहणे पुनः क्रियमाणे न दोषो भवति । अथादिग्रहणं किमर्थम्? "वृद्धिर्यस्याचां तद् वृद्धम्" इतीयत्युच्यमाने सभासंनयने भवः साभासंनयनः—इत्यत्रापि प्रसज्येत । आदिग्रहणे पुनः क्रियमाणे न दोषो भवति ॥**

प्र :—वृद्धिर्यस्य ॥ **वृद्धिग्रहणमिति** । असति वृद्धिग्रहणे कथं सर्वस्य वृद्धसंज्ञा न भवतीति चेत । यस्याचामादिर्भिन्नजातीयो हल् तद् वृद्धमित्यजादि व्यावर्तितं स्यात् । **दात्ता इति** । असति वृद्धिग्रहणे निर्धारणहेतोर्धर्मस्यानुपादानादादिशब्दः समीपार्थो विज्ञायेत । दत्तशब्दो रक्षितशब्दश्चात्र क्रियाशब्दो द्रष्टव्यः । नामधेयस्य तु पक्षे भवत्येव वृद्धसंज्ञा । प्रस्थेऽवृद्धमित्यत्र यदा नामधेयत्वादवृद्धाः पक्षे कर्क्यादयस्तदर्थं प्रतिषेधः स्यात् । **यस्येति व्यपदेशायेति** । संज्ञिन इति शेषः । अन्यथा तच्छब्देन किं प्रत्यवमृश्येत । तदित्यस्यानुपादाने च वृद्धेरेव वृद्धसंज्ञाप्रसङ्गः । **गार्गीया इति** । न हि गार्ग्यशब्दस्य वृद्धिरादिः । किं तर्हि? हल् । मालादीनां चेत्येतत्तु नामधेयार्थं स्यात् । **सभासंनयन इति** । सति चेहादिग्रहणे आद्यन्तवत्सूत्र एकग्रहणस्य सभासंनयनशब्द प्रत्युदाहरणम् । असति त्विहादिशब्दे दरिद्रातेरिवर्णान्त-लक्षणस्य अचोऽभाव एकग्रहणस्य प्रयोजनम् । अचामिति तु बहुत्वं संख्याविवक्षार्थं स्यात् ।

उ :—वृद्धिग्रहणाक्षेपानुपपत्तिं शङ्कते—**असतीति** । **सर्वस्येति** । सर्व-शब्दानां वृद्धसंज्ञाप्रसङ्गेन व्यावर्त्याभावात्सूत्रस्यैव वैयर्थ्यं स्यादिति भावः । अचामित्यनेन सङ्कोचकाभावेन विद्यमानमत्रोऽज्ग्रहणात्तदादिर्हलेव भवतीति व्यावर्त्यसम्भवान्न सूत्रवैयर्थ्यमित्य-भिप्रेत्य परिहरति—**यस्येति** । नन्वचामिति निर्धारणे षष्ठी । निर्धारणं च तुल्यजातीयस्येति यस्यादिरजिति विज्ञायमाने दत्तादौ नातिप्रसङ्ग ; अत आह—**असतीति** । **समीपेति** । अच्समीपत्वं हलोऽपि सम्भवतीति तदादावतिप्रसङ्ग इत्यर्थः । **पक्षे**; 'वा नामधेयस्य' इत्यनेन । ननु हलादेस्सर्वस्य वृद्धसंज्ञायां कर्क्या-दीनामपि वृद्धत्वात् अवृद्धमित्येव व्यावृत्तिसिद्धेः अकर्क्यादीनामिति प्रतिषेधो-ऽनर्थकः ; अत आह—**प्रस्थ इति** । यद्वा नामधेयस्य वृद्धत्वे कर्क्यादिप्रतिषेधो-ऽनर्थकः ; अत आह—**प्रस्थ इति** । **वृद्धेरेवेति** । तथा च प्रदेशेषु वृद्ध-शब्दः त्यदादिषु मुख्यः । शालादौ वृद्धिमान लाक्षणिक इति वैरूप्यप्रसङ्ग इत्यर्थः । भाष्ये **ऐतिकायनीया इति**; इतकशब्दात् नडादिफगन्ताच्छः । ननु मालादीनामिति लिङ्गादादिसहचरिता यस्य वृद्धिस्तस्यापि वृद्धसंज्ञेति गार्ग्यादेरपि न स्यादत मालादीनामिति । यस्याचां मध्ये वृद्धिस्तद् वृद्धमित्यर्थनिरासायादिग्रहण-मित्यर्थेत्यादिभाष्यार्थः । प्रसङ्गादाह—**सति चेति** । यद्यप्यत्रादिरित्यवश्यमेव

तथाप्यसत्यस्मिन्नाद्यन्तसूत्रे एक ग्रहणस्य व्यावर्त्यमस्तीत्याह **असतीति । इवर्णान्तेति ।** एरजित्यत्र धातोरित्यनुवृत्तत्वात्तस्यैवर्णेन विशेषणे इवर्णान्तस्याच्प्रत्ययो विधीयते । तत्राद्यन्तवद्भावेन दरिद्रातेरपि अच् प्राप्तः एकग्रहणेन निवार्यते । एकवर्ण एव यत्र कार्यं तत्राद्यन्तवद्भाव इत्यनेकवर्णेन तत्प्रवृत्तिरित्यर्थः । अचोऽन्प्रत्ययस्याभावः प्रयोजनमित्यन्वयः । ननु यस्य वृद्धेस्सम्बन्धिनीत्येव सिद्धे अचामिति व्यर्थं स्यात्तत्सामर्थ्यादादिरित्यध्याहारसम्भवादादिरिति व्यर्थमत आह—**अचामिति ।**

**॥ वा ॥ वृद्धसंज्ञायामजसंनिवेशादनादित्वम् ॥**

**भा :—वृद्धसंज्ञायामजसंनिवेशादादिरित्येतन्नोपपद्यते । नह्यचां संनिवेशोऽस्ति । ननु चैवं विज्ञायते—अजेवादिरिति । नैवं शक्यम् । इहैव प्रसज्येत—औपगवीयाः । इह न स्यात्—गार्गीयाः । एकान्तादित्वं तर्हि विज्ञायते ॥**

**॥ वा ॥ एकान्तादित्वे च सर्वप्रसङ्गः ॥**

**भा :—इहापि प्रसज्येत—सभासन्नयने भवः साभासन्नयन इति ।**

**॥ वा ॥ सिद्धमजाकृतिनिर्देशात् ॥**

**भा :—सिद्धमेतत् ॥ कथम्? अच आकृतिर्निर्दिश्यते ॥ एवमपि व्यञ्जनैर्व्यवहितत्वान्न प्राप्नोति ।**

**॥ वा ॥ व्यञ्जनस्याऽविद्यमानत्वं यथान्यत्र ॥**

**भा :—व्यञ्जनस्याविद्यमानवद्भावो वक्तव्यो यथाऽन्यत्रापि व्यञ्जनस्याविद्यमानवद्भावो भवति ॥ क्वान्यत्र? स्वरे ॥**

प्र :—**न ह्यचामिति** । सर्वस्य प्रातिपदिकस्याज्झल्समुदायरूपत्वात् । अचामित्यनेन च केवलानामचां समुदायः संनिवेशरूपो निर्दिष्टः । पौर्वापर्येणावस्थानं संनिवेशः । स च केवलानामचां नास्ति । **ननु चैवमिति ।** [1]अच्संनिवेशस्यासंभवादचां मध्येऽजपेक्षया यस्य वृद्धिरादिरिति विज्ञास्यत इत्यर्थः । **नैवं शक्यमिति ।**

(१) मु. पु. अचां संनिवेशस्य.

वृद्धिविशेषणार्था निर्धारणे षष्ठी स्यात्। अचां मध्ये अज्रूपा या वृद्धिरित्यकारस्य निवृत्तिप्रसङ्गः। आकारो ह्यनजेव सन् केवलमच्कार्याणि ग्रहणकशास्त्रेण लभते। ततश्चाश्वलायन इत्यत्र न स्यात् गार्ग्य इत्यत्र चाकारस्यानच्त्वात् [१]अच्समुदायानादित्वाच्च न स्यात्। **एकान्तादित्वमिति**। एकान्ता अवयवा अचः प्रातिपदिकस्य तेषामचाम् आदिर्वृद्धिर्यस्य तद्वृद्धमित्यर्थः। **सर्वप्रसङ्ग इति**। न ह्यत्र विशेष उपादीयते अचामादिर्वृद्धिरिति। ततश्च मध्येऽपि वर्तमानोऽकारोऽन्याजपेक्षया सर्वेषामचां आदिरिति समासान्वयने संज्ञाप्रसङ्गः। आदिग्रहणं त्वन्त्यनिवृत्त्यर्थं स्यात्। **खट्वेति। सिद्धमिति।** उभयरूपत्वेऽपि प्रातिपदिकस्याजाकृतिरचामिति वचनादाश्रीयते। विद्यमानापि हलाकृतिर्न विवक्ष्यते। तेनायमर्थः। यस्य शब्दस्य सकलाजपेक्षया वृद्धिरादिस्तद्वृद्धमिति। यथा पङ्क्तौ ब्राह्मणानामादिमानयेत्युक्ते सतोऽपि शूद्रादीननादृत्य ब्राह्मणजातीयापेक्षया यो ब्राह्मण आदिः स आनीयते। **व्यञ्जनस्येति**। अचामिति वचनाद्विद्यमानान्यपि व्यञ्जनानि न विवक्षितानीत्यर्थः। **यथाऽन्यत्रेति**। यथा स्वरविधावयोग्यत्वाद्व्यञ्जनमविद्यमानवदेवमिहाप्यचामिति वचनादित्यर्थः। **ह्रस्वनुड्भ्यामिति**। स्वरविधौ नुड्ग्रहणाल्लिङ्गाद्व्यञ्जनं व्यवधायकमेवेत्युदश्वित्वानिति मतुप उदात्तत्वं न प्रवर्तते।

उ:—वर्णसमाम्नायेऽचां सन्निवेशोऽस्त्येव; अत आह—**सर्वस्येति**। वृद्धसंज्ञाकार्यं प्रातिपदिकाधिकारे, तस्य चाज्झल्समुदायरूपत्वादित्यर्थः। **अचामित्यनेनेति**। अचामित्युद्भूतसमुदायभेदस्समुदायो निर्दिष्टः। आदिशब्दश्चावयवविशेषवाची। अवयवी चाच्समुदायः। नैरन्तर्येणावस्थिता अचस्समुदायः। ततश्चाच्समुदायस्य प्रथमावयवो वृद्धिर्यस्य स वृद्धसंज्ञ इति सूत्रार्थः। न च तादृशसमुदायः कस्यचित्प्रातिपदिकस्य सम्भवतीत्यर्थः। ननु सूत्रे प्रथमान्ताज्ग्रहणाभावाद्भाष्ये अजेवादिरिति कथमुक्तम्; अत आह—**अच्सन्निवेशस्येति**। हल्व्यवहितस्येत्यादिः। अजिति निर्धारणषष्ठ्या लभ्यते। सजातीयापेक्षत्वान्निर्धारणस्येति भावः। मनुष्याणां मध्ये क्षत्रियश्शूर इत्युक्ते मनुष्यापेक्षयैव शूरत्वं न सिंहाद्यपेक्षया। एवमिहाप्यजपेक्षयैवाजिति न हलपेक्षयेत्याह—**अजपेक्षयेति**। मनुष्याणामिति। निर्धारणषष्ठ्या क्षत्रिये प्रतीतमपि मनुष्यत्व-

---

(१) मु. पु. अजिति नास्ति

-मव्यावर्तकत्वान्न विशेषणं, किं, त्वनुवादमात्रं प्रकृते-मुख्याज्रूपवृद्धिलाभायाच्चं विशेषणमेवे-त्याह—**वृद्धिविशेषणेति**। विशेषणत्वमेवाह—**अज्रूपेति**। व्यावर्त्यमाह—**आकारस्येति**। तस्यानच्त्वमाह—**आकारो हीति**। **ग्रहणकशास्त्रेण;** अणुदित्यनेन। अज्रूपा वृद्धिर्यस्यादिरित्यत्र असाधारणमव्याप्तिस्थलमाह—**ततश्चेति**। भाष्यकारीयमुदाहरणं संङ्गमयति **गार्ग्य इति**। **अच्समुदायेति**। यद्यप्यच्स-मुदायस्याप्रसिद्धया तदादित्वमप्यप्रसिद्धं तथाप्यचामित्यस्य वृद्धेरज्रूपत्वलाभार्थतया यस्याज्रूपाद्वृद्धिरादिरित्यर्थपर्यवसानादादित्वस्य संकोचकाभावेन प्रकृत्यादित्वलाभाद्गार्गीया इत्यत्र न स्यादित्यर्थः। एवं यस्य अज्रूपा आदिर्वृद्धिरित्यत्र दोषमभिधाय यस्याचामादि-र्वृद्धिरित्युक्तेऽपि तमाह—भाष्ये **एकान्तेति**। तद्व्याचष्टे **एकान्ता इति**। यस्य प्रातिपदिकस्यावयवानामचामादिर्वृद्धिस्तद्वृद्धमित्यर्थः। अचामिति शेषषष्ठी न तु निर्धारण-षष्ठीत्याशयः। नन्वादिग्रहणसामर्थ्यात्सर्वादित्वलाभो, अत आह **आदिग्रहणमिति**। तदुदाहरति **खट्वेति**। अत्राकारस्यान्त्यत्वेनाजादित्वाभावान्न वृद्धसंज्ञेत्यर्थः। **उभयेति**। अज्झल्समुदायरूपत्वेऽपीत्यर्थः। यस्येति वृद्धिविशेषणम्। नाचां नाप्यादेः विवक्षितार्थलाभाद् चामित्यादि विशेषणमित्यभिप्रेत्याह—**यस्येति**। यस्यादिवृद्धिरित्यन्वयः। संकोचाभावादाह—**सकलेति**। एकजात्युपादाने जात्यन्तरत्यागः सर्वादिग्रहणं चेत्यत्र दृष्टान्तमाह—**पङ्क्ताविति**। **सतोऽपीति**। आदौ मध्ये चेत्यादि। जातीयेनेत्यनेन सर्वादित्वमुक्तम्। एवं चाकृतिनिर्देशादिसर्वादित्वलाभार्थमेवोक्तमिति ज्ञेयम्। नेदं वाचनिक-मित्याह—**अचामिति** केवलाच्सन्निवेशासम्भवादिति भावः। ननूदात्तादीनामज्धर्म-त्वाद्व्यञ्जनस्यापि सम्भवतीति कथं दृष्टान्तसाम्यम्; अत आह—**यथेति**। व्यञ्जनव्यावृत्ति-मात्रे दृष्टान्त इति भावः। अयोग्यत्वादित्यनेन स्वरविधावपि व्यञ्जननिवृत्तिर्न्यायसिद्धा न वाचनिकीत्युक्तम्। यद्ययोग्यत्वात्स्वरविधौ व्यञ्जनमविद्यमानवत्तदोदश्वित्वानित्यत्र तकारस्य व्यवधायकत्वाद्ध्रस्वान्मतुप उदात्तत्वं स्याद्; अत आह—**ह्रस्वेति**। ह्रस्वान्नु-डश्च परो मतुबुदात्तः। अक्षण्वन्। 'अनो नुटः' इति नुडत्र गृह्यते। अक्षण्वा-नित्यत्र नुटो व्यवधायकत्वेन ह्रस्वादित्येव मतुप उदात्ते सिद्धे नुड्ग्रहणमस्मिन्मतुप्स्वरे व्यञ्जनं व्यवधायकमिति ज्ञापनार्थम्। तेनान्यत्र व्यवधाने मतुप उदात्तत्वं च भवतीत्यर्थः। उदश्वित्वानित्यत्र झय इति मतुपो मस्य वत्वम्। 'तसौ मत्वर्थे' इति भत्वान्न जस्त्वम्।

**॥ वा ॥ *वा नामधेयस्य ॥**

**भा :—वृद्धसंज्ञा वक्तव्या । देवदत्तीयाः । दैवदत्ताः । यज्ञदत्तीयाः । याज्ञदत्ताः ॥**

**॥ वा ॥ गोत्रोत्तरपदस्य च ॥**

**भा :—गोत्रोत्तरपदस्य च वृद्धसंज्ञा वक्तव्या । कम्बलचारायणीयाः । ओदनपाणिनीयाः । घृतरौढीयाः ॥**

**॥ वा ॥ गोत्रान्ताद्वाऽसमस्तवत् ॥**

**भा :—गोत्रान्ताद्वा असमस्तवत्प्रत्ययो भवतीति वक्तव्यम् । एतान्येवोदाहरणानि । किमविशेषेण ? नेत्याह ॥**

**॥ वा ॥ जिह्वाकात्यहरितकात्यवर्जम् ॥**

**भा :—जिह्वाकात्यं हरितकात्यं च वर्जयित्वा । जैह्वाकाताः । हारितकाताः । किं पुनरत्र ज्यायः ? गोत्रान्ताद्वा समस्तवद् इत्येव ज्यायः । इदमपि सिद्धं भवति पिङ्गलकाण्वस्य छात्राः पैङ्गलकाण्वाः । वृद्धिर्यस्याचामादिस्तद्वृद्धम् ॥**

प :—**वा नामधेयस्येति ।** पौरुषेयं नाम गृह्यते । **कम्बलचारायणीया इति ।** कम्बलप्रियस्य चारायणस्य शिष्या इत्यर्थः । **ओदनपाणिनीया इति ।** पणिनोऽपत्यमित्यण् । गाथिविदथीति प्रकृतिभावाट्टिलोपाभावः । पाणिनस्यापत्यं युवेतीञ् । तस्य छात्रा इति विवक्षिते यूनि लुगितीञो लुक् । तेनेञश्चेत्यण् न भवतीति छो भवति । **पैङ्गलकाण्वा इति ।** कण्वादिभ्यो गोत्र इत्यण् । वृद्धसंज्ञायां तु छः स्यात् ॥ ७३ ॥

उ :—नन्वर्थवतश्शब्दस्य सर्वस्यार्थनामत्वाद्व्यावर्त्याभावः; अत आह—**पौरुषेयमिति ।** आधुनिकमित्यर्थः । **चारायणस्येति ।** चरशब्दस्य नडादित्वात्फक् । गोत्रोत्तरपदस्येत्यत्र लौकिकं गोत्रमपत्यमात्रं गृह्यते न तु पारिभाषिकम् । तेन यूनीञन्तः

पाणिनिशब्दोऽप्युदाहृतः तद्व्याचष्टे **पणिन इति**। **यूनीति**। प्राग्दीव्यतीये अजादौ प्रत्ययेऽनुत्पन्न एव विवक्षिते युवप्रत्ययस्य लुगिति सूत्रार्थः। ननु पाणिनि-शब्दादिञश्चेत्यणा भाव्यं न छेन; अत आह—**तेनेति**। येनेञो लुक्तेनेत्यर्थः। इञश्चे-त्यत्र 'कण्वादिभ्यो गोत्रे' इत्यतो गोत्र इत्यनुवर्तते, पारिभाषिकं गोत्रं तत्र गृह्यते। तेन प्रत्ययलक्षणेनापीञश्चेत्यण्न भवतीति भावः। घृतप्रियो रौढिः घृतरौढिः। तस्यापत्ये रूढ-शब्दादत इञ्। तस्य छात्रा इति विवक्षिते इञश्चेत्यणो 'न द्व्यचः प्राच्यभरतेषु' इति निषेधाद् 'वृद्धाच्छः'। भाष्ये **असमस्तवदिति**। यथा चारायणादेः पृथक्पृथक्त्वे वृद्धिर्यस्येत्येव वृद्धसंज्ञायां छो भवति तथा समासेऽपि भविष्यतीत्यर्थः। भाष्ये जिह्वाका-त्यादिवर्जनं पूर्वकल्पेऽपि ज्ञेयम्। कात्यशब्दो गर्गादियञन्तः। जिह्वकात्यशब्दाच्छ-स्याभावे प्राग्दीव्यतीयेऽणि आपत्यस्येति यलोपे जैह्वकाता इति भवति। एवं हारीतकाताः। जिह्वाचपलो हारीतभक्षकश्च कात्यः। **अणिति**। स च केवलेभ्यः। कण्वादिभ्य-श्चापवादो विधीयते। **वृद्धेति**। समुदायस्य कण्वादिपाठाभावात्प्रत्ययविधौ तदन्त-विधिप्रतिषेधाच्चाणोऽप्रसङ्गादिति भावः।

## सू.—त्यदादीनि च ॥ १।१।७४ ॥

**भा:—यस्याचामादिग्रहणमनुवर्तते। उताहो न। किं चातः? यद्यनुवर्तते, इह च प्रसज्येत—त्वत्पुत्रस्य छात्रास्त्वा-त्पुत्राः मात्पुत्राः। इह च न स्यात्—त्वदीयो मदीय इति। अथ निवृत्तम्, "एङ् प्राचां देशे" यस्याचामादिग्रहणं कर्तव्यम्। एवं तर्ह्यनुवर्तते। कथं त्वात्पुत्रा मात्पुत्रा इति? संबन्धमनुवर्तिष्यते— "वृद्धिर्यस्याचामादिस्तद्वृद्धम्"। "त्यदादीनि च" वृद्धसंज्ञानि भवन्ति वृद्धिर्यस्याचामादिस्तद्वृद्धम्। "एङ् प्राचां देशे" यस्या-चामादिग्रहणमनुवर्तते, वृद्धिग्रहणं निवृत्तम्। तद्यथा कश्चित्का-न्तारे समुपस्थिते सार्थमुपादत्ते स यदा निष्क्रान्तकान्तारो भवति तदा सार्थं जहाति॥ त्यदादीनि च॥**

प्रः—त्यदादीनि च ॥ **त्वात्पुत्रा** इति ॥ आदिग्रहणानुवृत्त्यन्यथानुपपत्त्योपसर्जनानामपि त्यदादित्वं स्यादिति भावः। अचामित्यस्य तूत्तरार्थैवानुवृत्तिः स्यात्। तत्सम्बन्धस्येहायोग्यत्वान्निर्द्धारणस्य समानजातीयविषयत्वात्। **त्वदीय** इति। व्यपदेशिवद्भावोऽत्र नास्ति अप्रातिपदिकेनेति निषेधात्। **संबन्धमिति**। द्वितीयान्तमेतत्। संबन्धमनुगेत्स्यते। न हास्यतीत्यर्थः। अथवा संबध्यत इति संबन्धम्। कर्मणि घञ्। नपुंसकेऽपि बाधकाभावाद्भवति। वृद्धिग्रहणसंबद्धमादिग्रहणमिहानुवर्तत इति नास्ति। तस्य त्यदादिभिः सम्बन्धः। **तद्यथेति**। एतद्दर्शयति। स्वरितत्वप्रतिज्ञानादुत्तरसूत्र एव योग्यत्वाद्यस्याचामादिरिति सम्बध्यते। एङ् यस्याचामादिस्तद्वृद्धमिति वाक्यार्थसंपादनाय। इह त्वयोग्यत्वात् सम्बन्धानुपपत्तिः। तुल्यजातीयस्य निर्द्धारणात्। त्यदादीनां चाजूरूपत्वाभावाद्यस्याचामादयः स्त्यदादय इति तत्संबन्धाभावात्॥ ७४॥

उः—**त्यदादीनी** च। **भाष्येऽनुवर्तत** इति। पूर्वस्मात्सूत्रात्परस्मिन्ननुवर्तते न वेति विचार्यते। ननूपसर्जनानां सर्वादिगणसन्निवेशाभावात्त्यदादीनामप्यनुपसर्जनानामेव निवेशाद्यस्य त्यदादीन्यादयस्तद्वृद्धमिति। विज्ञानेऽपि त्वत्पुत्रादौ न दोषोऽत आह—**आदिग्रहणेनि। स्यात्**; भूतपूर्वगत्येत्यादिः। भाष्ये यस्याचामित्युक्तावपि आदिग्रहणस्यैवात्र सम्बन्धो विवक्षितो नाचामित्यस्य। एवकारव्यवच्छेद्यमाह—**तत्सम्बन्धस्येति**। अयोग्यत्वे हेतुः **निर्धारणस्येति**। उपलक्षणमिदम्। जातौ बहुवचनेनाचामिति शेषषष्ठ्यादिविशेषणत्वपक्षेऽपि प्रकृते अजादित्वविशेषणस्य प्रयोजनाभावादित्यपि द्रष्टव्यम्। व्यपदेशिवद्भावेन केवलादपि छः स्यादिति, इह चेति भाष्यमयुक्तम् अत आह **व्यपदेशिवदिति**। ननु भावे घञन्तस्य पुल्लिङ्गत्वात्सम्बन्धमिति नपुंसकप्रथमैकवचनमयुक्तम्। अनुवर्तमानस्य संबन्धितया संबन्धप्राधान्यमप्ययुक्तम्; अत आह—**द्वितीयान्तमिति**। अनुवर्तिष्यत इत्यस्य द्वितीयान्तेन अन्वयार्थमाह—**अनुगेत्स्यत इति**। अनुवर्तमानमादिपदं वृद्धिग्रहणसम्बन्धं न हास्यतीत्यर्थः। अनुवर्तमानमित्यस्याध्याहारमसहमान आह—**अथवेति** भावे घञन्तस्यैव पुल्लिङ्गत्वनियमेन कर्माद्यर्थघञन्तस्य तथाभावेन नपुंसकप्रथमैकवचनोपपत्तिरित्याह—**नपुंसक इति**। **वृद्धीति**। त्यदादीनां वृद्ध्यात्मकत्वतद्युक्तत्वयोरभावेन सामानाधि-

करण्येन वैयधिकरण्येन वास्मिन्सूत्रे सम्बन्धो न सम्भवतीति भावः। चेतनस्य बुद्धिपूर्वकसार्थत्यागोपादाने युक्ते न शब्दस्येति दृष्टान्तवैषम्यमाशङ्क्याह। **एतदिति।** योग्यत्वमेवाह—**एङिति।** अयोग्यत्वमेव स्फोरयति—**तुल्यजातीयस्येति।** आदिरित्येकवचनान्तस्यैङित्यनेनैकवचनान्तेन सम्बन्धसम्भवे बहुवचनान्ततया विपरिणामोऽप्यमानक इत्याशयेनाह—**आदिरिति।** न च त्यदादिशब्देन तत्स्थाज्लक्षणायां सामानाधिकरण्येनान्वयस्सम्भवतीति वाच्यम्, उत्तरार्थमनुवृत्त्युपपत्त्या लक्षणाया अमानकत्वादिति भावः॥

## सू.—एङ् प्राचां देशे ॥ १। १। ७४॥

**॥ वा ॥ एङ् प्राचां देशे शैषिकेषु ॥**

**भा:—एङ् प्राचां देशे शैषिकेष्विति वक्तव्यम्। सैपुरिकी सैपुरिका। स्कौनगरिकी स्कौनगरिकेति ॥ एङ् प्राचां देशे ॥ ७४॥**

**इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमाध्यायस्य प्रथमे पादे नवममाह्निकम्।**
**पादश्चायं समाप्तः॥**

प्र:—एङ् प्राचाम्॥ कुणिना प्राग्ग्रहणमाचार्यनिर्देशार्थं व्यवस्थितविभाषार्थं चेति व्याख्यातम्। तेन क्रोडो नामोदग्ग्रामस्तत्र भवः क्रौड इत्यणेव भवति। अन्येन तु प्राग्ग्रहणं देशविशेषणं व्याख्यातम्। तेन देवदत्तो नाम वाहीकेषु ग्रामस्तत्र भवो दैवदत्त इत्यवृद्धत्वात् ठञ्ञिठौ न भवतः। भाष्यकारस्तु कुणिदर्शनमशिश्रियत्। सेपुरं स्कोनगरं च वाहीकग्रामौ। तत्र वृद्धत्वाद्वाहीकग्रामेभ्यश्चेति ठञ्ञिठौ भवतः। शैषिकेष्विति वचनादपत्यविकारयोर्वृद्धलक्षणप्रत्ययाभावः। क्रोडदेवदत्तयोस्त्वप्राग्देशवाचिनोर्व्यवस्थितविभाषया न भवति। प्राग्देशवाचिनस्तु देवदत्तस्य वृद्धसंज्ञत्वात् काश्यादित्वात् वृद्धलक्षणौ ठञ्ञिठौ भवतः॥ ७५॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमाध्यायस्य प्रथमे पादे नवममाह्निकम्॥ पादश्चायं समाप्तः॥

उ:—एङ् प्राचां देशे। अत्र प्राचामित्याचार्यपरमिति कुणिमतम्। देशविशेषणमिति मतान्तरम्। तत्राद्यम्मतमाह—**कुणिनेति**। तन्मते लक्ष्यवैषम्यं परिहरति **व्यवस्थितेति**। व्यवस्थितविभाषायाः प्रयोजनमाह—**तेनेति**। द्वितीयं मतमाह—**अन्येनेति**। श्रुतदेशविशेषणत्वे सम्भवत्यश्रुताचार्यपरत्वमयुक्तमिति तदाशयः। प्राग्देशवासिनो जनाः प्राञ्चः तेषां देश इति देशविशेषणत्वम्। देशविशेषणत्वस्य प्रयोजनमाह—**तेनेति**। बाहीकेषु प्रागुदग्देशबहिर्भूतेषु। **ठञ्ञिठाविति**। वृद्धाच्छ इत्यतो वृद्धादित्यनुवृत्तौ 'बाहीकग्रामेभ्यश्च' इत्यनेनेत्यर्थः। कथं कुणिदर्शनमाश्रितम्; अत आह—**सेपुरमिति**। सैपुरिकीत्याद्युदाहरणात्तन्मताश्रयणनिश्चय इत्यर्थः। **अपत्येति**। उदीचां वृद्धादित्यनेन नित्यं वृद्धेत्यनेन चेत्यर्थः। व्यवस्थितविभाषया उक्तप्रयोजनानुवादेन प्रयोजनान्तरमाह—**क्रोडेति**। देवदत्तशब्दो देशद्वयस्थग्रामद्वयवाची। तत्रोदग्देशे दैवदत्तः, प्राग्देशे दैवदत्तिक इति व्यवस्थितविभाषयैव प्रयोगद्वयसिद्धिरित्यर्थः॥

इति श्रीमहोपाध्यायाद्वैतविद्याचार्यश्रीमद्राघवसोमयाजिकुलावतंस—श्रीमत्तिरुमलाचार्यसूनोरन्नम्भट्टस्य कृतौ महाभाष्यप्रदीपोद्योतने प्रथमस्याध्यायस्य प्रथमे पादे नवममाह्निकम्॥ पादश्चायं समाप्तः॥



# सूत्रानुक्रमणिका

# वार्तिकानुक्रमणिका

## आ

## इ



## ई



## उ

# ERRATA

| Page | line | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २२ | १७ | विशेषण | विशेषण |
| ७८ | ११ | वहु | बहु |
| १०८ | ९ | ससासे | समासे |
| १४२ | १४ | कोलोप | कारलोप |
| १७२ | १० | तस्यदर्थ | तदर्थ |
| १८४ | १५ | षष्ट्यधि | षष्ठ्यधि |
| ,, | १८ | शष्ट्यर्थ | षष्ठ्यर्थ |
| १९० | २५ | वृध्यौत्व | वृद्ध्यौत्व |
| २२७ | ४ | निमित्तोत् | निमित्तात् |
| २३४ | २३ | आलो | अलो |
| २३६ | १३ | अलोऽन्य | अलोऽन्त्य |
| २३८ | १ | तातांङि | तातङि |
| २४८ | ९ | प्राप्ति | प्राप्ति- |
| २५४ | २० | न्यात्वा | न्यात्वा |
| ३२७ | २५ | पष्ठ्यर्था | षष्ठ्यर्था |
| ३४३ | १८ | ङौ नकार | ङौनकार |
| ३६८ | २५ | निर्दिप्ट | निर्दिष्ट |
| ३७५ | १ | प्रक्लु | प्रक्लृ |
| ३७८ | ७ | स्या शब्द | स्याशब्द |
| ३८२ | २५ | प्रामाण्यात् | प्रामाण्यात् |

---

## BULLETIN OF THE GOVERNMENT ORIENTAL MANUSCRIPTS LIBRARY, MADRAS.

### AN APPEAL.

The Government Oriental Manuscripts Library, Madras, is unique in point of variety and vastness of collections covering a very wide field of Indian Literature in Sanskrit, Tamil, Telugu, Kannada, Malayalam, Mahratti, Arabic, Persian and Urdu. The dates of several of the manuscripts go back to many hundreds of years. From an academic point of view, these collections contain some very interesting specimens of Literary, Scientific, Historical and Artistic importance. A large number of them have not yet been printed and some of them are available only in this Library. With a view to placing these manuscripts in the hands of the public in a printed form, the Government of Madras were pleased to sanction the starting of a BULLETIN under the auspices of the Government Oriental Manuscripts Library. For the present only two numbers are issued in a year. They contain critical editions of original works in Sanskrit, Tamil, Telugu, Kannada, Malayalam, Mahratti, Persian and Urdu. The annual subscription is only Rs. 4 inland and 8 shillings foreign. Scholars, Patrons of Culture, Universities, Public Libraries and Educational Institutions are requested to enrol themselves as susbscribers for this Bulletin and thus encourage the cause of Oriental Studies and Culture.

A few copies of back numbers are available for sale, post free, at the following prices which should be sent in advance.

| | |
|---|---|
| Vol. I, No. 2, July to December, 1948 .. | Rs. 2. |
| Vol. II, 1949 .. | Rs. 4. |
| Vol. III, 1950 .. | Rs. 4. |
| Vol. IV, 1951 .. | Rs. 4. |

T. CHANDRASEKHARAN,
*Curator,*
*Govtrnment Oriental Manuscripts Library.*

TRIPLICANE,
MADRAS-5.

# LIST OF CATALOGUES PUBLISHED BY THE GOVERNMENT ORIENTAL MANUSCRIPTS LIBRARY, MADRAS.

## SANSKRIT.

### Descriptive Catalogues.

| | *Numbers.* | *Price.* RS. | A. | P. |
|---|---|---|---|---|
| * Vol. I.—Part I, Vedic Literature .. | 1 to 46 | 0 | 12 | 0 |
| * Vol. I.—Part II. Vedic Literature .. | 47 to 245 | 0 | 12 | 0 |
| * Vol. I —Part III. Vedic Literature .. | 246 to 852 | 2 | 0 | 0 |
| * Vol. II.—Vedic Literature .. | 853 to 1245 | 1 | 12 | |
| * Vol. III.—Grammar. Lexicography aod Prosody .. | 1246 to 1805 | 1 | 8 | 0 |
| * Vol. IV.—Part I. Ithihāsa and Purāṇa .. | 1806 to 2337 | 1 | 8 | 0 |
| * Vol. IV.—Part II. Upapurāṇas and Sthalamāhātmyas .. | 2338 to 2610 | 1 | 4 | 0 |
| * Vol. V.—Dharmaśāstra .. | 2611 to 3045 | 1 | 8 | 0 |
| * Vol. VI.—Dharmaśāstra .. | 3046 to 3427 | 1 | 4 | 0 |
| * Vol. VII.—Dharmaśāstra .. | 3428 to 3872 | 1 | 4 | 0 |
| * Vol. VIII.—Arthaśāstra, Kāmaśāstra and Systems of Indian Philosophy—Nyāya .. | 3873 to 4334 | 1 | 4 | 0 |
| * Vol. IX.—Systems of Indian Philosophy—Vaiśeṣika, Yoga, Mīmāmsā and Vedānta-Advaita Philosophy .. | 4335 to 4780 | 1 | 12 | 0 |
| * Vol. X.—Systems of Indian Philosophy—Dvaita, Viśiṣṭādvaita and Śaiva Vedāntas .. | 4781 to 5122 | 1 | 12 | 0 |
| * Vol. XI.—Systems of Indian Philosophy .. | 5123 to 5558 | 1 | 12 | 0 |
| Vol. XII.—Religion .. | 5559 to 6266 | 1 | 12 | 0 |
| Vol. XIII.—Religion .. | 6267 to 7006 | 1 | 12 | 0 |
| * Vol. XIV.—Religion .. | 7007 to 7729 | 1 | 12 | 0 |
| * Vol. XV,—Religion .. | 7730 to 8165 | 1 | 12 | 0 |
| * Vol. XVI.—Religion, Vrata and Pūjā .. | 8166 to 8780 | 1 | 12 | 0 |
| Vol. XVII.—Stotras .. | 8781 to 9357 | 1 | 12 | 0 |
| Vol. XVIII.—Stotras—Praśaṃsā Stotras .. | 9358 to 10540 | 1 | 12 | 0 |
| Vol. XIX.—Stotras—Praśamsā Stotras .. | 10541 to 11450 | 1 | 12 | 0 |
| Vol. XX.—Kāvyas .. | 11451 to 12143 | 2 | 12 | 0 |
| Vol. XXI.—Kāvyas .. | 12144 to 12783 | 3 | 0 | 0 |
| Vol. XXII.—Rhetoric, Poetics, Music, Dancing and Śilpa śāstra .. | 12784 to 13068 | | 4 | 0 |
| Vol. XXIII.—Medicine .. | 13069 to 13381 | 1 | 8 | 0 |
| Vol. XXIV.—Jyotiṣa .. | 13382 to 14076 | 3 | 2 | 0 |
| * Vol. XXV.—Supplemental .. | 14077 to 14560 | 2 | 4 | 0 |
| Vol. XXVI.—Supplemental .. | 14561 to 15000 | 2 | 12 | 0 |
| Vol. XXVII.—Supplemental .. | 15001 to 15692 | 5 | 14 | 0 |
| Vol. XXVIII.—Supplemental .. | 15693 to 16200 | 3 | 12 | 0 |
| Vol. XXIX.—Supplemental .. | 16201 to 16700 | 3 | 2 | 0 |
| Vol. XXX.—Supplemental .. | 16701 to 17200 | 7 | 10 | 0 |
| Vol. XXXI.—Supplemental .. | 17201 to 17700 | 11 | 12 | 0 |

### Triennial Catalogues.

| | Numbers | RS. | A. | P. |
|---|---|---|---|---|
| * Vol. I-A (1911—13) .. | 1 to 342 | 2 | 0 | 0 |
| * Vol. I-B (1911—13) .. | 343 to 573 | 1 | 6 | 0 |
| * Vol. I-C (1911—13) .. | 574 to 801 | 1 | 6 | 0 |
| Vol. II-A (1914—16) .. | 802 to 1329 } | | | |
| Vol. II-B (1914—16) .. | 1330 to 1456 } | 18 | 2 | 0 |
| Vol. II-C (1914—16) .. | 1457 to 1942 } | | | |
| * Vol. III-A (1917—19) .. | 1943 to 2348 | 6 | 0 | 0 |
| * Vol. III-B (1917—19) .. | 2349 to 2679 | 6 | 0 | 0 |
| * Vol. III-C (1917—19) .. | 2680 to 2894 | 4 | 4 | 0 |
| Vol. IV-A (1920—22) .. | 2895 to 3203 | 9 | 0 | 0 |
| Vol. IV-B (1920—22) .. | 3204 to 3634 | 8 | 0 | 0 |
| Vol. IV-C (1920—22) .. | 3635 to 4155 | 10 | 0 | 0 |
| * Vol, V-A (1923—25) .. | 4156 to 4300 | 4 | 0 | 0 |
| * Vol. V-B (1923—25) .. | 4301 to 4415 | 2 | 8 | 0 |

